# अजिता

श्रीपरितोषमिश्रविरचिता

## तन्त्रवार्तिकटीका

प्रथमो भागः

# अजिता

श्रीपरितोषमिश्रप्रणीता तन्त्रवार्त्तिकव्याख्या

सा च—

डा० किशोरनाथ झा

डा० कमलनयन शर्मा • सुश्री अर्चना चतुर्वेदी

इत्येतैः सविमर्शं संशोध्य संपादिता

॥ तस्याश्चायं प्रथमो भागः ॥




प्रयागस्थ-

श्रीगङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठेन

प्रकाशिता

१९८८ ई०

**Rashtriya Sanskrit Sansthan**

*( Under the auspices of the Ministry of Human Resources Development, Govt. of India )*

**New Delhi**

**Ganganatha Jha**
**Kendriya Sanskrit Vidyapitha**

**TEXT SERIES**

*General Editor*

**Dr. G. C. Tripathi**

No. 23

# AJITĀ (Part I)

*by*

**Paritosh Mishra**

*A Commentary on*
the Tantravārttika of Kumārila

*Edited by*

**Dr. Kishore Nath Jha**

**Dr. Kamal Nayan Sharma • Km. Archana Chaturvedi**




ALLAHABAD

1988

राष्ट्रियसंस्कृतसंस्थानम्
( केन्द्रीयशिक्षामन्त्रालयस्याङ्गभूतम् )
देहली

—•—

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला
प्रधानसम्पादकः
डॉ० गयाचरण त्रिपाठी

—•—

त्रयोविंशं प्रसूनम्

# अजिता

श्रीपरितोषमिश्रप्रणीता तन्त्रवार्त्तिकव्याख्या

॥ प्रथमो भागः ॥

—•—

सम्पादकाः
डॉ० किशोरनाथ झा
डॉ० कमलनयन शर्मा • सुश्री अर्चना चतुर्वेदी

—•—

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्
चन्द्रशेखर आज़ाद पार्क
प्रयागः-२
१९८८

## FOREWORD

We feel a sense of deep satisfaction in presenting to the scholars of Indian Philosophy this neatly edited version of *Ajitā* which is a commentary by *Paritoṣa Miśra* of Mithila on the *Tantravārttika* of Kumārila, the most illustrous of the Mimāṃsā philosophers.

At least nine commentaries are known to have been written on the *Tantravārttika* from time to time by various scholars. Some of these are no more in existence whereas many of them are languishing in the Manuscripts libraries. The only commentary published so for is the Nyāyasudhā of Bhaṭṭa Someśvara which is, however, so extensive and elaborate that it suits the temperament and fulfills the raquirements of only an advanced scholar and not of a a learner.

The commentary which strikes a middle path and suits the purposes of a learner and a scholar alike is decidedly the one edited by us here. It is lucid yet not shallow, scholarly yet not terse. It reveals the meaning of the original with utmost clarity without adding anything redundant and without dropping anything significant. It is coherent and concise.

Nothing is known about its author *Paritoṣa* except that he lived on the banks of *Ajitā*, a river of unknown provenance (indentified with *Gaṇḍakī* by the editors). The internal evidences seem to indicate that he probably flourished in the 13th century.

A number of scholars have cherished the desire to edit and publish this rare gem of commentaries. The

first and the foremost among these was Sir Ganganatha Jha himself who procured a transcript of *Ajitā* from the Govt. Oriental MSS Library of Madras in the later part of his life (i.e. in the late thirties of the current century). A Mimāmsa scholar of the calibre of Sir Ganganatha Jha would certainly have been the most competent person to accomplish this task. However, Destiny did not favour him with this glory. He died in 1941 without even undertaking the work in his hand. The Ganganath Jha Research Institute established in his memory in 1943 inherited his personal library and the transcript of *Ajitā* hibernated till about 1976 when it caught the attention of Dr. Murlidhar Pandey, a senior Reader in our Vidyapeetha, who expressed his desire to critically edit it. Not much progress was made though, since Dr. Pandey was posted in Delhi shortly thereafter with an assignment of different nature following which he proceeded to Jammu to take charge of the Kendriya Sanskrit Vidyapeetha as its Principal. A number of other requests for supply of a copy of the transcript were received in this Vidyapeetha from scholars desirous to undertake the job but it was thought proper that this Vidyapeetha—as the academic heir of Sir Ganganatha Jha—itself should come forward to fulfil this last wish of Sir Jha.

Post of a Lecturer in Mimāmsa was consequently created in this Vidyapeetha on which Dr. Kamala Nayan Sharma was appointed; Dr. Kishor Nath Jha, Reader in Sarvadarśana was deputed to participate in Mīmamsā seminars and refresher courses and Prof. Gajanana Shastri Musalgaokar, an eminent Mīmāmsaka was appointed as Guest Professor under the Shastra Chudamani scheme of the Rashtriya Sanskrit Sansthan. This energetic group assisted by Km.Archana Chaturvedi, our Research Assistant in Vedanta, undertook the job of editing this valuable commentary and carried out the task

within a comparatively short span of three years. Dr. Kishora Nath Jha accompanied by Dr. K.E. Govindan had to undertake journies to distant Madras and Trivendrum as well in order to collate their readings with the manuscripts deposited there since their transcripts were difficult to be obtained. Thus there is no denying to the fact that no amount of mental or physical labour was spared to bring this rare work to light and make it scientifically perfect. My sincere thanks are due to all the above mentioned scholars who have really done their job with utmost dedication.

It is also my pleasant duty to acknowledge gratefully the help and assistance received by us from Prof. Kurio Harikai who has published four fascicules of the chapter I of Ajitā in *Act a Eruditiorum* No. 1-4 (1983-86) and has kindly sent us copies of them. They have been very useful to us in reconstructing the text.

Whether the work has come up to the expectations of the scholars or not, only they are competent to decide. We crave their gracious indulgence for any mistakes committed by us due to our ignorance or incompetence and humbly hope that the publication of this since long overdue commentary on Tantravārttika shall be welcomed by the scholars.

G. N. Jha Kendriya Sanskrit Vidyapeeth
Allahabad
5th March, 1988

**G. C. Tripathi**
***Principal***

# शुभाशंसनम्

कुमारिलभट्टविरचितं तन्त्रवार्त्तिकं परितोषमिश्रप्रणीतया अजिताटीकया सह प्रकाश्यते इति ज्ञात्वा नितरामानन्दमनुभवामि। परितोषमिश्रस्य टीका नेदानीं यावत् प्रकाशिता कुत्रापि। अतो विदुषां विशेषतश्च मीमांसाध्यायिनामपूर्वोऽयम् अवसरस्तन्त्रवार्त्तिकतन्त्रावबोधने। विदुषाध्यापकेन डा० किशोर नाथेन तत्सहयोगिभ्यां डॉ० कमलनयन शर्मणा कुमारी अर्चना चतुर्वेदी शुभोदयया च महता यत्नेन पञ्चमातृकाभ्यः पाठसमीक्षणपूर्वकं सम्पादितोऽयं ग्रन्थ इति सर्वथा साधुवादमर्हति सम्पादकः। गंगानाथझा-केन्द्रीय-संस्कृतविद्यापीठप्राचार्योऽपि धन्यवादार्हः ग्रन्थस्यास्य प्रकाशनाय।

मुद्रितपुस्तकस्य पत्राणि पठित्वा ज्ञातमेतत् यद् अजिताटीकाधृतः पाठस्तन्त्रवार्त्तिकस्य सन्देहास्पदस्थलेषु संशयनिरसनाय प्रभवेदिति। न केवलमिदं बहुषु स्थलेषु मूलग्रन्थस्य अर्थावबोधनं सुखकरं स्यात्।

श्लोकवार्त्तिक-तन्त्रवार्त्तिक-टुप्टीकानामधेयानां त्रिधा विभक्तानां कुमारिलकृतशाबरभाष्यव्याख्यानानां श्लोकवार्त्तिके एव दार्शनिकानामभिनिवेशो महान् विविधदर्शनानां समीक्षणात्। परं तन्त्रवार्त्तिकेऽपि महती शास्त्रचर्चा वर्तते युक्तिप्रमाणमनुसृत्य। अतः अजितोपेतं तन्त्रवार्त्तिकं सर्वथा अभिवन्दनीयम्। क्षीणतां गता मीमांसापरम्परा सबला भवेदनया इत्याशास्ते।

गुवाहाटी
६-१२-८७

शास्त्री विश्वनारायणः

# विषय-सूची

| विषयाः | पृष्ठसंख्याः |
| --- | --- |
| **प्रथमाध्यायस्य चतुर्थः पादः** | ३७१—४३६ |

# प्रस्तावना

**नमो गुरुभ्यः शास्त्रकृद्भ्यः पथिकृद्भ्यः शास्त्रेभ्यश्च**

[ १ ]

भगवतो विश्वेश्वरस्यानुग्रहेण पुण्यश्लोकस्य महामहोपाध्यायस्य डा० सर गङ्गानाथझामहाभागस्य दिव्येनाशीर्वचसा विद्वद्वरेण्यस्य विद्यापीठीयप्राचार्यस्य डा० गयाचरणत्रिपाठिमहोदयस्य सत्सङ्कल्पप्रयत्नाभ्यां चाद्य *अजिता*भिधाया-स्तन्त्रवार्तिकव्याख्यायाः प्रथमाध्यायात्मकस्य प्रथमभागस्य सम्पादनं प्रकाशनं च सम्पन्नमिति हृदि प्रचुरां प्रीतिं महतीं च तुष्टिं विभृमो वयमिह सम्पादने कर्मणि व्यासक्ताः। अनेन कर्मणा स्वनामधन्यस्य डा० सर् गङ्गानाथझामहाभागस्यैव हार्दिकः सङ्कल्पोऽस्माभिरिह तन्नाम्ना संस्थापितेऽस्मिन् विद्यापीठे परिपूरितोऽस्याः विपश्चित्सु विश्रुतायाष्टीकाया यथामति परिष्कृतं सम्पादनं प्रकाशनं च विधायेत्यस्माकं प्रीति-स्तुष्टिश्च स्वाभाविकी।

जीवनस्य सान्ध्यवेलायामेतैः झामहाभागैः मद्रासराजकीयहस्तलेखागारतोऽस्याः प्रतिलिपिर्मन्यामहे सम्पादनप्रकाशानार्थं सङ्गृहीता किन्तु बलीयस्या ईश्वरेच्छया प्रबलैः प्रतिबन्धकैश्च प्रतिहतास्तेऽत्रासमर्था अभूवन्। 'पूर्वमीमांसा इन् इट्स सोर्सेस' नाम्नि पुस्तके इमे मीमांसाग्रन्थविवरणप्रकरणे *परितोषमिश्रस्य* परिचयावसरे केवलमुक्तमद्रास-हस्तलेखागारस्थितामजितामातृकामुल्लिखन्ति। कालक्रमेण तदीयनाम्नैव संस्थापितेऽस्मिन् विद्यापीठे तदुत्तरसाधकैः प्रेषिताभिस्तदीयसारस्वतसामग्रीभिः सहास्याः प्रतिलिपिरपि समागतेति यथावसरं समुपलब्धमस्माभिः।

सर्वप्रथमं तावदस्याः सम्पादने नियुक्ताः आदरणीयाः दर्शनशास्त्रधुरीणाः डा० मुरलीधरपाण्डेयमहाशया ये तदानीमिह प्रवाचकपदमधितिष्ठन्त आसन् पश्चाच्च रणवीरकेन्द्रीयसंस्कृतविद्यापीठस्य जम्मूस्थितस्य गरीयः प्राचार्यपदं व्यभूषयन्। एतस्याः, सम्पादनारम्भकाल एव डा० पाण्डेयमहाशयस्य स्थानान्तरणमभवदिति न तेनेह समुल्लेखनीयमाचरितं कर्म।

अलीगढ़नगरस्थमुस्लिमविश्वविद्यालयस्य तदानीन्तनाः संस्कृतविभागाध्यक्षाः श्रीमन्तो डा० रामसुरेशत्रिपाठिमहाभागास्तदनन्तरं ग्रन्थस्यास्य सम्पादनेऽभिनिवेशं

प्राकटयन् किन्तु अस्मादेव विद्यापीठादस्य प्रकाशनं वरमिति मन्यमानाः प्राचार्यास्तेषां प्रस्तावं नाङ्गीचक्रुः ।

ततः षड्वर्षेभ्यः प्राक् [१९८१ ई०] अस्याः सम्पादनभारोऽस्मिन् जने धीधनेन डा० त्रिपाठिमहाशयेनात्रत्येन प्राचार्येण समारोपितः । न जानाम्यत्र को हेतुरिति । किन्तु जनस्यास्य कृते ह्ययं भारारोपः गौरवस्यात्मपरितृप्तेश्च कारणं समजनि । पुण्यश्लोकस्य डा० गङ्गानाथझामहाभागस्य सङ्कल्पपूर्तये हि विहितः श्रमोऽवश्यं श्रेयसे कल्पिष्यत इति हृदि विश्वासोऽत्र नितरां समुत्साहयन्नात्मानं पर्यतोषयत् । अथ चैतादृशस्य प्राचीनस्य महत्त्वपूर्णस्य शास्त्रीयग्रन्थस्य सम्पादनप्रकाशनाभ्यां दृष्टफलेन बुद्धिशुद्धिरूपेण सहादृष्टस्य पुण्यस्याप्यवश्यं लाभो भवेदिति स्वार्थसिध्या सहात्मगौरवमपि प्राप्नोदयं जनः ।

सदयेन प्राचार्येण सम्पादनसामग्रीसङ्कलनावसरे महदौदार्यं प्रादर्शि । मद्रासनगरस्याड्यारग्रन्थागारे, केरलराजधान्याः तिरुअनन्तपुरं नगरस्य राजकीय-प्राचीनहस्तलेखसंग्रहालये च स्थितयोरस्या मातृकयोः संग्रहार्थं प्रेषितस्य मम साहाय्य-माचरितुं दक्षिणदेशीयो विद्वद्वरः डा० के० ई० गोविन्दाचार्यः सहाकारि । अतएव विना कष्टानुभवेन सर्वत्र कृतकार्यता सञ्जाता । पुण्यपत्तनस्थितात् भाण्डारकरप्राच्यविद्याशोध-संस्थानतः कलिकातास्थैशियाटिकसोसाइटीसंस्थातश्च स्वकीयकार्यालयमाध्यमेन मातृके संग्राह्य साधूपाकारि । दीर्घकालसाध्यं च कार्यमिदमित्याकलय्य मीमांसाध्यापकः **डा० कमलनयनशर्मा**, दर्शने शोधसहायिका **कु० अर्चना चतुर्वेदी** च साहाय्यार्थमत्र न्ययोजिषाताम् । यस्मान्मादृशा अप्यत्र कृतकार्यतां गता इति सर्वथैते सर्वे मदीयायाः हार्दिक्याः कृतवेदिताया भाजनानि भवन्ति । अहञ्चोपकारपरम्पराभिरधमर्णतां तेषां निसर्गतो बिभर्मि ।

[ २ ]

वैदिकेषु कर्मसु विश्वासाय निष्कम्पप्रवृत्तये च वेदानामपौरुषेयाणां मन्त्र-ब्राह्मणात्मकानां व्याख्यानस्यावश्यकताभूत् । एतदर्थं निश्चितप्रक्रियाया अवधारण-मप्यपेक्षितम् । अन्यथा स्वकीयस्य कर्त्तव्यस्य पालनाय तत्पराणां मानवानां हिताहित-परिज्ञानमेव न भवेत् । प्रवर्तकं निवर्तकं च वेदवाक्यजातं विषयवैविध्येन विस्तृतमत एव व्याख्यामपेक्षमाणं प्रणिधानेन चावधेयं भवति । व्याख्यया विनात्र भ्रान्तिरपि भवितु-मर्हतीति तदीयव्याख्याप्रक्रियाप्रतिपादकं मीमांसाशास्त्रमवातरत् । एतस्माद्धि शास्त्रात् न केवलं वैदिकं कर्मकाण्डमवगन्तुं शक्यमपि तु ज्ञानकाण्डमुपनिषदाद्यपि परिज्ञातुमर्हम् । शाङ्करभाष्यादिवेदान्तप्रतिपाद्यस्य भारतीयविद्यायाश्चरमोत्कृष्टस्य ब्रह्मणोऽपि विवेचन-मनयैव प्रक्रियया सञ्जायते । मीमांसाशास्त्रमेव वेदेषु कथं व्यवहर्तव्यमित्यस्य मार्गं प्रदर्शयति । तथा ह्युक्तम्—

'धर्मे प्रमीयमाणे हि वेदेन करणात्मना।
इतिकर्त्तव्यताभागं मीमांसा पूरयिष्यति ।।इति।।

यद्यपि याज्ञवल्क्यस्मृतौ शिक्षा, कल्पः, व्याकरणं, निरुक्तं, छन्दः, ज्योतिषञ्चेति षड्भिः वेदाङ्गैः सह धर्मशास्त्रं पुराणं न्यायो मीमांसा चेति चतस्रो विद्या वेदार्थानामवधारणाय समर्थिताः विद्यन्ते—

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ।।इति।।१।३।।

तथापि भवतु नाम वेदानां पदार्थजातस्य निर्णये तेषां नवानां शास्त्राणां सामर्थ्यं वाक्यार्थानामवधारणार्थं तु मीमांसाशास्त्रमेवोपयोगि भवतीत्यनुभूतं तद्विद्भिः। तथा हि 'अग्निहोत्रं जुहोती'ति उत्पत्तिविधिं 'दध्ना जुहोतीति' गुणविधिं 'उद्भिदा यजेत् पशुकाम' इति कर्मविधिं निर्दिशन्तीति मीमांसाशास्त्रेणैव निर्णेतुं शक्यम्। अन्येषामिह निर्दिष्टशास्त्राणां प्रक्रियाभिर्नैतत् निश्चेतुं शक्यम्। फलतः इतिकर्त्तव्यतानिर्णयः मीमांसाशास्त्रेणैव भवतीति नितरामुपयोगि शास्त्रमिदम्। किञ्च पदविग्रहादिज्ञाने प्रकृतिप्रत्ययादिबोधः भवतु नाम शास्त्रान्तरेभ्यः, शास्त्रेष्वेकवाक्यतासम्पादकं तु मीमांसाशास्त्रं भवतीति विशेषः स्पष्टं परिलक्ष्यत एव।

एतद्धि मीमांसाशास्त्रं वस्तुतः परीक्षाशास्त्रम् नान्यशास्त्रमिवानुशासनात्मकमिति तदीयविवेच्यपदार्थानामालोचनेनावगम्यते। 'तस्य निमित्तपरीष्टि' रिति तृतीयमस्य सूत्रमत्र स्पष्टं साक्षि भवति। परीष्टिरिह परीक्षणस्यैव भवति पर्यायः। यतो हीदं शास्त्रं वेदवाक्यानां परीक्षणार्थमाविर्भूतमतः पारस्करगृह्यसूत्रैऽस्य वेदतयैव परिग्रहोऽवलोक्यते—

'विधिर्विधेयस्तर्कश्च वेद' इति तद्वचनम्।

अत्र विधिपदेन ब्राह्मणभागः विधेयपदेन मन्त्रभागस्तर्कपदेन च मीमांसाशास्त्रं तदभिप्रेतानीति तद्विदां धारणा। 'तर्क्यन्ते अवधार्यन्ते वेदार्था अनेनेति' तर्कपदस्येह व्युत्पत्तिः। मनुस्मृतावपि तर्कपदेन मीमांसाशास्त्रस्य व्यवहारो दृश्यते—

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ।१२।१०६।।

वेदेषु प्रामाण्यं तदितरेषु सतामनभिमतेष्वप्रामाण्यं व्यवस्थापयितुं निर्धारिता उपाया युक्तिपदव्यपदेश्या भवन्ति। एषामुपायानां यत्र विवृतिस्तद् युक्तिशास्त्रम्। तस्माद् युक्तिस्तर्को न्यायश्चेति पर्यायाः मीमांसाशास्त्रस्यैव वाचकाः। न्यायपदस्य व्युत्पत्तिस्तु न्यायमीमांसाशास्त्रयोरेकविधैव विद्यते 'नीयते प्राप्यते विवक्षितार्थ-

सिद्धिरनेनेति'। परमर्थे भेदः परस्परमुभयत्र भवति। मीमांसायां न्यायपदमधिकरण-वाचकम्। 'न्यायोऽधिकरणमिति' जैमिनिन्यायमालायां माधवाचार्यः। न्यायशास्त्रे तु परार्थानुमाने स्फुटं परेषां प्रत्यायनाय व्यवह्रियमाणः पञ्चावयवात्मको भवति न्यायः। 'प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवा' इति हि प्रसिद्धं न्यायसूत्रम्। एवं न्यायशास्त्रे तर्कोऽपि पारिभाषिकः षोडशपदार्थेष्वन्यतमः स्वकीयं स्वतन्त्रमस्तित्वं परिरक्षति।

वाक्यार्थावधारणप्रक्रियाप्रदर्शकतया मीमांसाशास्त्रमेतद् वाक्यशास्त्रपदेनाप्यभि-धीयते। अस्य शास्त्रस्य प्रशंसायां दार्शनिकमूर्धन्यः वाचस्पतिमिश्रस्तात्पर्यटीकायां पारस्करगृह्यसूत्रस्य वचनं स्फुटमनुमोदते। तथा च तत्र ब्रवीति—

**मीमांसासंज्ञकस्तर्कः सर्ववेदसमुद्भवः।**
**सोऽतो वेदो समाप्राप्तकाष्ठादिलवणाम्बुभवत्॥**

अत्र प्रक्रिया तावत् प्रमाणेन प्रमेयस्य सिद्धिर्जायते। प्रमाणं च लक्षणेनावगम्यते। अत एव 'लक्षणप्रमाणाभ्यां हि वस्तुसिद्धि'रिति प्रसिद्धश्चत्याभाणकः। सम्पूर्णस्यैव वेदस्य तात्पर्यं धर्मे निहितमस्ति। तस्य च परिज्ञानं लक्षणप्रमाणाभ्यां भवितुमर्हतीति प्राथम्येनेह धर्मजिज्ञासा समागच्छति। विविधार्थकोऽप्ययं धर्मशब्दोऽत्र मानवस्येष्टसिद्ध्यु-पयोगि कर्त्तव्येषु पर्यवसितोऽस्ति। अत एव विधिनिषेधकर्मणीह प्रामुख्यं भजमाने धर्मपदेन परिगृह्येते। हितेषु प्रवृत्तिः अहितेषु निवृत्तिश्च मानवानां नैसर्गिकं भवति कर्त्तव्यम्। तत्र प्रेरकश्च वेदवाक्यं भवतीति धर्मस्य चोदनालक्षणत्वं घटते। अत एव चोदनालक्षणोऽर्थो धर्म इति तत्स्वरूपं मीमांसासूत्रमवधारयति।

अत्राधिकरणपदवाच्या पञ्चसूत्रात्मिका विचारपद्धतिर्विलसति। पक्षविपक्षयो र्बलाबलं विचिन्त्य कस्यापि विषयस्य विचाराय प्रवृत्तेन निर्णयः क्रियते। केवलं विषयस्योल्लेखमात्रेण निर्णयो न शक्यक्रियः। अपि तु तद्विषयकेणोहापोहेन इदमित्थमित्यवधारणं सिद्धान्ते परिणमते। अन्तिमनिर्णयविषयो हि सिद्धान्त उच्यते। 'अन्ते सिद्ध' इति हि तद्व्युत्पत्तिः, राजदन्तादिवदिह समासः। ऊहापोहश्च पञ्चभिः प्रकारैः क्रियते (१) विवदमानस्य विषयस्य प्रस्तुत्या (२) तत्र संभावितस्य संशयस्य प्रदर्शनेन (३) पूर्वपक्षस्य साधनाय युक्तीनां प्रदर्शनेन (४) तन्निराकरणाय बाधकानां प्रमाणानामुपस्थापनेन सह सिद्धान्तस्योत्तरपक्षस्य साधकानां प्रमाणानां प्रदर्शननेनाथ (५) चाभिमते पक्षे बाधकप्रमाणाभावैः सह साधकप्रमाणानां सङ्गत्या सिद्धान्तः स्थिरो भवति।

**विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्।**
**सङ्गतिश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम्॥ इति॥**

कारिकेयमधिकरणप्रणालीं सूत्रतया निर्दिशति। अस्यैव सहायतया प्रमाणानि, भेदः, शेषत्वम्, प्रयुक्तिः, क्रमोऽधिकारः, सामान्यविशेषातिदेशौ, ऊहः बाधस्तन्त्रं

प्रसङ्गश्चेति द्वादशोपाङ्गानि निर्दिष्टानि येषां विवरणेन शास्त्रमिदं परिपूर्णं कृत-कृत्यं च वर्तते ।

अतएव—

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ।।

इत्यभिलपति मीमांसा वाक्यानां तात्पर्यनिर्णयार्थम् । प्रकरणप्रतिपाद्य स्याद्यन्तयोः प्रतिपादनमुपक्रमोपसंहारौ भवतः । तस्यैव पौनः पुन्येन प्रतिपादनमभ्यासः, तस्यैव मानान्तराविषयत्वनिर्धारणमपूर्वता, तस्यैव श्रूयमाणं तज्ज्ञानात् तत्प्राप्ति-प्रयोजनं फलम्, तस्यैव प्रशंसनमर्थवादः, तस्यैव दृष्टान्तैः प्रतिपादनमुपपत्तिरिति सप्त लिङ्गानि वाक्यानां तात्पर्यनिर्णयाय समुपयुज्यन्त इति विदितमेव तद्वित्सु ।

तस्मात् मीमांसाशास्त्रं परीक्षणायैव समुद्भूतं मुख्यतः वेदवाक्यार्थं परीक्षते अनुषङ्गतस्तु सर्वत्रैव शिष्टानां लोकयात्रासु समुपयोगि भवति । पुरा काले प्राड्विवाका अधिकरणिकाश्च न्यायमीमांसयोरभिज्ञा एवाभूवन् । अधिकरणिकपदमेवाधिकरणेनेह परिभाषितेन सम्पद्यते । यतो हि विचारस्य पद्धतिरत्रैव निर्दिष्टा । यज्ञयागादिकं वैदिकं कर्मकाण्डं कालकवलितं सल्लुप्तमभवत् अतएवोदाहरणतया विचारविषयतया च परिगृहीतानां कर्मकाण्डविषयाणामपरिज्ञानादस्याध्ययनाध्यापनयोर्वैरल्यमधुनाभवत् ।

[ २ ]

अस्यापि शास्त्रस्योद्भवविकासयोः परम्परां विचार्य चेतश्चेखिद्यते । यतो हि ग्रन्थानां कालकवलनेन मध्ये मध्येऽत्र रिक्ततानुभवो भवत्येव । *मीमांसामहोदधिः*[१] ज्ञानश्रीमित्रेण बौद्धदार्शनिकेन समुद्धृतोऽधुना कुत्रापि नोपलभ्यते । अस्योल्लेखः हेतु-बिन्दुटीकायां नयविवेके धर्मोत्तरप्रदीपे चास्ति[२] । प्रबोधचन्द्रोदये श्रीकृष्णमिश्रः अनेन ग्रन्थेन साकं महाव्रताभिधस्य मीमांसकस्य *माहाव्रती* नामकं ग्रन्थमप्युद्धरति, यः खल्विदानीं लुप्त एव वर्तते सर्वथा । नान्यत्र मातृकाग्रन्थागारेष्वपि नाम श्रूयते तस्य । तथा चात्र प्रबोधचन्द्रोदयः—

नैवाश्रावि गुरोर्मतं न विदितं कौमारिलं दर्शनम्
तत्त्वज्ञानमहो न शालिकगिरां वाचस्पतेः का कथा ।
सूक्तं नापि *महोदधेरधिगतं* *माहाव्रती* नेक्षिता ।
सूक्ष्मा वस्तुविचारणा नृपशुभिः स्वस्थैः कथं स्थीयते ।। [२।३।]

---

१. द्रष्टव्या ज्ञानश्रीमित्रनिबन्धावली पृ० ६६, ३४३ ।

२. द्रष्टव्या हेतुबिन्दुटीका पृ० ३५६, नयविवेकः २७१, धर्मोत्तरप्रदीपः १२८, २०५ । ज्ञानश्रीमित्रनिबन्धावली भूमिकातोऽत्र संगृहीतम् ।

उभौ च मीमांसकौ आचार्योदयनात् प्राग्भवावास्ताम् । एवं प्रसिद्धतमस्य भट्टकुमारिलस्य *बृहट्टीका*ग्रन्थः नाममात्रेणावशिष्यते नयनपथातिथिस्तु नाभूत् कस्यापि । ततः समुद्धृतस्तु श्लोकः बौद्धदार्शनिकस्य **कमलशीलस्य** तत्त्वसङ्ग्रहे सन्दृश्यते[1] । प्रसिद्ध-नैयायिकस्य तत्त्वचिन्तामणेः प्रभाव्याख्याकृतः **यज्ञपत्युपाध्यायस्य** पितामहेन **वटेश्वरोपाध्यायेन** प्रणीतः प्राभाकरसिद्धान्तप्रख्यापकः *मीमांसामहार्णवः* अन्यत्रोल्लिखित-सन्दर्भेणावगम्यते[2] । भाट्टमतप्रचारकस्य राढदेशीयस्य **चन्द्रस्य** *न्यायरत्नाकरो*ऽशतः प्रकाशितोऽपि बहुलांशतोऽनुपलब्ध एव । अस्यैव*ामृतबिन्दु*नामा ग्रन्थः केवलं मातृकायां क्वचित् क्वचिदुपलभ्यते । भाट्टसंप्रदायसंपोषकस्य **श्रीधराचार्यस्य** *तत्त्वप्रबोधस्तु* चिरादेवास्ति लुप्त इति मीमांसाशास्त्रे निरुक्तानां ग्रन्थानां लोपेन जायमानां विडम्बनामपाकर्तु-मुपायः नैव दृश्यते । अत एव दुर्लभस्य महत्त्वपूर्णस्य शास्त्रीयग्रन्थस्य प्रकाशनमपेक्ष्यत एव । अनेनानुष्ठानेन शास्त्रस्य संरक्षणं, प्रचारः, सन्दर्शितायाः रिक्ततायाः परिपूर्तिः, अनुसन्धानकर्मणि विचारस्याग्रेसरता च सम्पद्यन्ते । अस्माकं भारतीयानामात्मपरिचयोऽपि भवति यदस्माकं पूर्वजाः वस्तुतः धन्याः विचारसम्पन्नाः शास्त्रसंरक्षणतत्पराश्चासन् वैदेशिकैः लोकव्यवहारेषु प्रभाविता अपि शास्त्रचिन्तनावसरे सर्वथा स्वतन्त्राः शास्त्रेषु नितरां श्रद्धालवः प्राणपणेनापि शास्त्रमरक्षन्निति ।

[ ५ ]

अस्मिन्नेव प्रक्रमे *अजितापि* सम्पादनं प्रकाशनं चापेक्षमाणा आसीत् । तन्त्रवार्त्तिकस्य यद्यपि श्रूयन्तेऽनेकाष्टीकाः । यथा शास्त्रदीपिकायां *मण्डनमिश्र*प्रणीताया व्याख्याया उल्लेखोऽस्ति[1] न चोपलभ्यते । *तौतातितमततिलकं* बालवलभीभुजङ्गस्य **भट्टभवदेवस्य** तन्त्रवार्त्तिकव्याख्येति श्रूयते[2] । इयं हि खृष्टीयैकादशशतकीयेति तद्विदां धारणा । तुतात इति हि भट्टकुमारिलस्य प्रियं नामासीदत एव व्याख्यान्वर्थिकेयमिति विभावनीयम् । अस्यैव समसामयिकेन **भट्टसोमेश्वरेण** विहिता तन्त्रवार्त्तिकस्य व्याख्या त्रिकाण्डिमीमांसामण्डनाभिधो राणकनाम्ना विख्याता *न्यायसुधेति* पर्यायान्तरा वर्तते । इयमतिविस्तृता ग्रन्थाभिप्रायप्रकाशनापेक्षया स्वतन्त्रविचारप्रवर्तन द्वारा स्वकीयपाण्डित्य-प्रकाशनेऽधिकं तत्परा प्रतिभाति । अतएव 'विस्तरोक्तं मतिं हन्तीति' रीत्या यद्यपि न सर्वेषामल्पविद्यजिज्ञासूनामुपकाराय समर्था तथापि कृतभूरिश्रमाणां विनोदाय तु

---

१. 'विवृतं चैतन्मण्डनेन—

कथ्यमानाद् रूपभेदाद् द्विधा धात्वर्थसंगतिः
अन्योत्पादानुकूलात्मा भावना किं प्रदूष्यति ॥ इति २।१।१। शास्त्रदीपिका पंक्तिः ।

२. अस्या मातृका इन्डिया औफिस लाइब्रेरी लण्डन इत्यत्र वर्तते इति झामहाभागः प्रत्यपादयत् पूर्वमीमांसा इन इट्स सोर्सेस पृ० २० ।

प्रभवत्येव। अतोऽस्याः न्यायसुधायाः सर्वोपकारिणी सर्वानवद्यकारिणीति नामभ्यामपि प्रसिद्धिरस्ति। इयं हि प्रकाशिता वर्तते।

*न्यायपरायणाभिधा* गङ्गाधरमिश्रप्रणीता तन्त्रवार्तिकव्याख्या नैव विद्यते प्रकाशिता। अयं हि व्याख्याकृत् मैथिलस्य मधुवनीमण्डलान्तर्गतसिमरीग्राम-वास्तव्यस्य भट्ट सोमेश्वरस्य पुत्रस्त्रयोदशशतकभव इति मीमांसाकुसुमाञ्जलौ म० म० डा० *उमेशमिश्रचरणाः*। अस्यास्तु मातृका वाराणस्यां सरस्वतीभवने वर्तत इति प्रातः स्मरणीयाः डा० *गङ्गानाथझा*महाभागाः।

**शाल्मलीग्रामसम्भूतभट्टसोमेश्वरात्मजः।**
**गङ्गाधरोऽतिगम्भीरं व्यवृणोत् तन्त्रवार्तिकम्॥**

इत्यस्य परिचयमप्यत्र समुद्धृतमस्ति। तस्मादस्या पिता राणकव्याख्याकृतः भट्टसोमेश्वराद् भिन्न इत्यवधार्यम्।

काव्यव्याख्यातृसु सुप्रसिद्धस्य मल्लिनाथस्यापि व्याख्यासीदिति तदीयकाव्य व्याख्यासु विहितेन सङ्केतेनावधार्यते। विहारस्य वेगूसरायनामकस्थाने जी० डी० महा-विद्यालये संस्कृताध्यापकेन डा० कृष्णकुमारझाशर्मणा मल्लिनाथस्यावदानमधिकृत्य लिखिते शोधप्रबन्धे विषयोऽयं सप्रमाणं प्रतिष्ठापितोऽस्ति, किन्तु नाद्यावधि मातृकागारेषु कृतेऽप्यन्वेषणे समुपलब्धैषा।

राघवसोमयाजिनः वंशावतंसः प्रसिद्धवेदान्तविद्याविदस्तिरूमलाचार्यस्य पुत्रोऽन्नं भट्टोऽस्य तन्त्रवार्तिकस्य *सुबोधनी*व्याख्यामलिखत्। सरस्वतीभवनपुस्तकालयेऽस्या मातृका सुरक्षितास्तीति श्रूयते। अस्यैवान्नंभट्टस्य तर्कसंग्रहः प्रसिद्धयति न्यायवैशेषिक परम्परायामत एव विदुषामयमतिपरिचितः।

सर्वथास्माकमज्ञातपरिचयस्य गोपालभट्टस्य *मिताक्षरा*भिधा तन्त्रवार्तिकव्याख्या श्रूयते। पुण्यश्लोकः झामहाभागोऽत्र प्रमाणम्। तस्य पूर्वमीमांसा इन इट्स सोर्सेस नाम्नि ग्रन्थे (पृ० २०) समुल्लेखोऽस्याः व्याख्यायाः विद्यते।

खृष्टीयसप्तदशशतकीयेन भाट्टप्रस्थानस्य समर्थकविदुषः रामकृष्णभट्टस्यात्मजेन काव्यप्रकाशादिविविधशास्त्रव्याख्याकृता निर्णयसिन्धुकारेण प्रसिद्धपाण्डित्येन कमलाकरभट्टेनाप्यस्य *तन्त्रवार्तिकस्य व्याख्या* सर्वास्ववर्चीना व्यधायीति मीमांसा-कुसुमाञ्जलेरवगम्यते।

खृष्टीयत्रयोदशशतकभवेन मैथिलविदुषा *परितोषमिश्रेण* प्रणीतास्य व्याख्या *जिता*स्माभिरिह सम्पादनाय परिगृहीता नातिविस्तीर्णा न वातिसंक्षिप्ता यावदुक्तोप-पन्नाऽर्थात् यावद्भिरुक्तैरभिप्राय उपपद्यते व्याख्येयस्य ग्रन्थस्य तावदुक्तिका मूलाभिप्राय-प्रकाशने पटीयस्यभ्यर्हिता चात एव विदुषां वर्तते। अत्र शब्दलाघवम्, पूर्वापरसम्बन्ध-

उभौ च मीमांसकौ आचार्योदयनात् प्राग्भवावास्ताम् । एवं प्रसिद्धतमस्य भट्टकुमारिलस्य *बृहट्टीका*ग्रन्थः नाममात्रेणावशिष्यते नयनपथातिथिस्तु नाभूत् कस्यापि । ततः समुद्धृतस्तु श्लोकः बौद्धदार्शनिकस्य कमलशीलस्य तत्त्वसङ्ग्रहे सन्दृश्यते[1] । प्रसिद्धनैयायिकस्य तत्त्वचिन्तामणेः प्रभाव्याख्याकृतः **यज्ञपत्युपाध्यायस्य** पितामहेन **वटेश्वरोपाध्यायेन** प्रणीतः प्राभाकरसिद्धान्तप्रख्यापकः *मीमांसामहार्णवः* अन्यत्रोल्लिखितसन्दर्भेणावगम्यते[2] । भाट्टमतप्रचारकस्य राढदेशीयस्य **चन्द्रस्य** *न्यायरत्नाकरों*ऽशतः प्रकाशितोऽपि बहुलांशतोऽनुपलब्ध एव । अस्यैव*ामृतबिन्दु*नामा ग्रन्थः केवलं मातृकायां क्वचित् क्वचिदुपलभ्यते । भाट्टसंप्रदायसंपोषकस्य **श्रीधराचार्यस्य** *तत्त्वप्रबोधस्तु* चिरादेवास्ति लुप्त इति मीमांसाशास्त्रे निरुक्तानां ग्रन्थानां लोपेन जायमानां विडम्बनामपाकर्तुमुपायः नैव दृश्यते । अत एव दुर्लभस्य महत्त्वपूर्णस्य शास्त्रीयग्रन्थस्य प्रकाशनमपेक्ष्यत एव । अनेनानुष्ठानेन शास्त्रस्य संरक्षणं, प्रचारः, सन्दर्शितायाः रिक्ततायाः परिपूर्तिः, अनुसन्धानकर्मणि विचारस्याग्रेसरता च सम्पद्यन्ते । अस्माकं भारतीयानामात्मपरिचयोऽपि भवति यदस्माकं पूर्वजाः वस्तुतः धन्याः विचारसम्पन्नाः शास्त्रसंरक्षणतत्पराश्चासन् वैदेशिकैः लोकव्यवहारेषु प्रभाविता अपि शास्त्रचिन्तनावसरे सर्वथा स्वतन्त्राः शास्त्रेषु नितरां श्रद्धालवः प्राणपणेनापि शास्त्रमरक्षन्निति ।

[ ४ ]

अस्मिन्नेव प्रक्रमे *अजितापि* सम्पादनं प्रकाशनं चापेक्षमाणा आसीत् । तन्त्रवार्त्तिकस्य यद्यपि श्रूयन्तेऽनेकाष्टीकाः । यथा शास्त्रदीपिकायां *मण्डनमिश्र*प्रणीताया व्याख्याया उल्लेखोऽस्ति[1] न चोपलभ्यते । *तौतातिमततिलकं* वालवलभीभुजङ्गस्य **भट्टभवदेवस्य** तन्त्रवार्त्तिकव्याख्येति श्रूयते[2] । इयं हि खृष्टीयैकादशशतकीयेति तद्विदां धारणा । तुतात इति हि भट्टकुमारिलस्य प्रियं नामासीदत एव व्याख्यान्वर्थिकेयमिति विभावनीयम् । अस्यैव समसामयिकेन **भट्टसोमेश्वरेण** विहिता तन्त्रवार्त्तिकस्य व्याख्या त्रिकाण्डिमीमांसामण्डनाभिधो राणकनाम्ना विख्याता *न्यायसुधेति* पर्यायान्तरा वर्तते । इयमतिविस्तृता ग्रन्थाभिप्रायप्रकाशनापेक्षया स्वतन्त्रविचारप्रवर्तन द्वारा स्वकीयपाण्डित्यप्रकाशनेऽधिकं तत्परा प्रतिभाति । अतएव 'विस्तरोक्तं मतिं हन्तीति' रीत्या यद्यपि न सर्वेषामल्पविद्यजिज्ञासूनामुपकाराय समर्था तथापि कृतभूरिश्रमाणां विनोदाय तु

---

१. 'विवृतं चैतन्मण्डनेन—

कथ्यमानाद् रूपभेदाद् द्विधा धात्वर्थसंगतिः
अन्योत्पादानुकूलात्मा भावना किं प्रदूष्यति ॥ इति २।१।१। शास्त्रदीपिका पंक्तिः ।

२. अस्या मातृका इन्डिया औफिस लाइब्रेरी लण्डन इत्यत्र वर्तते इति झामहाभागः प्रत्यपादयत् पूर्वमीमांसा इन इट्स सोर्सेस पृ० २० ।

प्रभवत्येव। अतोऽस्याः न्यायसुधायाः सर्वोपकारिणी सर्वानवद्यकारिणीति नामभ्यामपि प्रसिद्धिरस्ति। इयं हि प्रकाशिता वर्तते।

*न्यायपरायणाभिधा* गङ्गाधरमिश्रप्रणीता तन्त्रवार्त्तिकव्याख्या नैव विद्यते प्रकाशिता। अयं हि व्याख्याकृत् मैथिलस्य मधुवनीमण्डलान्तर्गतसिमरीग्राम-वास्तव्यस्य भट्ट सोमेश्वरस्य पुत्रस्त्रयोदशशतकभव इति मीमांसाकुसुमाञ्जलौ म० म० डा० *उमेशमिश्रचरणाः*। अस्यास्तु मातृका वाराणस्यां सरस्वतीभवने वर्तत इति प्रातः स्मरणीयाः डा० *गङ्गानाथझा*महाभागाः।

> शाल्मलीग्रामसम्भूतभट्टसोमेश्वरात्मजः।
> गङ्गाधरोऽतिगम्भीरं व्यवृणोत् तन्त्रवार्त्तिकम्॥

इत्यस्य परिचयमप्यत्र समुद्धृतमस्ति। तस्मादस्या पिता राणकव्याख्याकृतः भट्टसोमेश्वराद् भिन्न इत्यवधार्यम्।

काव्यव्याख्यातृसु सुप्रसिद्धस्य मल्लिनाथस्यापि व्याख्यासीदिति तदीयकाव्य व्याख्यासु विहितेन सङ्केतेनावधार्यते। विहारस्य वेगूसरायनामकस्थाने जी० डी० महा-विद्यालये संस्कृताध्यापकेन डा० कृष्णकुमारझाशर्मणा मल्लिनाथस्यावदानमधिकृत्य लिखिते शोधप्रबन्धे विषयोऽयं सप्रमाणं प्रतिष्ठापितोऽस्ति, किन्तु नाद्यावधि मातृकागारेषु कृतेऽप्यन्वेषणे समुपलब्धैषा।

राघवसोमयाजिनः वंशावतंसः प्रसिद्धवेदान्तविद्याविदस्तिरूमलाचार्यस्य पुत्रोऽन्नं भट्टोऽस्य तन्त्रवार्त्तिकस्य *सुबोधनी*व्याख्यामलिखत्। सरस्वतीभवनपुस्तकालयेऽस्या मातृका सुरक्षितास्तीति श्रूयते। अस्यैवान्नंभट्टस्य तर्कसंग्रहः प्रसिद्धयति न्यायवैशेषिक परम्परायामत एव विदुषामयमतिपरिचितः।

सर्वथास्माकमज्ञातपरिचयस्य गोपालभट्टस्य *मिताक्षरा*भिधा तन्त्रवार्त्तिकव्याख्या श्रूयते। पुण्यश्लोकः झामहाभागोऽत्र प्रमाणम्। तस्य पूर्वमीमांसा इन इट्स सोर्सेस नाम्नि ग्रन्थे (पृ० २०) समुल्लेखोऽस्याः व्याख्यायाः विद्यते।

खृष्टीयसप्तदशशतकीयेन भाट्टप्रस्थानस्य समर्थकविदुषः रामकृष्णभट्टस्यात्मजेन काव्यप्रकाशादिविविधशास्त्रव्याख्याकृता निर्णयसिन्धुकारेण प्रसिद्धपाण्डित्येन कमलाकरभट्टेनाप्यस्य *तन्त्रवार्त्तिकस्य व्याख्या* सर्वास्वर्वाचीना व्यधायीति मीमांसा-कुसुमाञ्जलेरवगम्यते।

खृष्टीयत्रयोदशशतकभवेन मैथिलविदुषा *परितोषमिश्रेण* प्रणीतास्य व्याख्या-*जिता*स्माभिरिह सम्पादनाय परिगृहीता नातिविस्तीर्णा न वातिसंक्षिप्ता यावदुक्तोप-पन्नाऽर्थात् यावद्भिरुक्तैरभिप्राय उपपद्यते व्याख्येयस्य ग्रन्थस्य तावदुक्तिका मूलाभिप्राय-प्रकाशने पटीयस्यभ्यर्हिता चात एव विदुषां वर्तते। अत्र शब्दलाघवम्, पूर्वापरसम्बन्ध-

स्थापनं प्रत्यर्थप्रतिवद्धनिर्मलगुणत्वं च व्याख्यासौष्ठवमवलोकनीयतां गच्छति । अत्रा-नपेक्षितस्याप्रसिद्धमूलस्य च विषयजातस्य समावेशो नास्तीति वैशिष्ट्यमस्याः ।

[ ५ ]

तन्त्रवार्त्तिके अजितायां च समागत अधिपाठालोचनविचारः स्वातन्त्र्येण गवेषणाविषयः । दिङ्मात्रमिह प्रदर्श्यते—

यथा सदाचारप्रामाण्याधिकरणे—'यथा युधिष्ठिरोपदेशादिति सन्दर्भे आनाय्यमाना इति वार्त्तिकपाठं व्याख्याय अन्याय्यमानमिति क्वचित्पाठ इत्युक्त्वा तद्व्युत्पत्तिं प्रदर्श्य आत्मानमन्याय्याचरणेन ख्याप्यमानमित्यर्थ इत्यजिताभिदधाति । तस्मात् तदानीं तन्त्रवार्त्तिकस्य पाठद्वयमपि सम्प्रदायसम्मतमासीदिति परिज्ञायते । (पृ० २०४) ।

यो ब्राह्मण इति ह्युक्ते हननप्रतिषेधतः ।
ब्राह्मणे प्रतिषेधे वा लिङ्गं नान्यद् विधीयते ॥

अत्रो'द्दिष्टे ब्राह्मणे यस्माद् हननप्रतिषेधस्तस्माद् लिङ्गं नान्यद् विधीयते । यदि तु हननमिति पाठस्तदा हननं प्रतिषेधतो विधायकात् प्रतिषेधतः पुरुषस्येति वा योज्यमिति [पृ० २०६]

'तथा शब्देऽपि बुद्धेर्नियमान्नाभिव्यक्ति'रिति तन्त्रवार्त्तिकपाठं व्याख्याय क्वचित् पाठोऽवृद्धेर्नियमादिति तत्र वृद्ध्यभावस्य नियमप्रसङ्गादिति योजनेति [पृ० २४६] । तस्मात् न केवलमभिप्रायावबोधायैव बद्धपरिकरोऽपि तु पाठालोचनेऽपि नितरां जागरूकः प्रतिभात्ययं परितोषमिश्रः ।

एवं तन्त्रवार्त्तिके भट्टकुमारिलोऽप्यत्र नितरां सावधानः परिलक्ष्यते । तथा हि १।२।८। सूत्रस्य व्याख्यावसरे भट्टपादः कथयति 'त्रयोऽत्र पाठाः । अप्राप्तां चानुपपत्ति-मित्यत्र मन्यामहे इति वाक्यशेषः । अप्राप्तं चानुपपत्तिमित्यपरस्तत्रास्मद् व्याख्यानमित्य-ध्याहारः अप्राप्ता चानुपपत्तिरित्यपरस्तत्रास्मत्पक्षे विज्ञेयेति' [पृ० ५१] । एवं यत् तदानीमेवोत्पद्यते तदाकालिकम्·······पाठान्तरमाकालिकडाद्यन्तवचन इति । अकालिक-मिति वा पाठः' [पृ० ५८] । तस्मात् प्राचीनकाले व्याख्याकारेणात्मदायित्वरूपेण मन्ये परिगृहीतमासीत् पाठालोचनमिति तन्त्रवार्त्तिकाजिते प्रमाणयतः । अन्यत्रापि काव्यव्याख्यादिषु विषयोऽयं मल्लिनाथादिभिर्व्याख्याकारैः साधु परिपोषितः ।

परं महतः खेदस्य विषयोऽयं यदस्या व्याख्यातुः परिचयः देशकालौ कुल-मूलादिकं च नैव विदितानि सन्ति । तज्ज्ञानाय साधनमपि किमपि नोपलभ्यते ।

मातृकास्वस्था मुखपृष्ठोपरि तन्त्रटीकानिवन्धनमिति नामास्ति निर्दिष्टम् । किन्तु तृतीयाध्यायान्ते पद्यमेकं लिखन् स्वयं ग्रन्थकारोऽस्याः अजितामभिधां समर्थयति—

अजितातटमधिवसता तज्जलसेवाविधूतपापेन ।
टीकेयमारचिता तस्मादजितेव नाम्नास्तु ।। इति

यद्यपि अजिताभिधाना नदी कुत्रापि प्रसिद्धा नास्ति तथापि अजितस्य नारायणस्य शालग्रामरूपेणास्यामस्यास्तटे चोपलब्ध्या नेपाले शालग्रामीनाम्ना भारतस्य विहारप्रान्ते वैशालीमण्डले समागतायास्तस्या एव नारायणी नाम्ना पुनरन्यत्र गण्डकीनाम्ना च प्रथिता नदी मन्ये मीमांसकमूर्धन्यस्य परितोषमिश्रस्याजितयाभिप्रेता आसीत् । यतो हि मीमांसाकुसुमाञ्जलौ **म० म० उमेशमिश्र**महाशयेनायं खृष्टीयत्रयोदशशतकभवो मैथिलः प्रसाधितोऽस्ति, अतोऽस्य नारायणीनद्यास्तटे सम्भवति वासः ।

मिथिलायां तदानीं रुढमूला मीमांसा अध्ययनाध्यापनग्रन्थप्रणयनादिविधिभिश्च प्रचारिता विकसिता चासीदिति न प्रयत्नप्रतिपादनीयतामर्हति ।

पुण्यश्लोकः **गङ्गानाथझा**महाशयस्तु मण्डनसोमेश्वरपार्थसारथिसुचरितमिश्रेभ्योऽपि प्राचीनं परितोषमिश्रं परिकल्पयतीति तदीयोक्तपुस्तकस्य १८ तमे पृष्ठे लिखितया पङ्क्त्यावगम्यते ।

## [ ६ ]

अस्या अजिताया मातृकापञ्चकमस्माकं सम्पादनस्याधारतया विराजते ।

१. मद्रासनगरीयप्राच्यविद्याहस्तलेखागारतः डा० झामहाभागेन सङ्कलितैका मातृका ।

२. भण्डारकरप्राच्यविद्याशोधसंस्थानतः पूनानगरतः संगृहीता मातृका ।

३. मद्रासनगरीयाद्यारग्रन्थागारतः संगृहीता पाण्डुलिपिः ।

४. केरलस्य राजधान्यां स्थितात् राजकीयहस्तलेखालयतः संगृहीता मातृका ।

५. अथ च कलिकातास्थैशियाटिकसोसाइटीसंस्थातः सङ्कलिता पाण्डुलिपिरिति ।

खेदस्य विषयोऽयं यत्सर्वापि मातृका त्रुटितैव विद्यते । सर्वासां तासां संग्रहेण तु ग्रन्थः सुसम्बद्धः परिपूर्णश्च भवति ।

तथा हि मद्रासप्राच्यविद्याहस्तलेखागारतः झामहाभागैरेव कारितायां प्रतिलिपौ प्रथमाध्यायस्य द्वितीयतृतीयपादयोर्व्याख्या नास्ति । अन्यस्तु सर्वोंऽशः विद्यते ।

पूनातः समुपलब्धाया मातृकायाः पाठस्य सङ्केतोऽत्र पू० मा० इति रीत्या विहितोऽस्ति । अत्रापि प्रथमाध्यायस्य द्वितीयपादस्य व्याख्याऽर्थात् आरम्भिको भागः नोपलभ्यते । प्रथमाध्यायस्य तृतीयपादत इह ग्रन्थारम्भो भवति । इह प्रतिलिपिकृता कश्चन प्रमाद आचरितः । तृतीयपादस्यारम्भिकमंशं लिखित्वा चतुर्थपादसंबद्धां व्याख्यां लिखति, एवं चतुर्थपादस्यारम्भिकं भागं दशपंक्तिमितं लोपयित्वा अग्रिमांशं लिखन् तृतीयपादस्य व्याख्यां लिखति । सम्पादनावसरे प्रारम्भे महत्काठिन्यमनुभूतं पश्चादर्थ-क्रमानुसन्धानेन तत्र परिगृहीतानां प्रतीकानां परीक्षणेनाधारग्रन्थागारमातृकायाः परिशील-नेन च तत्काठिन्यमपाकृतम् । द्वितीयतृतीयाध्याययोर्मातृकेह सुसंबद्धा क्रमानुसारिणी चेति न काचिदनुपपत्तिः । अत्र परिगणनेन १७३ पत्राणि सन्ति । प्रथमोऽध्यायः पञ्चाशत् पत्रात्मकः । द्वितीयोऽध्याय अष्टचत्वारिंशत् पत्रात्मकस्तृतीयोऽध्यायस्तु पञ्चसप्ततिपत्रा-त्मकः । द्वाभ्यां लेखकाभ्यां प्रभाकरेण रघुनाथेन च लिखितेयं मातृका । अस्याः स्वामी तु भट्टबापूसुतः नारायणनामा कश्चिदिति मुखपृष्ठे पुष्पिकायां च निर्दिष्टमस्ति । १२$\frac{1}{2}$ × ४$\frac{1}{2}$ इन्च आकृतिकेयं मातृकात्र प्रतिपत्रं पञ्चदश पंक्तयः प्रतिपंक्ति च सप्तपञ्चाशद-क्षराणि सन्ति । लिपिस्तु देवनागरी प्रतिलिपिसमयोऽत्र नास्ति निर्दिष्टः । ग्रन्थागारे तत्र सङ्केतसंख्यैवंविधा—मातृका संख्या $\frac{\text{७३४}}{\text{१८८१ — ९५}}$ विभागसंख्या ३७ । नवीनसंख्या १७ । आधारश्च देशी कागज इति ।

अत्र स्थूलदृष्ट्या त्रुटयोऽपि परिदृश्यन्ते । तृतीयपादस्यान्तिमांशः दशपंक्तिमितो नास्ति । तृतीयाध्यायषष्ठपादस्य पत्रमेकं वारद्वयं लिखितम् । प्रथमाध्यायतृतीयपादे पत्रसंख्यानिर्देशावसरे सप्तानन्तरं नवसंख्या निर्दिष्टाष्टमपत्रस्य लोप इव प्रतीयते किन्तु लेखस्य क्रमस्तावदनुकूलोऽस्ति । अत एव यथाक्रमभविच्छिन्नैव लभ्यते व्याख्या तात्त्विकी हानिर्न भवति । अत्र लेखेऽक्षराशुद्धिर्नास्ति सुवाच्यत्वं वैशद्यं च वर्तते । तस्माल्लेखकयोरभिज्ञतां प्रमाणयति लेखोऽयम् ।

आधारमातृका आधुनिककापीयुगलाकृतिकाधारे देवनागरीलिप्यां लिखिता प्रथमद्वितीयाध्यायात्मिका ८७३ पत्रेषु सङ्कलिता प्रतिपत्रं पङ्क्तयः १४. प्रतिपङ्क्ति २२. चा क्षराणि सन्ति । एक एव लेखकः सम्पूर्णस्य ग्रन्थस्य । मुखपृष्ठोपरि टी० आर०. ६७.१ – $\frac{\text{२३}}{\text{२६२}}$ ६३२४७ इति अपरत्र ६७.२ $\frac{\text{२४}}{\text{२६२}}$ इति च लिखितमस्ति मन्ये पुस्तकालयीयव्यवहारार्थमयं सङ्केत इति ।

१ तः ५१२ पत्रेषु प्रथमाध्यायः समाप्तो भवति। ५१३ तः ८७३ पत्रेषु द्वितीयाध्यायः समाप्तिमेति। प्रतिलिपिकृतः ग्रन्थस्वामिनो वा नामेह निर्दिष्टं नास्ति। अत्र मातृकान्तरापेक्षया पाठभेदः प्राचुर्येणोपलभ्यते। अक्षराणि सुवाच्यानि सन्ति। आ० मा० इति संकेतेनास्याः पाठष्टिप्पण्यां निर्दिष्टोऽस्ति।

तिरुअनन्तपुरम् नगरे स्थितस्य राजकीयहस्तलेखागारस्य मातृकास्याः २८० पत्रात्मके पञ्जिका [रजिस्टर] कृतिककागजाधारे लिखिता प्रायः केवलं सम्पूर्णस्य तृतीयाध्यायस्य वर्तते। प्रथमद्वितीयाध्याययोर्व्याख्यात्र नास्ति। देवनागरीलिपौ लिखितेयं मातृका सुवाच्या निर्दिष्टतिथिका च वर्तते। ई नारायणशर्मणा एकदशाधिकैकोनविंशतितमे खृष्टी येवर्षे अक्टूवरमासस्य नवम्यां तिथौ लेखः प्रारब्धः सम्पन्नो वेति मुखपृष्ठोपरि ९-१०-११ इति सङ्केतेनावधार्यते। द्वाभ्यां मलयालम्लिपिलिखिताभ्यां मातृकभ्यामियं प्रतिलिपीकृतेति विषयस्तत्रैव मुखपृष्ठे समुल्लिखितोऽस्ति। अत्र वर्णानुक्रमेण संख्यानुक्रमेण च पत्रसंख्या परिगणिता विद्यते। प्रतिपत्रं विंशतिः पङ्क्तयः प्रतिपङ्क्ति च षड्विंशतिः अक्षराणि सन्ति। सम्पूर्णायां मातृकायां लेखपरिपाट्यवलोकनेन तर्क्यते द्वाभ्यां लेखकाभ्यामियं लिखितेति। हस्तलेखागारस्य कार्यालयीयव्यवहाराय मुखपृष्ठोपरि विहित एवंविधः सङ्केतोऽत्र वर्तते— तन्त्रटीकानिवन्धनम् सं ३२० ए, तथा वी। $३० \times १७\frac{१}{२} = ५२५$। $३१ + ५४ + २४ \times १७\frac{१}{२} = ४२० = ९६५$ अथवा ९४५ लिखितमिदं ई नारायणशर्म्मणा ९-१०-११ (१९११ ए० डी०)। यद्यपि षोडशतमे पत्रे इति प्रथमोऽध्यायः पुनरग्रे षोडशतमेऽर्थात् प्रारम्भतो द्वात्रिंशत्तमे पत्र इति द्वितीयोऽध्याय इति लिखितमस्ति तथापि तद्भ्रममुत्पादयति। यतो हि सति परीक्षणे तृतीयाध्यायस्यैव भागः सोऽप्यंश इति निश्चीयते।

एशियाटिक सोसाइटी कलिकाता नगरे विद्यमानाजितामातृका सप्तविंशति पत्रमिता तृतीयाध्यायस्य प्रथमपादमात्रस्यैव समुपलभ्यते। अत्र द्वादशपंक्तयः प्रतिपत्रं चतुश्चत्वारिंशदक्षराणि लिपिश्च देवनागरी आधारश्च देशी कागज इति विद्यन्ते।

[ ७ ]

फलतः प्रथमाध्यायद्वितीयपादस्याधारोऽत्र केवलमाद्यारमातृका विद्यते। एतदीयतृतीयपादस्याधारः मातृकाद्वयमाद्यारस्थितैका पूनास्थितापरा चेति। चतुर्थपादस्य तु तिस्रो मातृकाः आधारतां गताः। ऊर्ध्वनिर्दिष्टाभ्यां सह गङ्गानाथझामहाभागस्य प्रतिलिपिरिति। सम्पूर्णस्य द्वितीयाध्यायस्याधारः मातृकात्रयमनुपदमेवाभिहितम्। तृतीयाध्यायस्याधारः मातृकाचतुष्टयमात्रम्। आद्यारमातृका द्वितीयाध्यायान्तमेव यतो विद्यते। केरलस्य, एशियाटिकसोसाइटीकलकत्तायाः, पूनानगरस्य झामहाभागस्य च

मातृकाः अत्र शरणमस्माकम् । अत्रापि कलिकातामातृका अपूणव सप्तविंशतिपत्रमिता यावद् वर्तते ।

प्रथमद्वितीयाध्याययोरजितामातृकाणां परीक्षणेनावगतं यदिह पूनानगरस्य मातृका परिशुद्धा सुसंबद्धा च वर्तते । झामहाभागस्य प्रतिलिप्या सहास्याः आधिक्येन साम्यमस्ति आद्यारमातृकया च बहुधा वैषम्यम् । तथा हि एकस्यैवाभिप्रायस्य बोधाय पर्यायस्य दृश्यते प्रयोगः । यथैकत्र 'निश्चय' इति पूनामातृका पठति 'निर्णय' इत्याद्यार मातृका (पृ० ११३) । एवं 'श्रुतयोरदाक्षिण्यसर्वस्वदाक्षिण्ययोर्विकल्प' इति पूनामातृकायां 'श्रुतयोरदाक्षिण्यसर्वस्वदानयोर्विकल्प' इति आद्यारमातृकायां पाठ उपलभ्यते (पृ० १२६) । एवं 'निवर्तयितु'मिति पूनामातृका 'निराकर्तु'मित्याद्यारमातृका पठति (१२८ पृ०) । कदाचिदेकस्यैव तात्पर्यस्यावगतये भिन्नोऽवलोक्यते पदविन्यासक्रमः । यथा 'विरुद्धस्मृतिमूलवेदाभाव'मिति पूनामातृका 'विरुद्धश्रुतिदर्शनं स्मृतिमूलाभाव' मित्याद्यारमातृका पठति (पृ० १२८) । कदाचित् विपरीतार्थबोधकानां पदानां परस्परं समावेश उभयत्र दृश्यते । 'तेनाबाधपक्षे' इति पूनामातृका पठति 'तेन बाधपक्षे' इत्याद्यारमातृका (पृ० १२९) परिहार्यत्वमिति पूनामातृका अपरिहार्यत्वमित्याद्यार मातृका पठति । न्यूनाधिकता तु पदवाक्ययोरिह स्वाभाविकी । तथा हि ११६ तमे पृष्ठे अष्टमनवम पङ्क्त्योराधार आद्यारमातृका केवलम् । १२५ तमे पृष्ठे पञ्चदशषोडश पङ्क्त्योराधारः केवलं पूनामातृकेति ।

[ ८ ]

यद्यपि काश्याः पूनानगरीयानन्दाश्रमस्य च संस्करणे वीक्ष्याजितायाश्च यथास्थानं स्वारस्यमालोच्य तन्त्रवार्त्तिकस्यैवं मातृकासु यथामत्यूहापोहं विधाय मीमांसाध्यापकेन **डा० कमलनयनशर्मणा** च परामृश्याजितायाश्च परिशुद्धपाठानां प्रस्तुत्यै प्रतिपत्रं यथासम्भवं मूलेन तन्त्रवार्त्तिकेण सह व्याख्यायां धृतस्य तत्प्रतीक स्यैकत्र संग्रहाय च यत्न आचरितस्तथापि मानवसुलभप्रमादैः स्खलनं क्वचित् क्वचित्सञ्जातमेव प्रूफसंशोधनकाल इति हृदि खेदो भीतिश्च सन्तिष्ठेते । अत्र विदुषां गुणैकपक्षपातिनामनुग्रह एव शरणम् । **भट्टकुमारिलचरणानां** वचनैरेव ते जनेनानेनापि प्रार्थ्यन्ते साञ्जलिबन्धं दोषाणामिह समापतितानां मर्षणाय—

**तद्विद्वांसोऽनु गृह्णन्तु चित्तश्रोत्रैः प्रसादिभिः ।**
**सन्तः प्रणयिवाक्यानि गृह्णन्ति ह्यनसूयवः ॥**

यतो ह्यस्मदादयः शास्त्रप्रकाशनात्मके शुभे कर्मणि प्रवृत्ता अतोऽत्र क्षम्यं भवति स्खलनम् । श्लोकवार्त्तिकमभिलपति—

'यथा कथञ्चिदारब्धा त्रयीमार्गानुसारिणी।
वाग्वृत्तिरल्पसारापि श्रद्दधानस्य शोभते' ॥

अथ च **'नहि सद्वर्त्मना गच्छन् स्खलितेष्वप्यपोद्यते'** इति । पश्चाद्भवः **द्वितीयवाचस्पतिमिश्रस्तु** शास्त्रविचरणशीलानामवश्यं मोहः प्रमादो वा भवतीत्यत्र विश्वसिति । अतएव न्यायतत्त्वालोके स्पष्टमभिदधाति—**'को न मुह्यति वचः पथे चरन्'** इति ।

[ ६ ]

अत्र सादरं संस्मरणीयाः सन्ति गुरुचरणाः **प्रो० अनन्तलाल ठाकुर** महाभागाः । येषामनुग्रहभरेणायासेनास्मिन् जने ज्ञानदीपः दीपितोऽत्र नैयायिकानां पितृचरणानां **कृष्णमाधवझा** शर्मणां नैसर्गिकी शिक्षा व्युत्पत्तिसम्पादनं च सहाकुरुताम् । अत उभयेषामेषां प्रणतिपरम्पराभिः सभाजनं मदीयं भवति कर्तव्यम् । सम्पादनावसरे गुरुकल्पानां विद्वद्वरेण्यानां **डा० गजाननशास्त्रिमुसलगाँवकर**महाभागानां यथावसरं परामर्शेन सम्पादन-संवन्धिपाठसंवन्धिसमस्यानां समाधानेन चानुगृहीत इति सविनयैः प्रणामैस्तत्प्रसादन-मयं जनोऽभिलषति । वैदेशिकेन भारतीयविद्याप्रणयिना विदुषा हरिकाई महाशयेनापि प्रकाश्यते *अजिता* स्वकीयकृतिभिरुपाकरोच्चामुं जनमिति तेभ्यः वर्धापनं कार्तज्ञ्यं साधुवादाश्च वितीर्यन्ते ।

सारस्वतवन्धुष्वन्यतमो **डा० कमलनयनशर्मा** प्रागिह मीमांसाध्यापकः इदानीं पुरीनगर्यां सदाशिवकेन्द्रीयसंस्कृतविद्यापीठस्य धर्मशास्त्रविभागे प्रवाचकः, **कुमारी अर्चना चतुर्वेदी** दर्शने शोधसहायिका चेह सम्पादनकर्मणि सर्वविधं साहाय्यमनुक्षणं कर्तुं तत्परावास्तामिति एतौ साधुवादानां वयसा कनिष्ठतया शुभाशीर्वचसां च भागिनौ भवतः । कल्याणमित्राणि प्राचार्याः विद्यावदातान्तःकरणाः **डा० गयाचरण त्रिपाठि** महाशया यथायथं सौविध्यमानुकूल्यं चेह विधाय समुत्साहितवन्त इति मदीया कृतवेदिताः सप्रश्रयं तेभ्यो निवेद्यन्ते । प्रियसुहृद आत्मीयाश्च तदानीमिह प्रोजेक्ट औफिसर पदे नियुक्ता इदानीं केन्द्रीयसंस्कृतविद्यापीठे तिरुपतौ न्याये प्रवाचकाः विद्वद्वर्याः **के० ई० गोविन्दाचार्या** मातृकासंग्रहाध्यक्षः पं० **श्रीजीवेश्वरझा** ग्रन्थालयस्य सहायकसंग्रहाध्यक्षः **श्रीरामानन्दथपलियाल पं० रामकिशोरझा** शुभोदयश्च मदीयस्य हार्दिकस्य कार्तज्ञ्यस्य भाजनानि भवन्ति । यथावसरमेते कर्मण्यत्रोपाकुर्वन् स्वनियोगमनुतिष्ठन्तः । पूनानगरीय भण्डारकरप्राच्यविद्याशोधसंस्थानस्य तिरुअनन्तपुरम्नगरीय राजकीयहस्तलेखागारस्य मद्रासस्थितस्माद्यारहस्तलेखागारस्य कलिकातास्थैशियाटिकसोसाइटीसंस्थानस्य चाधि-कारिणः प्रति सविनयं धन्यवादा अवश्यमिह निवेदनीयतां यान्ति । उपाकुर्वन्नेते सुलभतया मातृकाणां फोटो प्रति प्रदानेनेति ।

शाकुन्तलमुद्रणालयव्यवस्थापकः श्री उपेन्द्र त्रिपाठी वयसा कनीयानिति मदीयाशीर्वादानामथ च साधुवादानां पात्रम् । अयं हि मयापादितान् क्लेशानविगणय्य सुष्ठु मुद्रापणमकरोदिति । अन्ते पुनरपि विदुषां समक्षमेष जनः साञ्जलिवन्धं प्रार्थयते—

'यत्र क्वापि प्रमादान्मे स्खलनं यदि सम्भवेत् ।
तदुपेक्षितुमर्हन्ति गुणैकग्राहिणो बुधाः' ॥

दीपावली वि० सं० २०४४
२२-१०-१९८७

इति विदुषां विधेयस्य
किशोरनाथझा शर्मणः

# तन्त्रवार्त्तिकम्

*अथ प्रथमाध्यायस्य द्वितीयः पादः*

## अर्थवादाधिकरणम्

सिद्धप्रमाणभावस्य धर्मे वेदस्य सर्वशः ।
विध्यर्थवादमन्त्राणामुपयोगोऽधुनोच्यते ॥

सामान्यतः प्रामाण्ये सिद्धेऽधुना विभज्य विनियोगः प्रतिपाद्यते । अवधृतप्रामाण्यस्य वा वेदस्येदानीं समस्तस्य विध्यर्थवादमन्त्रनामधेयात्मकस्य यथाविभागं धर्मं प्रत्युपयोगः प्रतिपाद्यते । तत्र पूर्वपक्षवाक्याभिप्रायः[1] ।

## अजिता

सिद्धप्रमाणभावस्य धर्मे वेदस्य सर्वशः ।
विध्यर्थवादमन्त्राणामुपयोगोऽधुनोच्यते ॥ इति ।

वृत्तवर्तिष्यमाणकथनेनार्थवादादिविचारस्य सङ्गतिमाह का पुनरसौ । ननु चोदनाप्रामाण्यं प्रतिज्ञातं प्रसाधितञ्च सर्वप्रकारम् । तत्प्रामाण्यप्रतिज्ञयैवेतरेषामप्रामाण्यमाविष्कृतम् । तेनानभ्युपगताप्रस्तुतार्थवादादिप्रामाण्यस्याक्षेपो न प्रमाणलक्षणविषयत्वेन परिगृहीतमर्थं दूषयति समाधानं वा न समादधाति । तस्मादसङ्गतिरिति ।

उच्यते, न तावत् साक्षादर्थवादादिप्रामाण्यं निरस्तम् । यदि हि वेदप्रामाण्ये सिद्धे पुनश्चोदनाप्रामाण्यमुच्येत, तदार्थवादादिव्यवच्छेदार्थता भवेत् । न त्वेतदस्ति । उपरिष्टाद् वेदप्रामाण्ययुक्त्यनुसारात् । तस्मादपूर्वविधिरयम् ।

न चायं साधनवाक्यस्यैकदेशः साध्यनिर्देशात्मकः । यो हेत्वभिधानेनैव संबद्ध्येत । उपक्षिप्ते हि विषये संशयपूर्वोत्तरपक्षाः भवन्ति । धर्मश्च

---

१. मुद्रितपाठस्तु °वाद्यभिप्रायः ।

ज्ञेयत्वेनोपक्षिप्तः न प्रमाणं किमपि। तस्मात् किं प्रमाणं धर्मं इति प्रमाण-बुभुत्सायां करिष्यमाणानेकविचारप्रसाध्योऽर्थसिद्धवदपदिश्यते—चोदना प्रमाणमिति। अनपेक्षलक्षणत्वाच्च प्रामाण्यस्यास्मर्यमाणकर्तृकत्वेन प्रसिद्धापौरुषेयत्वस्य वेदस्य चोदनेति परिगृहीत एवार्थः औत्पत्तिकसूत्रे[1] स्फुटी भविष्यति। तत्र च पदपदार्थसंबन्धसंघातनित्यत्वात् वेदवाक्यानां प्रामाण्योपपत्तयः, न चोदनात्वस्य। तस्मात् वेदवाक्यानि प्रमाणानीति विवक्षितम्। तानि च चोदना एवेति। तेषां तत्सङ्कीर्त्तनं धर्मप्रमितिशक्तिप्रदर्शनार्थम्। तेन शाब्दप्रामाण्यप्रतिज्ञानमेवेदं वैदिकीषु चोदनासु व्यवस्थितम्। अत एवाह *भाष्यकारः*—चोदना हि भूतं भवन्तं भविष्यन्तमित्यादि [१।१।४।] अन्यथा त्वसिद्धे सामान्यप्रामाण्ये विशेषानवसरादनेनैव सामान्यविशेषयोर्विवक्षा स्यात्। तेन स्वतन्त्रस्य शब्दराशेर्वेदाख्यस्य वाक्यानि चोदनात्वाद् धर्मे प्रमाणानीति सूत्रार्थः।

एवं सति वेदैकदेशत्वात् सकलेन प्रामाण्यप्रतिपादनप्रबन्धेनार्थवादादीनामपि प्रामाण्यं प्रतिज्ञाय प्रसाधितमपि प्रामाण्यशक्तिचोदनात्वानभिव्यक्तेरवसीदतीति। तेषां चोदनान्तर्गतिसमर्थोपयोगप्रतिपादनमारभ्यते। तदिदमुक्तम्—सिद्धप्रमाणभावस्येति। वेदस्य हि धर्मे प्रामाण्यं प्रतिज्ञातम्। तस्य हि सर्वप्रकारं पदपदार्थसम्बन्धसंघातनित्यतया वाक्यार्थस्य मूलवत्तया विसम्वादाभावेनासंशयितार्थत्वेन च प्रामाण्यमवगमितम्। एवं चोदनात्वं प्रतीतिसिद्धमङ्गीकृत्य सर्वस्य सिद्धप्रमाणभावस्य वेदावयवानामाशङ्कितानुपयोगानामुपयोगोऽभिधीयत इति।

अस्तु वा चोदनात्वेनोपलक्षितस्य शब्दविशेषस्य धर्मे प्रामाण्येन विधानम्, एवमपि सकलवेदस्य परिग्रहः। तदध्ययनहेतुकत्वेन धर्मजिज्ञासोपन्यासात्। न हि एकदेशप्रमाणिकायां सकलाध्ययनं हेतुः स्यात्। अपौरुषेयत्वादिना च सकलप्रामाण्यप्रतिपादनात्। लोके सन्नियमादिति [मी० सू० १।१।२६।] च वैधर्म्योपन्यासेन अपौरुषेयस्य कृत्स्नस्य वेदस्य क्रियार्थेन समाम्नाय इति प्रवृत्तिप्रयोजनाभिधानात्। शक्यन्ते च परिग्रहीतुं वाक्यं हि चोदना। अस्ति च लोके कारकपदानामिव स्तावकपदानामप्येकवाक्यता। क्रय्येयं गौरियं हि सम्पन्नक्षीरतमेति।

---

१. औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः। मी० सू० १।१।५।

एवं प्रतिज्ञाय, सकलप्रामाण्यवादिनो बाह्यान्निराकृत्य स्थापिते प्रामाण्ये य इदानीमर्थभावनान्वयित्वेन केषाञ्चिदेकवाक्यतादर्शनात् तदन्वयानुपपत्त्या कथं स्यादिति प्रतिज्ञातैकदेशाप्रामाण्यं मन्यते। तत्प्रतिबोधनार्थवादादिविचार आरभ्यते। तथा च *भाष्यकार* आह स एष वाक्यैकदेशस्याक्षेप इति।

तथा मन्त्रनामधेययोरपि विचार इति। प्रतीयन्तां वा विध्युद्देशा एवचोदनाः। ताश्चौत्पत्तिकत्वादिहेतुवशेनापौरुषेय ऋग्वेदस्य चापौरुषेयत्वप्रतिपादनाद् वैदिकस्तथाप्युक्तमिदं नेयम्। साधनवाक्यैकदेशात्मिकाप्रतिज्ञाया हेतुत्वेनैवाभिधीयमानेनोत्तरप्रबन्धेन सङ्गच्छते। किन्तु प्रमाणबुभुत्सायां चोदना प्रमाणमिति निर्दिष्टेऽनुपदेशशास्त्रत्वान्मीमांसायां विचार्य अयमर्थः प्रदर्शनीयः।

यदि च यावत्सम्भवं धर्मप्रमाणानि विचार्य चोदनातिरिक्तानां प्रामाण्यं प्रमाणान्तराणां चोदनान्तर्भावः प्रतिपाद्यते, तदा प्रदर्शितो भवति। अन्यथा सेयमध्यायार्थत्वेन यावत्सम्भवं प्रमाणान्वेषा प्रतिज्ञाता।

तस्य निमित्तपरीष्टिरिति [मी० सू० १।१।३] तत्र यद्यपि नामधेयार्थवादमन्त्रस्मृत्यप्रामाण्येऽपि चोदना प्रामाण्यविहतिर्नास्ति। तथा च वादसमाप्तावुक्तमिति। प्रमाणत्वमिदं प्रसिद्धम् युक्त्येह धर्मं प्रति चोदनाया इति। तथापि प्रतिज्ञापरिगृहीतप्रयोजनवांश्चेति। तेषामपि विचारः क्रियते।

अथवा ईदृशीयमध्यायार्थप्रतिज्ञा। उक्तम् चोदना प्रमाणमिति। यथा तु सैव प्रमाणमन्याः प्रमाणम् यावती चासौ सोपकरणा भवति। यथा क्वचिदनुमानसिद्धापि भवति। अनुमानतः सन्दिग्धेऽप्यर्थे धर्मनिर्णये शक्ता भवति तथापि परीक्षा प्रतिपाद्यत इति। ततश्च मन्त्रार्थवादनामधेयस्मृत्याचारद्वारा वेदानुमानसन्दिग्धार्थविचाराणां सङ्गतिः।

अथवा चोदनामुक्ते पदादिनित्यतया वाक्यार्थमूलवत्तया च धर्मं प्रति प्रामाण्ये वेदावयवत्वात् तासाम्, वेदस्य च काठकादिसमाख्यया नित्यत्वेनाप्रामाण्यात्तदवयवानामप्रामाण्यमित्याक्षिप्य वेदनित्यतया स्थापिते

वेदावयवत्वाविशेषादुपस्थापितानां मन्त्रार्थवादनामधेयानां तुल्यन्यायतया प्रयोजनान्तराभावाच्च धर्म एव प्रसक्तं प्रामाण्यमवबोधशक्त्यभावाद-सम्भवत् प्रयोजनवत्त्वेन प्रमाणलक्षणौपयिकत्वेन च प्रसङ्गात् विचार्यते। एष च श्लोकार्थः — सिद्धप्रमाणभावस्य नित्यतया वेदस्य चोदनास्तावत् धर्मप्रमाणत्वेन सिद्धाः। सम्प्रति इतरेषामपि तदवयवानां धर्म एवोपयोग उच्यते सर्वश इति । सर्वप्रकारं यावन्तः प्रकाराः धर्मप्रमित्युपयोगिनः सम्भवन्ति धर्मप्रमाणेन विधिना यद् यदपेक्षितं तत्तत् प्रतिपादनद्वारेणेत्यर्थः। अधुनेति चावसरप्राप्तिं वदन् प्रासङ्गिकतां दर्शयतीति व्याख्येयम्। प्रसक्तिश्च दर्शिता वेदस्य विध्यर्थवादमन्त्राणामिति । विधिरिति त्रेधा विभक्तस्य वेदस्यैको भागो विध्युद्देशोऽभिधीयते । तत्राप्युपयोगप्रतिपादनस्य आश-ङ्कितानुपयोग·········नामधेयस्य च तथाभावात् नामधेयमभिप्रेत्य विधि-शब्दः। एवञ्च व्याचक्षते —

यथौदुम्बराधिकरणे विधिमन्तरेणापि साध्यसाधनसम्बन्धमुपदर्शयता विध्यनुपयोगः पूर्वपक्षे, सिद्धान्ते च विधिमन्तरेण तस्यासिद्धेः । तस्यैव तत्र प्रामाण्यमिति विध्युपयोगो दर्शयिष्यत इति । एवमपि नामधेयस्य परिग्रहो नान्यत्र प्रदेशाद् वक्तव्य इति ।

अथवा चोदनालक्षणो धर्म इति त्र्यंशभावनानुष्ठापनेन वेदस्यो-पयोगित्वमुक्तम् । तत्र मन्त्रार्थवादयोः साक्षात् विधायकापेक्षितस्मृति-स्तुतिनिर्वृत्त्या चोदनानुप्रवेशोपवर्णनात् तदतिरिक्तविध्युद्देशभागे साक्षात्-विधानेनोपयोगित्वमित्युक्तं भविष्यति। विनैव पूर्वपक्षेण तदन्तर्गते तु नाम-धेये पूर्वपक्षमनर्थकं कृत्वैतद् वक्ष्यत इति।

सामान्यत इति। क्रियां बोधयतो वेदस्य धर्मप्रामाण्यमिति। प्रत्यवयवं व्यवस्थितानां धर्मप्रमित्युपयोगविशेषाणां सामान्यं, तेन रूपेण प्रामाण्ये सिद्धेऽधुना विभज्योपयोगविशेषाश्रयासम्भवेन पुनः प्रामाण्या-भावमाशङ्क्य धर्मप्रमित्युपयोगिन्यवान्तरव्यापारे विनियोगः स्वाध्याया-ध्ययनविधिना य एषां सम्प्रतिपाद्यते। अङ्गभावं वा लक्षयति — अवधृत[1] प्रामाण्यस्येति । संक्षेपोक्तस्य विस्तरः । क्वचिच्च द्वे फक्किके न पठिते इति।

१. अपवृत इति मातृकापाठः ।

चोदनालक्षणोऽर्थो धर्म इत्युपक्रमात्तस्य ज्ञानमुपदेश इति परामर्शात् 'तद् भूतानां क्रियार्थेन समाम्नाय' [ मी० सू० १।१।२५। ] इत्युपसंहाराद् विधिप्रतिषेधयोरेव प्रामाण्यं प्रतिपादितम् । न च तद्व्यतिरिक्तशब्दगम्यत्वं धर्माधर्मयोः। नाप्यनधिगतार्थबोधनं मुक्त्वान्यः शब्दस्य व्यापारोऽस्तीत्युक्तमेव । अतश्चं यावन्त्येव साध्यसाधनेतिकर्तव्यतावाचित्वेन विधिप्रतिषेधान्तर्गतानि तेषां भवतु प्रामाण्यं यानि त्वतिरिक्तार्थवादमन्त्रनामधेयानुपातीनि सोऽरोदीदिषे त्वोर्जे त्वोद्भिदेत्येवमादीनि तानि सत्यप्यपौरुषेयत्वेऽर्थाभिधानसामर्थ्ये च

अत्र पूर्वपक्षसूत्रम् — आम्नायस्य क्रियार्थत्वादित्यादि [ मी० सू० १।२।१ ] । अस्यार्थः, धर्माधर्मयोः प्रामाण्यं क्रियानुष्ठानं बोधयतो वेदस्येत्येतदवगमितम् — 'चोदनालक्षणो धर्म' इत्यादिना । अतश्चा-क्रियार्थानां धर्माधर्मप्रमितिशक्तिविरहादानर्थक्यम् । यद्यपि चानेन हेतुना धर्माधर्मयोरेवानुपयोगः सिद्ध्यति; तथापि तद्व्यतिरिक्तोपयोगा-सम्भवस्य सिद्धान्तवादविशिष्टमानर्थक्यं पक्षीक्रियते । तदेतत्पूर्वपक्षि वादिमतं व्याख्यातुमुपक्रमते — तत्र पूर्वपक्षवाक्याभिप्राय इति । उपसंहारा दिति । येन चोदना प्रामाण्यप्रतिपादनं पर्यवस्यति, तत्राभिधानादुच्यते न प्रसाधितस्यार्थस्य निगमनात् ।

अथवा वाक्यार्थमात्रस्य समूलता तत्र साध्यते अर्थस्य तन्निमि-त्तत्वादिति । क्रियार्थेनेति तु धर्मप्रमाणवाक्यगतस्य विशेषितस्य पूर्वमेवोप-पादितस्य तस्योपसंहारादिति । विधिप्रतिषेधयोरेव प्रामाण्यमिति । धर्माधर्मयोरिति । द्रष्टव्यमिति । अतएव विधेरप्रामाण्यम् । तद्विषय-मेवाह — न च तद्व्यतिरिक्तेति । एवं च सर्वथैव प्रामाण्यमापद्यत इति । आह — नाप्यनधिगतेति । उक्तमेवेत्यनेन नैतदत्र प्रतिपाद्यते । प्रतिपादित-मेवैतदर्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षितत्वादिति [मी० सू० १।१।५। ] अत्र केवलमविशेषितानर्थक्यप्रतिज्ञायामत्रोपयुज्यत इति दर्शयति — तेषां भवतु प्रामाण्यमिति । धर्मप्रामाण्यमेवेदं सामान्यशब्दे-नोक्तम् ।

अथवा विधिप्रतिषेधयोरेव प्रामाण्यं प्रतिपादितमित्यवधारणेन विधेः सर्वथैवाप्रामाण्यमावेदितम् । तदुपपद्यते यतोऽधिगते तावद्धर्मा-

धर्माधर्मयोरप्रमाणमतदर्थत्वात् । यथाश्रुतगृहीतानां तावत्प्रतीत्यनुपलब्धेः प्रसिद्धमेवातदर्थत्वम् । अथ कयाचिच्छब्दवृत्त्या तादर्थ्यं कल्प्येत, एवमपि व्यवस्थाहेत्वभावान्न धर्माधर्मयोरवधारणं स्यात् । यदेव हि वाक्यं गृहीतं तदेवाध्याहारविपरिणामादिभिर्यथेष्टं कल्पयितुं शक्यते । तद्यथा 'सोऽरोदीदित्येवमेव' तावद्वाक्यं विशिष्टपुरुषाचरितोपन्यासद्वारा रोदनकर्तव्यतापरम् ।

अथ वा महतामप्येवंविधाः प्रमादाः संभवन्ति । तस्मात्प्रयत्नेन वर्जयितव्यमिति । अतो विधिप्रतिषेधयोरस्फुटत्वाद्धर्माधर्मत्वेन निर्णये शक्त्यभावः । शास्त्रदृष्टविरोधादयश्च स्थिता एव ।

यत्तु भूतान्वाख्यानमात्रं यथावस्थितैः प्रतिपाद्यते । तत्र यद्यपि सत्यत्व-

**धर्मातिरिक्तेऽर्थेशब्दस्य प्रामाण्यं नास्तीत्युक्तमेव । यौ तु प्रमाणान्तरगोचरौ धर्माधर्मौ तयोरप्यविधित्वान्न सम्भवति । अतोऽप्रामाण्यमेवेति ।** तेषां भवतु प्रामाण्यमिति । **तेषां भवतु प्रामाण्यमिति च सामान्यानुज्ञानमेवेदम् ।** धर्माधर्मयोरप्रमाणमतदर्थत्वादिति । **इदानीं साध्यमानस्यार्थस्य निगमनम् ततश्च सर्वथैवाप्रामाण्यमभिमतमिति । कथमतदर्थत्वमिति चेत् अत्राह** यथाश्रुतेति ।

अथ कयाचिच्छब्दवृत्त्येति भाष्योक्त **एवाध्याहाराद्युपन्यासः स्वाध्यायाध्ययनविधिबोधितसाकल्योपपादकः क्रियते ।** यदेव हि वाक्यमिति । **अध्याहारादीनामेकतमस्य निश्चयोऽशक्यः, किमुताध्याह्रियमाणरूपविशेषनिरूपणमित्यभिप्रायः ।**

तद्यथेति । **सिद्धेऽप्यध्याहारे विशेषे निरूपणाशक्तिमुदाहरति** शास्त्रदृष्टविरोधादय इति । **कर्त्तव्यत्वोपदेशे यावन्तो विरोधास्तानुपन्यस्यति दृष्टविरोधश्च रोदनवपोत्खननादीनामशक्यत्वम् ।**

यत्तु भूतान्वाख्यानमात्रमिति । **अन्वाख्यानं प्रतिपाद्यते इत्योदनपाकं पचतीतिवन्नेयम् । क्रियत इति वक्तव्ये तामेव क्रियां प्रत्ययेन विवक्षन् तदनुग्रहार्थमनुवादभूतं धातुं प्रयुङ्क्ते । अथवा यथावस्थितैर्भूतान्वाख्यानमात्रम् । यत्तु केनचिद् वादिना प्रतिपाद्यत इति योज्यम् ।**

यद्यपि सत्यत्वमिति । **सत्यत्वभाषया न प्रामाण्यमभ्युपगच्छति । विफलत्वेन तात्पर्यासम्भवात् स्वार्थेऽप्यप्रामाण्यमिति ।**

मस्त्येव तथापि न तेन प्रयोजनमित्यानर्थक्यम् । अपि च धूम एवाग्नेर्दिवेत्यादीनां स्वार्थेऽप्यप्रमाण्यं वक्ष्यते । विध्येकवाक्यत्ववशेनैव तेषां रूपभङ्गः क्रियते । न च तस्यापि किञ्चित्प्रामाण्यमस्ति । भिन्नैरपि हि तैः किञ्चित्प्रतिपादयितुं शक्यमेव । न च तत्प्रतिपादयतां निष्प्रयोजनतेत्यविज्ञायमानप्रयोजनवदर्थान्तर-

यत्तु भूतान्वाख्यानपरत्वं श्रुतिविधेयकवाक्यतया सिद्धान्तवाद्यभिमतं प्रामाण्यं प्रतिक्षिपति विध्येकवाक्यत्ववशेनेति । रूपभङ्गो भूतार्थप्रतिपत्तिपर्यवसितरूपाणामवान्तरव्यापारीकृत्य प्राशस्त्यलक्षणद्वारेण वादिनापि तत्र प्रामाण्यमुच्यते तदपि नेति वक्ष्यते । प्रमाणान्तरविरोधात् । अतस्तद्द्वारेण विध्यन्तरोपयोगित्वं दूरनिरस्तमिति । एवं तावत् स्वतन्त्रेण विध्यन्तरमनुमाय न प्रामाण्यमित्युक्तम् । इदानीं प्राशस्त्यलक्षणाद्वारेण प्रवृत्तिशेषत्वम् । लक्षणा च सर्वत्र श्रुतपदैकवाक्यतोपपादनाय भवति । तेनात्रापि विध्येकवाक्यतावशेन रूपभङ्गः कर्त्तव्यः । न च तस्याप्येकवाक्यत्वस्य किञ्चित् प्रमाणमस्ति ।

ननु सकलस्य वेदस्य विध्यर्थवादमन्त्रात्मकस्याध्ययनविधिः प्रयोजनवदर्थावबोधपरतां बोधयतीत्युक्तम् । दृष्टो हि तस्यार्थः कर्मावबोधनं नामेति । एकवाक्यतया च प्रयोजनावाप्तिः । तेनाध्ययनविधिरेव एकवाक्यत्वे प्रमाणम्, कथं तदभाव इति । अत आह — भिन्नैरपीति ।

अयमभिप्रायः । प्रमाणशक्तिं विधिरनुविदधद् दृष्टार्थो भवति । यदि स्वरसेनासिद्धा शक्तिः विधिवशादाश्रीयेत ततस्तत्कल्पनीयः फलतैव [फलं नैव? ] स्यात् । तेन प्रमाणशक्तिरेवानुसन्धेया । तत्र प्रतिपादनसम्बन्धकालावसितपदार्थप्रतीतिफलानि तामवान्तरव्यापारीकृत्य स्वार्थानुरक्तविशिष्टार्थप्रत्ययपराण्येकैकशः तत्राशक्तेरपेतपदान्तराणि समुच्चारणोपपादितापेक्षणीयानि संहृत्य तं कुर्वन्ति । श्रौतार्थानन्वये च लाक्षणिकमप्यवान्तरव्यापारीकुर्वन्तीति तेषां शक्तिरवधृता । ततश्च यद्यर्थवादपदानां विध्येकवाक्यतामागच्छतां विशिष्टार्थप्रत्यया शक्तिः । ततः साकाङ्क्षत्वाल्लक्षणया गच्छेयुः । शक्नुवन्ति तु सिद्धरूपमर्थं विशिष्टं बोधयितुमिति । एवं प्रमाणे स्वरूपतो विध्येकवाक्यतामगत्वा निवृत्तव्यापारे नाध्ययनविधिवशेन तत्परताध्यवसातुं शक्येतेत्याह-न च तत्प्रतिपादयतामिति ।

कल्पना शक्या। न हि लोष्टं पश्यतस्तद्दर्शनं निष्प्रयोजनमिति सुवर्णदर्शनता कल्प्यते। सर्वाण्येव च प्रमाणान्युपयुज्यमानमनुपयुज्यमानं वार्थमात्मगोचरतापन्नं गमयन्ति। तेनैव चैषां हानोपादानोपेक्षाबुद्धयः फलत्वेन वर्ण्यन्ते। अन्यथा हि उपादानमेवैकं फलं स्यात्।

अपि च प्रमाणोत्पत्त्युत्तरकालं प्रयोजनवत्त्वमप्रयोजनवत्त्वं वा विज्ञायते न तु तद्वशेन प्रमाणोद्भूतिः। तस्माद्यो यद्रूपोऽर्थः प्रतीयते स तथैव प्रयोजनवत्त्वमप्रयोजनवत्त्वं वा प्रतिपद्यते। न हि प्रयोजनवदेव प्रमातव्यमिति कश्चिन्नियमहेतुरस्ति। यत्रापि तावत्स्वाधीनप्रमाणविनियोगस्तत्राप्येतद् दुर्लभं किमुताबुद्धिपूर्वनित्यावस्थितवेदोत्थापितज्ञानग्राह्ये। न च वेदस्य प्रयोजनवदर्था-

प्रमाणविषयं हि प्रयोजनार्थी प्रयोजनतया गृह्णाति न तु तस्य विषयमुपकल्पयतीति। न हि लोष्टं पश्यत इति पुरुषप्रवृत्त्युपन्यासेन प्रयोजनार्थिता दर्शिता। यदि तु प्रमाणानामेवैष स्वरसः पुरुषापेक्षितप्रतिपादनं नाम स्यात्। ततो विध्येकवाक्यतामगत्वा न पर्यवसानं स्यात्। न तु तदस्तीत्याह — सर्वाण्येव प्रमाणानीति। अन्यथा ह्युपादानमेवैक इति।

ननु हेयार्थप्रमितिरपि हानाङ्गतयापेक्षिता। सत्यम्, हेयं तु नापेक्षितम्, अनुपयोगात्। उपयोगितया च प्रमेयता न सिद्ध्यतीति वक्तुमुपक्रान्तम्। अथवा हानं दुःखोपलम्भभयादनपेक्षितस्य दुःखस्यास्त्युपलम्भे किं कस्यचिद्धानेनेति। अशक्यञ्चेदं प्रयोजनवत्तया विषय निरूपणमित्याह अपि चेति। ज्ञात्वा प्रयोजनवत्तां प्रयोजनवती प्रमाणं नेतव्यम्। अनुपजाते च प्रमाणे अनुपलब्धस्य न प्रयोजनवत्त्वज्ञानम्। अतोऽनपेक्षितप्रयोजनस्यैव प्रमाणस्योदय इति।

नन्वेतदप्यस्ति पुरुषाधीनः प्रमाणवि[नि]योगः। किमिति चासावनुपयोगिनि तन्नियोगक्लेशमनुभवेत्। तेनाप्रयोजनत्वमपि विरुद्धमत आह — नहि प्रयोजनवदेव प्रमातव्यमिति। कश्चिदिति। किमिति नास्तीत्याह यत्रापीति। न हि यदभिप्रेत्य नियुज्यते तद्बोधयति किन्तु यत्र शक्तमेवंपुरुषाधीनप्रवृत्तावपि प्रमाणे यत्त्वादित्यवत् स्वतन्त्रं प्रकाशकं तत्र दूरनिरस्तम्। प्रयोजनवत एव प्रमाणेन विषयीकरणमित्याह — किमुताबुद्धिपूर्वनित्यावस्थेति [वस्थितेति]।

भिधानशक्तिः प्रथममवधृता । अयमेव हि परीक्षाकालो वर्त्तते कीदृशं पुनर्ब्रवीतीति । तच्च विदित्वा यथानुरूपमनुष्ठातुं क्षमा वयम्, न तु वेदं पर्यनुयोक्तुम् । किमयं निष्प्रयोजनमभिदधाति, तद्वाभिदधत्किमर्थं प्रयत्नेन धार्यत इति । सर्वपुरुषाणां केवलं प्रतिपत्तृत्वेन पारतन्त्र्याद्वेदग्रहणोत्तरकालं च परीक्षावसरात् । न ह्यनधीतवेद एवादौ परीक्षितुं क्षमः । पश्चात्परीक्षमाणस्य तु नाबुद्धिपूर्वनिर्वृत्तमध्ययनं प्रकरणगतन्यायेन निश्चयहेतुर्भवति ।

ननु मा भवतु प्रमाणमात्रस्यायं धर्मः वेदस्यैव हि । शास्त्रं हि तत् हितोपदेशि च शास्त्रं भवति, कथमनुपयोगि बोधयेत् । अपि चास्य ग्रहणधारणे प्रयोजनवत एव घटेते नाप्रयोजनस्य । एवमवधारितेऽप्रयोजनवदर्थपरत्वेऽर्थवादानां स्वार्थमात्रे न पर्यवसानं भविष्यतीत्याशङ्क्याह — न च वेदस्येति । प्रथममिति । प्रत्येकवाक्यव्यापारनिरूपणात् । अथवा अध्ययनादिहेतुमाह — अयमेव हि परीक्षाकाल इति । यस्मादयं परीक्षाकालस्तस्मादस्य न शास्त्रत्वं सिद्धम् । न च ग्रहणधारणाभ्यां प्रयोजनवत्त्वानुमानम्, अबुद्धिपूर्वकत्वात्तयोः । अत इदानीन्तननिर्णयानुरूपेण तदनुष्ठानेन भवितव्यमिति ।

किमर्थमयं निष्प्रयोजनमभिदधातीत्यस्य पर्यनुयोगस्याभावे कारणमाह-सर्वपुरुषाणामिति । यदि केनापि लोकहितैषिणा स्वातन्त्र्येणायं प्रणीतः स्यात् तदानीं निश्चिते शास्त्रत्वे पर्यनुयोगः स्यात्, न त्वयं तथेति । तद्वाभिदधत् किमर्थं धार्यत इत्यस्याप्यभावे कारणमाह — ग्रहणोत्तरकालञ्चेति । यथैतदेव सिद्धं तदाह— नह्यनधीतवेद एवेति । नहि प्रत्येकवाक्यतात्पर्यनिरूपणम् अनधीतवेदस्य सम्भवतीत्युक्तम् । इदं तादृशीं तु धर्मजिज्ञासामधिकुर्य्यति । ततः किमित्याह— पश्चात् परीक्षमाणस्य त्विति । प्रेक्षापूर्वको हि व्यापारः प्रयोजनवत्तया व्याप्तः तन्निश्चयहेतुर्भवति, नाबुद्धिपूर्वकः । तथा दर्शपूर्णमासप्रकरणगतपाठानां पूषाद्यनुमन्त्रणमन्त्राणां न तदन्यथानुपपत्त्या तादर्थ्यं भविष्यति । किन्तु अबुद्धिपूर्वपठितानां पश्चाद् विचार्यमाणानां लिङ्गेन पूषदैवत्यकर्मान्तरार्थता ।

अथवा यथा प्रयाजादीनाम् अबुद्धिपूर्वेणापि प्राकरणिकसन्निधिपाठेन तादर्थ्यमनुमीयते तद्वदत्रापि प्रयोजनवत्तानुमानं भविष्यतीत्या-

तस्मात् यथैवाग्निहोत्रादिवाक्यानां गम्यमानप्रयोजनवत्त्वादानर्थक्यं निष्प्रमाणकमिति नाश्रीयते, तथैवैषां प्रयोजनवत्त्वं नाश्रयितव्यम्। न हि यथावगताभ्युपगमादन्यत्किञ्चित्साधीयः परीक्षकाणाम्। योऽपि च क्लेशेन स्तुतिनिन्दात्मकोऽर्थः कल्प्येत, स भावनया अंशत्रयानन्तःपातित्वान्न गृह्यते। तया चागृहीतं न विधिप्रतिषेधावाश्रयतः तदनाश्रितं च दूरे पुरुषार्थाद्भवतीति।

अपि चैवंविधेषु स्तुतिनिन्दाकल्पनायामितरेतराश्रयप्रसङ्गः। स्तुतिनिन्दात्मकत्वेनैव ह्येकवाक्यता तया चानुन्मीलितस्तुतिनिन्दोत्प्रेक्षाश्रयणम्। न चान्यतरमूलप्रसिद्धिरस्ति, यतो व्यवतिष्ठेत। तस्मात्पृथगवस्थितानां दृष्टत्वा-

शङ्क्य वैधर्म्यमुच्यते, तद्वदयं निश्चयहेतुः। तत्र हि पाठानुपपत्तिर्न प्रमाणम्, किन्तु शब्दव्यापारः प्रकरणम्। अत्र तु न शब्दव्यापारं पश्याम इति। एवं प्रयोजनवानेवार्थो वेदस्य विषय इति। नास्ति प्रमाणमिति साधितम्। न च वाक्यसामर्थ्यं तथाविधं पश्याम इति पूर्वमुक्तम्। इदानीमग्निहोत्रादिवाक्यानां साफल्यदर्शनात् कथं वेदैकदेशानामेव सतां वैफल्यं स्यादिति भ्रममपनुदन्नुपसंहरति — तस्माद् यथैवाग्निहोत्रादीति। एवं तावत् स्तुतिनिन्दालक्षणा निष्प्रमाणकेत्युक्तम्। इदानीं लक्षणायामपि सत्यामानर्थक्यमित्याह — योऽपि च क्लेशेनेति। एवं मन्यते शब्दभावनाङ्गत्वमर्थवादानां न सम्भवति, तद्धि प्रवृत्तिप्रत्ययानुग्रहे स्यात्। न चानपेक्षवेदावबोधप्रवृत्तिः पुरुषः कस्मादित्यपेक्षते, तेन विधिशक्त्यवसायासम्भवात्। तदवबोधिताभिमतसाधनैः प्रवर्त्तितव्यमेव पुरुषैः। भवतापि न प्राशस्त्यज्ञानात् प्रवृत्तिरङ्गीक्रियते, किन्तु प्रवृत्तिप्रत्ययोत्तम्भनम्। स च प्रमाणेनैवोत्तम्भित इति कृतमर्थवादैः। तेनार्थभावनाङ्गतयोपयोगोऽङ्गीकर्त्तव्यः। तच्चांशत्रयव्यतिरेकान्न सम्भवतीति प्रतीयमानैकवाक्यतावशेन सर्वशब्दो लक्षणमाश्रयति। इह च विधानभूतान्वाख्यानपर्यवसितयोर्विध्यर्थवादयोरेकवाक्यतैव नावसीयते। प्राशस्त्यलक्षणया तु प्रशस्तत्वात् कर्त्तव्य इत्येकप्रसरत्वात् सावसातव्या। ततश्चेतरेतराश्रयत्वं दोष इत्याह— अपि चेति। एवं विधेष्विति। प्रत्यक्षतो प्रतीयमानैकवाक्यत्वेषु तया चोन्मीलितमित्येकवाक्यतावशेन लक्षणीयतामाह। उपसंहरति— तस्मात् पृथगवस्थितानां दृष्टत्वानर्थक्यमेवोपपन्नतरमिति। कथमिदानीं स्वाध्यायाध्ययनविधिः।

दानर्थक्यमेवोपपन्नतरमिति। **स एष वाक्यैकदेशस्येति**। विध्युद्देशातिरिक्तस्य सिद्धान्ताभिप्रायेणैकदेशत्वम् न तु पूर्वपक्षे, भिन्नवाक्यत्वाभ्युपगमात्।

अथ वा वाक्यानां मध्य एकदेशाक्षेपः कतिपयानामित्यर्थः। तत्र यानि तावत्केवलविधियुक्तानि, तेषु नैवाशङ्का। यान्यपि लिङादिमन्ति प्रागर्थवादेभ्यो विधिसमर्थानि तैः संयुज्यार्थान्तरे स्तुतिश्रुत्यसंबन्धे वर्तन्ते तेषामर्थवादाभावे तन्मात्रमेव हीयते न तु विधित्वेन पुरुषार्थतापि। यानि तु वर्तमानापदेशयुक्तानि

**किमनेन, न तावत्तद्वशेनैषां पुरुषौपयिकार्थप्रतिपादनलक्षणं प्रामाण्यमिति साधितम्। अध्ययनविधिमपि पूर्वपक्षसमाप्तावनुसरिष्यतीति *वृत्तिकारान्तरैरिदं* सूत्रं सकलचोदनाक्षेपार्थं व्याख्यातम्। शाब्दभावनेतिकर्त्तव्यतांशलाभेन साकाङ्क्षस्यापरिपूर्णस्य विध्युद्देशस्याप्रामाण्यापत्तेः। तन्निराकरणाय *भाष्यकारेणा*क्षेपविषयनिरूपणं कृतम्। स एष वाक्यैकदेशस्याक्षेप इति। तत्र पूर्वपक्षवादिना अर्थवादानां वाक्यान्तरत्वस्याङ्गीकृतत्वात्। अर्थवादैकदेशे भाष्यकारीयैकदेशशब्द इति भ्रममपनुदन् व्याचष्टे स एष इति। कथमेकदेशवाचोयुक्तिरित्याह सिद्धान्ताभिप्रायेणेति।**

**अथवा वाक्यानां मध्य इति अर्थकथनमिदम्। समासस्तु वाक्यञ्च तदेकदेशश्चेति। न निर्धारण इति षष्ठीसमासप्रतिषेधादिति। अत्र *भाष्यकारेण* सकलाक्षेपोपपत्तिं नन्वेकदेशाद् विनेत्युपन्यस्य, भवति हि कश्चित् पदसमूह इत्यादिना एकदेशाक्षेपतोपपादिता। यस्मात् भवति ईदृशः कश्चित् पदसमूहः। यस्यार्थवादपदेभ्यः प्रागपि विधिशक्तिर्विध्युद्देशांशे नास्त्येव। येनार्थवादपदाक्षेपेण तस्याक्षेपः सम्भवति। अतस्तान्यर्थवादपदान्येव। एकदेशमात्रविषयेणाक्षेपेणाक्षिप्यन्त इति। तत्र केवलविधियुक्तेऽर्थवादशून्ये वाक्ये समाधानं नोक्तम्। तत्र पूर्वपक्षसम्भवः। करणं नाप्रामाण्याभिप्राय इत्याह — तत्र यानि तावदिति। येषु सम्भवन्त्याशङ्का तेष्वप्येवं न सकलाक्षेप इत्येवं भाष्यार्थमाह — यान्यपि लिङादिमन्तीति। कश्चित् पदसमूह इति भाष्ये कश्चिच्छब्देनैवमुक्तम्। यदि सर्वत्र इवार्थवादोन्नीतो विधिः स्यात् सर्वाक्षेपः, नत्वेतदस्तीति। एवञ्च वदतार्थवादोन्नीतविधीनां वाक्यानां सकलाक्षेपोऽङ्गीकृतः। तद्दर्शयति — यानि तु वर्तमानापदेशयुक्तानीति ॥१॥**

स्तुतिनिरपेक्षविध्यसमर्थानि यथा यस्य खादिरः स्रुवो भवति स च्छन्दसामेव रसेनावद्यति इत्येवमादीनि तान्येकदेशद्वारेण समस्तान्याक्षिप्यन्ते ।।१।।

वाङ्मनसयोर्विद्यमानमविद्यमानं वा स्तेयानृतवदनमुच्यमानं धर्मे स्वार्थेऽपि वा न प्रामाण्यं प्रतिपद्यते । अथ त्वध्याहारादिभिरेवं कल्प्येत वाङ्मनसयोः सर्वशरीरेषु चेष्टाः प्रति प्राधान्यादितरभूतेन्द्रियैरपि तच्चरितमनुवर्तितव्यमिति ततः शास्त्रविरोधः । तत्रैतत्स्यात् । विहितप्रतिषिद्धत्वात् षोडश्यादिवद्विकल्प इति । इतरस्तु कल्पनीयक्लृप्तत्वेन वैषम्यमाह । ननु चात्यन्तदुर्बलोऽपि विधिस्तदधीनात्मलाभेन प्रतिषेधेन तुल्यबलो भवतीति **'प्रतिषेधः प्रदेशेऽनारभ्य विधाने च'** [मी० सू० १०।८।१।] इत्यत्र वक्ष्यते । सत्यम् । यस्य शास्त्रमन्तरेणाप्राप्तिरस्ति तत्रैतदेवम् । यत्पुनरर्थप्राप्तं निषिध्यते तत्र विध्यनभ्यनुज्ञयैव लब्धात्मानः प्रतिषेधा बलीयांसो भवन्तीति तत्रैव वक्ष्यते— **'अर्थप्राप्तवदिति चेदिति'** [ मी० सू० १०।८।२। ] ।

विहितप्रतिषेधस्य षोडश्यादिवत् विकल्प इति । ननु सामान्येन पुरुषमात्रे निषेधः प्रकरणाच्च विशेषेण क्रतौ विधिः, सत्यम् । एवमपि विधिशास्त्रस्यावकाशो न लभ्यते, तत्प्रतिपादने च तात्पर्यम् । विकल्पभाषा च व्यवस्थितविकल्पेऽप्यविरुद्धेति । 'प्रतिषेधः प्रदेशेऽनारभ्यविधाने चे'त्यत्र वक्ष्यते । अनारभ्याधीतस्य ये यजामह इत्यस्य प्रतिषेधः श्रूयते, नानुयाजेषु ये यजामहं करोतीति । अतिदेशप्राप्तहोतृवरणप्रतिषेधः क्वचित् श्रूयते, न होतारं वृणीत इति । तत्र संन्देहः । किमयं प्रतिषेधः पर्युदासो वेति । किं प्राप्तम् । प्रतिषेधः श्रुतेः । ततश्च तुल्यबलविरोधे विकल्प इति । तदुक्तम् — प्रतिषेधः प्रदेशेऽनारभ्यविधाने च प्राप्तप्रतिषेधत्वात् विकल्पः स्यात् [ मी० सू० ।१०।८।१। ] ।

ननु विषं न भक्षयितव्यमित्यादिवन्निषेधस्य बलीयस्त्वं त[क]स्मान्न भवति । तदुक्तम्— अर्थप्राप्तवदिति चेदिति । युक्तम् । तत्र प्राप्तेरशाब्दत्वात् । इह त्वङ्गीकृत्य प्रापकं शब्दं न प्रतिषेधसम्भव इत्यङ्गीकृते च तस्मिन्न शाब्दयोः कश्चिद् विशेष इति विकल्पो न्याय्यः । तदुक्तम्— न तुल्यहेतुत्वादुभयं शब्दलक्षणमिति [मी० सू० १०।८।३] । अत्रोच्यते नैवमभिसम्बन्धो न करोतीति । किं तर्हि यद् ये यजामहं करोति तन्नानुयाजेष्विति । तेनानुयाजपर्युदासात्मकोऽयमनारभ्यवादवाक्यशेषः । न होतारं वृणीतेत्यत्रापि

स्तेयानृतवादयोश्च विनैव शास्त्रेण प्रवृत्तयोर्विधिनिरपेक्षोऽवस्थितः प्रतिषेध इति कल्प्यं विधिं बाधते । तस्मादानर्थक्यम् ।

अतः परं स्वार्थेनैवानर्थक्यं प्रतिपादयति । रात्रिन्दिवं धूमार्चिषोरपि दर्शनात् । 'धूम एवार्चिरेवेति' चैतद् द्वयमपि प्रत्यक्षविरोधादवधारणं न संभवति । अथ वा यदनेन प्रतिपाद्यते 'दिवाग्निरादित्यमनुप्रविशति । रात्रावादित्योऽग्निमिति तदवधारणं नोपपद्यते । पूर्वोक्तस्य हेतोरसिद्धत्वात् । ततश्चाग्निसूर्ययोर्नक्तन्दिवं व्यवस्थितज्योतिष्ट्वप्रतिपादनाय स्तुतिरप्यसत्यत्वान्नावकल्पत इत्येषा वानवधारणा । अथ वा सूर्यो ज्योतिरिति प्रातरयं मन्त्रोऽग्निर्ज्योतिरित्येष सायमित्येषा मन्त्रयोरवधारणा न सिध्यति । अथवा समस्तो वेदः प्रमाणमित्येषावधारणा न सिध्यतीत्यभिप्रायः । शास्त्रविरोधो दृष्टविरोधद्वयं पुनः शास्त्रदृष्टविरोध इति यत्सदृशन्यायानि सन्ति क्रमभेदेन चोद्यते तत्परिहारसूत्रक्रमभेदानुरोधेन । न चैतद्विदम इत्यार्षेयवरणशेषोऽभिमतः । स चायं

प्रत्ययार्थंकरोत्यर्थानुवादेन होतृवरणेन नञः सम्बन्धः । यत्प्रकृतिवत्कुर्यात् तद्धोतृवरणवर्जमिति । कस्मात्पुनः प्रधानं प्रत्ययार्थमतिलङ्घ्याप्रधानेन नञः सम्बन्ध उच्यते । विकल्पोऽष्टदोषदुष्टोऽगत्यैवाङ्गीक्रियते, न कथञ्चित् सम्भवत्यां गताविति । तदुक्तम्— अपि तु वाक्यशेषः स्यादन्याय्यत्वात् विकल्पस्य विधीनामेकदेशः स्यादिति [मी० सू० १०।८।४।] । अतः परं स्वार्थेऽपीति । अस्य प्रयोजनं स्वार्थस्यैवासत्यत्वात् कुतस्तद्द्वारलक्षणा स्तुतिः विध्यनुमानञ्चेति । एषा मन्त्रयोरवधारणा न सिद्ध्यतीति ।

नन्वेकदेशाक्षेपोऽयमित्युक्तम् । अतो विध्यंशस्य प्रामाण्यान् मन्त्रावधारणा सिद्ध्यत्येव । उच्यते, अर्थवादाक्षेप्योऽत्र विधिः वर्त्तमानापदेशात् । अथ वार्थवादापेक्षतां विधेर्वदतः सिद्धान्तवादिनोऽपेक्षणीयासत्यत्वेन विध्यर्थोऽपि न सिद्ध्यतीत्युच्यते । कथञ्चिदीदृशं मानान्तरापेक्षमनपेक्षो विधिरेकदेशी कुर्यात् । तस्मात् विध्यनपेक्षितानामप्रामाण्यमिति प्रतिपाद्यमिति शास्त्रविरोधो दृष्टविरोधद्वयमिति । विरोधे उक्ते पुनरपरस्य दृष्टविरोधस्यैव वचनं प्रयोजनमपेक्षत इति । सम्प्रति तदभिधानं क्रमभेदेनेति । क्रमविशेषाश्रयणेऽपि हेत्वपेक्षा दर्शिता । परिहारसूत्रक्रमसंख्यानुरोधेनेति । अनेनैव तद्दर्शयति, एकस्य परिहारस्याव्यापित्वमाशङ्क्य परि-

क्रियातत्सम्बन्ध्यनभिधानात्तद्विषयत्वेनाप्रमाणम् । न हि ब्राह्मणत्वाज्ञानसन्देह-विपर्यया: केनचिदंशेन कर्मण्युपयुज्यन्ते । न च प्रत्यक्षविरुद्धा स्तुति: सम्भवति । न च स्वतन्त्रब्राह्मणत्वाज्ञानप्रतिपादनेन प्रामाण्यम् । कथं पुनरयं दृष्टविरोधो यदा समानाकारेषु पिण्डेषु ब्राह्मणत्वादिविभाग: शास्त्रेणैव निश्चीयते । नायं शास्त्रविषयो लोकप्रसिद्धत्वाद् वृक्षत्वादिवत् । कथं पुनरिदं लोकस्य प्रसिद्धम् । प्रत्यक्षेणेति ब्रूम: । कस्मात्पुनर्मातापितृसम्बन्धानभिज्ञाश्चक्षु:सन्निकृष्टेषु मनुष्येष्वनाख्यात न प्रतिपद्यन्ते । शक्त्यभावात् । यथा वृक्षत्वं प्रागभिधानव्युत्पत्ते: । नैतत्तुल्यं वृक्षत्वं प्रागभिधायकव्यापराज्जात्यन्तरव्यवच्छिन्नं स्वव्यक्तिष्वनुगतं शाखादिमद्रूपेण दृश्यते, न तु ब्राह्मणत्वम् ।

अपि च व्युत्पन्नशब्दोऽपि निमित्तान्तरादृते नैव प्रतिपद्यते । न चोपनीता[1]-ध्ययनादि निमित्तम् वर्णत्रयसाधारणत्वात् । अध्यापनाद्यपि भिन्नाचारक्षत्रिय-

हारान्तरं दास्यते । तेनैवाशङ्कितोऽर्थश्चोद्यवाद्यभिमतत्वेन दर्शित: । रात्रिगतभूयस्त्वाभावाच्चेद् दिवा वन्हौ दर्शनाभावाभिधानं सर्वथा ब्राह्मण्यदर्शनाभावाभिधाने किमालम्बनमिति, तेनोपन्यस्ते क्रमेऽपि चायमेव हेतु: । एकत्र परिहारमाशङ्क्य उदाहरणान्तरदानमिति— शास्त्रेणैवेति । ब्रह्मणो मुखाज्जाता ब्राह्मणा:, ते च भृग्वादयस्तत्सगोत्राश्च सर्वे ब्राह्मणा इति । अतश्च निरुद्धब्राह्मण्यपित्रादिकीर्त्तनात् प्रवरानुमन्त्रणेन प्रागसिद्धब्राह्मण्यो विक्रियते ब्राह्मण इत्युपपन्नं वचनमिति । ततश्च एतदपि शास्त्रविरोधस्योदाहरणं युक्तं न दृष्टविरोधस्येति । यथा वृक्षत्वं प्रागभिधानव्युत्पत्तेरिति । यथा अभिधानव्युत्पत्तौ सत्यां व्यवस्यन्ती विविच्य वृक्षत्वं नैवं पूर्वमित्यर्थ: ।

यस्तु प्रतिपत्त्यभावमुदाहृतं मत्वा दूषयति नैतत्तुल्यमिति । अपि च व्युत्पन्नशब्दोऽपीति । भवति शब्दस्यैवेन्द्रियानुग्राहकत्वम् न पुनरन्यस्येत्यभिप्रेत्योच्यत इति ।

ननु मा भूत् प्रत्यक्षगम्या जाति: । एवमप्युपनयनमध्ययनं ब्राह्मणशब्दप्रवृत्तौ निमित्तमिति । तयो: प्रत्यक्षत्वे प्रत्यक्षविरुद्धता ज्ञानवचनस्येत्याशङ्क्याह— न चोपनीतेति । उपनीतमध्ययनं चोपनीतस्य वाध्ययनमिति ।

धूम एवाग्नेर्दिवा [?] । ननु अध्यापनयाजनप्रतिग्रहा ब्राह्मणशब्दप्रयोगं न व्यभिचरन्ति, क्षत्रियादिषु निषेधादित्याशङ्क्याह—अध्यापनाद्यपीति ।

१. न चोपवीता° इति मुद्रितपाठ: ।

वैश्यप्रतियोगित्वात्सन्दिग्धम् । सर्वञ्च दुष्टशूद्रेषु सम्भाव्यमानत्वादनिश्चितम् । यस्त्वविचारितसिद्धमेव प्रतिपद्येत, स शुक्तिकामपि रजतं मन्यमानः क्रीणीयात् । नैष दोषः । क्वचिद्धि काचिज्जातिग्रहणे इतिकर्त्तव्यता भवतीति वर्णितमेतत् । तेन यथैवालोकेन्द्रियानेकपिण्डानुस्यूतिशब्दस्मरणव्यक्तिमहत्त्वसन्निकर्षाकारविशेषादयोऽन्यजातिग्रहणे कारणम्, तथैवात्रोत्पादकजातिस्मरणम् । अयञ्चोत्पाद्योत्पादकसम्बन्धो मातुरेव प्रत्यक्षः । अन्येषां त्वनुमानाप्तोपदेशाद्यवगतः कारणं भवति । न चावश्यं प्रत्यक्षावगतमेव प्रत्यक्षनिमित्तं भवति । चक्षुरादेरनवगतस्यापि निमित्तत्वदर्शनात् । आन्तरालिकस्मृतिव्यवहितमपि चेन्द्रियसम्बन्धानुसारि प्रत्यक्षमित्येतत्साधितम् । न च यत्सहसा सर्वस्य प्रत्यक्षं न भवति, तन्निपुणतोऽपि पश्यतां न प्रत्यक्षमित्येतदप्युक्तमेव । स्त्र्यपराधात्तु दुर्ज्ञानोऽयं

क्षत्रियवैश्यं प्रति युज्यत इति । अथ वा क्षत्रियवैश्यौ प्रतियोगिनौ प्रतिसम्बन्धिनावस्येति क्षत्रियवैश्यप्रतियोगीति । ननु उत्सर्गतो ब्राह्मणशब्दप्रयोगैकाधिकरणमध्यापनादि तस्य निमित्तं भविष्यति, न सम्भावनामात्रव्यवस्थितेन क्षत्रियादिगामित्वेन दूष्यत इत्याशङ्क्याह — यस्त्वविचारितसिद्धमिति । निरस्तव्यभिचाराशङ्कमेव वस्तुव्यवहारोपभोगीत्यर्थः । यो वा मन्यते अस्ति तावद् ब्राह्मणोऽयमित्यपरोक्षाकारं ज्ञानमतः प्रत्यक्षजातिसिद्धिरिति । तं प्र[ति]युज्यते— यस्त्विति । नहि ज्ञानमित्येव प्रमाणं किन्तु समूलमिति भावः । तेन यथैवालोकेन्द्रियेत्यत्रानेकपिण्डानुस्यूतिशब्दस्मरणयोः विविक्तजातिरूपावधारणोपायत्वमुदाह्रियते ।

ननु कथमुत्पादकजातिस्मरणं कारणमप्रत्यक्षत्वात् । न ह्यप्रत्यक्षं प्रत्यक्षप्रतीत्यङ्गमित्याशङ्क्य व्युत्पादयितुमारभते—अयं चोत्पाद्योत्पादकेति । प्रत्यक्षमित्येव साधितमिति । न हि स्मरणतो यत्प्रागित्यादिना एतदप्युक्तमिति । नहि प्रविष्टमात्राणामित्यादिना ।

ननु स्त्रीणामपराधान्नायं निश्चेतुं शक्यत इत्याशङ्क्य आह — स्त्र्यपराधात्त्विति । दुर्ज्ञानतामात्रापराधसम्भवः स्यात् । स च ददृशे नार्चिरित्यत्र दृष्टविरुद्धत्वात् । नान्येनोपायेन प्राशस्त्यावधारणा सिध्यतीति स्थापितमेव निरुपाया न स्तुतिरिति । तेनोपायासत्यतैव केवलोच्यत इति ।

अङ्गीक्रियत एव न पुनरज्ञेयतेति । न चोपायस्य दुःसाधनतया

सम्बन्ध इति स्वयमेव वक्ष्यति। न च तावन्मात्रेण प्रत्यक्षता हीयते। न हि यद्गिरिश्रृङ्गमारुह्य गृह्यते तदप्रत्यक्षम्। न च स्त्रीणां क्वचिद् व्यभिचारदर्शनात्सर्वत्रैव कल्पना युक्ता। लोकविरुद्धानुमानासम्भवात्। विशिष्टेन हि प्रयत्नेन महाकुलीनाः परिरक्षन्त्यात्मानम्। अनेनैव हेतुना राजभिर्ब्राह्मणैश्च स्वपितृपितामहादिपारम्पर्याविस्मरणार्थं समूहलेख्यानि प्रवर्त्तितानि। तथा च प्रतिकुलं गुणदोषस्मरणात्तदनुरूपाः प्रवृत्तिनिवृत्तयो दृश्यन्ते। न च भर्तृव्यतिरेककृतेन वर्णसङ्करोऽपराधेन जायते। दृश्यते ह्यपराधिनीनामपि स्वभर्तृनिमित्तः प्रसवः।

प्रत्यक्षता हीयत इत्याह— न च तावन्मात्रेणेति। ननु स्त्रीत्वेनापराधशङ्काया निराकरणस्याशक्यत्वात् अज्ञेयतैवोचिता न दुर्ज्ञानतेत्याशङ्क्याह — न च स्त्रीणां क्वचिदिति। अवधारितानामपराधानां साधूनां व्यवहाराः स्त्रीषु प्रमाणतः। न च पूर्वप्रमाणविरोधीतरसाधारण्यानुमानं प्रवर्त्तते। सम्भावनैव कल्पनेत्युक्तोऽनुमानमिति च। अथवा सम्भवदपराधस्वभावतानुमीयत एवेति लोकविरोधमेव दर्शयति—विशिष्टेन हीति। महाकुलीनाः स्त्रियः। अथवा पुरुषाः। स्त्रीलक्षणमेव च तेषामात्मरक्षणम्। 'जायायां रक्ष्यमाणायामात्मा भवति रक्षितः' इति स्मरणात्। अयं चोपन्यासो रक्ष्यरक्षणीयताप्रतिपादनार्थः। तेनास्ति तेषां निरस्तापराधद्वाराणां कारणाभावपराकृतापराधाभावप्रत्ययो दृढ इत्यनुमानासम्भव इति। अनेनैव हेतुना क्रियत एव कुलीनानां कुलाविप्लवे तात्पर्यातिशयः।

अथवा यतोऽस्य प्रमाणवत्त्वम्। अन्यथा निष्प्रमाणकत्वेनावधारितस्य किं लेख्येन। अथवा यदेवोत्पादकजातिस्मरणाभिव्यङ्ग्या जातिः समूहलेख्यश्च पितृपितामहादिपरम्परालिखितमिति प्रतिपादयितुमेव प्रमाणवत्त्वं फलेन द्रढयति— तथा च प्रतिकुलमिति। न च व्यभिचाराविनाभूतो जातिसङ्करः। तेन शङ्कितेऽपि व्यभिचारे पुनर्जातिसङ्करशङ्कानिरस्तैव। ऋतावुपेयादिति नियमात् भर्तुरेवापत्यमुत्सर्गत इत्याह — न च स्वभर्तृव्यतिरेकेति। भर्तृव्यतिरेकेण कुतः स्त्रीणां कामव्यवहारोऽपराधः। तेन तासां दुःखोपभोगः स्यात्। नापत्यस्यान्यजातित्वमिति। केचिद् वदन्ति, सहस्रतमेऽपि यदि पक्षेऽपराधशङ्का भवेत्, तदैवातिक्रान्तानन्तस्त्रीषु कस्याञ्चिदभूदपराध इति निश्चेतुं शक्यते।

तदपराधनिमित्तस्तु तासामशुभफलोपभोगो भवेत्, नत्वपत्यानां वर्णसङ्करः। न च नियोगतो वर्णान्तरैरेव सह प्रमादः। सवर्णेन चोत्पादितस्य नैव वर्णान्तरत्वापत्तिः। सङ्करजातानामपि च पुनरुत्कर्षापकर्षाभ्यां सप्तमे पञ्चमे वान्यतरवर्णापत्तिः स्मर्यते। तत्र त्वेतावन्मात्रमागमिकं प्रत्येतव्यम्। न ह्ययं पुरुषेयत्तानियमो लौकिकप्रमाणगम्यः। तस्मात् सत्यपि सारूप्ये यथा केनचिन्निमित्तेन स्त्रीपुंस्कोकिलादिविभागज्ञानं तथैव दर्शनस्मरणपारम्पर्यानुगृहीतप्रत्यक्षगम्यमनि

ततश्चात्यन्तजात्युच्छेद इति। तन्निराकर्तुमाह— सङ्करजातानामपीति। उक्तस्तावदस्मत्पूर्वातिक्रान्तानां सन्तानिनां प्रतिस्वं विशुद्धिज्ञानं गुणवत् सन्तानस्मरणानुमितामाशङ्कां निवर्तयतीति शङ्कितोऽप्यपसधो नात्यन्तमुच्छिनत्ति जातिमित्यनेनोच्यते। तत्र त्वेतावन्मात्रमिति सप्तमे वर्णान्तरापत्तिः। पूर्वं नासीदिति प्रत्यक्षेण विवेक्तुं न शक्यते। विविक्ते त्वागमेन प्रत्यक्षवृत्तिरिष्टैव। कीदृशं पुनर्ब्राह्मणत्वादि परस्परविलक्षणं प्रकाशत इति चेत् समाधानमिदं गोत्वादिषु। न हि तत्र सास्नाकेसरादयो गोत्वादिरूपाणि, किन्तु अविपर्यस्ता गवादिबुद्धयो न परस्परं शुक्लादिबुद्धिभिर्वा संवदन्तीति तद् विषयेभ्यो विषयान्तरसिद्धिः, तस्य च बुद्धिरेव लक्षणम्। अस्ति च सामग्रीलब्धोदया विपर्यासविकला ब्राह्मणादिबुद्धिः।

ननु यज्ज्ञानव्यङ्ग्या जातिरङ्गीकर्तव्या तन्निमित्तप्रकृतशब्दानुरागादेव बुद्धयो भिद्यन्ताम्, किं तत्सामान्यैः। नैतत्, स्वाश्रयत्वापत्तेः। तथा हि गृहीतसम्बन्धः सामान्यशब्दः तत्र प्रवृत्तिनिमित्तवति प्रयुज्यते। तत्र ब्राह्मणशब्दार्थमविद्वान् ब्राह्मणस्य पुत्रो ब्राह्मण इत्येवं न सम्बन्धं ग्रहीतुं शक्तः। यदि हि तस्य प्रसिद्धं पितुर्ब्राह्मण्यं जानाति तर्हि ब्राह्मणशब्दार्थः क्वेदानीं व्युत्पाद्यते। अथ न जानाति केन पुत्रमुपलक्षयेत्।

अथ ब्राह्मणशब्दप्रयोगविषयतामात्रेणोपलक्षणं गौणभ्रान्त्यादिलब्धप्रयोगेऽप्युपलक्षयेत्। अतः शब्दस्यैव बुद्ध्यानुविधायित्वमङ्गीकर्तव्यम्। बुद्धिभेदश्च अर्थभेदमनुविदधातीति जातिसिद्धिरिति दर्शनम्। स्मरणपारम्पर्येति। यद्यपि मातापितृजातिस्मरणमात्रमनुग्राहकम् तथापि तस्य मूलत्वोपपादनाय दर्शनोपन्यासः। तस्य च सामग्रीस्मरणमित्येवं परम्परयोपयोगः। कैश्चित् अध्यापनाद्याचारनिमित्ता ब्राह्मणादिशब्दा

ब्राह्मणत्वादीनीति भवत्यज्ञानवचनस्य प्रत्यक्षविरोधः । येषामप्याचारनिमित्ता ब्राह्मणत्वादयस्तेषामपि दृष्टविरोधस्तावदस्त्येव, न त्वाचारनिमित्तवर्णविभागे प्रमाणं किञ्चित् । सिद्धानां हि ब्राह्मणादीनामाचारा विधीयन्ते । तत्रेतरेतराश्रयता भवेत् । ब्राह्मणादीनामाचारस्तद्वशेन ब्राह्मणादय इति । स एव शुभाचारकाले ब्राह्मणः पुनरशुभाचारकाले शूद्र इत्यनवस्थितत्वम् । तथैकेनैव प्रयत्नेन परपीडानुग्रहादि कुर्वतां युगपद्ब्राह्मणत्वाब्राह्मणत्वविरोधः । एताभिरुपपत्तिभिस्त्वयं प्रतिपाद्यते । न तप आदीनां समुदायो ब्राह्मण्यम् । न तज्जनितः संस्कारः । न तदभिव्यङ्ग्या जातिः । किं तर्हि मातापितृजातिज्ञानाभिव्यङ्ग्या प्रत्यक्षसमधिगम्या । तस्मात्पूर्वेणैव न्यायेन वर्णविभागे व्यवस्थिते मासेन शूद्रीभवतीत्येवमादीनि कर्मनिन्दावचनान्यथ वा वर्णत्रयकर्महानिप्रतिपादनार्थानीति वक्तव्यम् । पूर्ववच्चात्रापि क्लृप्तत्वात्प्रत्यक्षस्य कल्प्येताज्ञानविधिना सह विकल्पो न संभवति । अपि च तत्रानुष्ठानात्मकत्वाद्भवेदपि न त्वत्र वस्तुरूपाणामैकात्म्येनाविकल्प्यत्वात् । को हि तद्वेदेति पूर्ववदेवाज्ञानसंशयविपर्ययाणामनौपयिकत्वादानर्थक्यम् । निश्चितवेदप्रामाण्यैश्च त्रैविद्यवृद्धैर्विज्ञायमानत्वात्स्वार्थेऽप्यानर्थक्यम् । विकल्पाभावश्चानन्तरोक्तवत् ॥२॥

अङ्गीकृताः । तथा चाचारत्यागे मासेन शूद्री भवतीति स्मृतिः । तस्य च पक्षस्य किं दृष्टादृष्टविरोधासिद्धिभयात् परित्यागः । नेत्याह—येषामपीति । किमिति तर्हीत्याह— न त्वाचारनिमित्तेति । नन्वाचारविशेषादपि ब्राह्मणादिनिर्णयो लोके दृश्यते, तत्कथं तेषां निरास इत्याह— एताभिरुपपत्तिभिरिति । सम्यक् राज्यानुपालनवदेषां प्रायः सहवृत्तीनामप्युत्पन्नप्रतिपादनाङ्गत्वमिन्द्रियानुग्राहकत्वं तु मातापितृजातिज्ञानस्यैव ।

अथ वा निगमनमिदम् । तच्च सोपपत्तिकस्य पक्षस्य पुनरभिधानमत्र पूर्वोक्ता बह्वीरुपपत्तीः एकेन शब्देन विवक्षुः सर्वनाम प्रयुङ्क्ते— एताभिरिति । इदमिति वक्ष्यमाणार्थाभिधानं पर्यवसितं, न तप आदीनामिति विशेषैः पर्यवस्यति । तु शब्दोऽवधारणार्थ इति । तथा फलाभावादिति (मी० सू० १।२।३।) । सूत्रव्याख्यानभाष्यं शोभतेऽस्य मुखं य एवं वेदेति । यदि भूतानुवादोऽनर्थकः अध्ययनफलानुवादः । तदयुक्तम्, फलाभावादिति ॥२॥

यदि तावद्गर्गत्रिरात्रब्राह्मणवेदानुमन्त्रणज्ञानकाले विद्यमानयोरेव मुखशोभावाजिजन्मनोः संकीर्तनं न धर्मं प्रति प्रमाणम् । अथ त्वविद्यमानयोस्ततः स्वार्थेऽपि । वर्तमानापदेशाच्च प्रत्यक्षानुपलब्धिविरोधः, कर्मानुष्ठानयोग्यपुरुषकरणाद्विद्यासंस्कारस्य दीक्षिततीर्थस्नानादिवन्निराकाङ्क्षत्वात्फलविधित्वं निरीकरिष्यते पौनरुक्त्यात् तद्यत्र न विचारयितव्यमत आह — तेन फलविधित्वान्निराकृतस्येहानर्थक्यार्थवादत्वविचार इति । स्तुत्यर्थतापि चासत्यस्य नास्तीति व्यवस्थितमेव ।।३।।

अनन्तरेणैव पूर्णाहुत्यादिफलवचनानि व्याख्यातानि विधित्वाभ्युपेत्यवादेन दोषान्तरमभिधीयते पूर्णाहुतेरग्निसंस्कारत्वात् पशुबन्धस्य च ज्योतिष्टोमोपकारकत्वादश्वमेधज्ञानस्य च संस्कारत्वान्न तावत् फलविधित्वावसरः । यदि पुनरिष्यते, ततोऽन्यानर्थक्यम् । समानफलान्यपि कर्माणि यानि परस्परानपेक्षाणि क्रियन्ते, तेषां यथारुच्यनुष्ठानान्नानर्थक्यकरत्वम् । पूर्णाहुतिपशुबन्धयोस्त्वकृतयोरितरकर्मानधिकारात् ।

प्रथमं वा नियम्येतेत्यनेन न्यायेनावाप्ते फले नोत्तरकर्मानुष्ठानप्रयोजन-

तत्र भूतानुवादतां विद्यमानाविद्यमानविषयत्वेन विभज्यानर्थक्यं दर्शयति — यदि तावद् गर्गत्रिरात्रब्राह्मणेति । यच्चोक्तं नाध्ययनफलानुवादः फलाभावादिति । तत्र कालान्तरभावित्वात् फलस्य कथमभावावगम इत्याशङ्क्योपपादयति — वर्त्तमानापदेशाच्चेति । अत्र *भाष्यकारेण* प्रत्यक्षानुपलब्धविरोधपरिहारार्थं फलविधित्वमाशङ्कितं निराकृतश्च । नैष विधिपरो द्रव्यसंस्कारकर्मस्विति । तत्र संस्कारकर्मत्वं विद्यायाः दर्शयति — कर्मानुष्ठानयोग्येति । दीक्षितस्नानं तीर्थे स्नातीति । अस्य यथा दीक्षितसंस्कारनिराकाङ्क्षत्वात् वर्त्तमानापदेशोपात्तस्य तीर्थमेव समानानां भवतीति ज्ञातिश्रैष्ठ्यस्य फलत्वेन विपरिणम्य कल्पनं निराकरिष्यते द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात् ( मी० सू० ६।३।१। ) इत्यनेन, तथात्रापि स्यादिति । अत्राभिधेयसम्भवमात्रमुच्यते स्तुत्युपयोगिता तु न निराक्रियते । तत्राभिप्रायमाह — स्तुत्यर्थतापीति ।।३।।

*भाष्यकारेणा*नर्थक्यं प्रतिज्ञाय न कर्माल्पत्वमहत्त्वे हेतुत्वेन दर्शिते; किन्तु पौर्वापर्यम् ; नहि अकृत्वा पूर्णाहुतिमित्यादिना । तत्राभिप्रायमाह — समानफलान्यपीति । प्रथमं वा नियम्येतेति । कपिञ्जलानालभतेति श्रुतेः बहुवचनेन द्वित्वातिरिक्तसंख्यावाचिनस्त्र्यादयः परार्धपर्यन्ताः विनियुक्ताः ।

मस्तीति तद्विध्यानर्थक्यम् । तथा च दृष्टान्तोऽपि तेनैव पथा मध्वर्थिन इति । यत्रान्यः पन्थाः पर्वतस्य तत्र गच्छेयुरपि, न तु तेनैव गच्छन्ति । तस्माद् भूयसां क्लृप्तानां विधीनामनुग्रहाय वरं कल्प्यानामेकानर्थकत्वम् । न च फलविशेषार्थिनः पराणि कर्माण्यविशेषश्रवणात् । न हि समानायां श्रुतावप्रत्यक्षः सन् फलविशेषः कर्मविशेषेभ्यः शक्यः कल्पयितुम् । न च स्तुतिरसत्यत्वादिति स्थितमेव ।।४।।

त्रीण्यपि पृथिव्यादिवचनान्यप्रतिषेधभागिनमर्थं प्रतिषेधन्ति । अन्तरिक्षे दिवि च तावदप्राप्तत्वात् प्रतिषेधाविषयत्वम् । अतश्च पर्युदसितव्याभावान्न पर्युदासः । अनन्तरिक्षे ह्यदिवि च पृथिव्यां नित्यं चयनं प्राप्तमिति तद्विधिरनर्थकः । अथापि नित्यानुवादस्तथाप्यक्रियार्थत्वमेव । पृथिवीचयनप्रतिषेधपर्युदासौ तु चयनविध्यबाधेनाशक्यौ । बाधे च विध्यानर्थक्यम् । विकल्पेऽपि पक्षे बाधः । कामसंयोगाच्चाग्नेरस्त्येव पाक्षिकत्वम् । दुर्बलश्च प्रतिषेधः । पृथिवीपरत्वे सति चयने कल्प्यत्वात् । एतदेवास्य स्वयमाकुलत्वम् । विध्यनन्तरमेव हिरण्यं निधाय चेतव्यमिष्टकाभिरग्निं चिनुत, एतच्चाकुलयेत् । प्ररोचनाबुद्धिस्तु नैवोत्पद्यते ।।५।।

तेषाञ्चैकप्रयोगसमवायासम्भवाद् विकल्पेनोपादानमिति पूर्वपक्षं निरस्योक्तम् । प्रथमं वा नियम्येत कारणादिति क्रमः स्यादिति । प्रथमं त्रित्वं न कस्मिन्ननुपात्ते चतुराद्युपादानं शक्यम् । अतस्तदेव नियम्येत यतोऽङ्गसामग्र्यायोपादानं प्रयुज्यते । जातं च तत्त्रित्वेनैव बहुवचनार्थसम्पत्तेः । एवं न्यायेन साधिते यदि कारणान्तरं स्यात् ततोऽतिक्रम्येत त्रित्वम्, न त्वेतदस्तीति । तथा च दृष्टान्तोऽपीति । योऽस्माभिरभिप्रायो वर्त्तितस्तदनुरूप एवेति ।।४।।

त्रीण्यपि पृथिव्यादिवचनानीति । ननु यदि प्रतिषेधः श्रूयते किमित्येषामानर्थक्याभिधानेनाक्रियार्थानां ह्येतत् प्रतिज्ञातम् । उच्यते, सिद्धान्ते वाक्यशेषत्वासम्भवादप्रामाण्यमिति प्रतिज्ञातम् । तत्र यथा वाक्यशेषत्वासम्भवः तत्सामान्येनार्थवादाक्षेपादिहाप्युक्तम् । वक्ष्यते च प्ररोचनाबुद्धिस्तु नैवोत्पद्यत इति । इदानीं तु तथापि कथमप्रामाण्यं स्वातन्त्र्येण किमिति प्रामाण्यं न सम्भवतीत्येतन्निराकरोतीति — एतदेवास्य स्वयमाकुलत्वमिति । चयनमाश्रयति च पृथिवीनिषेधार्थं तन्निषेधेन निषेधति च यथाश्रुतार्थं-

सर्वोपाख्यानेष्वन्यपरत्वासम्भवात् स्वरूपप्रतिपादनादनित्यसंयोगः । स च समस्तवेदप्रामाण्ये सति कथञ्चिदन्यथा नीयेत । यदा तु यथैव प्रमाणानां मध्ये शब्दस्तत्रापि च वेदः प्रमाणं तथैव वेदेऽपि विधिमात्रं युक्त्या कल्प्यते, तदेतरैकदेशवदनित्यार्थैकदेशाप्रामाण्यं यथाश्रुतार्थग्रहणादापन्नं किं निवार्यते । तस्मादेवमादीनामनपेक्ष्यार्थमध्ययनमात्राद्धेव फलं कल्प्यम् ।

अथवा यथैतान्युपेक्षाफलानि तथा तद्विषयं प्रत्यक्षमपि प्रतिपत्तव्यम् । अथ कस्मान्मन्त्रवद्यथाप्रकरणं प्रयोगकाले न प्रयुज्यते । प्रयोगरूपसामर्थ्याभावात् । न हि मन्त्राणां पाठमात्रेण विनियोगः, किं तर्हि तत्सामर्थ्यात् । न चात्र तदस्ति । अथ वा यथा तेषां पूर्वपक्षे कार्यान्तराभावाद्रूपमात्रं ग्रहीष्यते तथात्राप्यस्तु । यत्तु सूत्रकारेणानित्यत्वमुक्तं तत्प्रामाण्यापेक्षया नाप्रयोज्यतया ॥६॥

ग्रहणापन्नमिति ॥५॥

नन्वेवं सैव पूर्वं निरस्ता नित्यतापद्येत । नह्ययं सिद्धेनानित्यार्थपरत्वेन धर्मानुपयोगं वदतीति । किन्तु निरस्यानित्यविषयतानुपपत्तेः । अर्थप्रमित्यनुपयोगित्वं यतोऽर्थान्तरकल्पनायां प्रमाणं नास्ति अतो यथाश्रुतार्थो ग्रहीतव्यः । न चासावनित्यो नित्यस्य ग्रहीतुं शक्यत इत्यप्रामाण्यमिति । कथं तर्हि अध्ययनविधिस्तत्राह — तस्मादेवमादीनामिति । एवञ्चैकस्याध्ययनस्य विधेर्विधिषु दृष्टशक्त्यनुरोधनादर्थवादेष्वदृष्टकल्पनाद् वैरूप्यापत्तिः । तथा हि अध्ययनेन यच्छक्नुयात् तत् कुर्यादिति नियमरूपविध्यपेक्षया वचनव्यक्तिः अर्थवादापेक्षया त्वभिमतमनेनेत्यज्ञातशक्तिसाधनज्ञानरूपा । न च सर्वस्यादृष्टार्थता दृष्टपरित्यागासम्भवात् । अस्मादेवमुच्यतामित्याह— अथ वा यथैवैतान्युपेक्षाफलानीति । यथार्थवादजनितमर्थज्ञानमुपेक्षाफलमेवमुपाध्यायतो ग्रहणमपीति । यतो यच्छक्यते तत्कर्त्तव्यम् । न चैभिः किञ्चित् कर्त्तुमभिमतं शक्यम् । किमर्थं तर्हि प्रेक्षापूर्वकारिभिः पठ्यत इत्यत्रोत्तरं दत्तम् अबुद्धिपूर्वः पाठ इति । प्रयोजनवत्त्वभ्रमाद्वा सत्यपि वा भवितव्यम् प्रयोजनेनेत्यवगमे दृढे दृष्टस्याभ्युपगमात् तदनुसारे क्रियमाणे चोद्यमिदानीमानर्थक्यमिति । न दृष्टोऽर्थ उपपत्तिमानुपलभ्यत इति । अत्राध्ययनमात्राददृष्टकल्पनमुपेक्षाफलं वापद्यत इत्यपि चोद्यमेवं । न स्वपक्षोपन्यासः, न च चोद्यवादिनं प्रति, किमर्थं तर्हि अध्ययनमिति

पूर्वपक्षोदाहृतेष्वेवं वाक्येषु सिद्धान्तेऽभिधातव्ये किमर्थं वायव्यवाक्यमुपन्यस्यते। केचिदाहुः, समानन्यायत्वादिदमपि तत्र तान्यपि चेहोदाहृतानि द्रष्टव्यानीति। यद्यप्येवं तथाप्यपूर्वोदाहरणमभिप्रायान्तरमाकाङ्क्षति। तदभिधीयते। पूर्वोदाहृतेषु सर्वत्र स्वार्थासत्यत्वमप्याशङ्क्यते तत्र कः प्रथममेव तत्प्रतिपादनक्लेशमङ्गीकुर्यादिति प्रसिद्धस्वार्थसत्यत्वानां स्तुतिद्वारैकवाक्यभावेन धर्मप्रमाणशेषत्वमात्रप्रतिपत्तिसौकर्यार्थं वायव्यवाक्योपन्यासः। तत्र भाष्यकाराः प्रसिद्धेनैवैकवाक्यत्वेन स्तुत्यर्थोपयोगं वदन्ति। एवं तावत्त्वत्र प्रथमं वक्तव्यम्। किमर्थं रूपभङ्गो न बलादेकवाक्यता पुरुषार्थत्वं वा वेदस्योच्यते इति। लोकवाक्येषु[1] दृष्टत्वादिति यद्युच्यते तत्राभिधीयते। युक्तं लोके वाक्यार्थस्य प्रमाणापर्यनुयोगावकाशः, यतोऽनेनापि वक्तव्यम्। अहमपि वदामि भवितव्यम् अस्य दृष्टेन प्रयोजनेन। न च परोक्षावस्थितेन व्यवहारः। न चाध्ययनमनुपपत्त्युपन्यासेन तद्दर्शितम्। तस्मान्निदर्श्यतामिति। तथा चैवमेवोपक्रमः सिद्धप्रमाणभावस्येति। न चैवमुपयोगशेषविचारतापत्तिः। यतो दर्शिते सामान्ये तस्य विषयविशेषविचारस्तथा स्यात्। अर्थवादानां तु सामान्यमेव दर्शयितव्यमिति ॥६॥ इत्यर्थवादाधिकरणस्य पूर्वपक्षः।

अथ कस्मान्मन्त्रवदिति च। मन्त्रसाम्योपन्यासेन तद्वद् दृष्टार्थतामाशङ्क्य निराकरोतीति— विधिना त्वेकवाक्यत्वादिति [मी० सू० १।२।७] सिद्धान्तसूत्रम्। अस्यार्थः, मा भवन्तु विधेयभावनाङ्गमर्थवादाः। विधिशब्देन त्वेकवाक्यत्वात् तेषामेव पुरुषं प्रवर्त्तयतामङ्गं स्युः। विध्यर्थानां कारणांशनिविष्टानामितिकर्त्तव्यताः स्युः। केनोपकारेणेत्याह — स्तुत्यर्थेनेति। विधिनाथ्र्यमानत्वात् स्तुतिरर्थः तद्द्वारेणेति। अस्य व्याख्यानभाष्यम् — वायुर्वै क्षेपिष्ठेत्यतो यद्यपि क्रिया नावगम्यत इत्यादि। तस्यार्थमुत्पादयितुं संक्षेपेणाह — तत्र *भाष्यकारा* इति। उपपाद्यतामाह — एवन्तावत् त्वत्र प्रथमं वक्तव्यमिति। ननु कथमेकवाक्यभाव इत्याक्षिप्य भाष्य एवोक्तं भूतिकाम आलभेत। कस्मात् यतो वायुः क्षेपिष्ठे[ति]कीदृशं समभिव्याहारं सिद्धं कृत्वा विधिः स्तुत्यर्थसंगतिः, कथमित्याक्षिप्य समाधानं कृतं कथं तु ईदृक् समभिव्याहारसिद्धिरादावेवेति वक्तव्यमेतदिति। अथ व्युत्पत्तिस्थानेषु लोकवाक्येषु इदमेव शब्दवृत्तमुपलब्धं यल्लक्षणयापि प्रयोजनवदर्थपर्यवसानमिति किमत्र वक्तव्यमित्याशङ्कते — लोकवाक्येषु दृष्टत्वादिति।

---

१. लौकिकवाक्ये तु इति मुद्रित पुस्तकपाठः।

न्तरगम्यत्वादन्यथापि कल्पनम् । इह त्वत्यन्तातीन्द्रियत्वाद् यथाश्रुतादिषद-प्यन्यथात्वे पौरुषेयत्वमापद्येत । लोकेऽपि च यानि प्रमाणान्तरानवगतार्थानि आप्तप्रत्ययमात्रेण श्रोतॄणां प्रमाणानि भवन्ति तेषां नैवान्यथात्वकल्पनं लभ्यते । तत्र केचिद्वदन्ति तुल्यं च सांप्रदायिकम् इति यद्वक्ष्यति तेन समस्तो वेदः पुरुषार्थ इति साध्यते । न ह्यात्मानुपकारिणं सन्तमेनं बुद्धिपूर्वकारिणः पुरुषाः प्रयत्नेन धारयेयुः । यद्यपि च केषाञ्चिदज्ञानं भवेत्तथाप्यस्मत्पूर्वातिक्रान्तानेकपरीक्षकप्रमादकल्पना निष्प्रमाणिका । तस्माद्यथा यथा पुरुषार्थता भवति तथा तथा भङ्क्त्वाऽपि रूपं व्याख्यायत इति । न त्वेतद्युक्तमिव । कुतः पुरुषाधीन-प्रामाण्यप्रसङ्गात् । यदि ह्यक्षरानुपात्तोऽप्यर्थोऽस्मदादिभिरेवं कल्प्यते, यस्माद् वयं प्रयत्नेन धारयामस्तस्मादस्य पुरुषार्थतेति । तथा सत्यात्मचेष्टितवशेन प्रामाण्य-मभ्युपगतं स्यात् । अथ पुरुषान्तरधारणमुच्यते । एवमपि तद्वशेन तैरप्येव-मन्यवशेनेत्यनादित्वेऽपि सत्यन्धपरम्परान्यायेन सर्वेषां परप्रयत्नान्न क्वचित्-प्रामाण्यावस्थापनम् । सर्वत्र ह्येवमयं पुरुषो वेदेति प्रत्ययो नैवमयमर्थ इति । तेन यद्यपि तेषु तेष्वध्येतृषु नूनं पुरुषार्थं वेदं मन्यन्त इत्यभिप्रायोऽनुमीयते

कुतः पुनरवधारितं प्रमाणान्तरबलादेव न शब्दस्वभावादित्याशङ्क्याह — लोकेऽपि च यानीति । तत्र केचिदिति । उपरिष्टाद् वक्ष्यति सूत्रकार एवेत्य नेनोच्यत इति । कथं तेनैतदुच्यत इत्यत आह — नहि आत्मानुपकारिणमिति । तथा सत्यात्मचेष्टितेति । तच्चायुक्तम्, चेष्टा हि पुरुषार्थत्वा-वगतिपूर्विकेति तामनुमापयति । न च स्वावगतिरनुमेया । तत्रावगत्यभावे सिद्धे यदि स्वप्रवृत्तिसाफल्याय पुरुषार्थं यावत् वेदस्वरसतो गच्छन्नपि नीयेत ततः पुरुषाधीनं प्रामाण्यं स्यादिति ।

ननु पुरुषान्तरावगत्यभावस्यासिद्धत्वात् तत्प्रवृत्त्या पुरुषार्थत्वाव-गत्यनुमानं भविष्यतीति शङ्कते — अथ पुरुषान्तरधारणमिति । दूषयति — एवमपीति । सर्वस्य संवेद्ये वेदव्यापारे स्वावगत्यभावेनैव पुरुषान्तरस्यापि स्वतोऽवगत्यभावे सिद्धे तत्र प्रवृत्तिसाफल्यायैव पुरुषार्थं यावद् वेदं नयतः पुरुषाधीनप्रामाण्यापत्तिः । किञ्च तस्यापि पुरुषार्थत्वावगतिः पुरुषान्तर-प्रवृत्त्यैवं यद्यत् स्यादिति सर्वेषां सापेक्षत्वादन्धपरम्परान्यायापत्ति-रित्याह— तैरप्येवमन्यवशेनेति ।

तथापि निर्मूलत्वात् तन्मात्रेणासिद्धिः । तस्माद्[1] यावद्वेद एव पुरुषार्थतया सकलमात्मानं न प्रतिपादयति तावदप्रमाणम् ।

तदुच्यते, सकलस्य तावद्वेदस्य स्वाध्यायोऽध्येतव्य इत्यध्ययनभावना विधीयते । तत्र किं भावयेदित्यपेक्षायामध्ययनमित्यागतमपि पुरुषप्रवर्त्तनाशक्ति-

तस्माद् यावद् वेद एवेति । नन्वेतदेव वेदस्यात्मीयपुरुषार्थत्वप्रतिपादनमध्येतृपुरुषगतपुरुषार्थत्वाभिप्रायादनुमास्यते कथमभिप्रायस्य निर्मूलत्वम् । उच्यते,

अयमभिप्रायः । प्रत्यक्षमेव तद्वाक्यं स्वाध्यायोऽध्येतव्य इति । अनुमीयमानमपीदृशमेवानुमातव्यम् । अस्य चास्मिन्नर्थे शक्तिर्दूषिता । तद्दूषणमनुद्धृत्याध्येतृपुरुषाभिप्रायान् न शक्यम् प्रयोजनवत्त्वं प्रतिवक्तुम् । तस्मात् वक्तव्यमेतत् यथा वेदादेव वेदस्य पुरुषार्थोपयिकार्थपरत्वमवसीयत इति । एतद् वक्तुमारभते — सकलस्य तावद् वेदस्येति । इदमत्र व्युत्पाद्यते यद् दृष्टार्थो विधिः अनुष्ठानानन्तरं यदपेक्षितं दृश्यते तद्गृहीत्वा सन्तुष्येत् । ततोऽध्ययनानन्तरम्, अर्थवादेषु स्वरसतो भूतार्थप्रतीतिदर्शनात् न दृष्टफलः स्यात् । नत्वेतदस्ति, अविनियुक्तस्याननुष्ठानात् । अननुष्ठितस्य च फलादर्शनात् । अतो यद् येन कर्त्तुं शक्यते तत् तत्र प्रसिद्धशक्त्यनुसारेण विनियुंक्त इति दृष्टार्थविधिव्यावृत्तिः । शक्यते चार्थवादैः स्तुतिः कर्त्तुम्, अतस्तत्राध्ययनविधिना विनियुज्यन्ते । ननु न स्वरसतः शक्नुवन्तीत्युक्तम् । न शब्दस्वरसस्यान्यव्यवस्थितत्वात् । तदेव हि पदजातं यावदुपात्तार्थतात्पर्यपर्यवसितं वाक्यान्तरं भवति । अर्थान्तरपरत्वे त्वपर्यवसितं स्वार्थविशिष्टार्थान्तरप्रतीतिप्रधानमपरेणैकवाक्यतामापद्यते । तथा श्रौतलाक्षणिकार्थप्रतिपादनं तात्पर्यभेदात् अव्यवस्थितं दर्शयितव्यम् । एवं सर्वत्र शक्तौ सत्यामपेक्षावशेन लाक्षणिके विध्युद्देशेनैकवाक्यताहेतौ स्तुत्यर्थे विनियोगोपपत्तिः । यथाविनियोगाच्चानुष्ठानमिति ।

यद्यत्र विनियुज्यते तस्य तदर्थमेवाध्ययनमुच्चारणतादर्थ्याच्चार्थसिद्धिरिति । तत्राध्ययनविधेः कृत्स्नवेदविषयत्वात् कृत्स्नदृष्टार्थान्तर्गतमर्थवादानां स्तुत्यर्थत्वमुपपाद्यमिति । सकलवेदगतस्यापेक्षितार्थप्रतीति-

१. तस्मादित्यस्य स्थाने अतः पाठो मुद्रितपुस्तके वर्तते ।

युक्तेन विधायकेनापुरुषार्थसाध्यायां भावनायां प्रवर्त्तनाशक्तिप्रसंगात्[1] तदंशान्निराक्रियते। ततश्चाध्ययनेनेत्यविरोधात् सन्निधिश्[2]च करणांशे निविशते। तेन किमित्यपेक्षिते यच्छक्यत इत्युपबन्धादक्षरग्रहणमित्यापतति। तस्याप्यपुरुषार्थत्वात्तेन किमिति पदावधारणमित्युपतिष्ठते। तेनापि पदार्थज्ञानम्, तेन वाक्यार्थज्ञानम्, तेन चानुष्ठानम्, अनुष्ठानेन स्वर्गादिफलप्राप्तिरित्येतावति प्राप्ते निराकाङ्क्षीभवति। एवं सर्वविधीनां प्राक् पुरुषार्थलाभादपर्यवसानम्। न च सहसैव विधिदर्शनात्स्वर्गाद्येव फलं कल्प्यते। योग्यतया हि यस्य यत्रानन्तरभाविनि व्यापारो लक्ष्यते, तदेव तस्य कार्यमित्यवधार्यते। तत्र यदि तावत्तदनुसारेणैव कियत्यप्यध्वनि फलमासाद्यते, ततो नान्तरा कल्पनमर्हति। पारम्पर्य-

पर्यवसानप्रतिपादनस्यारम्भ इति। प्रवर्त्तनाशक्तिप्रसंगादिति प्रवर्त्तनाशक्तिप्रतिघातप्रसंगादिति। अविरोधात् सन्निधिश्चेति। न च साध्यवत् साधनत्वेऽपि विधिविरोधः। तेन योग्यमेकपदोपादानात् सन्निहितं कारणाकाङ्क्षया गृह्यत इति यच्छक्यत इत्युपबन्धादिति। अस्योपबन्धस्यानुपात्तफलेषु सतामुपपादयिष्यति। न च सहसैव विधिदर्शनादित्यादिना तस्याप्यपुरुषार्थत्वात् फलत्वं न सम्भवति। अवान्तरव्यापारन्तु [स्तु] प्रयोजनान्तराय सम्भवति। अतस्तद्द्वारेण प्रयोजनान्तरापेक्षणम्।

अथ वा यदि तस्य प्रयोजनान्तरौपयिकत्वपर्यवसितं ततस्तस्यैवापेक्षितोत्पत्तेरुत्पत्तिरध्ययनप्रयोजनतां गमिष्यतीति। उभयपक्षसाधारणीमपेक्षां दर्शयति— तेन किमिति। एवं पदावधारणादिष्वपि कर्मानुष्ठानपर्यन्तेष्वपेक्षा दर्शिता। पश्चात्तु विभजिष्यति। यस्यावान्तरव्यापारता यस्य चावसितप्रयोजनान्वितस्यात्र साध्यत्वमिति।

ननु स्वयमभिमतसाधनावगतिसमर्थो विधिः प्रसिद्धाभिमतस्वर्गसाधनतां विधेयस्य बोधयितुमिति मानान्तरावगतिशक्तिद्वारं साध्यं मृगयते। अत आह — न च सहसैवेति। न हि विधिः साध्यविशेषमुपादत्ते। अपेक्षते तु तत्र कल्पनातो दर्शनं लघु तदिदमुक्तं— नान्तरा कल्पनमर्हतीति। अन्तरादृष्टव्यापारपरम्परालभ्यं प्रयोजनं यावदवगतयेत्यर्थः। एवमक्षरग्रहणादिकार्यपरम्परा स्वर्गोपयोगिन्यध्ययने स्थिते किं सर्वमेवावान्तरव्यापारीकृत्य

१. प्रवर्तनाशक्तिप्रसक्तेरिति मुद्रितपाठः।
२. सन्निधेरिति मुद्रितपाठः।

प्रयोजनेनापि श्रुतविध्युपपत्त्यान्यथानुपपत्तिलक्षणार्थापत्त्यनुत्पादात् । यत्र त्वनन्तरं दृष्टं कार्यं न स्वयं पुरुषार्थो, नापि पारम्पर्येण तमाप्नोति, यथा होमस्याहवनीयप्राप्तिर्भस्मसाद्भावो वा, तत्र तदतिक्रमेण साक्षात्कर्मण एवादृष्टकल्पना । सर्वत्र चैतल्लक्षयितव्यम् । यत्र तु विहिते फलाकाङ्क्षिणि तदनात्मककार्यपरम्परायां सत्यामान्तरालिकं किञ्चित्क्रतवे पुरुषार्थाय वा चोद्यते, तत्र तदेव तत्साधनम्, पूर्वस्य तु विधेस्तदुपकारार्थतया पर्यवसानम् । यानि तूत्तरविधेः कार्याणि प्राक्तानि[1] साध्यसाधनभावेनाचोदितत्वान्नान्तरीयकत्वेन काष्ठादीनामिव ज्वलनादीनि पूर्वविहितकर्मस्वव्यापारमात्रतया मन्तव्यानि । यत्र तु पारम्पर्यजन्यं न किञ्चिदन्तरा विधीयते, तत्र सर्वाणि स्वव्यापारीकृत्य विधेयतयैव स्वयं फलसाधनता । तत्र यानि तावत्क्लृप्तकल्पयिष्यमाणपुरुषार्थसाधनविधिवाक्यानि तानि तत्प्रतिपादनं यावत्स्वाध्यायाध्ययनविधिना नीयन्ते, परतस्तु प्रयोजनवत्त्वं[2] ज्ञातमेवेति न तद्यावत्प्राप्यन्ते ।

**स्वर्गसाधनत्वमध्ययनस्य प्रतिपत्तव्यम् उत किञ्चिदवान्तरकार्यप्रतीतिबुभुत्सायामनुष्ठानौपयिकबोधपर्यवसानं वेदाध्ययनस्य दर्शयितुं तत् प्रतिपत्तिसमर्थन्यायं व्युत्पादयति— सर्वत्र चैतल्लक्षयितव्यमिति । यानि तूत्तरविधेः कार्याणीति उत्तरविधिविधेयस्य यानि कार्याणि तानि तस्यैव कार्येभ्यः पूर्वविहितस्य कर्मणः स्वावान्तरव्यापारतया मन्तव्यानि । कुतः — प्राक् साध्यसाधनभावेनाचोदितत्वादिति । अथ वा उत्तरविधेः प्राग् यानि कार्याणि अर्थात् पूर्वविहितस्य कर्मणः तानि तस्यैवावान्तरव्यापाराणि, तेनैव हेतुनेति । एवं सामान्यं न्यायं व्युत्पाद्य प्रकृते योजयति — तत्र यानि तावदिति, क्लृप्तकल्पयिष्यमाण इति । पुरुषार्थविशेषणमिति । परतस्तु प्रयोजनवत्त्वमिति । अनुष्ठानस्य तावत् पुरुषार्थपरत्वं ज्योतिष्टोमादिवाक्यैः बोधितम्, अवबोधस्यानुष्ठानाङ्गत्वं नियमात् सामर्थ्येन बोधितम्, पदार्थपदाक्षरावधारणाध्ययनानां न नियमेन कर्मावबोधाङ्गत्वं ज्ञातम् । अतोऽध्ययनमवान्तरव्यापारीकृताक्षरादिग्रहणं कर्मावबोधाङ्गतया नियम्यत इति ।**

**ननु यदि फलवत्प्रकरणे पठ्यन्ते तेषां पाठ एव प्रकरणिना गृह्यत**

---

१. प्रोक्तानीति मुद्रितपाठः ।

२. फलवत्त्वमिति मुद्रितपाठः ।

यानि तु तत्प्रकरणे पठ्यन्ते तान्यपि तथैवाक्षरग्रहणादिक्रमेण स्वार्थावबोधनं यावद्गतानि न साक्षात् क्रत्वङ्गं भवन्ति । कुतः । कथमित्यदृष्टोपायाकाङ्क्षया[1] क्रतुना दृष्टार्थत्वादक्षरादिष्वनवसजता तद्विहितं कर्ममात्रमेव हि प्रयोजनद्वारेणोपादीयते नान्यत् । अतः प्रधानवाक्यतुल्यान्यङ्गानि भवन्ति । तद्वाक्यानि तु बाह्यतराण्यध्ययनादिवत् । एवं प्रोक्षणादिवाक्यानां व्रीह्यादिसंस्कारमात्रफलावसितानां तण्डुलपिष्टपुरोडाशद्व्यवदानादिभिर्व्यवहिततरः प्रधानसंबन्धः । एवमेवानारभ्याधीतारादुपकारकसामवायिकाङ्गवाक्यानि योजयितव्यानि । तत्र त्वेतावान् विशेषः । यदप्रकरणस्थत्वादक्षराण्यस्पृशत्प्रधानार्थैरेव संबध्यते । यानि त्वाधानादिवाक्यानि तान्यपि फलवत्क्रत्वङ्गाहवनीयादिसंस्कारप्रतिपादनावसायीनि दूरस्थेनैव फलेन निराकाङ्क्षीक्रियन्ते । एतेन क्रत्वर्थकर्तृ-

इति प्रयोज्यत्वेनाङ्गत्वं स्यात् । ततश्च प्रयाजादिवाक्यानां क्रियार्थत्वेन प्रामाण्यं तद्वाक्यशेषाणां स्तावकत्वेन न स्यादित्याशङ्क्य साक्षादनङ्गत्वं प्रतिजानाति— यानि तु तत्प्रकरण इति ।

कथमित्यदृष्टोपायाकाङ्क्षयेति । यद्यपि तेषां रूपं कथं भावस्पृष्टं तथाप्यपूर्वनिवृत्तेरत्यन्तादृष्टत्वाददृष्ट एव तत्र साधनोपकारः, स साधनापेक्षो दृष्टसाधनत्वेन निर्ज्ञातं गृह्णाति । अदृष्टसाधनत्वश्च प्रयाजादीनां स्ववाक्यैर्बोधितम् । एवं प्रयाजादिष्वङ्गभावं गतेषु तत्प्रतिपादनेनैव तद्वाक्यानां प्रकरणेऽध्ययनमुपयोजितम् न साक्षान्मन्त्रवदङ्गभावम् प्रयोजयति — प्रयोजनद्वारेणेति । अङ्गप्रयोजनमुपकारनिवृत्तिस्तद्द्वारेणेति । बाह्यतराण्यध्ययनादिवत् । प्रधानवाक्याध्ययनवदिति । एतेन क्रत्वर्थकर्तृप्रतिपादनेति । कर्तुः फलं भवतीति कर्तृत्वम् प्रतिपाद्यते । तत्र देहमात्मानं मन्यमानो देहविनाशात् फलोपभोगमपश्यन्नकर्तृत्वं प्रतिपद्यते देहव्यतिरिक्तमात्मानमुपनिषदुपदर्शितम् नित्यं फले च भोगसमर्थं ज्ञात्वा कर्ता स्यादिति । कर्तृसंस्कारो ज्ञानम् । आत्मा ज्ञातव्य इति विधीयते । केन पुनरस्य क्रतुसंबन्धः न प्रकरणेन तदभावात् । न पर्णतादिवद् वाक्येनात्मनो जुहूवत् क्रत्वव्यभिचाराभावाल्लिङ्गेनेति ब्रूमः ।

ननु सामान्यसंबन्धमन्तरेण लिङ्गमविनियोजकम् । सत्यम्, तत्रैवैतद्

---

१. °पायापेक्षेणेति मुद्रितपाठः ।

प्रतिपादनद्वारेणोपनिषदां नैराकाङ्क्ष्यं व्याख्यातम् । मन्त्रनामधेययोस्तु स्वाधिकारे योजना वक्ष्यते । तेन सर्वेषां भावनान्तर्गतिरुपपन्ना ।

यत्त्वर्थवादानां भावनांशत्रयानन्तःपातित्वादग्रहणमिति, तत्राभिधीयते । सत्यमतिरिक्तं न गृह्यते । अस्ति त्वन्तर्गतिः । कथम् ? इह हि लिङादियुक्तेषु वाक्येषु द्वे भावने गम्येते । शब्दात्मिका चार्थात्मिका च । तत्रार्थात्मिकया-

यत् सव्यभिचारं नियमादृष्टाय नियन्तव्यम् । आत्मज्ञानस्य तु दृष्टमेवानन्यसाध्यम् क्रतावेवोपकारकत्वम् । तच्च क्रतुज्ञानविधिभ्यामेव सिद्ध्यतीति । तदेतच्छरीराव्यतिरिक्तकर्तृभोक्तृरूपात्मकप्रतीति प्रत्युच्यते सत्यकामः सत्यसङ्कल्प इत्यादि वाक्यबोधितैश्वर्यगुणस्य त्वात्मनो ज्ञानं स्वयमेवाष्टगुणैश्वर्यफलत्वात् पुरुषार्थस्तथा कर्तुर्भोक्तुश्चात्मनो ज्ञानं मोक्षफलत्वादिति साधु शब्दाधिकरणे वक्ष्यते ।

सर्वेषां भावनान्तर्गतिरिति । अभिमतस्वर्गादिभावनान्तर्गतिः दृष्टेनैवावबोधरूपेण सर्वेषां वेदावयवानामध्ययनविधिविनियोगवशेनोपपन्ना । तेनार्थवादानामपि स्वाध्यायान्तर्गतत्वात् वर्णनीयेति — लिङादियुक्तेषु वाक्येषु द्वे भावने इति । नन्वध्ययनेन वाक्यार्थज्ञानं, तेनानुष्ठानं, तेन फलमिति फलभावनाङ्गज्ञानोपयोगित्वमध्ययनस्योक्त्वा व्यापारविभागोऽयं दर्शि[र्शयि]तुमुपक्रान्तस्तत् कथम् भावनान्तरोपयोगो वर्ण्यते । उच्यते — नानेन फलभावनानुपयोग उच्यते तथा सत्यपुरुषार्थत्वप्रसङ्गात् । किन्तूपयोगविशेषः, अन्येषामंशत्रयप्रतिपादनेन तदुपयोगो नैवमेषां विधित्वानुष्ठापनेन तत्र लिङादिकार्येऽनुष्ठानप्रत्ययेऽर्थवादानां प्रवृत्तिसामर्थ्यापादनोपकारेण निवेशो वक्तव्य इति । लिङादिक्रियां शब्दभावनाख्यामंशत्रयोपेतामध्ययनविधिविनियोगप्रसूतां दर्शयति । स्वाध्यायविधिनाक्षरग्रहणादिपरम्परयार्थावबोधे विनियुञ्जानेनाक्षराण्येवावबोधे विनियुक्तानि भवन्ति । विधायकाक्षराणि च प्रवृत्तिसमर्थं बोधं जनयन्तीति तेषां तदेव प्रवर्तनं सम्पद्यते । तत्र लिङादीनाम् कर्तृत्वकरणत्वयोः सम्भवतोः शब्दोपक्रमस्य प्रवृत्तिपर्यन्तस्य व्यापारस्यार्थवादान्वयाय विवक्षितत्वात् । असति पारतन्त्र्ये कर्तृत्वं संभवति । सति च कर्तृत्वे स एवाध्ययनविधिना

र्थवादा नापेक्ष्यन्ते । शब्दात्मिकया तु ग्रहीष्यन्ते । सा हि एवं प्रवर्तते । स्वाध्यायमध्ययनविधिनेतरे सर्वे विधायकाः स्वाध्यायपदोपात्तश्चात्मा नियुज्यते भावयेदिति । तत्र लिङादीनां प्रयोजककर्तृत्वं पुरुषः प्रयोज्यस्तेन किमित्य-विनियोगो नियोगतामापद्यते । तदेतद् दर्शयति—सा ह्येवम् प्रवर्तत इति । स्वाध्यायविधिप्रसूतत्वप्रतिपादनस्य च प्रयोजनम् इतिकर्तव्यतांशे स्तुतावर्थवादानां विनियोगः । यदा हि लिङादिव्यापारं शब्दभावना-मध्ययनविधिर्विदधदंशत्रयोपेतां विदधाति तदा प्राशस्त्यज्ञानं कर्तव्यत्वेन ज्ञातं साधनमपेक्षते । तत्रार्थवादाध्ययनविधिस्वशक्त्यानुसारेणार्थवादान् विनियुङ्क्ते । असति तु शब्दभावनाविधौ प्राशस्त्यज्ञानं कुर्तव्यम् । तदा हि अर्थभावनाविषयः केवलो विधिस्तदंशानां कर्तव्यतां ज्ञापयति न प्राशस्त्यज्ञानस्य । न ह्यसौ स्वव्यापारं विदधाति । अपेक्ष्यते तु स्वव्यापार-निर्वाहाय प्राशस्त्यज्ञानम् । येन शब्दान्तरोपनीतेन संबद्धयेत ।

न च तदपेक्षितसाधनत्वेनार्थवादाध्ययनविधिस्तान् विनियुङ्क्त इति वक्तव्यम् । यतः प्रवर्तनीयसम्पाद्यस्य साधनं विधीयते न प्रमाणसम्पा-द्यस्य । न चाविनियुक्तानामर्थवादानां स्वरसतः प्राशस्त्यप्रतिपादनमस्ती-त्युक्तमिति ।

स्वाध्यायपदोपात्तश्चात्मेति । ननु स्वाश्रयता स्यात् स्वाध्यायविधि-व्यापारादेव स्वाध्यायविधिव्यापार इति । अपि चेतरेतराश्रयतापि प्रसज्येत । तदध्ययने प्रवृत्तस्य तदर्थबोधोऽवबुद्धार्थस्य च प्रवृत्तिरिति । अनवस्था च नियुक्तेन हि तेन पुनरात्मनि युज्यत इति । यावन्नियोग-मपुनर्नियोगात् प्रवर्तमानः किं कुर्यात् ।

उच्यते, न तावत् स्वाश्रयत्वमविनियुक्ता अपि विधयः कुर्वन्त्येव स्वव्यापारम् । न च विनियोगोऽनर्थकः, नियमार्थत्वात् । तेनाध्ययनविधिः स्वविनियोजकानपेक्ष एव स्वाध्यायमर्थावबोधे विनियुङ्क्ते । अबुद्धि-पूर्वत्वाच्चाध्ययनस्य नेतरेतराश्रयताप्रसंगः । अध्ययनविधेरेवासावर्थ-मनुतिष्ठति केवलम्, नत्वधीतज्ञातार्थस्य अध्ययनविध्यर्थानुष्ठाने च साम-र्थ्यादध्ययनविध्यन्तरानुपयोगित्वम् । अधीते तु वेदेऽनुष्ठीयमानार्थस्या-ध्ययनविधेरितरेषां चार्थावबोधे विनियोगं प्रतिपद्यते । अनुष्ठीयमानां-र्थत्वादेव च न पुनस्तस्य प्रवृत्तिरिति नानवस्था ।

पेक्षायां पुरुषार्थप्रवर्तनमिति[1] संबध्यते । अथ तु योग्यतयैव लिङादिविषया क्रियोच्यते प्रवर्तयेदिति । ततः किमित्यपेक्षिते पुरुषमित्येव संबध्यते । यद्यपि

परोधीतो वाध्ययनविधायकत्वमात्रेणावगतार्थः प्रवर्तयतीति नेतरेतराश्रयत्वम् । अध्ययनं तु तस्योत्तरकालभावि तदधीनव्यापारोपयोगितयेति । स्वाध्यायाध्ययनविधिनादृष्टार्थत्वाद् यच्छक्यते तत् स्वाध्यायगतैः शब्दैः कर्तव्यं पुरुषस्येति विहिते लिङादीनां शक्त्यनुसारेण या क्रियावगम्यते सा काष्ठानि पचन्तीत्यादिवल्लिङादिकर्तृत्वविवक्षया, विनियोज्यत्वे च नियोज्यत्वविवक्षयैवं कथ्यत इत्युक्तम् । ततश्च यच्छक्यत इति विध्यनुज्ञानाद् वृद्धव्यवहारकालावगतशक्त्यनुसारेणांशत्रयनिरूपणमापद्यते । लिङादयश्च प्रवर्तयन्ति पुरुषं प्रति शक्नुवन्ति पुरुषमिति प्रवर्त्यत्वेन वस्तुतः पुरुषः प्रयोज्यः । तत्रांशत्रयसंबन्धं दर्शयद्भिः यदि यच्छक्यते तद् भावयेदित्येवम् सामान्यरूपेण लिङर्थव्यापारः उपादीयते । तदा भवनस्य प्रयोज्यव्यापारस्योपात्तत्वाद् भवितुरन्वयो दर्शयितव्यः । पुरुषश्च स्वरूपेण भूत इति तद्विशिष्टा प्रवृत्तिर्निर्दिश्यते — पुरुषार्थप्रवर्त्तनमिति । अथवा यथा भवनसमर्थस्य भावनात्वाद् भवनमव्यभिचारित्वेन प्राप्तमित्यनुपात्तमपि लिङा भावनाख्यांशनिविष्टमपि भावनाविशेषणत्वेनोपादाय भाव्यस्यापेक्षासंबन्धश्च निर्दिश्यते — भावयेत् किं पटमिति[1] । एवं लिङादिव्यापाराव्यभिचारेण प्रवृत्तेर्लाभात्, तां भावनाविशेषणत्वेनोपादाय प्रवर्त्याकाङ्क्षासंबन्धश्च दर्शयितव्यः । प्रवर्तयेत् — किं पुरुषमिति । तदिदमुक्तम् तत्र लिङादीनामित्यादिना पुरुषमित्यन्तेन सम्प्रत्यतीतेन ग्रन्थेन विवक्षितमर्थं योऽत्यन्तमार्जवादप्रतिपाद्य चोदयति कथमचेतनानां लिङादीनां विधेयभावनाविषयं नियोज्यचेतनासम्भवि कर्तृत्वमिति तत् प्रतिबोधनायाह — यद्यपि च[चा]चेतनत्वादिति । यथा नित्यं शब्दस्यार्थप्रतीतिमुद्दिश्य पुरुषेणोच्चारणेन विनियुक्तस्य व्यापारात् करणत्वम्, एवं सति पुरुषगतं कर्तृत्वम् तत्रोपचर्यते । तथा नियोज्यत्वचेतनत्वे अपि तेनाधीतैर्लिङादिभिरात्मानं प्रवर्तयेदित्यस्माद् विधेयस्य

---

१. पुरुषप्रवर्तनमिति मुद्रितपाठः ।

१. नैतदुपलभ्यते प्रतीकं मूले ।

चाचेतनत्वाल्लिङादिष्वेवंविधं प्रयोजकत्वं न संभवति तथापि पुरुषस्य प्रयोज्यस्य प्रयोजकत्वानुपपत्तेस्तद्गतचैतन्यद्वारेण विधायकानां प्रयोजकता। यदि चैवं न कल्प्येत नैवैषां विधायकत्वव्यपदेशो भवेत्। अथ केनेत्यपेक्षिते पूर्वसंबन्धानुभवापेक्षेण विधिविज्ञानेनेति संबध्यते। कथमिति प्राशस्त्यज्ञानानुगृहीतेनेति।

लिङादीनामात्मानं प्रति प्रवर्तयितृत्वं पुरुषस्य प्रतीतिसिद्धम्। तत्तु पुरुषमपोद्धृत्य प्रतीतिकृतं चोपकारं प्रतीकत्वेनोपचर्य प्रतीतिसौकर्यायास्माभिरेवमुक्तम्। लिङादयो नियुक्ताः प्रवर्तयन्तीति — पुरुषस्य प्रयोज्यस्येति। प्रतीतिक्लेशं दर्शयति पुरुषस्य तावत् प्रवर्त्यत्वेन प्रयोज्यत्वं नान्यस्य। तत्र यदि लिङादीनि पुरुषनियोज्यत्वात् करणीक्रियन्ते तदा प्रयोज्यस्यैव पुरुषस्य प्रयोजकत्वम् अनुपपन्नमिव प्रतिपाद्यं स्यात्। न चेतनं संप्रति प्रयोजनं लिङादिव्यापारानुग्राहकत्वं ह्यर्थवादानां लिङादीनां विध्यादीनां प्रवृत्तिं दर्शयता दर्शयितुं शक्यम्। अतस्तेषां कर्तृत्वनियोज्यत्वचैतन्यान्युपचर्यन्त इति। अस्ति चेयं विवक्षा, नेदानीं विवक्ष्यते।

तथा हि कर्तृप्रत्ययान्तेन शब्देनामी निर्दिश्यन्ते — विधायकानामिति। वैधे च व्यापारे चेतनस्य नियुक्तस्य कर्तृत्वात् स्वाध्यायगतानां लिङादीनां कर्तृत्वानुपपत्तिरित्याह — यदि चैवं न कल्प्येत इति। एवं च व्याचक्षते। यद्यपि लिङादिष्वेवंविधं नियोज्यतया प्रयोजकत्वम् न सम्भवति तथापि पुरुषस्य प्रयोज्यस्य संबन्धितया यदेषां प्रयोजकत्वं तस्य विध्यधीनप्रवृत्तित्वमन्तरेणानुपपत्तेः। अर्थपरत्वे प्रमाणाभावात् पुरुषगतचैतन्यद्वारेण विध्यधीनप्रवृत्तिरेषामेव बोध्यते। यदि चैवं विध्यधीनप्रवृत्तित्वमेषां न कल्प्यते। तदैषां विधायकत्वं न स्यात्। तत एवार्थविवक्षायां प्रमाणाभावादिति। एवं साध्यांशं परिशोध्य कारणांशं शक्त्यनुसारेणाह — अथ केनेत्यपेक्षित इति। विधिनिरूपणं चात्रानुपयोगीत्युपरम्यते। सर्वथा विधिज्ञानं कुर्वंच्छब्दः प्रवर्तयतीति तज्ज्ञानस्य करणत्वं तत्र संबन्धानुभवस्योत्पत्त्युपयोगित्वात् कार्यसिद्धावनुग्राहकापेक्षानवगतैव। तेनेतिकर्तव्यताकाङ्क्षामाह — कथमिति। शक्त्यनुसारेणैवेतिकर्तव्यतामाह — प्राशस्त्येति। कुत एतदिति। लिङादि-

कुत एतत्। बुद्धिपूर्वकारिणो हि पुरुषा यावत्प्रशस्तोऽयमिति नावबुध्यन्ते तावन्न प्रवर्तन्ते। तत्र विधिविभक्तिरवसीदति तां प्राशस्त्यज्ञानमुत्तभ्नाति। तच्च पुरुषार्थात्मके फलांशे सर्वस्य स्वयमेवानुष्ठानं भवतीति प्रसिद्धत्वान्न वेदादुत्पद्यमानमपेक्ष्यते। सप्रधनेतिकर्तव्यतयोस्त्वप्रवृत्तपुरुषनियोगाच्छास्त्रमेव प्राशस्त्यप्रतिपादनायाकाङ्क्ष्यते। तत्पुनः केन क्रियेतेति साधनापेक्षायां यदि वा फलपदेन निवर्त्येत प्रशस्तोऽयं भूतिफलत्वात्। अथ वा विधिनैव सर्वदोषाशङ्काविनिर्मुक्तवेदविहितत्वादिति। अथ वा विशिष्टद्रव्यदेवतेतिकर्तव्यतायुक्तत्वादिति। तत्र फलपदादीनामर्थान्तरोपयोगात्पुनरन्यत्राप्युपयोगो न युज्यते। विध्युत्तरकाला चेयमाकाङ्क्षा पूर्वं च फलपदादिनिवेशः। तस्मादपि न तैर्निवर्त्यते। लक्षणा चैतेभ्यः कल्प्यते। न च श्रौतार्थसंभवे सा युक्ता। युगपच्चोभयवृत्तिविरोधात्। प्राशस्त्यपरत्वे फलादीनि न स्युः। न ह्यन्यशास्त्रे सत्युपायमात्रत्वेनोपात्तानामेकान्तेन पारमार्थिकत्वमिति वक्ष्यते। अत एव चार्थादिगम्यमानमन्यपरत्वाच्छब्दानां न प्राशस्त्यं प्रयोजनं भवति। न हि यद्यत्प्रतीयते तत्तच्छास्त्रफलमव-

प्रामाण्यादेवोपजातप्रवृत्त्यवबोधाः प्रवर्तिष्यन्त इति। तत्राह — बुद्धिपूर्वकारिणो हीति। यत एवं प्रमाणं लिङादयः, अत एव यावती प्रतीतिः प्रवृत्त्युपयोगिनी तावती कर्तव्या। विध्युद्देशेन चेदम्। अनेनेत्थंभावयेदित्यभिमतसाधनोपदेशः कृतः। बुद्धिमन्तश्चाभिमते साधने प्रवर्तन्त इति स्थितिः। तेन यावत् साधनं नाभिमन्यन्ते तावन्न प्रवर्तन्ते तत्रेत्यभिमतिरुत्पाद्या।

ननु फलवत् तत्साधनमभिप्रेतमेव पश्वादि भवतीति साधनोपदेशादेव तत्सिद्धिः। एवमपि प्राशस्त्यज्ञानस्य प्रवृत्त्युपयोगित्वमङ्गीकृतम्, केवलं तदुपायविवादः। तत्र चानन्तरं वक्ष्यत इति। किं विषयं पुनः प्राशस्त्यज्ञानमपेक्षितमिति विविनक्ति — तत्र[च्च]पुरुषार्थात्मक इति। विधिज्ञानेन प्रवर्त्तयितव्ये प्राशस्त्यज्ञानापेक्षा। विधिश्च साधनेतिकर्त्तव्ययोः पुरुषं प्रवर्त्तयतीति न स्वर्गादौ फले। यत्र च शब्दाः प्रवर्त्तयन्ति तद्गतमेव प्राशस्त्यज्ञानं शब्दान्तरेण क्रियमाणमपेक्ष्यत इति तदुपायशब्दापेक्षा सेयमुक्ता। तत्पुनः केन क्रियेतेति। विध्युत्तरकाला चेयम्। विधिः फलादिपूर्णां भावनामनुष्ठानयोग्यामासाद्यानुष्ठापनाय प्रवर्त्तमानः प्राशस्त्यमपेक्षते। ततश्च यदा प्राशस्त्यापेक्षा तदा फलपदादनतिचिर-

सीयते । यथा पूर्वो धावतीत्युक्ते यद्यप्यपरो गम्यते तथापि न कार्येण युज्यते तद्वत्प्ररोचना गम्यमानापि न कार्यान्तरोपयुक्तशास्त्रार्थत्वेनावतिष्ठते । अन्यथानुपपत्त्या चेयं तेभ्यः कल्प्यते । सर्वप्रमाणप्रत्यस्तमये चान्यथानुपपत्ति-र्भवति । प्रमाणाभावश्च यः सर्वप्रकारं प्रयतमानस्य स प्रमाणम् । तद्यदि केनचिदुपदेशेनातिदेशेन वा न लप्स्यामहे ततो दर्विहोमन्यायेन विध्युद्देशस्यैव द्वे शक्ती कल्पयिष्यामः । अथ तु केनचिद् दूरस्थेनापि सेत्स्यति ततस्तदनुसारस्ता-वत्कर्तव्य इत्येवं साकाङ्क्षो विधिरास्ते । तथा वायुर्वै क्षेपिष्ठा देवतेत्येवमाद्यपि-स्वाध्यायाध्ययनविधिना पुरुषार्थतयोपनीतं यच्छक्यते तत्कुर्यादित्युपबन्धाच्च सहसैव तेनासंबध्यमानमपुरुषार्थत्वेन च पूर्ववदक्षरादिष्वपर्यवस्यद् भूतान्वा-ख्यानवाक्यार्थं यावद् भूतम् । तत्रापि तु साकाङ्क्षमेवेति यस्तैन लक्ष्यमाणः साधनानुरूपसाध्योत्पत्तिद्वारेण क्षिप्रदेवतासाध्यं कर्म क्षिप्रमेव फलं दास्यतीति प्राशस्त्यरूपोऽर्थः सोऽनन्तरप्रवृत्तविध्युद्देशाकाङ्क्षितत्वात्पुरुषार्थे द्वारतां शक्नोति प्रतिपत्तुमिति परिगृह्यते । सोऽयं नष्टाश्वदग्धरथवत्संप्रयोगः । एवं च न प्ररोचनान्यकृता कर्माङ्गम् । न चार्थवादपदैः प्रयोजनान्तरं साधनीयमित्या-

व्यापृतानीति न तैस्तत्क्रियत इति— न कार्येण युज्यत इति । न वाक्यार्थं पूरयतीत्यर्थः । यतः शब्देनैव शब्दस्य पूरणम् । न चान्यपरादवगतस्य शाब्दत्वमिति— अतिदेशेन वेति । वाचनिकस्यातिदेशस्याशङ्का । यथा क्वचिद्वचनं भवति । अस्य पूर्वो बन्धुरिति । अस्य विधेः पूर्वस्य विधेर्यो बन्धुरर्थवादः स एवेति । दर्विहोमन्यायेनेति । यथा दर्विहोमाना-मुपदेशातिदेशाभ्यामलाभादितिकर्तव्यतायाः साधनत्वमनुपपाद्यमानं साधन-प्रतीतिदार्ढ्यात् । एवमङ्गीकृतमितिकर्तव्यतया विनापि उपकार एषां स्वमहिमप्रतिष्ठित इति । तथात्र शब्दान्तरोपनेयमपि प्राशस्त्यं विध्युद्देश एवार्थात् बोधयतीति कल्पयिष्याम इति । स्वाध्यायाध्ययन-विधिनेति । यच्छक्यते तत्कुर्यादित्युपबन्धात् तेन सन्निहितेन विधिना सहसैवासम्बन्धः स्वाध्यायविधिवशेनाक्षरादिष्वपर्यवसानमिति । यदि विध्युद्देशस्य सम्भवतो द्वे शक्ती व्यर्थं तर्हि अर्थवादाध्ययनम् । अत आह — एवञ्च[न]प्ररोचनेति । नियमः प्रयोजनमित्यर्थः । न चार्थवादै-

म्नानसामर्थ्यादुभयोर्नियमः । एतेन प्रतिषेधापेक्षितद्वेषसिद्ध्यर्थं निन्दापदसङ्गति-र्व्याख्याता । तत्रापि हि न द्वेषादृते विद्वान्निवर्त्तते । द्वेषश्चाप्रशस्तप्रत्यया-धीनोत्पत्तिः । न चाप्रशस्तज्ञानं नकारादिभिः पदैः प्रशस्ताप्रशस्तानभि-धानेन निषेधतत्फलेतिकर्त्तव्यतामात्रपर्यवसितैः शक्यमवलम्बितुमित्यनन्यप्रयोजन-निन्दावाक्यगम्यमेव भवति । अतश्चैकवाक्यत्वसिद्धिः । नित्यञ्च विधिप्रति-षेधयोः क्रमेण वाक्यशेषाः स्तुतिनिन्दानिर्णयहेतवो भवन्ति । न हि स्तुतिनिन्दे नाम व्यवस्थिते, निन्दारूपासु स्तुतिषु स्तुतिरूपास्वपि च निन्दासु विपर्यय-दर्शनात् । यथा वक्ष्यति—न हि निन्दा निन्द्यं निन्दितुं प्रवर्त्तते, अपि तु विधेयं स्तोतुमिति । तथा त्र्यम्बकवाक्येषु[1] "यदभिघारयेत्तद्रुद्रायास्ये पशून्निदध्यात्" इति स्तुतमप्यभिघारणं नाश्रयिष्यते । निन्दितमपि चान्ते विधिदर्शनादभि-

रिति । प्रसङ्गाल्लिङादीनां प्रयोजनमाह । एवमाशङ्क्य अर्थवादेभ्योऽपि-क्वचिद्विधिः, क्वचित्फलावबोधः, क्वचित्संदिग्धनिर्णयः सिध्यतीति व्यर्थं तेषामाम्नानमित्यन्यत्रापीति । उभयोर्नियम इति । प्ररोचनार्थ-वादयोरर्थवादादेव प्ररोचना नान्यतः । प्ररोचनैवार्थवादैः कर्त्तव्या नान्यदिति ।

ननु विधिसन्निधौ निन्दार्थवादनिषेधसन्निधौ च स्तुत्यर्थवादा दृश्यन्ते । तेषामनपेक्षितत्वात् कथमर्थवत्त्वमिति । अत्राह — नित्यश्च विधिप्रतिषेधयोरिति । न स्तुतिं स्वसामर्थ्यस्य तत्राव्यवस्थितत्वात् अर्थवादाः कुर्वन्ति । येन स्तुतौ निर्णीतायाः प्रतिषेधेनासङ्गतिः स्यात् । किन्तु विधिप्रक्रमवशेन तेभ्यः स्तुतिनिर्णयः । एवं निषेधप्रक्रमेण निन्दानिर्णयः । कुतः पुनः स्वसामर्थ्यान्न सम्भवतीत्याह — नहि स्तुतिनिन्दे नामेति । तथा त्र्यम्बकेति । अभिघार्याः त्र्यम्बकाः नाभिघार्या इति मीमां-सन्ते यदभिघारयेद् रुद्रायास्ये पशूनभिदध्यात्, यन्नाभिघारयेत् रुद्रायास्ये पशून् नाभिदध्यात् । अभिघारयेयन्न हि अनभिघृतं हविरस्तीति । अत्र चेदृशमिदं महागुणं, येन सत्यपि दोषे कर्त्तव्याकर्त्तव्यमिति दोषसङ्कीर्त्तनं

---

१. तथा त्रैयम्बकवाक्येषु इति मुद्रितपाठः ।

धारणमेव प्रशस्तं भविष्यति । सन्दिग्धस्तुतिनिन्दानामपि च प्रक्रमादेव निर्णयः । यथा वक्ष्यति—न वयं निन्दितानिन्दितान् वासुरान् विद्मः । कदाचिद्धि यस्मादसुरानप्येषा वशीकृत्यानयति क्रिया, तस्मान्नूनं प्रशस्तेति स्तुतिः स्यात् ।

अथ वा विध्वंसकासुरागमननिमित्तत्वादशोभनेति निन्दा । तत्रान्ते सामविधानात् तत्प्रशंसार्थमृचां निन्देति गम्यते । सर्वत्र च किञ्चित्पदं स्तौति निन्दति च, इतराणि त्वेकवाक्यतया तादर्थ्यं प्रतिपद्यन्ते । यत्रापि तादृशं पदं न स्यात्तत्रापि लक्षणा लक्षितलक्षणा वान्यथानुपपत्तेराश्रयणीया । विधिप्रतिषेधयोश्च स्तुतिनिन्दाभ्यामविनाभावादन्यतरदर्शनेनेतरदनुमाय वाक्यं

गुणातिशयप्रदर्शनायेति । अयमेव सन्दिग्धस्तुतिनिन्दात्मनामपि चेति । यद् ऋचा स्तुवते तदसुरा अन्ववायन्निति विध्यर्थमिदमृचामिति । पूर्वपक्षस्थो *भाष्यकारो* निन्दात्वमस्याशङ्क्य वक्ष्यति — न वयं निन्दितानिन्दितान् वा असुरान् विद्मो यस्मात्तु ऋचा स्तुवत इत्युक्त्वोच्यते । तस्मात् तदपेक्षिता स्तुतिरिति । तत्रानेन निन्दितानिन्दितावेदनेन स्तुतिनिन्दयोः सम्भव उक्तः । तद्दर्शयति— कदाचिद्धीति । एवं स्वरूपेण सन्दिग्धे यद्विध्येकवाक्यतावशेनात्र स्थास्यति तद्दर्शयति — तत्रान्ते सामविधानादिति । साम्ना स्तुवीतेति प्रत्यक्षस्यैकवाक्यतया विधेर्भावात् तदर्थवादतयोपपत्तौ अस्यानेकादृष्टकल्पनानुबन्धिविधित्वं कल्पयिष्याम इति ।

नन्वेकयैव स्तुत्या एकस्य विधेरनुग्रहात् किमनेकपदसाध्याभिः स्तुतिभिरित्याशङ्क्याह — सर्वत्र च किञ्चित्पदमिति । हन्तेतरेषां स्तुत्यनुपयोगिनामानर्थक्यं तर्हीत्याह — इतराणीति । यदीतरेषां स्तावकपदानुग्रहेणार्थवत्ता, तस्याभावे तर्हि आनर्थक्यमित्याशङ्क्याह — यत्रापि तादृशमिति । वक्ष्यते 'तदापो वै शान्ताः' इत्यत्र यथा विधेयता स्तुतिर्लक्षणयाश्रयिष्यत इति । यदि विधिप्रतिषेधयोरर्थवादापेक्षित्वं तदभावे तर्हि साकाङ्क्षत्वादप्रामाण्यं स्यात् । अत आह — विधिप्रतिषेधयोश्चेति । विधिप्रतिषेधयोरन्यतरदर्शनेनेतरदनुमायेति । वेदमूलत्वेन धर्मे स्मृतीनां प्रामाण्यमिष्यते । तेन तदवयवानामपि विध्यर्थवादमन्त्राणां

पूरयितव्यम्। एवं भारतादिवाक्यानि व्याख्येयानि । तेषामपि हि श्रावयेच्चतुरो वर्णानित्येवमादि विध्यनुसारेण पुरुषार्थत्वान्वेषणादक्षरादि व्यतिक्रम्य धर्मार्थकाममोक्षाधर्मानर्थदुःखसंसारसाध्यसाधनप्रतिपत्तिरूपादानपरित्यागाङ्गभूता फलम्। तत्रापि तु दानराजमोक्षधर्मादिषु केचित्साक्षाद्विधयः। केचित्पुनः परकृतिपुराकल्परूपेणार्थवादाः । सर्वोपाख्यानेषु च तात्पर्ये सति

धर्मप्रमितावुपयोगो वक्तव्यः । तत्र वैदिकार्थवादतुल्यन्यायतया स्मृतिगतानामुक्तमेव *सूत्रभाष्यकाराभ्या*मुपयोगं विवृण्वन्नाह — एवं भारतादिवाक्यान्यपीति । अर्थवादबाहुल्यात् इतिहासपुराणयोर्भारतोपादानम् ।

ननु स्वाध्यायविधिबोधितार्थवत्तावशेन वैदिकार्थवादानां स्तुतिपर्यन्तं नयनम् । अत्र तु कथमित्याशङ्क्य यथा भारतादेः सकलस्य प्रयोजनान्वयो यच्च तत्प्रयोजनं तत्रैव विवृतं तद्दर्शयति — तेषामपीति। भारतोपक्रमे हि श्रावयेच्चतुरो वर्णानित्युक्त्वा—

धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित् ।। इति ।

[ महाभारतम् १।५६।३३ ]

धर्मादिषु वैवक्ष्योपस्थितेषु चशब्दगृहीतेषु चाधर्मादिषु यत्प्रतिपत्तव्यं पुरुषेण तदिह,प्रतिपादितमित्युक्तम्। प्रतिपत्तव्यं चोपादानाय धर्मादीनामितरेषां हानाय च साधनं तेनैषां साधनप्रतिपत्तिः सकलस्य भारतस्य फलम्। तदेतदुक्तम् — धर्मार्थकाम इति । धर्मादिभिः साध्यस्य विशेषणसमासः। ततः साधनेन सह षष्ठीसमासः। धर्मादि रूपस्य साध्यस्य साधनप्रतीतिरित्यर्थः।

अथ वा धर्मादीनामष्टानां यथासम्भवं साध्यसाधनभावः धर्मादर्थः अर्थतः कामः तस्य प्रतीतिरिति। सम्प्रति यत्र यथा धर्माद्युपयोगो, यथा चोपाख्यानगतः प्रामाणान्तरविरोधो दोषो, यः यदर्थं वा विवक्षितोपाख्यानविस्तरप्रणयनम्, यच्च यत्र मूलं, यथा चानुष्ठानोपदेशानङ्गानामपि प्रयोजनवत्ता, तत्सर्वं क्रमेण दर्शयति — तत्रापि तु दानराजमोक्षधर्मादिष्विति। एवमर्थवादानां प्रामाण्यमुपपाद्य सम्प्रति *भाष्यं* व्याख्या-

श्रावयेदिति विधेरानर्थक्यात् कथञ्चिद् गम्यमानस्तुतिर्निन्दापरिग्रहः । तत्परत्वाच्च नातीवोपाख्यानेषु तत्त्वाभिनिवेशः कार्यः । वेदोपस्थानाभ्यासेन हि वाल्मीकिद्वैपायनप्रभृतिभिस्तथैव स्ववाक्यानि प्रणीतानि । प्रतिपाद्यानाञ्च विचित्रबुद्धित्वाद् युक्तमेवैतत् । इह केचिद्विधिमात्रेण प्रतिपद्यन्ते । अपरे सार्थवादेनापरेऽल्पेनार्थवादेनापरे महता । सर्वेषाञ्च चित्तं ग्रहीतव्यमित्येवमारम्भः । तत्र तु केचिद्विधिप्रतिषेधाः श्रुतिमूलाः, केचिदर्थसुखादिषु लोकमूलास्तथार्थवादाः । केचिद्वैदिका एव, केचिल्लौकिका एव, केचित्तु स्वयमेव काव्यन्यायेन रचिताः । सर्वे च स्तुत्यर्थेन प्रमाणम् । ये तु वाक्यशेषत्वं न प्रतिपद्यन्ते तेऽपि केचित्स्वयमेव श्रूयमाणगन्धमादनादिवर्णकप्रभृतयः प्रीतिं जनयन्ति । ये तु युद्धवर्णकास्ते सर्वेषां शूराणां भीरूणां चोत्साहकराः पार्थिवानामुपयुज्यन्ते । यत्र तु न किञ्चिद् दृष्टमुपलभ्यते तत्र विशिष्टदेवतादिस्तुतिद्वारमदृष्टं कल्पनीयमित्येषा दिक् ।

विध्युद्देशेनैकवाक्यत्वादिति । केचिदाहुः किमर्था स्तुतिरिति चेत्कथं रोचेत नोऽनुष्ठीयेतेत्येवं स्तुतिनिन्दाभ्यां प्रवृत्तिनिवृत्तिप्रतिपादनं लिङादिभिश्चाभिधानम् । अतस्तुल्यार्थत्वम् । न च तुल्यार्थानां समुच्चयः । तत्र ये तावदर्थवादरहिता लिङादयस्तद्रहिताश्चार्थवादास्तेषां यथाविषयं व्यवस्थितं निवर्त्तकत्वं प्रवर्त्तकत्वमविरुद्धम् । यत्र तु द्वयसन्निपातस्तत्रान्यतरेण कृतार्थत्वादवश्यावहेयेऽन्यतरस्मिन्भूयसामनुग्रहो युक्तः । त्यजेदेकं कुलस्यार्थ इतिवद्विधिप्रत्ययः परित्यज्यते । केवलप्रकृतिप्रयोगाभावात्तदनुग्रहार्थंप्ररोचनालब्धविधित्वानुवादेन

स्यन् अनुभाषते — विध्युद्देशेनैकवाक्यत्वादिति । अस्यान्यैः व्याख्यातृभिः व्यामोहितत्वात् तेषां व्याख्यानं निराकरणायोपन्यस्यति — केचिदाहुरिति । यस्माद् उपरिष्टाद् *भाष्यकारः* किमर्था स्तुतिरिति प्रश्नपूर्वकं कथं रोचेत ततोऽनुष्ठीयेतेति साध्यमेवानुष्ठानम् । अर्थवादानां प्रयोजनमाह न तदनुग्रहम्— अतः तुल्यार्थत्वमभिमतम् । न च तुल्यार्थयोः सम्भूयकारित्वेन प्रामाण्यम् । एकसाधितेऽपरस्य वैफल्यादतो विधौ सत्यर्थवादप्रामाण्यसम्भवात् विधिपरित्यागेनेदमर्थवादप्रामाण्यप्रतिपादनं *भाष्यकृतः ।* तन्न । येन विशेषेण विधायकस्त्यज्यते । नार्थवाद उक्तो भूयसामनुग्रह इति ।

यद्यविवक्षितार्थः प्रत्ययः किमर्थः प्रयुज्यत इति । अत्रेदं प्रतिपत्तव्यमित्याह — केवलप्रकृतीति ।

प्रवर्त्तते। यथा 'सत्रादुदवसाय पृष्ठशमनीयेन यजेरन्' इति क्त्वाप्रत्ययसिद्ध-प्रवृत्त्यनुवादकत्वं वक्ष्यते। तस्माद्वायव्यश्वेतालम्भ इत्येतावन्मात्रं विवक्षितम्। स एव च विध्युद्देशः फलाभि[1]सम्बन्धोत्तरकालं स्तूयत इत्येतद् भूतिकाम इत्येवमन्तो विध्युद्देश इत्यनेन कथ्यते। अन्यथा पुनरुद्देशग्रहणमनर्थकमेव

ननु प्रत्युक्तश्चेदवश्यं स्वार्थबोधं करोति तस्य बोधस्यासति-विध्यर्थत्वे किमालम्बनम्। अत आह — प्ररोचनालब्ध इति। दृष्टा चैवमपि प्रत्ययप्रवृत्तिरित्याह — यथा सत्रादुदवसायेति। इदं श्रूयते सत्रादुदवसाय पृष्ठशमनीयेन ज्योतिष्टोमेन सहस्रदक्षिणेन यजेरन्निति। तत्र सन्देहः, किं संहत्यैव कर्त्तव्यमुत एकैकश्येनेति। तत्र यजेरन्नित्युपादेयकर्त्तृसंख्या-श्रवणात् विवक्षितमिति संहत्य प्रयुञ्जीरन्। एतेन राजपुरोहितौ सायुज्य-कामौ यजेयातामितिवत्। तदुक्तम् — तेषान्तु वचनात् द्वियज्ञवत् सह प्रयोगः स्यादिति। ( मी० सू० १०।२।४१ )

अत्रोच्यते — युक्तं द्वियज्ञे तद्द्वित्वादेरन्यतोऽप्राप्तस्य विधीयमान-त्वात्। अत्र तु प्रकृतिप्राप्तैकत्वविरोधिबहुत्वं न विधीयते। यस्मादुदव-सायेति क्त्वान्तेन शब्देन प्रत्येकमुदवसानलक्षितानां प्रत्येकमेव प्रयोगा-न्तरगतमपि कर्त्तृत्वं प्रतिपादितम्। अतोऽपेक्षितधात्वर्थपरेण विधिना-नपेक्षितं सख्यादि न विधीयत इति। प्रचयशिष्टसंख्यानुवादोऽयं विज्ञायते, अतः प्रत्येकं प्रयुञ्जीरन्। तदुक्तम् — एकशास्त्रत्वप्रतिषेधात् प्रकृतिश्चैक-संयोगात् विध्यर्थस्यापि क्त्वान्तशाब्दप्रापितस्यानुवाद इति मन्त्रस्य दृष्टान्त-दानमिति।

एवं *भाष्याभिप्रायमुपपत्तिञ्च विधिपरित्यागमुक्त्वा *भाष्याक्षराणि* योजयति — स एव चेति। विध्युद्देशेनैकवाक्यत्वादिति भाष्ये स एव विध्युद्देश उक्त इति। ननु भूतिकाम इत्येवमन्तो विध्युद्देश इति वदन् प्रत्ययमपि गृह्णाति। अन्यथा त्वालम्भ इत्येवावक्ष्यत। तत्राह — फलाभिसम्बन्धेति। अनुपादित्सिते प्रत्यये यादृशस्यालम्भस्य प्रवृत्तियोग्यस्य प्रवृत्तिप्रयोजनया स्तुत्यान्वयः तां दर्शयितुमयं साध्यांशमुपाददानो नान्तरीयकत्वेन प्रत्यय-मुपात्तवानिति। किमित्येवं व्याख्यायते। ननु तदुपादानात् उपादित्सयैव गम्यते। अत आह — अन्यथा पुनरिति। यदि विवक्षितार्थः प्रत्ययस्तदा

१. फलादिसम्बन्धेति मुद्रितपुस्तकपाठः।

स्यात्। सूत्रोक्तेन तु विधिनैकवाक्यत्वं न सम्भवतीत्यतिक्रम्य तद्विषयः परिगृह्यते। तथा चाह नायमभिसम्बन्ध इति। विधिविधेयसम्बन्धनिषेधेन स्तुतिस्तुत्यसम्बधं विवक्षितं वदति यतस्ततो भूतिरिति। सैव च भूतिनिमित्तस्य योजना। भिन्नाविमाविति पूर्वोक्तौ संबन्धावभिधत्ते। किमर्था स्तुतिरिति चेदिति।

---

*सूत्रकार*वद् दिधिनैकवाक्यत्वादित्येवं ब्रूयात्। उद्देशग्रहणं त्वनर्थकम्।

अस्मद्व्याख्याने तु सूत्रोक्तेन विधिना तुल्यार्थत्वादेकवाक्यतार्थवादानां न सम्भवतीति। यत्र विधिरुद्दिष्टः स एव विधिविषयो विध्युद्देशो शब्देन गृह्यते इत्युपपद्यत इत्याह — सूत्रोक्तेनेति। स्पष्ट एव विधिपरित्यागो भाष्य एवावगम्यते। तथा हि कथमेकवाक्यतेति पृष्ट्वा साकाङ्क्षत्वादित्यभिधाय भूतिकाम आलभेत। कस्मात् यतो वायुः क्षेपिष्ठेति समभिव्याहारमुपन्यस्यार्थवादानामाकाङ्क्षया ग्रहणं दर्शयन् विधिविधेयसम्बन्धं निरस्यति — नायमभिसम्बन्ध इति। यदि हि स्यात् तदा विधिनैव प्रवृत्तिसिद्धेरर्थवादापेक्षा न स्यादिति। तदेतद्दर्शयति। तथा चाह — नायमिति। अस्य च निषेधेनेदमस्मद् व्याख्यानगुणमित्याह — विधिविधेय इति। केन स्तुतिस्तुत्यसम्बन्धविवक्षोक्तेत्याह—यतस्ततो भूतिरिति। यतस्ततो भूतिरत आलभेतेति स्तुतिसम्बन्धात् प्रवृत्तिं वदति। तत्र च स्तुत्यन्वयो विवक्षितः प्रवृत्तिस्त्वनूद्यते। अत एवानादरणीयोऽप्यर्थः पूर्वस्य भाष्यावयवस्यानुभाषितः। ननु किमित्येवं नीयते, किमित्यालभेतेति प्रत्ययेनोपादाय विधिस्तुत्यन्वयप्रदर्शनमिदं न भवति। अत आह — सैव च भूतिनिमित्तस्येति। भूतिनिमित्तस्यालम्भस्येयं स्तुत्या योजना। यत आलम्भात् भूतिर्भवति, अतोऽसौ प्रशस्त इति न विधेः। या विध्युद्देशेनार्थवादानां प्रत्ययपरित्यागेन योजनोपपादिता सैवेदानी *भाष्यकारेणो*च्यत इति वदता तत्रोक्तोपपत्तिः, सर्वैवं व्याख्यायां दर्शितेति। किमिति भूतिकामेनालब्धव्यमित्ययमपि विवक्षितः सम्बन्ध इत्यत्र *भाष्यकारेणोक्तम्*। भिन्नाविमावर्थाविति। भूयस्त्वादर्थवादानां न स्तुतिस्तुत्यसम्बन्धविवक्षायां सिद्धायां यद्यपरोऽपि सम्बन्धो विवक्ष्येत तत्र वाक्यं भिद्येतेति। अत्रेमावित्यभिधानस्य विषयं दर्शयति — पूर्वोक्तौ सम्बन्धाविति। इतरः प्रश्नाभिप्रायमिति द्वितीयाभिप्राये प्रथमे त्वपूर्वं

प्रत्ययश्चेदुत्खातस्तेनाविधीयमानस्य किं स्तुत्येति । अथ वा यदनया साध्यते तत्प्रत्ययेनैव सेत्स्यतीति मनसि कृत्वा वदति । आचार्यस्तूत्खातेऽपि प्रत्ययेऽर्थवादादेव तदर्थावाप्तिमुभयसंभवे चार्थवादानुग्रहं मत्वाह कथं रोचेतेति । इतरः प्रश्नाभिप्रायं विवृणोति । प्रागेव सिद्धेः स्तुतिवचनमनर्थकमिति । नहीति ग्रन्थच्छेद । सर्वत्रावान्तरवाक्यानि महावाक्येष्वप्रमाणं महासंख्यास्विवावान्तरसंख्या भवन्ति । तान्येव तु यदा केवलानि प्रयुज्यन्ते तदा निरपेक्षत्वाद् भवन्ति प्रमाणम् । यथा पटो भवतीति । न त्र कदाचिदेतावन्मात्रेण समाप्तेर्नैराकाङ्क्ष्यदर्शनात्सर्वत्र नैराङ्काक्ष्यम् । योग्यपदान्तरानुच्चारणे[1] हि सर्ववाक्यानि पर्यवस्यन्ति । इतरथा पुनः श्रुतपदातिरेकेणापि निपुणदृशां भवत्येवापेक्षा । सा त्वनुपलब्ध्या निवर्तते । तथा च यत्रोपलप्स्यन्ते तत्रैकवाक्यतां गमिष्यन्ते । अन्यथा ह्यसौ तदुच्चारणेऽपि न स्यात् । तदिह महावाक्येन विनावान्तरवाक्यं प्रमाणं तत्सद्भावे तु नेत्येतदाह— यदा न स्तुतिस्तदानीति । नन्वेवं सतीति । यत्र महावाक्यावान्तरवाक्ययोः फलं भिद्यते यथा पटभवनरागभवने तत्रैवं युक्तमिह त्वनतिरिक्तार्थस्य सतः किमवान्तरवाक्यनिराकरणमेव महावाक्यस्य युक्तं फलम् । तदेतदाह—यस्मिन् सत्यविधायकमवान्तरवाक्यं भवति मा भूत्तन्महावाक्यमिति । सत्यं विनापि तेनेति । यो नाम वेदस्य कर्ता स्यात्स एवं पर्यनुयुज्येत लघुनोपायेन सिद्धे कि महावाक्यमाश्रयसीति । तदभावान्न पर्यनुयोगः । परिहारपथग्रामगमनवच्च श्रमातिरेकमात्रं [2]स्यान्नार्थानवाप्तिः । दृष्टं चैवंजातीयकेषु

चोद्यमिति । योग्यपदान्तरानुच्चारणे हीति । नोच्चारितानां रूपं नैराकाङ्क्ष्यं समर्थमित्याकाङ्क्षानिवृत्तिः । किन्त्वाकाङ्क्षणीयसमर्पणाभावात् — इतरथा पुनरिति । अपेक्षणीयाभावमपेक्ष्योच्चरितानां रूपेणेत्यर्थः । यद्येवं तदानुच्चारणे साकाङ्क्षमसमाप्तमप्रमाणं वाक्यं स्यात् । अत आह — सा त्वनुपलब्ध्येति । तदा ज्ञायते शब्दमेयमेतावत् । इतरस्तु वस्तुसामर्थ्यसिद्धमनुज्ञातं शब्देनेति । परिहारपथग्रामगमनवदिति । ऋजुनोचितेन मार्गेण स्थितः परिहृत्य यः पन्थास्तेन गमनवत् । अथ वा परितो ग्रामं गवादिप्रचारार्थं कर्षकैः परिहरणीया भूमिरिति स्मृतिभिरुपदिष्टम् ।

धातुःशतं परीहारो ग्रामस्य स्यात् समन्ततः । इति ॥

१. योग्यपदान्तरानुच्चारणेन इति मुद्रितपुस्तकपाठः ।
२. स्यान्नार्थावाप्तिरिति पाठः समीचीनोऽत्र प्रतिभाति ।

गौरवाश्रयणम् । यथा तमेवार्थं खमित्येतावता सिध्यन्तमाकाशप्रभृतिभिरभिलपन्ति न च जाड्यं लभन्ते तथात्र लिङादिभिरपि सिध्यन्तमर्थवादेभ्यो गृह्णत इति। शक्यते चेदमिह वक्तुं यथैवानेकोपायप्रसङ्गे मन्त्रेण स्मृतं क्रियमाणमभ्युदयकारि भवति तथान्येनापि विधिसिद्धावर्थवादप्रतिपादितविधिविहितमिति । ननु सत्स्वपि स्तुतिपदेष्विति । यत्र लघुमुपायमनुपादाय गुरूपाय आश्रीयते तत्र तथापि भवेदत्र तु पूर्वमेव लघुतर आश्रितः समर्थतरश्च । तस्माद्यथैव प्रयुक्ते खशब्दे नाकाशादयस्तदानीमेव प्रयुज्यन्ते तथात्र विधौ सति स्तुतिर्नाश्रयितव्येति । तत्रोत्तरसाकाङ्क्षत्वात् स्तुतिपदान्यनर्थकानि स्युरिति । भवन्त्विति चेत् । नोक्तेन न्यायेनार्थवत्त्वादविवक्षितार्थता युक्तेति । द्वयसंभवे हि प्रत्यक्षादेकवाक्यत्वादर्थवादानुग्रहो युक्त इति । ननु सत्स्वपीत्यनेन गतार्थत्वान्ननु निरपेक्षादित्यवक्तव्यम् । तदुच्यते, तत्रार्थवादपरित्यागायोक्तमिदानीं तु भवतु नाम स्तुतिसम्बन्धः समस्तस्य पूर्वस्यापि तु स्वरूपावयतो विधिसम्बन्धो न बाधितव्यः ।

अथास्य काचिदपि शक्तिरपह्नियते, ततः प्रतिप्रसवहेत्वभावात्सर्वत्राशक्तत्वप्रसङ्ग इति । तदभिधीयते, भवतु पूर्वस्य विधिशक्तिर्न त्वियं क्वचिद् बाधितेत्यन्यत्रापि बाध्यते । कदाचिदाविर्भूतेति सर्वत्राविर्भवति । यत्र त्वर्थान्तरस्तुत्यादि नोपादीयते, तत्राविर्भूता शक्तिः कार्यमारभते । यत्र त्वपवाद-

स पन्था ग्रामवेष्टनत्वात् वक्रः सम्पद्यते । तेन ग्रामान्तरगमनवदिति । द्वयसम्भवे हीति । योऽसौ विध्युद्देशः स शक्नोति निरपेक्षो विधातुम् । शक्नोति च स्तुतिपदानां वाक्यशेषीभवितुं प्रत्यक्षश्च वाक्यशेषभाव इत्यस्य *भाष्यस्य* व्याख्यानमिति । अत्र *भाष्यम्* — ननु निरपेक्षादपि विधिमवगमिष्याम इति । तस्य चैतत् प्रतिपाद्यं प्रतीयते यस्मादन्यत्र केवलाधीतात् विधायकात् विधिः प्रतीयते तस्मादन्यत्र सत्स्वपि स्तुतिपदेषु स एवावधारितशक्तिः विधास्यतीति । तच्चैतत् ।

ननु सत्स्वपि स्तुतिपदेषु पूर्वस्य विधिरभिप्रेतः स्यादित्यनेन गतार्थमित्याह — ननु सत्स्वपीत्यनेनेति । समाधत्ते — तत्रार्थवादपरित्यागायेति । किन्त्वर्थवादैः समस्तस्य समुच्चरितस्य भवतु स्तुतिसम्बन्ध इत्यङ्गीकृत्य यत्त्वेकविधायकस्याविधायकत्वमुच्यते, तदनुपपत्तिमदित्युच्यते । समस्तस्य

भूतशक्त्यन्तराभिव्यक्तिस्तत्र वाक्यभेदप्रसङ्गात् पूर्वा तिरोधीयते । प्रश्नोत्तरत्वेनायं पूर्वोक्त एव वाक्यभेदः परामृश्यते । तस्मादैकार्थ्यात्प्ररोचनार्थैवात्र विधिरिति । प्ररोचयमाना अनुष्ठातॄणामिति । 'रुच्यर्थानां प्रीयमाणः' इति सम्प्रदानत्वं कस्मान्न भवति । प्ररोचयतेः प्रकृत्यन्तरत्वादिति चेन्न, तत्रापि रुचिसम्बन्धानपह्नवात् । अथ सामान्यविवक्षया षष्ठ्युच्यते, साप्युपात्ते विशेषे दुर्लभा । तस्मादनुष्ठातॄणां क्रियाया इति सम्बन्धः । केभ्यः प्ररोचयमाना इत्यपेक्षितेऽर्थात्तेभ्य एवेति गम्यते । अथ चानुष्ठातॄणामुपकरिष्यतीति सम्बन्धः । क्रियाया इति । पञ्चमी क्रियातोऽपि हि त एव प्ररोचका इति । अथवा क्रियार्थमिति

पूर्वस्येति वा सम्बन्धः, केवलस्यार्थवादैः समुच्चरितस्य वा सर्वस्येति—वाक्यभेदप्रसङ्गादिति । एतेनास्य ***भाष्यस्यार्थ*** उक्तः । वाक्यं हि सम्बद्धस्य विधायकम् । द्वौ चेत्सम्बन्धौ विदध्यात् भूतिकाम आलभेत । आलभेतैष हि गुणो भवतीति भिद्येत ह्येवं सति वाक्यमिति । अस्य भिन्नाविमावर्थौ उभयाभिधाने वाक्यं भिद्येतेत्यनेनापौनरुक्त्येन न खेदयितव्यं मन इत्याह—पूर्वोक्त एव वाक्यभेद इति । न च पौनरुक्त्यं दोष इत्युक्तम्—प्रश्नोत्तरत्वेनेति । पूर्वं वाक्यभेदो व्युत्पादितः सम्प्रत्यशक्या स्तुतिः । पदसम्बन्धे सति विध्यर्थता[म]वगन्तुमिति प्रतिज्ञाय कुतोऽशक्येत्यस्यार्थतो आयातस्य हेतुप्रश्नस्योत्तरत्वेन व्युत्पादित एवार्थ उच्यते सिद्धो हि हेतुर्भवति न साध्यः । अतश्च न पौनरुक्त्यं दोष इति ।

साप्युपात्ते विशेष इति । सम्बन्धव्यतिरेकजनिता षष्ठी वक्तव्या । स एव रुचिसम्बन्धः चतुर्थीनिमित्तत्वेन विशेष इति । क्रियाया इति पञ्चमीति । पूर्वमुपकरिष्यन्ति क्रियाया अनुष्ठानस्येति व्यक्तोऽर्थ आसीत् । यदा त्वनुष्ठातॄणामुपकरिष्यन्तीति कल्पितम्, तदा क्रियाया इत्यस्य विच्छिन्नस्याव्यक्तोऽर्थो व्याख्यातः । क्रियातोऽपि हीति । फलाभ्युपहितक्रियाप्रतिपादनं न तथा प्ररोचयति अन्यपरत्वाद् यथा अमीति । क्रियार्थमिति षष्ठ्यर्थ इति । उपपूर्वः करोतिरतिशयाधाने वर्त्तते । स च यथा समवायिनः एवं कार्यशक्तिरूपत्वात् कार्यस्यापि । तत्रानुष्ठातॄणामिति समवायिनामुपपादनम् । क्रियाया इति तु प्रयोजनस्यानुष्ठातॄणामुपकरिष्यतीत्यत्राकाङ्क्षस्य प्रयोजनस्योपकारः किमर्थमिति यावत् ।

षष्ठ्यर्थः कल्प्यः । [1]कश्चिदर्थं स्तुवन्तीति । शत्रन्तं कञ्चिदिति विधेयं तत्सम्बन्धिनं वा कञ्चिद्वा विदधति क्रियां तत्सम्बन्धिनं वा । तच्च स्तुतिद्वारेणेत्युपपन्नं प्रत्ययोद्धारेणार्थवादप्रामाण्यम् । इदन्तु व्याख्यानं नानुमन्यन्ते । यदि हि प्रत्ययोत्खातिः स्यात्ततः केन स्तुतिराकाङ्क्ष्येत न तावच्छब्दभावना कथंभावोऽस्ति । यापि कस्मादित्यपेक्षा कल्प्येत सापि विधीतिकर्तव्यताविषयेव तदनुग्रहार्थत्वात् । शब्दान्तरव्यपदेशमात्रं तु भिद्यते । सापि च नियुज्यमानस्यैव पुरुषस्य भवति न क्रियामात्रश्रवणात् । न हि वायव्यश्वेतालम्भ इत्युक्ते कर्तव्यताकर्तव्यतोक्तेः प्राक् प्रशस्तोऽप्रशस्त इति वापेक्ष्यते । तदनपेक्षितं च श्रुतिमात्रेणैव वदन्तो नार्थवादाः प्रतिपादयन्ति । न च धात्वर्थेन सह कस्यचित् संबन्धोऽपेक्षा वा विद्यते । सर्वस्य भावनागामित्वात् । भावना तु प्रत्ययोद्धारेणापनीता किमपेक्षेत । तस्मात्तद्गतांशत्रयोच्छेदान्न भूतिः फलं, न यागः करणं, न वेतिकर्तव्यता काचित्स्यात् । उक्तेऽपि च प्राशस्त्ये कस्मादित्यनपेक्षितत्वात्प्रशस्तोऽयमिति,

तत्रेदमुत्तरम् — क्रियाया इति । तेन क्रियार्थमित्युक्तं भवतीति । कञ्चिदिति । विधेयमिति । कञ्चिदित्यनेकत्र नियमः । तत्र यदि किञ्चित् स्तुवन्तीति सम्बन्धः । तदा विधेयतत्सम्बन्धिनावनेकौ सम्बन्धिस्तुतिरपि हि लक्षणया विधेरुपकरोति 'आपो वै शान्ता' इत्यादिषु । यदा तु कञ्चित् विदधातीत्यन्वयः तदा क्रियातत्सम्बन्धिनावनेकौ तदा स्तुवन्तीत्यस्य शत्रन्तस्यैवं सम्बन्धो विदधाति । कथं स्तुवन्तीति । तदेतदुक्तम् — तच्च स्तुतिद्वारेणेति ।

यापि च कस्मादित्यपेक्षेति । आलभेत कस्मात् यतो वायुः क्षेपिष्ठा देवतेत्यत्र *भाष्ये* कस्मादित्यपेक्षा दर्शिता । सेयमाशङ्क्य निराक्रियते विधिना प्रवर्त्यमानः साधनेषु पुरुषस्तस्य प्राशस्त्यम् विधिविहितात्मप्रवृत्तिहेतुत्वेनापेक्षते — कस्मादिति । एवञ्चावगतप्रवृत्तिनिर्वाहहेतुविषयत्वात् कस्मादित्यपेक्षायां विधीतिकर्त्तव्यताविषयत्वमिति । अभ्युपेत्य पक्षान्तरमाह — सापीति ।

ननु विधिवादानपेक्षितप्रतिपादनमेव प्राशस्त्यं प्रवर्त्तयिष्यतीत्याशङ्क्याह — तदनपेक्षितमिति । प्राशस्त्यमपेक्षितमित्यर्थवादैः कथञ्चिल्लक्षणया प्रतिपाद्यते । अनपेक्षितं तु न प्रतिपादयन्ति । यस्तदानीं तेष्वसामर्थ्यमात्रमनुविदधतः स्तुतिमात्रेण वदन्ति । न च तथा वदन्तः प्राशस्त्यम्

1. कञ्चिदिति मुद्रितपुस्तकपाठः ।

एतावन्मात्रेऽवधृते प्रशस्तत्वादित्यनुच्यमाने कर्तव्यताबुद्धिर्नैव स्यात् । भवन्ती वा तन्निष्ठा भवेत् प्रशस्तोऽयं कर्तव्यः पटो रक्तः कर्तव्य इतिवत् । अकल्पिते विधावानर्थक्यमेव स्यात् । प्रत्यक्षं च विधिमुत्सृज्य पारम्पर्यलक्षणयार्थवादेभ्यः परिगृह्यत इत्यपूर्वा वाचोयुक्तिः । न चैतत्कल्पनावसरोऽस्त्यन्यतः सिद्धत्वात् । अनुक्तो हि सन्नर्थवादादेव विधिः कल्प्येत, यद्यन्यथा नोपपद्येत । प्रत्यक्षप्रत्ययोपपन्नत्वान्नान्यथानुपपत्तिस्तथार्थवादोऽपि यद्युपाख्यानादिष्विव प्ररोचनायां निष्प्रयोजनः स्यात्ततो दूरं नीयेत । यथोक्तेन तु न्यायेन प्ररोचनोपयोगान्नान्यत्र गच्छतीत्यवश्यकर्तव्या च प्ररोचना । यद्यन्यतः सिध्येत्ततोऽर्थवादान्नापेक्षेत सापि त्वनन्यगतिकत्वात्तमेवाश्रयति । सर्वत्र च वैदिकेऽर्थेऽर्थापत्त्या शब्दः कल्प्येत ततोऽर्थसिद्धिस्तेन प्ररोचनया विधिशब्दः कल्प्येत नार्थः, तत्कल्पनावेलायां च यथैन्द्रवायवादिवाक्येषु सोमेन यजेतेत्यस्मिन्नुपतिष्ठमाने नान्ययजिकल्पना तथैवालभेतेत्यनेनान्यानुमानप्रतिबन्धः । तुल्यार्थयोश्च बाधविकल्पौ भवतः प्रत्ययार्थवादयोः पुनरत्यन्तभिन्नानुग्राह्यानुग्राहकार्थविषयत्वेनार्थभेदात्समुच्चय इत्येकवाक्यता । यदि च प्रत्ययोत्खातिः स्यात्ततः कर्तृसंख्योपग्रहविशेषावगतक्रियाफलस्वार्थपरार्थत्वाद्युच्छेदप्रसङ्गः । स्यादेतत्, विधित्वमात्रमविवक्षयित्वा शेषविवक्षया कर्तृसंख्यादिलाभ इति । एतच्चाशक्यं यतस्तदर्थमप्युपात्तः प्रत्ययः सामर्थ्यादविधित्वं वदत्येव । प्रतीतस्य च द्वय्येवाविवक्षा विध्यसंस्पर्शो वा ग्रहैकत्ववदनुवादकत्वं वेन्द्रियकामहोमवत् । न तावद्विधेरविधित्वं नाम किञ्चित् ।

---

प्रतिपादयितुं शक्नुवन्तीति — प्रशस्तत्वादित्यनुच्यमान इति । न च वक्तव्यम्, प्राशस्त्यमवगम्य पुरुषः स्वयमेव कर्त्तव्यं मंस्यत इति । यतः कर्त्तव्यताबुद्धेरस्ति बहुप्रमाणान्तरगोचरः प्रमेयम् । तेन शाब्दोऽयमर्थः स लिङः प्रमेयो नार्थवादानामित्युच्यते । अत आह — अकल्पित्ते तु विधावानर्थक्यमिति । अभिमतसाधनत्वानवगमादित्यर्थं इति । विधिरर्थवादान् न साधनीकरोति । अर्थवादा अपि न प्ररोचनामतिक्रामन्तीत्युक्तम् । इदानीं प्ररोचनाप्यर्थवादात्मार्थतां बोधयतीत्याह — अवश्यकर्तव्या चेति । पक्षद्वयेऽप्यङ्गीकरणादवश्यकर्त्तव्येति — न तावद् विधेरविधित्वं नामेति । यस्य विधिना सम्बन्धो विवक्षाहेतुः सोऽविद्यमानविधिरविवक्षितः स्यात् । विधिस्तु न विधिसम्बन्धमपेक्षते किन्तु रूपेणैव विवक्षित इत्यर्थवान् । नास्ये-

नाप्यनुवादस्तस्यामवस्थायामप्राप्तेः। न ह्येवं सम्भवति, योऽयं वायव्यश्वेतालम्भः कर्त्तव्यः, स प्रशस्त इति। भवति त्वेवं कर्त्तव्यः प्रशस्तत्वादिति। यत्तूदवसानीयवदिति, तत्रापि क्त्वावशेन विधिप्रतिषेधावनपेक्ष्य क्रियामात्राक्षेपाद् विधित्वमाश्रितमेवेत्यदृष्टान्तता। यदि च विध्यविवक्षा स्यात्ततः प्रत्यासत्तेर्धात्वर्थ एव साध्यांशे निपतेदिति निष्फलत्वं स्यात्। तस्मात् सूत्राविनाशेनैव विधिनैकवाक्यत्वम्। तथा च भाष्यकारः—सविधिकमेव भूतिकाम इत्येवमन्तो विध्युद्देश इत्याह। अन्यथा धात्वर्थ इत्येवावक्ष्यत्। [1]न चास्य क्रियामात्रत्वेन विध्युद्देशत्वं शक्यते वक्तुम्। तस्मात् प्रत्यय एव विध्यविधायित्वाद्विध्युद्देशः। विध्यर्थेन त्वेकवाक्यत्वासम्भवात् सूत्रातिरेकेणोद्देशग्रहणम्।

तरेषामिव विध्यन्तरेणासंस्पर्शो विवक्षितत्वार्थः वक्तव्यः, किन्तु अविधित्वेन। न च तत्सम्भवति, रूपानपायादिति। तस्यामवस्थायामिति। अनुवादसमये इत्यर्थः।

किमित्यप्राप्तिरित्याह — नह्येवं सम्भवतीति। यदा प्राशस्त्यमेव प्रतिपाद्यं तदा किञ्चिदुद्दिश्य सामानाधिकरण्येन तद्विधेयम्। तत्र कर्त्तव्यतानुवादवादिन एवं सम्बन्ध आपद्यते — योऽयं······कर्तव्यः स प्रशस्त इति। यदि त्वालम्भमात्रमुद्दिश्य य आलम्भः स प्रशस्त इत्युच्यते तदा कर्त्तव्यता सम्बध्येत। ततश्च यदुक्तम् — प्ररोचनातः सिद्धं विधित्वं प्रत्ययोऽनुवदतीति, तन्नोपपद्यते। पूर्वसिद्धस्य विधेयत्वस्योद्देशात्। न च तत्कुतश्चित् प्राप्तमितिकर्त्तव्यतानुवादे तु घटतेऽन्वय इत्याह — भवति त्वेवमितिकर्त्तव्यता प्रतिपाद्यमाना स्वनिर्वाहाय गुणभूतं प्राशस्त्यमपेक्षत इति। यथापेक्षं सम्बध्यते भवतस्तु प्राशस्त्यं प्रधानं नानुद्देशस्थेन विधिनैकवाक्यतां यातीत्युक्तमिति। न चास्य क्रियामात्रत्वेनेति।

विध्यभावे कुतो विधिविषयत्वेन विध्युद्देशता। तस्मात् विधिमुद्दिशति उद्दिश्यतेऽनेनेति वा—प्रत्यय एव······विध्युद्देश इति। यत्तूक्तमन्यथा पुनरुद्देशग्रहणमनर्थकमिति। तत्राह — विध्यर्थेनेति। कथं तर्हि सूत्राविनाशि[शे]नेति। यतो नात्र विधिस्त्यक्तः विधिनैकवाक्यत्वादिति विवृतम्। वाचकद्वारेण नार्थरूपेणेति। यदि प्रत्ययो विध्युद्देशः। कथमेतद्भूतिकाम इत्येवमन्तो विध्युद्देश इति *भाष्यम्*।

१. तत्रास्य क्रियामात्रतयेति मुद्रितपुस्तकपाठः।

भूतिकाम इत्येवमन्त इति च फलादिसङ्गत्युत्तरकालं स्तुत्यवसर-प्रदर्शनार्थम्। नन्वेवं सति वर्त्तमानपदेष्वनाकाङ्क्षणादर्थवादा न सम्बन्ध्येरन्। एवमेवैतत्, तथापि तु प्रमाणान्तरप्राप्त्यभावात् क्वचित्प्रयोगवचनेन क्वचित् पञ्चमलकारेण अथवा श्रुतवर्त्तमानान्यथानुपपत्त्या कल्पिते विधित्वेऽर्थवाद-सम्मतिः। यत्रापि केवलार्थवाददर्शनादेव विधित्वम्, तत्राप्यन्यथानुपपत्तिमात्रं शरणम्। सम्भवन्त्यां तु गतौ नातिगौरवं युक्तमिति।

यस्त्वस्मिन्पक्षे वाक्यभेदः सम्बन्धद्वयाश्रयणादिति, स आलभेत प्रशस्तत्वादित्येकप्रसरोपपत्तेः परिहृतः। विधीयमानस्यैव हि स्तुत्याकाङ्क्षेत्यवैरूप्यादनुपपन्नं तन्त्रत्वम्। यदि चैवंविधैः सम्बन्धभेदैर्वाक्यं भिद्येत। ततः साध्यसाधनेतिकर्त्तव्यतासम्बन्धैरपि भिद्येत। तस्मान्नायमभिसम्बन्धो विवक्षित इत्यादिभाष्यमेवं नेतव्यम्। न पूर्वत्रैव साङ्गविधिपर्यवसानं

तद् योजयति — भूतिकाम इत्येवमन्त इति चेति। क्वचित् प्रयोगवचनेनेति। आग्नेयोऽष्टाकपालो भवतीत्यत्र प्रयोगवचनानुसन्धानेनानुष्ठानायेदमित्यवगमादर्थवादग्रहणात् पञ्चमलकारस्य भवतिपरस्य प्रयोजकव्यापारविधानासामर्थ्यात् पञ्चमलकारेण समिधो यजतीत्यत्र प्रत्या-[°त्यया?]त्मकस्य विधेरङ्गत्वायाभ्युपगमात् श्रुतवर्तमानान्यथानुपपत्त्येति। पञ्चमलकारविषये उभयत्र वा पक्षान्तरमिति। दृष्टप्रयोजनानुसारे क्रियमाणे प्राशस्त्यलक्षणया प्रयोजनानवाप्तेः लक्षितलक्षणया कर्तव्यताप्रतिपादनमिति। एकप्रसरोपपत्तेरिति वाक्यं प्रतिपाद्य प्रतिपादनप्रसरं विशिष्टश्चार्थो वाक्यस्य प्रतिपाद्यः सविशेषणविशेष्याभ्यां रुच्यत इति न तयोर्भेदात् प्रतिपाद्यभेदः किन्तु विशिष्टभेदात्।

न चात्र विशिष्टभेदः, प्राशस्त्योपबृंहितस्य कर्त्तव्यत्वस्य एकप्रसरप्रतिपाद्यस्य बोधनात्। सति चैकप्रसरत्वादर्थैकत्वे या वैरूप्यादावृत्तिः वाक्यभेदहेतुस्तस्य निरवकाशतेति दर्शयति — विधीयमानस्यैव हीति। यदि हि येन रूपेणोपादीयमानोऽर्थः स्तुत्या सम्बध्यते ततोऽपि लक्षणेन विधिना तत आवृत्त्योपादेयः स्यात्। यदा तु विधेयतयैव अवगम्यमानः तेनैव रूपेण स्तुतिं गृह्णाति तदोभयसम्बन्धि सकृदुपादानलक्षणं तन्त्रत्व-

विवक्षितम् । विधित्वादिद्वारेण[1] प्ररोचनाकल्पनायामतिगौरवनिमित्ताद् वाक्यभेदात् । किमर्था स्तुतिरिति । पूर्वेणैव प्ररोचनापि सिद्धेत्यभिमानात् । कथं रोचेतेति विध्यनुग्रहकथनम् । ननु प्रमितिपूर्वाभिप्रायविवरणम् न हीति । स्तुत्यभावे तस्य शक्तिद्वयमगत्याश्रीयते । न सम्भवन्त्यामपीत्यैतन्न तद्भूतिकामस्य विधिः समाप्यतं इत्याह यथा पट्ट इति । गतार्थम् । विधिशब्देन तदा प्ररोचनेति विवृतं कार्यनानात्वं विधिस्तुत्योः । नन्वेवमिति, अस्ति चेत्प्ररोचयितुमपि शक्तिः कस्मादपेक्ष्यत इति । सत्यमिति । तस्माद्विद्यमाने तस्मिन्नाविद्यमाने याऽर्थः, स गम्यते कश्चासौ । स्तुतिः प्रयोजनं तयोः । न तस्यैव पूर्वस्यापीत्यर्थः । स्तुतिविषयोपकल्पनाच्च विधेरपि स्तुतिप्रयोजनव्यपदेशः । न हि निर्विषया स्तुतिरुपपद्यते । अर्थवादाभावे त्वगत्या केवलोऽपि गौरवमङ्गीकरिष्यति । ननु सत्स्वपीति । पूर्ववदेव व्याख्येयम् ।

मुपपन्नमिति । विधित्वादिद्वारेणेति । आदिशब्देन फलद्रव्यदेवतानुपादानमिति । अतिगौरवेति । अनेनेदमाह — नालं वाक्यार्थभेदात् वाक्यभेदः, किन्तु विध्यादिशब्दानां विध्यादिषु स्तुतौ च व्यापारोऽनेकोच्चारणसाध्य इत्यावृत्तिप्रसङ्गादिति । यदा स्तुतिपदासन्निधानं तदा पूर्वेणैव विधिरित्यस्य *भाष्यस्यायमर्थः* — पूर्वेण विधिः स प्ररोचनः पर्यवस्यतीति । सोऽयमुक्तः स्तुत्यभावे तस्य शक्तिद्वयमिति । यदा च स्तुतिपदसम्बन्धः न तदा भूतिकामस्यालम्भो विधीयत इत्यस्यायमर्थः नान्यतः सम्भवन्त्यां स्वयं तमाक्षिप्य विधिनालम्भो विधीयत इति । तदेतद् व्याचष्टे — सम्भवन्त्यामप्येतन्न तदेति । समाप्यत इति । अनुभाषणे शब्दान्तरनिरपेक्षो व्याख्यानाय विधीयत इति *भाष्यं* सप्रयोजनसमग्रविषयमिति, विधिस्तुत्योरेकार्थत्वात् । विकल्प इत्येतदसम्मतं *भाष्यकारस्येत्यस्मात्* स्फुटीभविष्यतीत्याह — विधिशब्देन तदा प्ररोचनेति विवृतमिति । विध्यनुग्रहप्रयोजना हि प्ररोचना । विधिशब्देनाक्षेपात् क्रियते न प्रवृत्तिप्रयोजनविधित एव प्रवृत्तिसिद्धेरिति । नन्वेवमिति चोद्य*भाष्य*मस्ति चेदिति व्याख्याय तस्योत्तरं *भाष्यं* सत्यं विनापि सिध्येदिति गतार्थत्वादुपेक्ष्य तस्य शेषं तस्मिन् योऽर्थो वाक्यस्य सोऽवगम्यत इत्येतद् व्याचष्टे — तस्माद् विद्यमान एव योऽर्थो भवत्य-

---

१. °त्वादिद्वारप्ररोचनेति मुद्रितपुस्तकपाठः ।

अतोऽस्माद्विधेरिति । इदानीं षष्ठी वाक्यशेषसम्बन्धादित एवास्य स्तुतिमवगच्छामो न स्वत इत्यर्थः । ननु निरपेक्षादपीति । यदि क्वचिदनितिकर्त्तव्यताकस्य विधेः प्रवर्त्तनशक्तिः कस्मादन्यदपेक्षते, येन सत्स्वप्यनादरः स्यात् । आचार्यस्तु सोपहासमाह—यत्रासौ केवलः प्रयुज्यमानो निरपेक्षस्तत्र भवतु न कश्चिद्विरोधः । इह तु न तत्सम्भवः, साकाङ्क्षैः पदान्तरैराक्षिप्तत्वात् । वाक्यं ह्येकमेकस्यैव सम्बन्धस्य विधायकम् । तत्र यदि द्वौ विध्युद्देश एव कुर्यात्तथा सति भिद्येत । विध्युद्देशोत्थापितानामेवैष हि गुणो भवतीति प्ररोचनां दर्शयति । तस्माद्विधिनैकवाक्यत्वात्तदनुग्रहेणार्थवन्तोऽर्थवादा इति ॥७॥

विद्यमानेन भवति, सोऽवगम्यत इत्येवं वदतावधारणं *भाष्येऽभिमत*मित्युक्तम् । अवधारणस्य च प्रयोजनमर्थवादाम्नानसाफल्यप्रदर्शनम् । यदि हि अविद्यमाने योऽर्थो वाक्यस्य विधिनैव प्ररोचनेति स एवेदानीमपि स्यादानर्थक्यमेवार्थवादाध्ययनस्येति स्तुतिः प्रयोजनं तयोरित्यस्य *भाष्यस्य* स्तुतिरेव प्रयोजनं तयोर्न विधिरित्यर्थः पूर्वव्याख्यायामासीत् ।

इदानीन्तु तयोरुभयोरपि स्तुतिः प्रयोजनं नैकस्यैवेति । तत्र तयोरिति द्विवचनव्याख्यानं — न तस्यैवेति । ननूत्तरस्यापीति वक्तव्यम् । यत्राक्षेपवादिना पूर्वस्य विध्युद्देशस्यैव स्तुतिप्रयोजनत्वमुक्तं व्यावर्त्तते । उच्यते, न पराभिमतव्यावर्त्तने नकारोऽयम् । किन्तु स्वगतं तयोरित्यस्य *भाष्य*स्यार्थं निरूपयति — नार्थवादानामेव स्तुतिः प्रयोजनमिति नो मतम्, किन्तु विध्युद्देशस्यापीति । अतोऽस्मात् विधेः स्तुतिमवगच्छाम इति *भाष्ये* पञ्चमी परपक्षमिवानुजानाति । तदर्थमाह — अतोऽस्माद्विधेरिति । इदानीं षष्ठीति । किं विषयेत्याह — वाक्यशेषेति । स्तुतिसम्बन्धादपि भवन्तीसम्बध्यते । तथा विवक्षितं ज्ञातुं वदति, तन्न विधेरवगच्छामः । किन्तु तदीयाद् वाक्यशेषादिति । विधेः स्तुतिरिति । नेदानीं प्रतिपाद्यमिति । सोपहासमिति । पूर्वपक्षस्यातितुच्छत्वादर्थात् सोपहासता भवतीत्येवं व्याचष्टे— आलभेत एष हि गुणो भवतीत्यर्थभेददर्शनार्थं *भाष्यं* तत्पूर्वव्याख्यायां वाक्यार्थभेदोपपादकत्वेन व्याख्यातम् । इदानीन्तु तस्याभिमतत्वादन्यथा व्याचष्टे — विध्युद्देशोत्थापितानामेवेति ॥७॥

च शब्दव्याख्यानार्थं परिचोदनोपन्यस्ता । आनर्थक्यमेवास्त्विति तन्नैव । कुत. । पूर्वोक्तेन न्यायेनार्थस्यावगम्यमानत्वात् । अथ वा तन्नेत्यवच्छिद्यैवमर्थावगमादित्युक्तप्रकारपरामर्शः । किं च तुल्यं चेति योजना । संप्रदायानुग्रहार्थं धर्मजातम् । तत्संबन्धस्मरणात् । स्वर्गाद्यसंयोगाच्च । न चास्य प्रयोजवत्-सन्निहिताध्ययनपरित्यागेनान्यार्थत्वे प्रमाणमस्ति । संप्रदायाङ्गत्वेऽपि चाविघ्नस्याकाङ्क्षितत्वात् । तादर्थ्यस्मरणाच्चाविघ्नार्थत्वम् । न ह्यन्यत्कल्प्यमानं स्वाध्यायेतिकर्तव्यतानुगुणं भवति । यदि तावत्स्वर्गः कल्प्येत ततः पुरुषार्थत्वमेवापद्यते । अथ पुनः क्रतुफलासिद्धिरेवं पठिते वेदे भवतीति । एवमपि दूरस्थोपकारितैव । तस्मात्संप्रदायस्याक्षरग्रहणं साधयतो नियमजातमनुग्राहकम् । न च निष्प्रयोजनस्याविघ्नेन कार्यं वरं तादृशस्य विघ्नमेवोत्पन्नं, येन क्लेशोऽपि तावन्न

च शब्दव्याख्यानार्थं परिचोदनेति । पूर्वसूत्रेणोक्तानुपयोगपरिहार उपयोगोपपादनेन[ने] कृते यद्यनेनाप्युपयोगोपपत्तिरेवापरा समुच्चीयेत सम्बध्येत चशब्दः । अनेन तु वक्तव्यं प्रयोजनमित्युच्यते । तद् यदि कस्मादेवं क्लेशेन प्रयोजनं वर्ण्यत इत्यपेक्षायां योज्यते । ततो यस्मात् तुल्यं साम्प्रदायिकमिति विनैव चशब्देन सम्बध्येत । परिचोदनापक्षे तु पूर्वोपपादितोपयोगप्रतीतिं परिहारमन्तर्भाव्य परिहारान्तरसमुच्चये चशब्देऽर्थवत्तेति तत्सम्बन्धस्मरणादिति ।

तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः ।
वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना ॥२।१६५॥ [मनुस्मृतिः]

इत्यादिसम्बन्धस्मरणम् । न चास्य प्रयोजनवदिति । प्रकरणमप्यध्ययनार्थतां प्रतिपादयतीत्याह । अथ वा तत्सम्बन्धः प्रकरणाम्नानेनैव स्मर्यते । तस्य तु बाधकं नास्तीत्यनेनोच्यत इति । अविघ्नस्याकाङ्क्षितत्वादिति *भाष्योक्तं* अविघातार्थत्वं समर्थयति । अध्ययनस्याक्षरग्रहणोपायत्वं दृष्टमेव । न तत्रादृष्टानुग्राहकाकाङ्क्षा । प्राक् कृताशुभपरिपाकविहतं तूपायत्वाद्धीयत इति तन्निराकरणमेवापेक्षते — नहि अन्यदिति । अविघ्नादन्यददृष्टं कल्प्यमानमित्यर्थः । तथा हि अन्यददृष्टमदृष्टस्यैव साध्यस्योपायः । तद् यदि साध्यः स्वर्गस्ततो नाध्ययनाङ्गता पुरुषार्थत्वात् । अथ तु क्रतूपकारसाध्यः तथाऽप्यध्ययनाश्रितं दूरस्थस्यैव क्रतोरङ्गं स्यात्,

स्यात् । यतस्ते सप्रयोजनैर्विधिवाक्यैस्तुल्यमेवाद्रियन्ते । तेनावश्यं तद्वदेव प्रयोजनवन्त्यपीति । नियमस्मृतेश्च वेदमूलत्वाद्वेदकृत एवायमादरः । स च प्रयोजनवत्त्वादृते नोपपद्यत इति प्रयोजनवत्त्वमपि सामान्येनानुमायार्थाद्वा कल्पनैकदेशत्वादिति [मी० सू० १।४।२५।] । सामर्थ्यतोऽर्थवादानां स्तुतिर्नाम प्रयोजनविशेषो लभ्यते । स्मरणं च दृढमित्येतदेवाह । अथ वा यदेवेदं ग्रन्थस्मरणं परिपालनात्मकं तेनाध्येतृपुरुषप्रयोजनवत्त्वाभिप्रायप्रतिपत्तिपूर्वकं प्रयोजनवत्त्वानुमानम् । संभाव्यते च कुतश्चिद्वाक्यादियं प्रतिपत्तिरिति नाप्रमाणम् । अन्यथा हि निष्प्रयोजनान्येतानीति केचित्परित्यज्यार्थवादान् विधिमात्रं प्रदद्युः[1] । तत्र दृढस्मरणमेतेषु न स्यात् । अस्ति तु तत् । तस्मान्न प्रमादपाठः । ततश्चार्थवन्त इति ।

तुल्यं च सांप्रदायिकमित्यस्यापरा व्याख्या । संप्रदायः प्रयोजनं यस्य वाक्यस्य येन प्रवर्तितः संप्रदायस्तस्मात्स्वाध्यायोऽध्येतव्य इत्येतत्स्वाध्यायत्वाविशेषाद्विध्यर्थवादयोस्तुल्यमतः प्रागुक्तेन न्यायेन प्राक् पुरुषार्थसिद्धेरवस्थातुं न लभ्यत इति शक्त्यनुसारेण स्थितमर्थवादानां स्तुत्यर्थत्वमिति ॥८॥

उक्तदोषपरिहारोऽतः परम् शास्त्रदृष्टविरोधिका यात्रानुपपत्तिर्विधिकल्पनायामुक्ता तामस्मत्पक्षमप्राप्तां मन्यामहे । अथवेदं स्तुतिव्याख्यानं तामनुपपत्तिमप्राप्तमिति व्याख्येयं, येषां ह्रस्वः पाठः । प्रयोगे ह्यनुष्ठाने रोदनवपोत्खननदिङ्मोह

नाध्ययनेऽस्य । यदि ह्यध्ययनं क्रतोरङ्गं स्यात्, ततः क्रतूपकारकार्योपयोग्यध्ययनाङ्गं स्यात् । नत्वेतदस्ति । अतोऽध्ययनस्याक्षरग्रहणकार्यस्य विघ्नहेतूपायप्रतिबन्धेनेदमङ्गमिति । अविघ्नेनेदमुपकरोति, नान्यथेति प्रतिपादनेनेदमुक्तम् । अबुद्धिपूर्वोपक्रान्तमर्थवादाध्ययनं ज्ञात्वापि निष्प्रयोजनं प्राक् क्रमिकदोषपरिहाराय कुर्यादप्यविघ्नत्वादयो नोपयुज्यन्त इति । स च प्रयोजनवत्त्वादृत इति । तथा च वेदः प्रयोजनवत्त्वं बाधयितुं शक्नोति । तथा चोक्तम् — विधिमात्रं प्रदद्युरिति । अध्यापनोपन्यासो निष्प्रयोजनस्यापि अबुद्धिपूर्वमित्यस्य दूषणाय । सम्प्रति योऽसौ स्वाध्यायस्य प्रयोजनवति प्रमेये विनयोगोऽध्ययनविधिना वर्णितः, सोऽनेन सूत्रेणोच्यताम् । किमिति उत्सूत्रं वर्ण्यत इति मत्वा तत्रैव तत्सूत्रं व्याचष्टे — अपरा व्याख्येति ॥८॥

१. प्रतिपद्येरन्निति मुद्रित पुस्तक पाठः ।

स्तेयानृतवादादीनां कल्प्यमाने विरोधः स्यात् । अस्माकं तु पुनर्य एषां शब्दानां श्रौतोऽर्थः स नैव विवक्षितः। न चाध्याहारादिभिर्विधिः, किं तर्हि स्तुतिमात्रं विवक्षितम् । न च तद्विरुध्यते तस्मादुपपद्येत । अथ वा शब्दार्थस्त्विति विधायकशब्दानुग्रहार्थः सन्नयमर्थवादो न स्वार्थानुष्ठानेन संबध्यते प्रयोगमप्राप्तोऽप्रयोगभूतस्तस्मादुपपद्येत । त्रयोऽत्र पाठाः । अप्राप्तं चानुपपत्तिमित्यत्र मन्यामह इति वाक्यशेषः । अप्राप्त चानुपपत्तिमित्यपरस्तत्रास्मद्व्याख्यानमित्यध्याहारः । अप्राप्ता चानुपपत्तिरित्यपरस्तत्रास्मत्पक्षे विज्ञेयेति ॥९॥

तत्र[1] तावद्विधिस्तुत्योरेकविषयता तत्रोपपद्यतां नाम, संबन्धे विषयनानात्वे तु कथमिति, गुणादित्याह । यत् क्रियायाः संबन्धिनि स्तोतव्ये तत्संबन्ध्यन्तरं स्तूयते, अथ वा यद्विकारे प्रकृतिसम्बन्धिनि विधानार्थं स्तोतव्ये तत्सम्बन्ध्यन्तरं प्रकृतिः स्तूयते । तत्र तद्द्वारेणापि लोके वेदे च स्तुतिसिद्धेः प्रकारान्तरता । तस्माददोषः । एतस्यास्तु स्तुतेरर्थमुपरिष्टाद्वक्ष्यति । शान्ताभिरद्भिः सम्बद्धो विकारः शान्तिहेतुर्भवन् यजमानस्य कष्टं शमयतीति । गुणवादसूत्रेण शुद्धेनैव तावद्रोदनाद्युदाहरणत्रयपरिहारः । शेषसूत्राण्यप्येतदुक्तोपपादनार्थतया

अस्माकं पुनर्य एषां शब्दानामिति । ननु प्रयोगे हि विरोधः स्यात् शब्दार्थस्त्वप्रयोगभूत [मी० सू० १।२।९।] इत्यनुष्ठानाविवक्षा वक्तुमुपक्रान्ता । किं स्वार्थाविवक्षोपन्यासेन । उच्यते, तस्या एवेयमुपपत्तिः । स्वार्थो हि विवक्षितः सन् अवश्यमर्थभावनोपयोगी वक्तव्य इत्यध्याहारादिभिर्विना नैवोपपद्येत । किन्तर्हि स्तुतिमात्रमिति । वक्ष्यमाणसूत्रार्थ एतस्यार्थपरिसमाप्तयेऽभिहित इति ।

अथ वा शब्दार्थस्त्विति । विधायक इति । पूर्वमर्थभावनानङ्गत्वं साक्षादुक्तम् । पारिशेष्यात् शब्दभावनाङ्गत्वम् ॥९॥

इदानीं तु तदेवेतरहेतुत्वेनोच्यत इति । शब्दार्थस्त्वप्रयोगभूत [मी० सू० १।२।९।] इत्यर्थभावनानुपयोगमुक्त्वा कथं नामेत्यपेक्षायां पूर्वोक्तार्थोपनयनसूत्रम् गुणवादस्त्विति [मी० सू० १।२।१०।] स्तुतिवाद इति । स्वार्थसम्यक्त्वे कथं स्तुतिरित्यप्येतदेव सूत्रं गुणवाद इति । तथा विधेयस्तुतिपरत्वमभिधेयगतायाः स्तुतेः गौण्या वृत्त्येत्यत्रापि तत्रानन्तरोक्तार्थे व्याख्यानभाष्यं व्याचष्टे — तत्र तावदिति । उपरिष्टाद् वक्ष्यतीति । औदुम्बराधिकरणे

---

१. यत्रेति मुद्रितपुस्तकपाठः ।

सम्भन्त्स्यन्ते । तत्रोदाहृतानां गौणतानिमित्तं किञ्चिदिहैव वक्ष्यते, परन्तु तत्सिद्धिसूत्रे । सोऽरोदीदिति साकाङ्क्षत्वेनैकवाक्यता विधिस्तुत्योः प्रत्ययवयवं कथ्यते । स इति प्रकृतापेक्षः कुतः तत्प्रत्ययात् । तद्धि प्रकृतं प्रतीयते ।

अथ वा तच्छब्दस्य प्रकृतग्राहित्वं प्रसिद्धम् । स इत्युक्ते तच्छब्दप्रत्ययात् स एवार्थः । एवं तस्य यदश्रु तद्रजतमिति सम्बन्धः । सर्वा चेयमुपरितनस्य निन्दाग्रन्थस्योपपत्तिरिति तदनन्तरं तदभिधानमुपपद्यते । कोऽसौ ग्रन्थस्तं दर्शयति । यो बर्हिषि रजतं दद्यात् पुरास्य सम्वत्सराद् गृहे रोदनं भवेदिति । केन हेतुना तदेवं भवतीति तदुपपाद्यते कारणानुरूपत्वात्कार्यस्य । रोदनप्रभवरजतदानाद्रोदनोत्पत्तिस्तस्मान्न देयमिति, सकलमदानस्योपपत्तिरिति । निन्दया तच्छेषत्वमर्थवत् । गुणवादस्तु शब्दालम्बनं रुद्रशब्दोत्थापितविज्ञानवशेन रोदनसामान्यतोऽदृष्टकल्पना । अश्रुणश्च शौक्ल्याद्यदि नामैतत्कठिनं भवेत्ततो रजतसदृशं भवेदित्युत्प्रेक्ष्य तत्प्रभवनिन्दा । धनत्यागेनात्यन्तोदारस्यापि गृहजनः पीड्यत इति तत्सामान्याद्वा रोदनोपन्यासः । एवं येन केनचिदा-

रुद्रशब्दोत्थापितेति । रुद्रशब्दोत्थापितं ज्ञापनं प्रकृतिप्रत्ययार्थनिरीक्षणात् रोदनकर्त्तेति । तदनेन कथं भगवान् विषयीक्रियते । यदि नारोदीत् तस्मादरोदीदिति । सामान्यतो दृष्टरूपा रोदनविषयिणी कल्पना सोऽरोदीदिति ।

ननु गुणवादमालम्ब्य शब्दो वृत्त इत्युक्तम् । न चानेन गौणता समर्थ्यते । उच्यते, कल्पनाशब्देन तच्छब्दप्रयोगोऽभिधीयते । प्रवृत्तिनिमित्तं गुण इतरैः पदैः कथ्यते । योऽरोदीत् स रुद्रशब्देन ज्ञायते । भगवति च रुद्रशब्दो दृश्यते । तं दृष्ट्वा तेनैव गुणसामान्येनारोदीदित्युच्यते । यथा हि सिंहगुणयोगाद् देवदत्तः सिंह इति । यदि नामैतत् कठिनमिति । अनेनापि गुणयोग एवोच्यते । तद्यतः प्रथमं भवति तत् तेन सदृशम् । अत्र चाश्रुतसादृश्यमस्ति । तेन प्रकृतिविकारगतसादृश्यरूपगुणयोगात् प्रकृतिविकारशब्दः — यदि नामेति । द्रव्यत्वमेव वैलक्षण्यम् । इतरथा सादृश्यमित्युक्तमिति । यथा सोऽरोदीदित्यादीनां प्ररोचनौपयिकं गौणमालम्बनं लब्धं नैवं प्रजापतिवपोत्खननादिवाक्यानां लभ्यते, अतोऽर्थशून्यत्वम् । असति चार्थे लक्षणानुपपत्तेः प्ररोचनापि कथमिति परिचोद्य कथं पुनरनुत्खिन्नायां वपायामित्यादिना ।

लम्बनेन निन्दाविज्ञानोत्पत्तिः प्रतिषेधोपकारिणीति मुख्यार्थाभावेऽप्यदोषः। एवं वपोत्खननादिवाक्ययोजना। स्वात्मवपोत्कर्तनेनापि हि विशिष्टप्रयोजनार्थं कर्माणि क्रियन्ते किमुत बाह्यधनत्यागेनेति स्तुतिः। यथा नेत्रमप्युद्धृत्यायं ददातीति लोकेऽपि त्यागिनं स्तुवन्तीति। वृत्तान्तपर्यवसायी च वेदस्तत्र प्रामाण्यमप्रतिपद्यमानः स्तुतौ सत्यत्वान्नान्यत्रान्वेषणमर्हतीति निष्प्रयोजनोपाख्यानसत्यतया नार्थः। शब्दभावनाङ्गं[1]चार्थवादाः। सा च प्रवृत्तिविज्ञानमात्रे णैवोपयुज्यते नार्थे[2]। अर्थात्मिकायां तु सर्वत्राविसंवादः सिद्ध एव। अथोच्येत, असदन्वाख्यानेन स्तुतिनिन्दात्वमिति सुतरां तत्र प्रतीयते। कामं परमार्थे वक्तारो भवन्ति कात्र स्तुतिर्निन्दा वा सत्यमेवैतदिति। असत्ये तु यस्मादन्यत्र

*भाष्यकारेण* परिहृतम् असद्वृत्तान्तान्वाख्यानं स्तुत्यर्थेनेत्यादिना। तदेतदुपपादयति — वृत्तान्तपर्यवसायी वेद इति। यदि शब्दादर्थः प्रसिद्धः प्ररोचयेन्न स्यादर्थाभावे प्ररोचनाशब्द एव तु अवान्तरव्यापारीकृतार्थप्रत्ययं प्ररोचयति। न चात्र प्रत्ययसमर्पितस्यार्थस्य व्यापारः प्ररोचना। अर्थाभावेऽपि प्रत्ययभावेऽभावात्। अथ प्रत्ययस्थोऽर्थः प्ररोचयतीत्युच्यते। हन्त ! अर्थस्य प्रत्ययोऽवान्तरव्यापारो वक्तव्यः। स शब्दस्यैव, तत्कार्यत्वात्। अस्तु किमर्थं रूपेणेति। अर्थानुपयोगमेव व्यक्तीकरोति—शब्द भावनाङ्गम् चार्थवादा इति। किमत इत्याह — सा चेति। प्रमाणत्वाद् विधायकस्य तद्व्यापारस्य विज्ञानफलत्वं प्रत्यक्षादवगतम् विज्ञाने ज्ञानमेवोपयुज्यत इति दर्शितम्। एकदेशदर्शनाच्छब्दविज्ञानादिति च तेनार्थवादैर्ज्ञानमेव विधायकशब्दानुग्रहायोपादीयते नार्थ इति।

नन्वेवमसत्यपि पदार्थे वाक्यार्थः सिद्ध्येत्। सिद्ध्यति यदि वाक्यार्थे पदार्थो नान्तर्भवेत्। यत्र तु साक्षादर्थाद्वा श्रौतोऽर्थो नान्तर्भवति तत्रासत्यप्येतस्मिन् न किञ्चिद् दूष्यतीति। एतदेव व्युत्पाद्यते— अथोच्येतेति। अभिधेयार्थद्वारा स्तुतिः कथं तदभावे स्यादिति — सुतरामिति। स्वार्थसम्भवे हि तात्पर्यमपि शक्येत। तदभावे तु स्तुतिपरता व्यज्यते। अस्त्यप्यर्थे ज्ञानमात्रेण स्तुतिः सम्भवतीति चाभिप्रायः।

---

१. वार्थवादा इति मुद्रितपुस्तकपाठः।

२. नार्थेनेति मुद्रितपुस्तक पाठः।

दुष्टमप्यवधृतमिह गुणवन्तमिति ब्रवीत्यतो नूनं मे प्ररोचयति। तथा गुणवन्तं सन्तं निन्दति निवर्त्तयितुमिति। ततश्चैवं विदित्वा यो यस्यानतिक्रमणीयस्तदनुरोधेन स तथा प्रवर्त्तते। वेदश्च प्रमाणमिति स्थितम्। तेन प्रवृत्तिनिवृत्त्यनुग्रहणीये स्वसंवेद्येऽर्थे पुंसः प्रशस्ताप्रशस्तज्ञाने भवतः। इह ते वेदेनोत्पादिते। तस्मात्तदनुरूपं व्यवहर्तव्यमिति। लोकेऽपि यां क्रियां फलान्तरयुक्तां मेधादिहेतुत्वेनाप्तां मन्यन्ते तस्यां च कश्चित्प्रवर्तयन्तस्तदभिप्रेतं सौभाग्यादिफलमसत्यमप्युपन्यस्य नियुञ्जते। तत्प्रवृत्तश्चेतरोऽपि क्रियाश्रयं फलं प्राप्नोति। यद्यपि च प्रतिपत्ता जानाति नैतदत्र पारमार्थिकं फलं मदभिप्रायानुसारेणैतैरुपन्यस्तं सर्वथा त्वपुरुषार्थे मां न प्रवर्त्तयन्ति, तदसत्यं नामैतत् किमप्यन्यदवाप्स्यामीति ज्ञात्वानुतिष्ठति। एवं वेदेऽपि विधिना तावत्फलमवगमितमर्थवादास्त्वसत्येन नाम प्ररोचयन्तु न तद्गते सत्यासत्यत्वे किञ्चिद् दूषयतः प्रवर्तनमात्रोपकारित्वात्।

यत्तु परस्ताद्भविष्यति तद्विधेरुपरि गतमिति निश्चित्य नैव विद्वांसो

**सोऽयं व्यक्तीकृतो — गुणवन्तमिति। ब्रवीतीति सम्बन्धः। इति शब्दश्चाभिधानप्रकरणात् बुद्धिस्थानामुपपत्तीनां निर्देश इति। तथा गुणवन्तं सन्तमिति। तथेत्यनेन प्रशंसार्थवादन्यायमतिदिशन्तं तत्तुल्यन्यायो निन्दार्थवादो विषयीकृतस्तस्य चादोषाभिधानं व्यापार इति सिद्धम्। तत्रेदमुच्यते, यदेतद् दुष्टोऽयमिति वदति गुणवन्तं सन्तं निन्दतीति गम्यते। निवर्त्तयितुमिति च साफल्यं निन्दायाः पूर्वसिद्धमेव मास्तु। कमिति स्वसंवेद्यमिति। प्रवृत्तिनिवृत्त्यनुग्राहकत्वेन स्वसंवेद्ये ज्ञाने।**

**अथ वा स्वसंवेद्येऽर्थे प्रत्यक्षादिवेद्ये[द्य इ]ति। लोकेऽपि च क्रियामिति हेतुरभिप्रेतसौभाग्यादेः फलान्तरप्रयुक्तां मन्यन्ते। फलान्तरयुक्तता मतावुपपत्ति मेधादिहेतुरसौ। अतः सौभाग्यादेः फलात् — फलान्तरयुक्तां मन्यन्त इति। तस्याञ्चेति। तस्यामपीत्यर्थः। तत्प्रवृत्तश्चेति। सौभाग्यादिप्रवृत्तः। इतराश्रयमिति। [इतरोऽपि क्रियाश्रयमिति] अभिप्रायाश्रयं[प्रायो] नियोगाश्रयः[यं] क्रियाश्रयं वेति।**

**ननु वक्तुरभिप्रायः श्रोतुश्च शब्दः प्रमाणम्। तस्य च सौभाग्यादिफलत्वेनैव मतं प्रवर्त्तकम्। अतः शब्दगतिरियमेव। तत्र प्रमाणान्तरादर्थेऽन्यथाभाव इत्याशङ्क्याह — यद्यपि। श्रौतेति। [?]। तद्विधेरपीति।**

न प्रवर्तन्ते । तस्मादुपाख्यानासत्यत्वमतन्त्रम् । नहि शुक्तिकादृष्टसत्यरजतो यदि रजतान्तरं तद्देशे लभते ततोऽभिसन्धीयते। शुक्तिकावत्तु किञ्चिदालम्बनं श्रुतिसामान्यमात्रेण सर्वत्र योजनीयम् । यथेह महाभूतानि प्रजाः पान्तीति प्रजापतित्वेनोच्यन्ते। वाय्वादीनां यथासंख्येन मध्यवर्तिनः सारावृष्टयादयो नगास्तामग्नाविति तेनैव क्रमेण वैद्युते वृष्टिमार्बीसे शरीरान्तर्वर्तिमि वायुमन्तश्चरत्नसामान्याद्रश्मि लौकिके तदाप्यायनात्तस्य । ततोऽज इति बीजादीनां सामान्येनानादित्वादजत्वप्रसिद्धेः, तमालभ्य प्राप्य प्रजाः पशूनाप्नोति । सर्वप्रजानां व्रीह्यादिपरिणामप्रभवत्वादित्यालम्बनम् । एतस्मिंस्तु प्रक्रमे सत्यं सालम्बनता किं तु स्तुतित्वमेव हीयते। अतः स्तुतित्वात्यागेनैव स्वार्थसत्यतां वर्णयामः। मन्त्रार्थवादेतिहासप्रामाण्यात्सृष्टिप्रलयाविष्येते। तत्र सृष्टयादौ प्रजापतिरेव योगी तस्मिन्काले पुण्यकर्मोद्भवाभ्युपगमेन पशूनामभावात्स्वमाहात्म्येनात्मन एव पशुरूपमभिनिर्माय वपोत्खननादि कृतवांस्ततोऽसमाप्त एव कर्मणि तूपरः पशुरुत्थित इतीदृशमिदं कर्म प्रत्यासन्नफलम्। एवं च महता यत्नेन प्रजापतिना चरितमिति सर्वं सत्यमेव । प्रतिसृष्टि

यत्तु फलमनुष्ठानस्य परस्तात् पुरुषस्य भविष्यति । तद्विधेरुपरि तस्य निर्वोढव्यम् । स तत्र प्रमाणानीत्यर्थः । शुक्तिकादृष्टसत्यत्व इति । [°सत्यरजत इति] शुक्तिकायामदृष्टसत्यः उत्पन्नभ्रान्तिरित्यर्थः। ततोऽज इति। यद्यप्यर्चिषा वायुसंयोगो बीजानामकारणं तथापि सामान्येन वायुसंयोगस्य बीजाद्युत्पत्तौ कारणत्वादेवमुच्यत इति।

एतस्मिंस्तु प्रक्रम इति। विधिप्रक्रान्तः तस्मिन्नेव रूपे विधिप्रक्रमे स्तुतित्वं हीयते। वाय्वादिभ्यो वृष्टयादयो निर्गता वह्निः संस्पृश्यन्ते[?] ततो बीजादयः सम्भवन्तीत्युक्तेन काचित् पशुयागप्राशस्त्यबुद्धिरुपजायत इति। मन्त्रार्थवाद इति । सृष्टिप्रलयविषयमन्त्रार्थवादोत्थापितस्य ज्ञानस्य निरालम्बनत्वानुपपत्तेस्ताविष्येते । इतिहासपुराणयोश्च तन्मूलयोरेव तदुपोद्बलकत्वं प्रत्यक्षादिमूलत्वेन वा प्रामाण्यमिति । प्रजापतिरेव योगीति । योगित्वमात्मनः पशुरूपत्वं निर्मायेत्यत्रोपयोक्ष्यत इति। पुण्यकर्मोद्भवेति। पुण्यस्य कर्मणः फलदानायोद्भव इति कृतयुगेऽभ्युपगम्यते वेदेतिहासपुराणेषु। अतः पापारभ्यस्य पशुशरीरस्याभाव इति

चतुर्लिङ्गन्यायेन तुल्यनामप्रभावव्यापारवस्तूत्पत्तेर्नानित्यताप्रसङ्ग इति। कर्मसु कौशलेन दीव्यन्तीति देवा ऋत्विजः, ते देवयजनाध्यवसानानन्तरं दशपूर्णमासयोरनभ्यस्तं सौमिकं कर्मराशिमालोक्य कथमविदितं करिष्याम इत्याकुलीभावसामान्याद् दिङ्मोहाभिधानम्। तथा च लोके कर्तव्यतासु दिशो मे परिभ्रमन्तीति वक्तारो भवन्ति। तत्र तद्व्युदासेनादितियागः प्रशस्यते। कथं तु तद्व्युदसनम्। अवधारणावकाशदानात्। यावद्धि प्रायणीयायां प्राकृतानि समभ्यस्तानि कर्माणि क्रियन्ते तावदितरेषु भविष्यत्सु प्रणिधानं भवति। अन्यथा सर्वस्मिन्नप्राकृते निरवकाशत्वादनवधारणं स्यात्। तेनादित्येनैवैतज्ज्ञापितमिति मोहापनयेन स्तुतिः ॥१०॥

इह सर्वं क्रियमाणं मनसा सङ्कल्प्य वाचा चाभिधाय क्रियते तदत्यन्तान्तरङ्गभूतयोरप्यनयोर्दूरेण हिरण्यादूनत्वं स्तेयानृतवादयोगादिति। या निन्दा तन्मात्रपर्यवसायिनी सा निषेधफला भवति। विधिपरा तु स्तुत्यर्था जायते। तदुपपादनस्य दृष्टार्थत्वात्। यथा वक्ष्यति न चेदन्यं प्रकल्पयेत्

कर्मसु कौशलेन दीव्यन्तीति देवाः इत्युक्त्वा के पुनस्त इति। अत आह — ऋत्विज इति। एवं देवपदालम्बनमुक्त्वा दिङ्मोहाभिधानालम्बनमाह — देवयजन इति। दर्शपूर्णमासाभ्यामिष्ट्वा सोमेनेज्यते। तत्र सोमस्यापूर्वत्वादकृतपूर्वाणि तस्याङ्गानि बहूनि कर्त्तव्यत्वेनोपस्थितानि आकुलयन्ति। कथं करिष्याम इति। अस्याकुलीभावस्येति। सम्बन्धः आकुलीभावस्याविशेषितस्य व्यवहाराङ्गत्वान्नित्यस्यापेक्षता विशेषणं प्रतीतिसमासः — अवधारणेति। प्रायणीयो दर्शपूर्णमासप्रकृतिः सोमयागाङ्गं प्रथमञ्च क्रियत इति ॥१०॥

यदि हिरण्यादूनत्वं वाङ्मनसयोरुच्यते। तदा निन्देयं निषेधशेषः स्यात्। कथं विधिशेषत्वमस्य? उच्यत इत्याशङ्क्याह — या निन्देति। यदीयं निन्दा निन्दामात्रे पर्यवस्येत् भावेन निषेधशेषः, हिरण्यस्तुतिपर्यन्तत्वात् त्वेषा नेतव्या। यतो विधिपरैषा, विधिनैकवाक्यता तस्याः प्रत्यक्षा। तेन लक्षणया हिरण्यस्तुतिः विध्यपेक्षितत्वाददृष्टं प्रयोजनम्। इतरथा प्रतीतैकवाक्यताबाधो निषेधस्य च कल्पना स्यादिति। न चेदन्यं प्रकल्पयेदिति। अग्निहोत्रे श्रूयते — जर्तिलयवाग्वा जुहुयात् गवीधुग्यवाग्वा, न ग्राम्यान् पशून् हिनस्ति नारण्यानथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च पयसा

प्रक्लृप्तावर्थवादः स्यादिति [मी० सू० १०।२।६।] ।।११।।

तस्माद्धूम एवेति दिवाग्निरादित्यं गच्छतीत्यस्योपपत्तित्वेन । तदिदं किमर्थमुच्यते । मिश्रलिङ्गाग्निहोत्रमन्त्रविधिस्तुत्यर्थम् । कथं पुनरग्निर्ज्योति-र्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेत्यनयोर्मिश्रलिङ्गत्वम् । यदा विविक्तावेवाग्निसूर्यौ देवतात्वेनोपलभ्येते ।

केचिदाहुः, अग्निर्ज्योतिरित्यत्र ज्योतिः शब्दः सूर्यवाची, सूर्यो ज्योति-रिति पुनरग्निवाची । तेनोभौ मिश्रलिङ्गाविति । तदयुक्तम्, ज्योतिः श्रुतेस्तेजःसामान्यवाचित्वेनोभयत्र सामानाधिकरण्येनोपपत्तेः ।

अन्यतरपर्यायश्च सन्नितरत्र न प्रयुज्यते । न हि यो यत्पर्यायः स तेनैव सह प्रयुज्यते । सूर्यवाची सन् प्रातर्मन्त्रे न प्राप्नोति । अग्निवाची सायंमन्त्रे । तस्मादुदाहरणं भ्रान्तिलिखितमितीमावुदाहर्तव्यावग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहा सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहेति । तद्विधेश्च स्तुतिः प्रथमविहितकेवल-देवत्यमन्त्रपर्युदासेन मिश्रलिङ्गविधानोपपत्तिरियमुच्यते । यदनयोर्मिश्रत्वं दिवाग्नेरनुप्रवेशान्नक्तं चादित्यस्येति केवलेज्या न युक्तेति । अस्मिन्नपि तु व्याख्याने पर्युदसनीयत्वेनैव पूर्वमन्त्रोदाहरणम् । इतरौ तु स्तुतिभागिनौ मिश्रलिङ्गाभिधानादेव ज्ञास्येते इति नोच्चारिताविति भाष्यं नेयम् ।

अग्निहोत्रं जुहुयादिति । तत्र सन्देहः, किं जर्तिलयवाग्वा जुहुयादिति विधिः, अनाहुतिर्वै जर्तिला इति प्रतिषेधः, उतोभावपि, पयोहोम-स्तुत्यर्थाविति । तत्र ग्राम्यपशुहिंसार्थवादोन्मीलितः प्रत्यक्षो जर्तिलविधिः प्रतिषेधश्चेति । पर्युदासासम्भवादिति प्राप्तेऽभिधीयते । न चेदन्यं प्रकल्पयेत् प्रक्लृप्तावर्थवादः स्यात् आनर्थक्यात् परं सामर्थ्याच्च [मी० सू० १०।२।६, ७।] न चेदन्यं पयोविधिं प्रकल्पयेत् । अतो विकल्पफलो निषेधोऽर्थवान् भवति । सति तु तस्मिंस्तेनैव विकल्पे सिद्धे निष्फलः स्यात् । अतो जर्तिलविधिनिषेधस्य च परेण पयोविधिना स्तावकत्वेन सम्बद्धं सामर्थ्या-दर्थवादार्थत्वम् । तत्र जर्तिलहोमः प्रशस्यते । तन्निषेधेन पयोहोमस्य प्रशस्ततरत्वज्ञापनायेति ।।११।।

अन्यतरपर्यायश्चेति । अग्निसूर्ययोरन्यतरस्याग्नेः पर्याय इतरत्र सूर्यमन्त्र एव प्रयुज्येत नाग्निमन्त्रे । एवं सूर्यपर्यायः सूर्यमन्त्रे न प्रयुज्येत इति ।

अथ वोभयोः केवलमिश्रलिङ्गयोर्मध्ये पठितोऽयमर्थवादः । तत्र उभयदेवत्ययोरन्या प्रशंसा, इतरयोः पुनरियं, यस्माद्दिवाग्निरादित्यं गच्छति तस्मात्सूर्य एव तदा ज्योतिः । एवं नक्तमग्निरतस्तौ व्यवस्थितावेव यष्टव्याविति स्तुतिः । कथं तु धूम एवेत्यवधारणा । दूरस्थैर्भूम्ना दिवा धूम एव गृह्यते रात्रावर्चिरिति केनचिदंशेन स्तुत्यालम्बनम् ॥१२॥

प्रवरे प्रव्रियमाणे यजमानो धत्ते:द् देवाः पितर इत्यादि । तत्प्रशंसार्थमुक्तमब्राह्मणोऽपि ब्राह्मणो भवति प्रवरानुमन्त्रणेनेति । तत्र प्रसिद्धब्राह्मणत्वानामेव ब्राह्मण्यलाभो निष्प्रयोजन इति तदुपपत्त्यर्थमुक्तम् — न चैतद्विद्म इति । ज्ञायमाने त्वज्ञानवचनं दुर्ज्ञानत्वात् । यत्सुखेनाज्ञातं[1] तदज्ञानमेव । तच्च स्त्र्यपराधनिमित्तम् । सत्यपि च स्त्र्यपराधे यदि मातुरेव क्षेत्रिणो वा पुत्रः स्यात्ततस्तयोः प्रसिद्धजातित्वान्नैव दुर्ज्ञानता भवेत् । तयोरप्येवमेवं तत्पूर्वजयोरित्यनादिन्यायेन जातिरवधार्येतैव । यतस्तु 'माता भर्त्री[2] पितुः पुत्र'

अथ वोभयोरिति । भाष्योदाहृतयोरेव मन्त्रयोः शेषोऽयं भवत्विति वक्तव्ये । ननु सन्निधावयं पठितः, तस्यैवायं शेषः । कथमनियमेन व्याख्यायत इति । चोद्यानवकाशायोक्तम् — उभयोर्मध्ये पठित इति ।

दूरस्थैर्भूम्ना इति । यथा सिंहशब्दः सिंहमतिक्रम्य गौणे प्रयोगे तदीयाद् गुणानुवादाद् ते दृशिरपि दर्शनविषयेऽतिशयदूरत्वे तथाविधश्चैवकारेण धूमेऽवधार्यते, नार्चिरिति चार्चिषि निषिध्यते ।

यद्येवं केन दर्शनमुपात्तम् । न ह्यत्र देवदत्तपदवत् पदान्तरमस्ति । उच्यते, सिंहपदादपि प्रथमसिंहगता एव गुणाः प्रतीयन्ते । यदा देवदत्तपदसामानाधिकरण्यं तदा तद्योगः । इह अन्यस्यानुपादानाद् दर्शनातिशयेनैव दर्शनोपादानम् । यथा सिंहगतत्वेन तद्गुणानां वचनं निष्फलमिति । इतराकाङ्क्षेनैवमत्र वैफल्यम् । अर्चिषि तदभावस्य प्रतिपाद्यमानत्वात् । तेन धूमो यथा दृश्यते तथा नार्चिरित्यस्यार्थे धूमो दृश्यते नार्चिरित्युक्तमिति ॥१२॥

यत् सुखेनाज्ञात[न]मिति । तत्रापि जानातिना तद्विषयं सौकर्यमुपादाय तस्य न ज्ञाननिषेधः । माता भर्त्री इति । धारणात् पोषणाच्च स्मर्तॄणां दर्शनमिति । 'माता भर्त्री पितुः पुत्रो येन जातः स एव सः' इति स्मरणात् ॥१३॥

---

१. °नाज्ञानमिति मुद्रितपुस्तकपाठः । २. भस्त्रा इति मुद्रितपुस्तकपाठः ।

इति स्मर्तृणां दर्शनं जनयितुश्च नानाजातित्वोपपत्तिस्तेन वर्णसंकरः। वेदेऽपि चाप्रमत्ता रक्षत तन्तुमेनमिति जातिविच्छेददर्शनं स्त्र्यपराधकर्तृपुत्रनिमित्तमेवोपपद्यते । अन्यथा ह्यपरिरक्ष्यमाणेऽपि नैव स्वजातितन्तुविच्छेदो भवेत् । तेनास्ति प्रशंसावकाश इति । निरूढब्राह्मण्यप्रवरसंकीर्तनात्तत्प्रभवोऽयमिति ज्ञानाद् ब्राह्मणः कृतो भवतीति स्तुतिः ॥१३॥

यत्तदानीमेवोत्पद्यते तदाकालिकम् । तच्च सर्वलोकस्याभिमतं न यच्चिरभावि । तस्मात्प्रवर्ग्यकाले दिक्ष्वतीकाशकरणं प्राग्वंशस्य प्रशस्यते । तद्धि सद्यःफलं धूमक्लेशाननुभवात् । इतरत्तु कर्मजन्यं सत्कदाचिद्भविष्यति । कस्तद्वेद शास्त्रमात्रगम्यं हि तत्, इदं तु सर्वप्रत्यक्षम् । तदपेक्षया च ज्ञायमानेऽप्य ज्ञायमानवचनमितरप्रशंसार्थम् । पाठान्तरमाकालिकडाद्यन्तवचन इति । अकालिकमिति वा पाठः । काल इति लोके विप्रकर्ष उच्यते । तत्र भवं कालाट्ठञिति [पा० सू० ४।३।११।] ठञि कालिकं न कालिकमकालिकम् ॥१४॥

अध्ययनविधिशेषत्वादफलविधिः सन् यथाविज्ञातमुखशोभावाजिमत्वानुवादो विज्ञायते । न चैक एव प्रकारो मुखशोभायाः संस्थानं रमणीयता लावण्यं चेति । स्त्रीविषयं ह्येतत् । विदुषां पुनः पदवाक्यन्यायोद्गारि मुखं शोभते, तेनात्मना मुख्ययैव वृत्त्या शोभते । पुत्रश्च वाजवान् ब्रह्मवर्चसद्वारेण । अथापि गौणता तथापि स्तुतिपरत्वाददोषः ॥१५॥

संस्कारकर्मत्वान्न फलविधिः । स्तुतेस्त्वालम्बनं निमित्ते नैमित्तिकवदुपचारात् । सर्वकामनिमित्तानां कर्मणां सामान्यसाधनभूतानग्नीनवाप्नोतीत्यर्थः । सूत्रं चैवं योज्यते । सर्वकामनिमित्तैः कर्मभिराहिताग्नित्वादिदानीमधिकृत इति वक्तव्ये सत्याधिकारिकं सर्वत्वं स्तोतुमवाप्तावुपचरितम् ।

ननु चाकाशगमनसुरकन्यालाभादयोऽत्यन्तासन्तः सर्वशब्देन वैदिकेषु कर्मसु निमित्तद्वारेणापि न शक्यन्तेऽनुवदितुमतः पुनः सूत्रमुच्यते । यथैवौदनादिषु सर्वशब्दोऽधिकृतापेक्षत्वान्न त्रैलोक्यं गृह्णाति तथात्राग्निकर्माधिकृतफलग्राही भविष्यतीत्यदोषः ॥१६॥

तच्चैतत्सुमानस्वर्गादिफलेष्वग्निहोत्रादिषूपयोक्ष्यत इत्युपन्यस्तं साधनानुरूपत्वात्साध्यानाम् । सर्वे हि कामाः पूर्णाहुत्यावाप्यमानाः स्तोकस्तोकाः प्राप्यन्ते । तत्र फलभूमार्थिनः कर्मान्तरविधिरर्थवान् भविष्यतीति स्थितं चोद्यते ।

युक्तं लोके कृष्यादिफलानां प्रत्यक्षावगतत्वात्साधनानुरूपं जन्म। पूर्णाहुत्यादिषु त्वत्यन्तशास्त्राधीनत्वादविशेषश्रुते फले किंमूला विशेषकल्पना। न ह्यग्निहोत्रज्योतिष्टोमस्वर्गयोः कश्चिद्विशेषः श्रूयते। न चानुमानमीदृशे विषये समर्थम्। तदभिधीयते। विधिसामर्थ्यादेवेदं सिद्धम्। कथम्। यदि ह्यल्पान्महतश्च कर्मणः समं फलं जायेत, ततोऽर्के चेन्मधु विन्देतेत्यनेनैव न्यायेनाल्पेन सिद्धे महति न कश्चित् प्रवर्तेत। तत्र विधिशक्तिबाधः स्यात्। अविहतशक्तिस्तु सन् **अर्थाद्वा कल्पनैकदेशत्वादिति** [मी० सू० १।४।२५।] विधिरेव फलाधिक्यमङ्गीकरोति। अतो यथा विश्वजिदादौ फलसद्भावः प्रमाणवानेवमिह तद्विशेष इति। किञ्च—

कर्मणामल्पमहतां फलानां च स्वगोचरः।
विभागः स्थानसामान्यादविशेषेऽपि चोदिते ॥

यथैव क्रमाम्नातानामङ्गाङ्गिनां प्रथमस्य प्रथमं द्वितीयस्य द्वितीयमिति विनियोगव्यवस्था तथैव कर्मगोचरेऽल्पस्य कर्मणः परिमाणसामान्येन फलगोचरेऽल्पमेवोपतिष्ठते। मध्यमस्य मध्यमं महतो महदिति स्थानमेव विनियोजकम्। स्मरणमप्येवमेव। चातुर्मास्यसोमेषु च फलार्थवादो यदाग्निहोत्रं

कर्मणामल्पमहतामिति। कर्माण्यग्निहोत्रादीनि प्रकर्षापकर्षवन्ति स्वर्गं प्रति चोद्यन्ते। स्वर्गाणाञ्च प्रकर्षाप्रकर्षौ कालतः साधनविशेषाच्च विशेषोपलम्भात् रूपतोऽपि विद्येते। तत्र स्वर्गसाधनानां कर्मणां मध्येऽल्पं कर्म गृहीत्वा तस्य फलविशेषापेक्षाया अल्पत्वेन सामान्येन शीघ्रमुपस्थितमल्पं गृहीत्वा निराकाङ्क्षीभवति। कर्मणां गोचरः फलानि। तत्र यो विभागोऽस्य कर्मण एतत्फलविषयत्वमिति। तथा फलानां गोचरः कर्माणि तत्र विभाग एतत् कर्मविषयमिदं फलमिति।

अथ वा कर्मणामल्पानां महतां च गोचरः कर्मसमुदायः। तत्रैकस्मिन् कर्मसमुदायेऽस्य फलस्येदं कर्मसाधनम्, अस्य फलस्येदमिति यः फलं प्रति विभागः एवं फलानामपि वक्तव्यम्। तथा च व्याचष्टे — कर्मगोचरेऽल्पस्य कर्मण इति। तथा स्मरणमप्येवमेवेति।

ब्रह्महत्याश्वमेधाभ्यां न परं पुण्यपापयोः
आभूतसंप्लवं तास्तं फलमुक्तं तयोर्द्विज ॥ इत्यादि।

जुहोत्यथ दश गृहमेधिन आप्नोत्येकया रात्रियेत्यारभ्य न्यूनाग्निहोत्रदशसंवत्सरप्रयोगादिभिरेकदर्शपूर्णमासादिप्रयोगावाप्तिवचनं कर्माल्पत्वमहत्त्वकृतं फलभेदं दर्शयति ।।१७।।

यथैव वाङ्मनसयोर्निन्दा हिरण्यस्तुत्यर्था तथा शुद्धपृथिवीनिषेधः प्रक्लृप्तावर्थवादः स्यादित्येवं हिरण्यनिधानस्तुत्यर्थो न प्रतिषेधमात्रफलः । नान्तरिक्षे न दिवीत्यौचित्येन शुद्धपृथिवीनिषेधसमर्थनायैव यथान्तरिक्षे दिवि वा चयनं न प्रसिद्धं तथा हिरण्यरहितायां पृथिव्यामिति स्तवनम् । अनित्यसंयोगो गतार्थः परं तु श्रुतिसामान्यमिति । [मी० सू० १।१।३१।] प्रयोजनं रात्रिसत्रे पूर्वपक्षे स्वर्गः फलं स्यादिति सिद्धान्ते त्वर्थवादस्थमेव फलम् ।।१८।।

## विधिवन्निगदाधिकरणम्

एवमानर्थक्योपाख्यानादिप्रतियोगिष्वर्थवादेषु व्याख्यातेष्विदानीं विधिप्रतियोगिनो विचार्यन्ते । कुतः संशयः । पूर्वत्र हि स्वार्थानुपयोगित्वेन दूरलक्षितस्तुतिग्रहणमङ्गीकृतम् । तत्संभवे तु स्तुतिरप्यनर्थकतुल्यापद्यते । विध्यंशश्च न कथञ्चनान्यस्मात् सिध्यति । प्ररोचना पुनः कथञ्चिद्विध्यु-

यद्यर्थवादान् गृहीत्वा विधिः प्रवर्तयति, यदि वा केवलोऽनपेक्षितार्थवादः । सर्वथा यथा विज्ञानांशत्रयोपेता भावनानुष्ठेयेति ।।१७।।

नानुष्ठानोपयोगिता विचारस्येत्याशङ्क्यार्थभावनागतं विशेषं पक्षद्वयेऽपि दर्शयति — प्रयोजनमिति । ।।१८।।

एवमानर्थक्योपाख्यानादिप्रतियोगीष्विति । येषामर्थवादत्वे प्रतियोगिविरोध्यानर्थक्यमुपाख्यानरूपता आदिशब्दोपात्ता चादृष्टार्थोपयोगितां ते व्याख्याताः, यथा अर्थवादा एवेति । तत्रानर्थक्यं प्रयोजनवत्यप्रामाण्यम् । वृत्तान्तान्वाख्यानमध्ययनस्य चादृष्टार्थतेति विरोधीन्येतानि ।

अथ वा आनर्थक्यं प्रतिपाद्य शून्यता उपाख्यानरूपता च पक्षान्तरमिति । इदानीं विधिप्रतियोगिन इति । सामान्येनोक्तमर्थवादत्वं केषुचित् शङ्कितेन विध्यर्थत्वेन संशयास्पदीकृतं विचार्यत इति । कुतः संशय इति । पक्षद्वयप्रतिभानात् संशयो भवति । तत्रार्थवादतायाः प्रत्यायितत्वात् विधित्वप्रतिभा कुत इति प्रश्नः ।

तदेतद् दर्शयति — पूर्वत्र हीति । विध्यंशश्चेति । साध्यसाधनेतिकर्तव्यताविशिष्टभावनाकर्त्तव्यता विधिः तस्यांशः साध्यं न तत्साध्यपदादन्यतः सिद्ध्यतीति ।

द्देशादप्युपपद्यत इत्युक्तं पुरस्तात् । अपि च प्रधानं विधिरङ्गं स्तुतिस्तत्र प्रधानविशेषसंभवि[1]नस्तद्गामित्वमेव युक्तम् । समाप्ते च विध्युद्देशेऽर्थवादः प्रवर्तते, तत्प्रक्रमावस्थायामेव तु भावनांशाः सन्निपतन्ति । विशेषेण तु फलं प्राथम्यप्राधान्याभ्यामित्यादि मन्वानोऽपूर्वत्वादिति वदति । तदपेक्षया च स्तुति-

उक्तमिति । अर्थवादाधिकरणे योऽसौ विध्युद्देशः स शक्नोति निरपेक्षो विधातुमित्यनेन ।

ननु साध्यस्यार्थवादात् सिद्धिरङ्गीकृता रात्रिसत्रे । नैतत्, नहि यथा विधेः स्वार्थपर्यवसानमुपादायैव प्ररोचनामेवार्थवादानां फलमुपादाय स्तावकत्वम् । तेन फलमन्तरेण विधिविषयस्यापरिपूर्णत्वात् स्तावकं पदं फलपर्यन्तं नेतव्यम् । तत्रेदमुच्यते ,

फलपदमेतदस्तु यो यथाविधिरन्यत एव फलमपेक्ष्यते नैवं स्तुतिर्विध्यन्तर्गतत्वात् । प्रधानविशेषसंभविन इति । विधिः स्तुत्यानुगृह्यते, कथं नाम स्वकार्यं करिष्यतीति । एवं विधिकार्यमेव स्तुतेः प्रयोजनम् । यदि च तत्रैव साक्षादुपयोक्तुं शक्यते किमिति परम्पराश्रीयत इति । समाप्ते च विध्युद्देश इति । प्रत्ययमात्रेणोपक्रान्तो विधिः त्र्यंशभावनालाभात् प्राङ्निर्विषयो लब्धस्वरूपस्तामासाद्य स्वरूपं लभते । तेन प्रत्ययोपक्रमोंऽशत्रयप्रतिपादनावधिः विधिबोधनात् विध्युद्देशः पुरुषप्रवृत्तयेऽनुग्राहिकां स्तुतिमपेक्षते । तत्र भावनांशत्रयोपेक्षायां सम्बन्धुं शक्नुवन् किमिति प्रतीक्षत इति ।

प्राथम्यप्राधान्याभ्यामिति । साधनं किं फलस्य मे साधनानुग्रहः को वेत्येवं फलसम्बन्धोत्तरकालीनेतरयोरपेक्षा । फलस्य तु नाशान्तरसम्बन्धोत्तरकालीनेत्यंशत्रयनिरीक्षणे फलस्य प्राथम्यं तथा फलार्थोव्यापारो भावनासाफल्यमनासाद्य स्वरूपाद्धीयत इति । भावनारूपनिरीक्षणेऽपि फलस्य प्राधान्यात् प्रथममपेक्षा ।

अथ वा प्राथम्यं भावनया प्रथममपेक्षितत्वं, प्राधान्यं च साधनेतिकर्तव्यतयोस्तादर्थ्यं, तेन फलसम्बन्धपूर्वकस्तदपेक्ष्येतरयोः सम्बन्ध इति — इत्यादि मन्वान इति । एष्वर्थेष्वपूर्वत्वादित्यभिधानमित्यर्थः । तत्र प्रथमे-

१. प्रधानविशेषणसंभविन इति मुद्रितपुस्तकपाठः ।

मात्रमनर्थकं मन्यते । ननु चैवंजातीयकः फलविधिरुतार्थवाद इति विचारश्चतुर्थेऽपि द्रव्यसंस्कारकर्मसु [मी० सू० ४।३।१।] इति भविष्यति । अतो नेह प्रस्तोतव्यः ।

तत्र केचिदाहुः, अनेन गतार्थत्वात्तत्रैवैष पर्यनुयोगो युज्यते, न त्विदं पुनरुक्तमिति । सत्यमेवं यदि तु तत्कालप्रतीक्षणात् किञ्चित् परिहारान्तरं लभ्यतेऽतस्तत्रान्विच्छेम । अथ पुनरिहैव शक्यते वक्तुं तथा सतीदानीमप्युच्यमाने मन्दो दोष इति ।

अत्रापरे वदन्ति, तेन फलविधित्वनिराकरणमात्रमिह त्वर्थवत्त्वाय[1] त्वर्थवादः स्यादिति । तत्र वक्ष्यति तद्विधित्वनिराकरणमात्रपरमेव प्रष्टव्यम् । तदयुक्तम् । यतस्तेन फलविधित्वात् प्रच्यावितानामानर्थक्यप्रसक्तौ पूर्वाधिकरणेनैव स्तुत्यर्थता साधिता । तथा च दर्शितं शोभतेऽस्य मुखमित्यादिषु ।

केचित् पुनराहुः, युक्तं वायुर्वै क्षेपिष्ठेत्यादीनां स्तुतित्वम् । ऊर्जोऽवरुद्ध्या इति पुनर्यथा फलविधित्वात् प्रच्याव्यते, तथैव विसंवादेन स्तुतित्वादपीति कामं विधिर्भवतु, येन कालान्तरभावित्वेन कथञ्चिद्विसंवादो

नार्थान्तरपूर्वश्रौत इत्यर्थः । द्वितीयेन प्रमाणान्तरपूर्वक इत्यर्थः । तृतीयचतुर्थयोस्तु नापेक्षान्तरपूर्वः प्रथमापेक्षित इत्यर्थः । प्रधानसम्बन्धोऽपि हि प्रथममपेक्ष्यते । तत्रानर्थक्यमेवाङ्गसम्बन्धादिति । आदिशब्देनान्यापि सम्भवन्ती युक्तिः परिगृहीता । यत एवं पूर्वपक्षहेतुरस्ति । अतः संशय इति ग्रन्थसमाप्तिरिति ।

द्रव्यसंस्कारकर्मस्विति । 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' इति द्रव्यफलश्रुतिः । संस्कारे, 'यदाङ्क्ते भ्रातृमेव तद्वृङ्क्ते' इति । कर्मणि कर्म वा एतद्यजमानस्य यत् प्रयाजानुयाजा इति ।

किमेते फलविधयः फलार्थवादा एवेति संशयफलविधित्वनिरासेनार्थवादा इति वक्ष्यति द्रव्यसंस्कारकर्मसु परार्थत्वादिति [मी० सू० ४।३।१।] । उपपत्तयस्त्वत्रैव *वार्तिके* भविष्यन्तीति । अयुक्तं[1] । वायुर्वै क्षेपिष्ठेति । अनेनैतद् वदति चतुर्थाधिकरणेन फलविधिनिराकरणमर्थवादत्वेन । साफल्यसंभवे प्रतितिष्ठति । अत एव च तत्र दर्शितमर्थवादः स्यादिति । अतोऽत्र विसंवादेनार्थवादत्वासंभवे पुनरपि फलविधित्वं चतुर्थाधिकरणापवादत्वे-

१. त्वर्थवादनाय इतिकाशी मुद्रितपाठः ।

१. युक्तमिति मुद्रितपुस्तकपाठः ।

निवर्तत इत्यारम्भः । तदप्ययुक्तम्, अपि च वेदे व्यक्तं वि[1]संवाद इति अन्वाचयहेतु[2]रपुनरुक्तः स्यात् । अधिकरणशरीरं तु तदेव विसंवादोऽपि च गुणवादस्तु [मी० सू० १।२।१० ।] इत्यनेन न कश्चिदपरिहृतः । पुनरपि च तावन्मात्रमेवोत्तरं भविष्यति ।

तस्माद्विधिर्वा स्यादित्यविशेषोपादानाच्चतुर्थे च फलश्रुतिग्रहणादिहाशेषद्रव्यगुणक्रियादिविधिसरूपास्तत्र फलविधिसरूपा एवोदाहरणमित्यपरे ।

तथा च विधिश्चानर्थकः क्वचित्प्रकरणे च संभवन्निति चाप्सुयोनिर्वा अश्वोऽप्सुजो वेतसो यो विदग्ध इति चोदाह्रियते । अन्यथा फलविधिमात्रोपन्यासे तदसंबद्धमेव स्यात् । इहापि तस्य तावद्विशेषविषयत्वादिदमगतार्थं भवेत् ।

अनेन तु सामान्यतः सर्वविषयावरोधिना तत् पुनरुक्तमेवेति व्यवस्थया केचिदुदाहरन्ति । अत्र द्रव्यादिविधीनेव तत्र फलविधीनेव *भाष्यकारो*दाहरणमतन्त्रीकृत्योदाहरणान्तरं दातव्यमिति ।

अत्र वदामः, किमधिकरणद्वयमवश्यारब्धव्यं येनैवमुदाहरणव्यवस्थाश्रीयते । न ह्यु दाहरणभेदादधिकरणं भिद्यते । मा भूद् यथाव्यवस्थितेऽपि खादिरौदुम्बरत्वभेदादपौनरुक्त्यम् । न्यायविषयत्वेन त्वधिकरणानां तद्भेद एवापौनरुक्त्यम् ।

नोद्भवति । तदनेन निराक्रियत इति । अन्वाचयहेतुरिति । एवमपूर्वमर्थं विधास्यति स्तुतिर्वादमात्रमनर्थकमिति [मी० सू० १।२।१८।] । पूर्वपक्षहेतुः, न स्तुत्यनुपपत्तिः । गुणवादस्त्विति [मी० सू० १।२।१० ।] निराकृतत्वादनेनैव साधिते विधित्वेनान्वाचयहेतुं *भाष्यकृद्* दत्तवान् । अपि च वेदे व्यक्तं विसंवाद इति । स्तुतिरपि क्लेशसाध्येति । अधिकरणशरीरं तु तदेवेति । तस्माच्चतुर्थाधिकरणस्येति । न च विसंवाददर्पणैवापूर्वत्वादित्युच्यते । अस्य विसंवादस्य गौणत्वेनापि परिहर्तुमशक्यत्वादिति वक्तव्यम् । यतो गुणवादत्वेन परिहारः सर्वगामीत्याह — विसंवादोऽपीति । तथा च नान्यः परिहारो दास्यत इत्याह — पुनरपीति ।।

ननु उपपत्तित एवाधिकरणभेदारम्भ आपद्यते । किमिदमुच्यते — किमवश्यमारब्धव्यमिति । तत्राह — नह्यु दाहरणभेदादिति । परकृतिपुराकल्परूपेणान्ये षष्ठ इति ह स्माह कुर्वाणं माषान्मे पचतेति परकृतिः । उल्मुकैर्ह स्म विद्वांसः पूर्वे समाजग्मुरिति पुराकल्पः । स विधिरर्थवादो

---

१. असंवाद इति मुद्रितपुस्तकपाठः । २. ह्यभ्युच्चय हेतुरितिमुद्रितपुस्तकपाठः ।

रुक्त्ये हेतुः । द्रव्यादिविधयोऽपि न सर्वे विचारिताः । केचित्तत्सिद्धिसूत्रे [मी० सू० १।४।२३।] । केचिन्निवीताद्यधिकरणेषु । परकृतिपुराकल्पद्वारेणान्ये षष्ठे । यदृचा स्तुवत इत्येवमादयोऽ¹र्थैकत्वाद्विकल्प [मी० सू० ९।२।२९।] इति नवमे । जर्तिलगवीधुकविधिसरूपा दशमे । अतश्च न पुनरुक्तता महान् दोष इत्येव वक्तव्यम् ।

अथ वैकस्यैव न्यायस्य क्वचित् कश्चिदंशः शोध्यत इति पुनरारम्भः स्पष्टं वा विषयनानात्वमेवं वर्णनीयम् । सर्वविधिसरूपाणां केवलं विधित्वनिराकरणेनार्थवादत्वमिह सिद्धम् ।

यस्तु चतुर्थे पुनरारम्भः सोऽर्थवादकल्पिते विधौ फलाकाङ्क्षावेलायामन्यार्थोपात्तमपि क्रतुप्रयोगवचनात्तदेव सन्निहिततरं क्लृप्तसंबन्धस्य च विशेषमात्रं सुकरम् । इतरथा संबन्धस्तद्विशेषश्चोपकारकत्वं कल्पनीयमिति रात्रिसत्रप्रतिष्ठादिवत्फलविधित्वमपीति पूर्वपक्षाभिप्रायः । कथञ्चित्प्रयोजनान्तरे

वेति सन्देहे विधिरर्थत्वात् सति च विधित्वे वृष्णिसगोत्राणां सर्वेषां वेति सन्देहे येषां कीर्तितस्तेषामेव कर्तव्यो विज्ञायत इति । तद्गोत्राणामिति प्राप्तेऽभिहितम् नात्र वृष्णिकर्तृको माषपाकः स्तूयते, अन्यस्य स्तावकस्याभावात् । किन्तु तत्कृतत्वेन माषपाकमात्रस्तुतिः । स्तुतेश्च विधिः स्तुतिविषयमात्रस्य न कर्तृविशिष्टस्य । तस्मात्सर्वेषां कर्तव्य इति । विध्यन्तरस्य तु प्रत्यक्षस्याभावात् तच्छेषितयार्थवादत्वेनात्र विधिकल्पना प्रमाणम् । अतः सर्वोऽयमर्थवाद इति । 'यदृचा स्तुवत' इत्येवमादयोऽर्थैकत्वाद्विकल्प इति [ मी० सू० ९।२।२९। ] नवम इति । 'ऋचा स्तुवते साम्ना स्तुवते' इत्यनयोरसुरागमनादिस्तुत्या विधित्वम्' । अतश्चार्थैकत्वाद्विकल्प [मी० सू०९।२।३०] इत्यभिधाय सिद्धान्तः कृतः वचनाद्विनियोगः स्यादिति [ मी० सू० ९।२।३१ ] । अस्त्यन्ते विधायकं वचनं, साम्ना स्तुवीतेति । तस्य प्रत्यक्षस्य विधेः स्तुतयेऽसुरगमनेन निन्दितमृचां कीर्तनम् । तस्मात् साम्नो विनियोगस्य न विकल्प इति ।

जर्तिलगवीधुकेति । अनुक्रान्तं रूपात्प्रायादिति [ मी० सू० १।२।११। ] सूत्रे । अथवा एकस्यैवेति । साध्यसाधनसम्बन्धाभावप्रतिपादनस्यात्र साधनप्रतीतिमूलाभावः । चतुर्थाधिकरणे तु साध्यप्रतीतिमूलाभावः परिशोध्यते । विवरिष्यते चैतदुपरिष्टात् । प्रथमं तु कीर्तनमस्यैव मुख्यत्वमिति बोधयितुमस्य सूक्ष्मत्वाच्छक्यते स्पष्टमप्यपौनरुक्त्यं वक्तु-

१. इत्यादय इति मुद्रितपुस्तकपाठः ।

लभ्यमाने नैकस्यानेकार्थता युक्ता, तस्मादर्थवादत्वमेवेति सिद्धान्तः। एतेन निवीताद्यधिकरणानि व्याख्यातानि। अथ वौदुम्बराधिकरणपूर्वपक्षं कृत्वा चिन्तास्ता प्रत्येतव्याः। विधित्वाभ्युपगमेन हि कस्य शेषः क्रतोः पुरुषस्य वेत्यादि विचार्येह सिद्धेनार्थवादत्वेनोपसंहारः। तथा परकृतिपुराकल्पयोः किं तद्गोत्राणामुत सर्वपुंसामिति चिन्तितम्। एवमूहबाधप्रसङ्गेन नवमदशमगता चिन्ता, तत्सिद्धि [मी० सू० १।४।२३] सूत्रे तु गुणवादनिमित्तमात्रकथनम्। अथ वा फलविधावेव यत्र भेदेन स्तुतिफलपदानि भवन्ति तदिहोदाहरणम्। यथा-त्रैवोर्गुदुम्बर ऊर्क् पशव इत्येतैरेव स्तुतिः। ऊर्जोऽवरुद्धचा इत्यनेन फलमिति। यत्र पुनस्तावन्मात्रेण फलं वा स्तुतिर्वा वक्तव्येति भवति ते चतुर्थ इति। अथ वा तत्र परार्थत्वादिति हेतुव्यपदेशात् प्रसिद्धेन च हेतुना व्यवहाराद् ये विज्ञातपारार्थ्यास्त उदाहरणं यथा यस्य पर्णमयो जुहूरिति। अत्र ह्यवश्यं जुह्वनुवादेन पर्णमयीत्वं विधातव्यं स्वातन्त्र्येण फलसंबन्धाशक्तेः। सर्वत्र हि गुणः फलाय चोद्यमानः कञ्चिदाश्रयमपेक्षते। न च प्रकरण-मन्तरेणाश्रयप्राप्तिः। तदिह यदि पर्णमयीत्वेन फलं भावयेदिति वचनं व्यज्येत किमाश्रितेनेत्यपेक्षायां किं सम्बध्यताम्। जुहूरिति चेन्न। वाक्य-भेदप्रसङ्गात्। सापि च प्राक् क्रियालाभान्नैव निराकाङ्क्षी भवति। न च

मितीतरेषां पक्षाणामुपन्यास इति। एतेन निवीताद्यधिकरणानीति प्रसिद्धेन मनुष्यसम्बन्धिना निवीतिनोपवीतस्तुतिर्निवीतस्य प्रसिद्धि-माक्षिपति। 'यथा वै दक्षिणः पाणिरेवं देवयजनमितिवत्'। यतस्तु स्मृतितः प्राप्तिः अतो न विधायकत्वम्। आदिशब्देन दिग्विभाग-परुषि दितादीनां ग्रहणमिति। तथा परकृतिशब्देनेयमपि कृत्वा-चिन्तेति दर्शितम्। एवमूहबाधेति। नेयं कृत्वा चिन्ता विधित्वे सति चिन्तान्तराभावात् प्रसङ्गात् सामान्येन साधितोऽन्यस्यायं क्वचिदप्युक्तः स्फुटीक्रियते व्युत्पाद्यत्वेन तु नारभ्यते अन्यत्रेति दर्शितम्। प्रसङ्ग-शब्देनात्र सामोहे प्रतिशाखमाम्नाता ऋग्विकाराः विलक्षणा न समर्प्येरन् नापि कल्प्यास्तेषामित्यस्य प्रसङ्गेन ऋचा स्तुवत इति विधिं मन्यमानस्य विकल्पबुद्धिरपोदिता नवमे। तथा विधिशिष्टानां प्रतिषेधे विकल्पो न

क्रियासम्बन्धे प्रमाणमस्ति । तस्मादनिर्वहणादेतद् वचनव्यक्तिपरित्यागेनेतराश्रयणम् । तत्र च जुह्वा जुहोतीत्यस्याः प्रकरणे निर्ज्ञातप्रयोजनत्वादविहितजातिविशेषायास्तदाकाङ्क्षायां सत्यां यावदेव पर्णत्वजातिरुपनीता तावदविज्ञातप्रयोजनावस्थत्वादङ्गतां प्रतिपद्यते । ततश्च निराकाङ्क्षीभूतायास्तस्मिन्नेव वाक्ये फलकल्पनानिमित्तं नास्तीति युक्तमर्थवादत्वम् ।

इह पुनर्वैकृतपशुप्रकरणे श्रूयमाणमौदुम्बरत्वमुदाह्रियते । न च तस्य प्रसिद्धं पारार्थ्यं येन चतुर्थाधिकरणविषयता भवेत् । कथम् ? अत्र हि न तावदप्राप्ते यूपे जातिविधानं शक्यम् । तत्प्राप्तिश्चेदवश्यं क्लृप्तोपकारप्रकृतखादिरत्वादिनैव निराकाङ्क्षेण भवितव्यम् ।

तत्कुतो जात्यन्तरस्य तादर्थ्येन विधिरतः फले विधानम् । यापि चाश्रयापेक्षा सापि प्राकृतकर्मसंबन्धिचोदकप्राप्तयूपग्रहणान्निवर्तत इत्यविघातः । तेन प्रागेव पारार्थ्यात् फलसंबन्धप्रसक्तिरवश्यं न्यायान्तरेण निराकर्तव्येत्येतदधिकरणारम्भः ।

इदमपरं मतम् । औदुम्बरवाक्यं जुह्वादिवाक्यं चोभयमुभयत्रोदाहरणम् । कथम् ? भावनांशान्तरविचारादपौनरुक्त्यञ्च । साध्यसाधनसंबन्धस्तावद् द्वयोरपि

---

बाध इत्यस्य प्रसङ्गेन जर्तिलयवाग्वा जुहोतीति । विधिमनाहुतिर्वै जर्तिलाश्चेति प्रतिषेधं मन्यमानस्य विकल्पबुद्धिरपोदिता दशम इति । इतराश्रयणमिति । जुह्वनुवादेन पर्णमयीत्वविधानस्येति । ततश्च निराकाङ्क्षीभूताया इति । अत्रावसरे चतुर्थाधिकरणोपन्यासः । सत्यपि जुह्वङ्गत्वात् नैराकाङ्क्ष्ये 'न स पापं श्लोकं शृणोतीति' फलसंयोगात् फलार्थता खादिरताया इव संयोगपृथक्त्वादिति पूर्वः पक्षः ।

सिद्धान्तस्तु एकस्मिन् वाक्ये सकृदुपात्तायां जुह्वङ्गत्वेन नैराकाङ्क्ष्येनापरोऽपि फलसम्बन्धः शक्यः कल्पयितुम् । अतोऽर्थवादता खादिरतायास्तु द्वे वाक्ये इति । तेन प्रागेव पारार्थ्यादिति । जुह्वनुवादेन पर्णजातिविधाने सिद्धे फलोपादानात्तादर्थ्यमप्यस्त्विति पूर्वः पक्षः सिद्धेन पारार्थ्येन निराकरिष्यते । अत्र तु फलानुवादेनौदुम्बरताविधिसंभावनया सिद्धे पारार्थ्ये तस्य हेतुत्वं संभवति । यथा ततिसद्धितः प्रागेव फलसम्बन्धो निराक्रियते — तदत्रोच्यत इति[?] । इदमपरं मतमिति ।

योग्यत्वेनोपात्तयोरवकल्पते नान्यथा । तत्र चतुर्थे साधनांशयोग्यविचार-मनादृत्याभ्युपेत्य वा केवलसाध्यांशविचारः । किमीदृशेन कामशब्दोपबन्ध-रहितेन वर्तमानफलसंबन्धाभिधायिना फलत्वं शक्यते गमयितुं न वेति विचारः। इह पुनः साध्यांशमनादृत्याभ्युपेत्य वा केवलसाधनांशविचारः। किमीदृशेन विधिविभक्तिरहितेन द्रव्यगुणक्रियाः कञ्चित्प्रति साधनत्वेन प्रति-पाद्यन्ते । नेति । तच्च[1] यदात्मना प्रतिपादितं भवति तत्प्रतियोगिविशेषापेक्षं सत्पदान्तराद्युपात्तेन तेन संबध्यते । तत्र साध्यमित्यवधृते परिशेषादवशिष्टं साधनं गम्यते । एवं साधनावधारणेऽपीति द्वावप्यंशौ स्वरूपेण निरूपयितव्यौ ।

**अनन्तरोक्तादपरं प्रथमोक्तस्य प्रपञ्चोऽयमिति । किमीदृशेन विधिविभक्ति-रहितेनेति । इदं तु तद्विध्युपयोगप्रतिपादनं मन्यन्ते ।**

**यदि हि फलविधिमन्तरेणापि साधनभावः सिध्यति विद्यमानोऽप्यसौ कृतकरत्वादनुपयुक्त इति । यो वा विधेः पुरुषार्थसाधनप्रतिपत्तौ व्यापार मपश्यन् वैनियोगिकमेव कर्मफलसम्बन्धं मन्यते, तं प्रति विनियोग-सामर्थ्यप्रतिपादनेन वैधत्वमस्य प्रतिपाद्यते । यस्तु कर्मफलसम्बन्ध एव विप्रतिपत्स्यते तं प्रति षष्ठाद्यं भविष्यति कृतकरत्वेन त्वनुपयोगोऽनु-पात्तफलेषु विश्वजिदादिषु नित्येषु चाशक्यो वक्तुमुपात्तफलेष्वपि । पुरुषविशेषणानां तु तादर्थ्यादिति फलत्वमुपग्रहविशेषात् । अनवगत-प्रयोक्त्रार्थानां च तादर्थ्यं विधेरेवेति भावनावगमसमय एवावगतः प्राथ-म्यात् । स एव प्रमाणीकर्तव्यः । आर्जवेन त्वर्थवादत्वसमर्थनार्थत्वमेवा-धिकरणस्य प्रतीयते। तथा चापौनरुक्त्यप्रकारेऽ्वितरेषु तदेव प्रयोजन-मिति ।**

**ननु उभयाकाङ्क्षालक्षणत्वात् सम्बन्धस्यैकनिराकरणेनैव सम्बन्धा-भावः सिध्यति । किमंशद्वयनिराकरणेनेत्याशङ्क्याह — तच्च यदात्मनेति । एकस्मिन्नंशे प्रमाणसिद्धे द्वितीयस्याक्षेपादपि प्रसिद्धिराशङ्क्येत । तेनोभयो-रप्यसिद्धिर्वक्तव्या । यदा त्वविधेरशक्तिप्रतिपादनेन विधेरेव साधन-बोधने शक्तिरित्यधिकरणप्रमेयम्, एवमितरत्राप्येवं कामशब्दस्यैव साध्यत्व-बोधने इति । तदेवं व्याख्याय यच्च यदात्मना बोधितं तत्कथं नामा-क्षिप्यांशान्तरं सम्बध्यतामिति द्वावप्यंशावंशान्तराक्षेपसामर्थ्यप्रतिपादनाय निरूपयितव्याविति ।**

---

१. यच्चेति मुद्रितपुस्तकपाठः ।

तदिह साधनांशे विचार्यमाणे यो नाम फलांशस्य संस्पर्शः स चतुर्थे सिद्धः प्रसङ्गाद्धेतुत्वेनेति मन्तव्यः । तथा यस्तत्र साधनांशपरामर्शः स इह सिद्धस्तत्र प्रसङ्गादित्यपुनरुक्तम् । नन्वेवं सति विध्युद्देशचिन्तेयमित्यर्थवादाधिकरणे[२] न संबध्यते । नैष दोषः । तद्वशेनैवार्थपरिच्छेदात् । यदि ह्यसौ विधीयमानतया पूर्वेणावगतस्ततो नार्थवादत्वमथ स्तुत्यर्थतया ततोऽर्थवादत्वमिति ।

तत्र पूर्वपक्षाभिप्रायः । सर्वथा साध्यसंन्निधाने यदुच्चरितं तदाकाङ्क्षावशेन ताद्रूप्येणानुपात्तमपि साधनं भवति, यथैव यागेनेत्यनुदितं संबध्यते तथैवौदुम्बरेणेति । तत्र विधिः किं कुर्यात्, पुरुषं प्रवर्तयेत् । स च फलार्थितयैव प्रवृत्त इति किं विधिना । अथ वा प्रयोगवचनविहितस्य फलसंबन्धमात्रमनेन क्रियते । पञ्चमो वा लकारो विधास्यति । अर्थवादैकदेशो वेत्युक्तमेव । तस्मादूर्जोऽवरुद्ध्या इति तादर्थ्यचतुर्थ्यैवैवं कामशब्दादपि स्फुटतरं फलमुपात्तमिति तस्मिन्नौदुम्बरताविधिः । न तु फलस्य विधानमिति ग्रहीतव्यं भावार्थाधिकरणे फलविधिनिषेधात् । ऊर्गुदुम्बर इत्यतः स्तुतिरित्यविरोधः । तस्मान्मुख्यविधिसम्भवे लक्षणया न स्तुतिः प्रतिपत्तव्येति ॥१६॥

नन्वेवं सति विध्युद्देशेति । यद्यौदुम्बरो यूप इति, एतद्विचार्यते । तदास्यानुष्ठेयार्थस्य विध्युद्देशत्वात् विध्युद्देशचिन्तेयं स्यात् । भवति चेत्, तत्राह — अर्थवादाधिकरणेति । हेत्वधिकरणेऽर्थवादविचारादसमाप्तोऽसौ तत्र कथं मध्ये चिन्तान्तरमिति । नैष दोष इति । विध्युद्देशविचारः प्रकृतस्यार्थवादत्वस्य परिच्छेदोपायत्वेन । तेनार्थवाद एवैवं चिन्तितो भवति । विध्युपयोगपक्षे त्वेवं योजना । सत्यं, विध्युद्देशस्यैव विचारः । स तु प्रसङ्गादर्थवादत्वपरिच्छेदमपि करोतीत्यर्थवादविचारेण सङ्गच्छत इति — विधोयमानतयेति । कथमस्मिन्पक्ष इति चेत् प्रवृत्तिफलत्वात् साधनोपदेश एव विधानमिति । सर्वथा साध्यसन्निधान इति । यथा योगेनेत्यसत्यामपि तृतीयायामाकाङ्क्षावशेनैव समन्वयः । एवमत्राप्यूर्जोऽवरुध्यै, किमित्यपेक्षायामौदुम्बरतोक्ता तदर्थं चोपादीयमानासौ तदर्था भवति । साधनस्य चेदं रूपमित्यनेन द्वारेण साधनत्वमनुष्ठानौपयिकं प्रतिपाद्यते । तच्चैतल्लिङादीनामपि कार्यम्, न हि ते बलात् प्रवर्तयन्ति । तस्मादयमपि लिङादिभिस्तुल्योपयोगः । तदेतदुक्तं — तत्र विधिः किं कुर्यादिति । अथ वा प्रयोगवचनेनेति. द्वितीयचतुर्थौ पक्षावभिप्रेत्योक्तम् । अर्थवादैकदेशो वेति । तृतीयमिति ॥१६॥ ।

---

२. अर्थवादाधिकरणेनेति मुद्रितपुस्तकपाठः ।

लोके तावद् बुद्धिपूर्वकारिणः पुरुषा मात्रामपि न निष्प्रयोजनां प्रयुञ्जते। तत्र च क्रेतव्येति विहिते बहुक्षीरादिभिर्गुणैः स्तुतिः प्रवृत्तिविशेष-निमित्तत्वेनाश्रीयते। न च क्षीरादयः फलविधयः प्रत्यक्षविषयत्वादतः स्तुतिः। एवं वेदेऽपि। श्रुत्यसंभवाच्च लक्षणापरिग्रह इत्यदोषः ॥२०॥

नायं दृष्टान्तः स्तुतेः प्रमाणान्तरावगत्यपेक्षत्वाल्लोके तत्सम्भवादु-पपत्तिः। वेदे त्वविदितवादत्वान्न श्रद्दधीरन्। अथ वा लोक एव यद्यविदितं कश्चिद्वदेत्तदा नैव श्रद्दधीरन् पूर्ववचनादिवेति। विध्युद्देशादिव। अथ वा वैधर्म्योपमा। यथाधिगतपूर्ववचने श्रद्दधते नैवमविदितवादे। न चोक्ति-मात्रेणैते बहुक्षीरादयः प्ररोचयन्ते। किं तर्हि? विदितत्वादेव। वेदे त्वर्थवादासत्यत्वेन विधौ जाताशङ्को न प्रवर्तेत। अथ वा यो विधिमुक्त्र-म्यार्थवादं प्रार्थयते नूनमस्य विधावविश्रम्भः। तत्र चेदनाश्वासोऽर्थवादे, कुतः प्रत्यय इति। अपि च वेदे व्यक्तं विसंवादो[1] वर्तमानेनोर्जोऽवरोधनेनेयं स्तुतिर्न च तदस्ति। तत्राविद्यमानबहुक्षीरसंकीर्तनवदेतत् स्यात्। स्वरूपतस्तावदुदुम्बरेऽन्न-त्वं पक्षधर्मेणाप्रसिद्धम्। अन्वयाप्रसिद्धेश्च हेतुत्वाप्रसिद्धिः। न हि यद्यदन्नं स स यूप इति लोके वेदे वा प्रसिद्धमित्यसंबद्धम्। तस्मादसंवादाद् वरं विधिरेव किं स्तुत्या संवादापेक्षिण्येति ॥२१॥

विदितत्वाद् बहुक्षीरादीनां प्ररोचनार्थमभिधानमित्युक्त्वा *भाष्य-कारेणोक्तमविदितवादे* न श्रद्दधीरन्निति। तत्किं विषयमित्याह—वेदे त्विति। विध्युद्देशादि वेति। लौकिकात् वैदिकाच्च। अश्रद्धा तु तन्मान्त्रेण प्ररोचनानुदयात्। वैधर्म्योपमायां पूर्वोदाहृताद् बहुक्षीरादिवचनादि-वेत्यर्थः। विदितत्वादेवेति। *भाष्येण* यन्निर्वर्तितं तदाह—न चोक्ति-मात्रेणेति। यदि हि उक्तिमात्रेण प्ररोचयेयुस्ततोऽसंवादेऽपि न किञ्चिद् दूष्येदिति। जाताशङ्को हि स तदा[नीं] विधिशब्द इति *भाष्यम्*। तत्र यथा जाताशङ्काभिधानं तदाह—वेदे त्वर्थवादासत्यत्वेनेति। न केवलं संवादो नास्तीति। किन्तु तद्विरुद्धो विसंवाद इति *भाष्यम्*। अपि च वेदे व्यक्तं विसंवाद इति। तदनु भाष्यं व्याचष्टे — अपि च वेद इति। यदुक्तं पूर्वपक्षे अर्थवादैकदेशविहितस्यानेन फलसम्बन्ध इति ॥२१॥

---

१. व्यक्तमसंवाद इति मुद्रितपुस्तकपाठः।

ऊर्गुदुम्बर इत्यादि तावदूर्जोऽवरुद्ध्या इत्यस्योपपत्तितयैकवाक्यभूतं न विच्छिन्नं स्तावकम्। न ह्यन्नमुदुम्बर इत्युक्ते पुरुषं प्रति प्रशस्तता गम्यते। ऊर्जोऽवरुद्ध्या इति तु प्ररोचयति। तदुपपत्तिरितरेति संगच्छते। तस्मात् कृत्स्नेन फलं प्ररोचना वा। तत्र यद्यपि तावल्लिङादिः स्यात्तथापि सुतरामर्थवादतया गृह्णीयात्। किमुत वर्तमानापदेशो यो विधिसिद्ध्यर्थमेव। प्रकरणाच्च यागोपकारे प्रयोजने लभ्यमाने किमित्यवाच्यं[1] फलं कल्पयिष्यामः। प्रकरणं वाक्येन बाध्यत इति चेन्न। अविरोधात्। यदि ह्येकांशग्राहित्वेन वाक्यप्रकरणे संनिपतेतां तथा सति बाधः स्यात्। इह तु प्रकरणमौदुम्बरताविधिं गृह्णाति सोऽप्यूर्गुदुम्बर इत्यादिलभ्यां प्ररोचनाम्। तत्र तद्विशिष्टौदुम्बरत्वग्राहिणः प्रकरणस्य को विरोधः। तस्मात् फलविधिसामर्थ्याभावात् प्रकरणाबाधेन निवेशसम्भवो नातिक्रमितव्यः। प्ररोचनापि च वाक्यशेषादुपपद्यमाना नार्थापत्त्या विध्युद्देशादेव कल्पिता भविष्यति। अन्यत्र विधिरपि हि तावत्तां कल्पयेत्। इह तु स स्वयमेव दुःस्थितः किं प्ररोचनया करिष्यतीति। न च स्तुत्योपयुक्तस्य[2] पुनः फलेऽपि प्रतिष्ठादाविव व्यापारो युज्यते। रात्रिसत्राणां ह्यनन्यपरत्वाद् गुर्व्यपि कल्पनाश्रीयते। अत्र तु प्रकरणादस्ति प्रयोजनसिद्धिरित्युक्तम्। जातिविशेषस्य च योग्यतयैव काष्ठाङ्गत्वं प्रसिद्धं न फलार्थता। यूपशब्दोऽपि च कर्मविशिष्टकाष्ठवचन इत्युपनीतमात्रमेव गृह्णाति। अतश्च प्रसिद्धे पारार्थ्येऽर्थवादता। यत्तु यूपे निराकाङ्क्षो जातिं प्रतीति शरवद्बाधो भविष्यति। न चाबाधप्रकारोऽस्ति। काम्यपक्षेऽपि तदभ्युपगमात्। एतावांस्तु विशेषः। तव पुरुषार्थत्वाद्भिन्नविषयेण सता कथञ्चित्-

तत्राह—उर्गुदुम्बर इत्यादि। तावदिति। तत्र यद्यपि लिङादिभिः स्यादिति। द्वितीयं पक्षं सर्वविधिसरूपाणामर्थवादत्वं व्युत्पादयति—सुतरामर्थवादतयेति। अर्थवादस्वरूपत्वादित्यभिप्रायः। न चार्थवादसरूपोऽपि फलापेक्षया फलविधिर्वक्तव्य इत्याह — प्रकरणाच्चेति। अवाचकमिति। अविद्यमानवाचकं फलवाचकाश्रयं हि फलविधिसामर्थ्यं तदसति वाचके कल्पनीयं तत्किमिति—कल्पयिष्याम इति। न च स्तुत्योपयुक्तस्येति। चतुर्थाधिकरणस्य प्रसङ्गादुपन्यासः — जातिविशेषस्येति।

१. अवाचकादिति मुद्रितपुस्तकपाठः। २ स्तुत्युपयुक्तस्येति मुद्रितपुस्तकपाठः।

प्रसङ्गलभ्यसमानाश्रयत्वेन, मम तूभयोः क्रत्वर्थत्वात् समानविषयेणेति। न चात्र जातौ फलाय विधीयमानायां दध्न इव होम आश्रयो मनसि विपरिवर्तते। यो हि पशुयागः प्रकृतः स तावदयोग्यः। पशुनियोजनं च यूपद्वारेण योग्यं तदपि सह यूपेनाप्रकृतम्। न चानर्थक्यात्तदङ्गेषु [मी० सू० ३।१।१८] इति प्रधानादवतीर्य तदङ्गमाश्रीयते। यो हि प्रधानोपकारित्वेन श्रूयते स तदङ्गेऽपि स्थित उपकरोतीत्येवं कल्प्यते न त्विह तथा। अत्र हि प्राधान्यांशभाजा गुणेनाश्रयः प्रार्थ्यते। तत्र प्रधानं संनिहितं तद्यदि न योग्यं ततो वचनव्यक्त्यन्तरमाश्रीयताम्। न चावतरणं सम्भवति। न चानेनैव वाक्येनाश्रयो दीयते। वाक्यभेदप्रसङ्गात्। द्वौ हि संबन्धौ तदा स्यातां गुणफलसंबन्धस्तदाश्रयसंबन्धश्चेति। युगपच्चौदुम्बरताफलयूपौ प्रत्युपादीयमानोद्दिश्यमाना विरूपा स्यात्। अथोभयोद्देशेन विधीयते तथापि फलाननुरक्ता यूपेन संबध्येत यूपाननुरक्ता च फलेन।

यत्तु विनैव विधायकात् स्वेच्छयैव प्रवर्तिष्यामह इति स्वच्छन्देन सह नास्ति विधिवादः। पुरुषार्थफलत्वं तु न प्राग्विधेः सिध्यति संनिहिततरौदुम्बरत्वादिसाध्यांशावरोधात्।

**चतुर्थपक्षाभिहितस्य पूर्वपक्षहेतोर्बाधकं न्यायं प्रस्तौति पशुयाग एवाङ्गद्वारेणाश्रयो भविष्यतीत्याशङ्क्य निरस्यति — न चानर्थक्यादिति। विनियोजकेन प्रमाणेन प्रधानोपकारितयावगतः साक्षात्परम्परया च सम्बन्धेनोपकारित्वसंभवात् साक्षादसंभवत्परम्परामाश्रयति। यस्तु फलाय चोदितो व्यापारवत्वोपजननयोग्यां क्रियां स्वार्थमपेक्षते स यदि तथा विधां प्रकरणाल्लभते सम्बध्येत तस्या आलभे [अलाभे] तु सम्बन्ध एव न सिध्यति तस्योपपत्तिरङ्गावतरणेन क्रियेतेति।**

**न चावतरणमिति। अभ्युपेत्यानर्थक्यं तदङ्गन्यायं यूपेऽवतरणसंभव उच्यते। जुह्वादिष्वपि स्वसाध्यक्रियाविशिष्टेषु सम्भवात् तत्र यूप इत्यनुवादासम्भव इति। यूपाननुरक्ता च फलेनेति। ततश्चाश्रयापेक्षा तदवस्थैवेति।**

**यत्तु विनैव विधायकादिति। आद्यपक्षस्य सर्वान्ते विवृतस्योपन्यासः— सन्निहिततरेति। यावद्भावना नाक्षिप्यते तावत्साध्यसाधनसम्बन्धाभावः भावनाक्षिप्ता भावना वक्तव्या। सा च भवितृकर्मिकैव प्रतीयत इति कर्मान्तरासम्बन्धः।**

यत्तु प्रयोगवचनो विधास्यतीति न पुरुषार्थेषु तस्य शक्तिः। असंयुक्तं प्रकरणादिति [मी० सू०३।३।४।] वक्ष्यति । यदि तु तेन विधीयते सिद्धं कर्मार्थत्वम् । पञ्चमलकाररूपं तु वर्तमानापदेशेन संदिग्धम् । तस्माद्वर्तमानफलाभिधायित्वाच्चतुर्थे चैवंकामशब्दरहितस्य फलविधित्वनिराकरणात्,प्रधानफलमेवेदं प्ररोचनायै संकीर्त्यत इति युक्तम् । सर्वत्र च स्तुतिपरत्वात्तदुपायेषु सत्यासत्यान्वेषणं व्यर्थम् । ज्ञानमात्रौपयिकत्वाच्च। गुणवादेन च संवादात् । साधनत्वेऽपि च प्रीतिसाधनत्वेन तृप्तिहेतुत्वेन वा संवादः ।।२२।।

यदि चैवंजातीयका विधयो भवेयुस्ततः पूर्वोदाहृताः सर्व एव द्रव्यगुणक्रियाविधयो भवेयुः । वायुः क्षेपिष्ठा देवता कर्तव्या, अप्सुयोनिरश्वः कर्तव्यः, अप्सुजो वेतसोऽवकाश्च कर्तव्याः आपः शान्ताः ऊर्गुदुम्बर इत्यादि । तत्र यद्यपि केचित् क्रियादिविधयः शक्यन्ते कर्तुम् । एते त्वशक्याः स्वभावसिद्धेः, प्रयत्नेनापि चानिष्पत्तेः । वायुवेतसावकादिषु स्वभावसिद्धिः । अश्वौदुम्बरा-

न च नान्तरीयकमग्निहोत्रस्येवोदुम्बरस्य कर्मत्वं तत्रांशे विधेः प्रामाण्यात् । तदभावे तु व्यापारस्यौदुम्बरः कर्म, औदुम्बरस्य तु रूपमूर्जोऽवरुध्यै तदिति । न हि भावनाया अन्यत्कर्म अत्यार्था च सेति युज्यते। समुद्दिष्टस्यैव भावनाकर्मत्वात् । न च भावना तादर्थ्ये प्रमाणमस्ति, चतुर्थ्यन्तस्य यूपेन सम्बन्धात् । तस्माद् यूपं विशिनष्टि — ऊर्जोऽवरुध्यै इति । यूपस्य च भवनं तस्यैव भावनामवगमयति । तावति च विफलमिति। न तस्य पुरुषार्थेषु शक्तिरस्ति । तस्यक्रत्वङ्गत्वात्। अनङ्गत्वे हेतुमाह — असंयुक्तमिति । वर्तमानापदेशेन सन्दिग्धमिति। तेनास्यार्थवादसम्बन्धेन निर्णयः कर्तव्य इत्यर्थवादता — चतुर्थे चैवं कामेति पर्णमय्यधिकरणमेवेदं, य एवं करोति तस्यैवं भवतीत्येकपुरुषगामित्वं द्वयोरुपात्तं न साध्यसाधनभावः। तत्रैवं कृते यस्मादेवं तद्भवति । तस्मात्साध्यसाधनभाव इत्युन्नीयेतापि यदि नियमः पौर्वापर्यं च स्यात् । तदपि नोपात्तं द्वयोरपि वर्तमानापदेशादिति ।।२२।।

द्रव्यगुणक्रियाविधय इति ।वायुरिति । कर्मसम्बन्धिनि संस्कारापेक्षे वायावुद्दिष्टे ,तस्य किमित्युपकारापेक्षायां क्षेपिष्ठत्वमुपादीयमानमुपकारकत्वेन प्रतीयते । ततश्च विधिफलस्यावाप्तेः प्रयोगवचनादिति ।

दीनामशक्यता । कीदृशी स्तुतिस्तां दर्शयति शमयित्रीभिरद्भिरित्यादि । तत्रासंगतेरग्रन्थ इति व्याख्यातारः समर्थयन्ते । यस्मादिहाश्वावकातत्सम्बन्धयोः शमयितृत्वस्य च नैवोपन्यासः कृतो वेतस उपन्यस्तः सोऽपि स्तुतिवेलायां न प्रदर्शित इति ।

तत्र त्वियं गमनिका । वेतसोदाहरणेनैव तुल्यत्वादवकादीन्यप्युदाहृतानि । न चायमश्वावकयोः परस्परेण सम्बन्धः कथ्यते । केन तर्ह्यद्भिः । तावता तु न स्तुतिः काचिदुन्मीलितेत्यर्थवादान्तरापेक्षाप्रवृत्तां तां दर्शयति — आपो वै शान्ता इति । अनेन हि विधित्वात् प्रच्युतेनापां प्राशस्त्यमुच्यते । तत्र कस्यचित् प्रसिद्धाप्सम्बन्धस्य तन्मात्रसंकीर्तनादेव स्तुतिर्भवति । अन्येषां तु सम्बन्धिसंबन्धात् सम्बन्धः कीर्त्यते । प्रसिद्धशान्तत्वसम्बन्धाभिरद्भिः सम्बन्धादश्वादिरपि शान्तात्मकस्तत्सम्बद्धेन च कर्मणा यजमानस्य कष्टं शाम्यतीत्येवंविधप्राशस्त्यज्ञापनार्थम् । एवं क्षिप्रदैवतेन शीघ्रं फलप्राप्तिरन्नमयेन च यूपेनान्नप्राप्तिरिति स्तुतित्वे सिद्धे तत्समानन्यायानामप्येवमात्मकत्वम् ॥२३॥

तत्रासङ्गतेरग्रन्थ इति । अग्रन्थतामुक्त्वा — व्याख्यातारः समर्थयन्त इति समर्थनं प्रतिज्ञाय यथासङ्गतिस्तथाह — यस्मादिहेति । समर्थनं च — तत्र त्वियमिति ।

अथ वा अग्रन्थत्वमेव व्याख्यातारः समर्थयन्त इत्युक्तम् । तस्योपपत्तिमभिधाय स्वयं गमनिकोपन्यासः — तत्र त्वियमिति । यस्मादिहाश्वावकेति । अप्सु योनिरश्वोऽप्सुजो वेतस इत्युदाहृतं *भाष्यकारेण* । न चायमश्वावकयोरिति । शमयित्रीभिरद्भिः [भाष्यम्] । अश्वस्यावकानां च सम्बन्धाद्यजमानस्य कष्टं शमयतीति *भाष्ये* । अश्वस्यावकानां च परस्परेण सम्बन्धोक्तिर्यद्यसङ्गतिः सा तावन्नास्तीत्यर्थः । शमयित्रीभिरद्भिरिति विशेषणोपादानस्य फलमत्रार्थवादे । असतो मूलं च दर्शयति — तावता त्विति । सन्नसन्वा सम्बन्धः कीर्त्यते एवंविध प्राशस्त्यज्ञापनार्थमिति ग्रन्थसन्दर्भः ॥२३॥

विधिपक्षे चायमपरो दोषो यदि तावद्यथावस्थितवाक्यग्रहणं ततः प्रकरणगतविदग्धोद्देशेन देवतान्तरविधानादुत्पत्तिवाक्यशिष्टदेवतापकर्षणं स्यात् । इयं वा तामप्यपकर्षतीत्यपकर्षः । तत्र नैमित्तिकत्वादभ्यु[1]दयेष्टिवद्बाधोऽपि कल्प्येत यद्यन्यथा न सम्भवेत् । सति तु सम्भवे न युक्तमेतत् ।

अथैतद्दोषभीतोऽ[2]र्थलभ्यवचनव्यक्त्यन्तरं व्यवहितकल्पनयाश्रीयेत यो नैर्ऋतः स विदग्धः कर्तव्य इति । ततः प्रकरणे नैर्ऋताभावाद्यत्रासौ विहितस्तत्र विदग्धता नीयेत । तत्र प्रकरणं बाध्येत । न चाबाधसंभवे तद्युक्तमतोऽर्थवादत्वादनपकर्ष इति ॥२४॥

स्तुतित्वेन विधिविभक्तिमुपजनय्य पुनस्तेनैव फलकल्पनायां वाक्यभेदस्तस्मादर्थवाद एवेति ॥२५॥

उत्पत्तिशिष्ट[1]देवतापकर्षणं स्यादिति । अर्थप्रदर्शनमिदम् अपकृष्यत इत्यपकर्ष इति *भाष्यकारीयैव* व्युत्पत्तिः । अथ वा शिष्टायाः देवताया अपकर्षणं संभवन्न कल्पनीयमित्यर्थः । इयं वेति कर्तर्यपकर्षशब्दः । इयमुच्यमाना विहितानपकर्षत्वेन संभवन्ती नापकर्षता कल्प्येतेति । अभ्युदयेष्टिवदिति । यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदियात्स त्रेधा तण्डुलान् विभजेत् ये स्थविष्ठास्तान् विष्णवे शिपिविष्टायेति । अभ्युदयनिमित्तेन विधीयमानो विष्णुरग्निं बाधते । नैमित्तिकबलीयस्त्वं तृतीये वक्ष्यति । नैमित्तिकं तु प्रकृतौ तद्विकारसंयोगविशेषादिति [मी० सू० ३।६।१०] । अथैतद्दोषभीतोऽर्थलभ्यमिति । *भाष्यकारीयस्यैतद्*वचनव्यक्त्युपन्यासस्यालम्बनं दर्शयति — व्यवहित कल्पनयेति । यच्छब्दस्य नैर्ऋतशब्देनेति ॥२४॥

---

१. °दभ्युदितेष्टिवदिति मुद्रितपुस्तकपाठः ।

२. अथैतद् दोषभीतैरर्थलभ्येति मुद्रितपुस्तकपाठः ।

१. उत्पत्तिवाक्यशिष्टेति मुद्रितपुस्तकपाठः ।

## हेतुवन्निगदाधिकरणम् ।

इह ये हेतुवन्निगद्यन्ते हिशब्दादिभिर्न च परमार्थहेतवस्त उदाहरणम् । तत्र यदि तावद्धेतुत्वं विधीयते ततः पूर्वेणैव गतम् । यदिह हेतुत्वं तच्छूर्प-होमसंबन्धं प्रति न चाविहितोऽसावस्तीति कस्य हेतुरुच्यते । अथ भूतानु-वादमात्रं तत्तु वायुक्षेपिष्ठत्ववद्गतमित्यनारब्धव्यमेतत् । उच्यते, न तावदनेनैव वाक्येन हेतुत्वं विधीयते । न च भूतानुवादमात्रं, किं तर्हि हेतोः प्रसिद्धि-पूर्वकत्वात् सिद्धवदुपदिष्टस्य यावत्यसिद्ध्याशङ्का तत्रार्थापत्तिलभ्याद्वचनात्सिद्धिः याऽपि [1]चेहार्थवादाकाङ्क्षा कस्मादिति साप्यनेनैव हेतुना निवर्त्यत इति

विषयमधिकरणस्य हेतुवन्निगदपदं व्याचक्षाण उपन्यस्यति — ये हेतुवन्निगद्यन्त इति । आक्षिपति — तत्र यदि इति । तेनेति । तृतीयोपात्तस्यान्नकरणस्य हिशब्देन हेतुत्वमभिधीयमानं विधीयते वा शूर्पहोमसम्बन्ध अनूद्यते वा । तत्र यद्धि विधीयते तद् औदुम्बरा-धिकरणेनैव गतम् । कथमित्याह — यदिहेति । नाविधाय शूर्पहोमसम्बन्धं हेतुर्विधेयः । विहिते च प्राप्ते कर्मणि नैकस्मिन् वाक्ये हेतुरपरो विधातुं शक्यते । अथ वा वर्तमानापदेश एवायमिति । शूर्पेण जुहोतीति । सोऽयमर्थवादेन विधितां नेतव्यः, अनर्थवादत्वे तस्याविहितत्वात् । असौ नास्ति क्व हेतुर्विधीयतां तेन यथा औदुम्बरे फलमविहितेन विहितम् । एवमेतदपीति । अथ हेतुर्न विधीयते, तत आनर्थक्यं पूर्वः पक्षः । स चार्थवादाधिकरणे निरस्त इत्याह — अथ भूतानुवादमात्रमिति । अत्राविधानमङ्गीकृत्य यथार्थवत्वं तथा दर्शयति — उच्यत इति । होमस्तावत् वाक्यान्तरे कर्तव्यत्वेन ज्ञातस्तस्यान्नकरणत्वं यस्माच्छूर्पे विद्यते तस्माच्छूर्पं साधनमित्युच्यते । तदेतदन्नकरणत्वरूपयोगाच्छूर्पस्य साधनत्वमकरणत्वमात्रस्य यदि होमे विनियोगो भवेत् तदोपपद्यते नान्यथेत्येवमन्नकरणमात्रविनियोगाय हेतुनिर्देश इति ।

यापि चेहार्थवादाकाङ्क्षेति । यदन्नकरणत्वात् कारणात् होमसम्बन्धो भवन् अन्नकरणमात्रस्य भवति न केवलस्य शूर्पस्येति । शूर्पश्रुतिमेकदेशानु-वादमङ्गीकृत्यानुमानिकान्नकरणविधिरङ्गीकृतः । तदेवं वाक्यसङ्गतिः । अन्नकरणत्वात् कारणात् होमसम्बन्धः शूर्पस्य । अतः शूर्पेण वा अन्येन

१. चार्थवादाकाङ्क्षेति मुद्रितपुस्तकपाठः ।

मन्यते, अथाप्यर्थवादत्वं तथापि तदन्तनिर्णीतहेतुत्वमेवेति सर्वान्नकरणविषयं विज्ञायते। अतश्च[1] हेतुरप्यस्त्विति पूर्वः पक्षः। संबन्धस्य च विधेयत्वात्तद्गतमेव हेतुत्वं होमस्येति वदति। नन्वप्रसिद्धे कार्यकारणभाव इति। केचिदाहुः, कार्यकारणयोरेवानुमानम्। तथा च दध्नेन्द्रियकामस्येत्यत्रापि वक्ष्यति। तत्त्वयुक्तम्। अकार्यकारणभूतानामपि• कृत्तिकादीनामचिरोद्गतरोहिण्यादिप्रतिपत्तिहेतुत्व दर्शनात्। अतो गम्यगमकत्वमेव कार्यकारणभावं मन्यते। ननु सोऽप्यनुमानोत्तरकालीनत्वादनङ्गम्। सत्यम्। अन्यस्मिन्नेव तु संबन्धे सति पश्चात्प्रसिद्धयन्तमेनमनुमानव्यवहारोपलक्षणत्वेनोपन्यस्यति। यद्वा शक्त्यभिप्रायं, ययोरेव हि

वा दर्विपिठरादिना सर्वेण जुहोति सर्वस्यान्नकरणत्वादिति। ततश्च हेतुत एव कर्तव्यतोच्यमाना न भूयः कस्मादित्यपेक्षितुं क्षमेत।

यद्यप्यर्थान्तरं हेतोः प्राशस्त्यं तथापि कस्मादित्यपेक्षानिर्देशस्य साम्यादेकविषयत्वभ्रमः पूर्वपक्षवादिन इति दर्शितम् — मन्यत इति।

अथाप्यर्थवादत्वमिति। अनेनान्यथा पूर्वपक्षं करोति। भवतु तेन ह्यन्नमित्यर्थवादः। तदुन्मीलितश्च शूर्पेण जुहोतीति विधिः। तथापि दर्विपिठरादिसाधारणेन हेतुना शूर्पहोमसम्बन्धस्याभिधानौचित्याभिधानं दर्विपिठरादीनामपि शूर्पतुल्यतामापादयति। तत्र शूर्पेणेति नियमानुपपत्तिः तेनैवंविधार्थवादसम्बन्धात् शूर्पशब्देन लक्षणयान्नकरणेन जुहोतीति विधीयते। अस्मिन् पक्षेऽर्थवादानुपमर्देनैव हेतु............[1]याग इति पूर्वपक्षः। तदेतदुक्तं — अतश्च हेतुरिति।

अनुमानव्यवहारेति। सम्बन्धग्रहणात्प्रभृतिगम्यगमकत्वं यावदनुमानव्यवहारः तत्रावसाने तत्प्रवृत्तिमुपलक्षयतीति। यद्वा शक्त्यभिप्रायमिति। गम्यगमकशब्दौ यौगिकौ। अतो भावप्रत्ययेन सम्बन्धाभिधानं शक्तिलक्षणश्च सम्बन्धः व्याप्यव्यापकत्व एव च तयोः शक्तितया दृष्टे व्यापकत्वमेव गम्यत्वं व्याप्यत्वमेव गमकत्वम्। एत एव च *भाष्ये* कार्यकारणभावशब्देनाभिहिते इति।

तद्विवृणोति — ययोरिति। ययोरेव सा शक्तिरवधृता, कीदृशीत्य-

---

१. ततश्च हेतुरिति मुद्रितपुस्तकपाठः।

१. अत्र ग्रन्थपातः मातृकायाम्।

व्याप्तिग्रहणकाले गम्यगमकसामर्थ्यात्मकं कार्यकारणभावित्वं तेन रूपेण[1] सावधृता तत्रैव हेतुता ।

अथ वा उदाहृतविषयहेतुलक्षणमेतत् । अविनाभावो ह्यनेककार्य-कारणस्वस्वामिसहचरभावादिप्रभेदभिन्नः, तत्रान्नकरणता होमे हेतुत्वेनोच्यमान संबन्धान्तराभावात्कारणत्वेन स्यात् । तच्चाप्रसिद्धं तस्मान्न हेत्वपदेशः । सत्यम् । लोके हेतुव्यवहारकालात् प्रथमं प्रमाणान्तरेण संबन्धप्रसिद्धिरपेक्ष्यते । वेदे तु हिशब्दप्रतिपादितहेतुत्वान्यथानुपपत्त्या संबन्धाभिधायि दृष्टान्तवचनं कल्प्येत यद्यदन्नकरणं तेन तेन जुहोतीति, तेन चोपपन्नं हेतुत्वम् । किं प्रयोजनमिति । यदि च हेतुरवतिष्ठेतेत्यनेनाभिप्रायेण ।

अपरस्त्वाह, व्याप्तौ सिद्धायां सर्वान्नसाधनसाधनको होमः सिद्धो भवति । कुत इति । स एव सिद्धान्ताभिप्रायः । अथ वा कुतो दर्विपिठरादेः साधकतमत्वम् ।

इतरस्त्वाह, अन्नक्रियायां तावत्तस्यार्थवत्तास्ति तावन्मात्रं वाश्रयिष्यते । शक्यते च तेनापीति । उपपत्तिशब्दस्यार्थः । पूर्वेण तु समानार्थता गम्यते । तेन विवक्षाशक्त्यभिप्रायमेतत् । यदेव हि तदुपयोगिमात्रं तदेव शक्यते

**पेक्षायां विशिंषन् *भाष्यकारीया*भिधानं तद्विषयं दर्शयति — गम्यगमक सामर्थ्यात्मकं यत्कार्यकारणभावित्वं कार्यं भविष्यतीति कार्यभावि तस्य भावः कार्यभावित्वं कार्यशक्तिरेव । एवं कारणभावित्वमपि भाविशब्द-प्रयोगेण दर्शितं, भाविन्याः शब्दप्रवृत्तेः यन्निमित्तं सा शक्तिर्भाविशब्देनोक्ता *भाष्यकृतेति* । तेन रूपेण सावधृतेति ।**

**अथ वा सेति व्यक्तिरुच्यते गम्यगमकत्वरूपा या कार्यकारणशक्तिः तेन रूपेण तद्रूपा व्याप्तिः ययोरवधृतेति । तत्रैवेति । निर्धारणे सप्तमी । द्विवचनं तयोरेव मध्ये हेतुत्वमेकस्यान्यत्प्रतीतिः होमे हेतुत्वेनो-च्यमानेति । स्वयमेवैतद् व्याख्यानं सम्बन्धहेतुर्होमहेतुर्निर्दिश्यत इति । कारणत्वेन स्यादिति । कारणत्वमीदृशमन्नकरणत्वं स्वाश्रयस्य होमे विनियुज्यतां करोतीति । विवक्षाशक्त्यभिप्रायमिति । कर्तुमित्यत्र करोति क्रियाभिधानं लक्षयति । तेनायमर्थः, तेनान्नं क्रियत इत्यभिधातुं शक्यत**

१. गम्यगमकसामर्थ्यात्मना कार्यकारणभावित्वेन सावधृतेति मुद्रितपुस्तकपाठः ।

कथञ्चित् साधकतमत्वेन विवक्षितुम्। अथ वार्थवत्त्वं करणविभक्तिर्निर्देशालम्बनमुपपत्त्या पुनर्वर्तमानान्नक्रियस्य हेतुत्वाभिधानात् तादृशस्य, होमं प्रत्यनुपपत्त्याशङ्कयोपपत्तिं वदति, शक्यते च तेनेति। तथा च[1] चोदयति एतद्धि क्रियत इत्युच्यते। तत्कथं शक्यत इत्यभिधीयते। वर्तमानक्रियस्यासम्भवादित्युत्तरम्। यद्वा स्वयमेवाशङ्क्य परिहरति। यदि च न दर्विपिठरादीति। उभयोः परामर्शः साधकतमत्ववर्तमानत्वे, चेत्तत्र न विद्येते शूर्पेऽपि तथैवेति स्तुतिर्न स्यात्। तेन यथा तव स्तुत्यर्थः कथञ्चिद्विद्यते तथा मम हेत्वर्थ इत्यविशेषः। हेतौ च श्रुतिरित्यादि असम्बद्धवाक्यसम्बन्धिदोषादन्ते द्रष्टव्यम्। स्तुतौ लक्षणेति। अन्नकरणत्वेन सर्वजनाभिमतेन प्राशस्त्यं लक्ष्यते। शूर्पेणेति चास्मिन्पक्षे नित्यानुवादोऽन्नकरणसामान्येनैव प्राप्तस्य। इत्थं वा सूत्रगमनिका। तत्रार्थवत्त्वं तावदर्थवादात् प्रयोजनवत्तरत्वमुपपत्तिरित्यप्रसिद्धं, सम्बन्धोऽपि काल्पनिकवाक्याश्रयणात्। तस्माद्धेतुः ॥२६॥

शूर्पेणेति तावत्करणविभक्तिश्रुत्यैवावरुद्धो होमो नानुमानिकैर्दर्विपिठरादिभिः सह बाधविकल्पसमुच्चयान् प्रतिपद्यते। होमश्च तेन निराकाङ्क्षीभूतो नान्यत्प्रार्थयते।

अनुत्थितायामेव दर्विपिठरादिश्रुतौ शूर्पं प्राप्नुवच्छ्रुत्यनुमानं प्रतिबध्नाति। तेन ब्रवीति, अचोदना च तस्येति। हेत्वपदेशश्च स्तुत्यैवोपपद्यमानः

**इति। विवक्षाशक्त्या चाभिधानशक्तिरेव *वार्तिककृता* लक्ष्यते, वैदिकत्वात् प्रयोगस्येति। उपपत्त्या पुनरिति। उपपत्तिशब्देन सौत्रेणोपपत्तिं वदति *भाष्यकृत्*। तामनुपपत्तिमाशङ्क्येत्याह — वर्तमानान्नक्रियस्येति। वर्तमानान्नक्रियस्य होमसम्बन्धे हेत्वभिधानमेतत् — तेन ह्यन्नं क्रियत इति। न च क्रियान्तराविष्टस्य क्रियान्तरसम्बन्धो घटत इत्यनया शङ्कयेति किं तदभिधानं *भाष्यकृतस्तद्दर्शयति* — शक्यते च तेनेति। तेन ह्यन्नं क्रियते। तस्य ह्यन्नक्रियायां शक्तिरित्येतावानस्यार्थ इत्युक्तम्। उपपत्तिशब्देन सौत्रेणेति *भाष्यकारो* वदत्यनेन शक्तिसद्भावप्रदर्शनेनेति। तथा च चोदयतीति। एतद्धि क्रियत इत्युच्यते ॥२६॥**

---

१. तत्रेति मुद्रितपुस्तकपाठः

सन्नाश्रुतदृष्टान्तकल्पनायै प्रभवति । शूर्पश्रुतिश्च विध्युद्देशपातिन्यनन्यप्रयोजना चापेक्षिता च सती परित्यक्तुं न युज्यते । तस्मात् यद्वान्नकरणत्वादित्येष कर्तव्य इत्यनेनापेक्षितत्वात् लक्षणयैतत् प्रतिपादयति प्रशस्तत्वादिति । अथ वान्नकरणत्वादिति श्रुतिवृत्तमेव । तत्र यथाश्रुतं विध्युद्देशे हेतुतामप्रतिपद्यमानं तदनन्तराकाङ्क्षितार्थोपप्लुतहेत्वपेक्षप्राशस्त्यहेतुरवधार्यते, अन्नकरणत्वात् प्रशस्त इति । कल्पनाद्वयेऽपि च लोकप्रसिद्धदृष्टान्तलाभान्नाश्रुततद्वाक्यानुमानप्रसङ्गो भविष्यति । सिद्धं हि प्रशस्तानां कर्तव्यत्वमन्नकरणानां च प्रशस्तत्वमिति । अचोदना च तस्येति व्याख्यान्तरम् । तत्र हि यद्यदन्नकरणं तच्चोद्यते । न च दर्विपिठरादीनां करणता साधकतमस्य पाकादेः करणत्वात् । एवं चोत्तरसूत्रमापतति ॥२७॥ ।

यत्पुनः शूर्पेऽप्यन्नकरणत्वानुपपत्तेः स्तुतिर्न प्राप्नोतीत्युक्तम् । किं तत्राभिधीयते ॥२८॥ ।

अस्मत्पक्षेऽर्थोऽस्ति । स्तुत्यालम्बनान्नकरणत्वं नाम, वाक्यशेषो हि भवन् पारतन्त्र्याद् गौणत्वाद्यपि प्रतिपद्यते । तदा च विधेयान्तरवशादवश्यमनुवादेन भवितव्यम् । अनुवादश्च यथा विज्ञातस्य भवति । अतः शब्देनैवाभ्यनुज्ञातं यादृशं वयमन्नकरणत्वं शूर्पे पश्यामस्तादृशमिदं संकीर्त्यत इति । अनेन वर्तमानापदेशो व्याख्यातः । तत्रापि हि कृतं वा करिष्यमाणं वा स्तोतुं क्रियते इत्युच्यते । कथं स्तुतिः, सर्वलोकस्य भूतभविष्यदनादरेण वर्तमानोपकारानुरागाद् वर्तमानालोचनेनैव च कालान्तरेऽपि तत्र प्रीतिरिति क्रियत एवानेनान्नमित्युच्यते । अथ वान्नक्रियाशक्तेर्वर्तमानतामन्नक्रियायामेवोपचर्य स्तौति । तत्रापि जनानां शक्त्यतिक्रमेणाभिव्यक्तिप्रियत्वात् क्रियत इत्युक्ते स्तुतिर्भवति । न च शक्त्यभिधानात् । तव तु विधिवादित्वान्मुख्यान्नकरणत्ववर्तमानत्वयोरग्रहणे दोषः, किं कारणम् । विधानं ह्यत्यन्तानवगतार्थविषयम् । तत्र यथाश्रुतादन्यथाग्रहणं निष्प्रमाणकम् । एतदेवाह विधौ हि न परशब्दार्थः प्रयोजनमिति । परशब्दार्थो हि लक्षणासु प्रयोजनम् । तदिह भूतभविष्यत्क्रियावाचिनः शक्तिवर्तमानतावाचिनो वा स्वार्थे वर्तमानान्नक्रियावाची शब्दः कल्पनीयः ।

अतः कथं शक्तिर्व्याख्यायत इति । अत्रोत्तरं, न हि वर्तमानः कालोऽस्तीति [भाष्यम्] । अस्यार्थः न हि वर्तमानः कालः क्रियाया अस्मिन् शब्दप्रयोगेऽस्ति । अनुपपत्तेः । शक्तिवर्तमानतैव क्रियायामुपचरितेति — वर्तमानक्रियाशब्द इति [ वर्तमानान्नक्रियावाची

तन्निमित्तमात्रे शब्दार्थे साधकतमत्ववाचिनी तृतीया। नचैवंभूतत्वं कुतश्चित्सिद्धमित्यप्रमाणकम्। अथ मुख्यार्थपरिग्रहः। तत्रोच्यते। न च वर्तमानं साधकतमं वोपदिशन् वेदः शक्यमर्थं विदध्यात्। न हि वर्तमानान्नक्रियेण शूर्पादिना साधकतमेन वा पाकेन होतुं शक्यते। तस्मादुभयथापि विप्रतिषिद्धम्। अस्मत्पक्षे त्वनुवादत्वात्परशब्दार्थग्रहणम्। तथा लोके बलवान् देवदत्त इति। तत्र भूम्न्यतिशायने वा मतुप्प्रवृत्तिर्न च विशेष उपात्तोऽमुष्मात्प्रकृष्टबल इति। तत्र सर्वसत्त्वेभ्यः प्रकर्षे मुख्यः शब्दो न च तथा संभवति सिंहादीनां बलवत्तरत्वादिति देवदत्तान्न्यूनतरबलानपेक्ष्यैवमभिधीयते। तथात्र विप्रकृष्टतरान्नसाधनलाङ्गलाद्यपेक्षया शूर्पं साधकतममित्युच्यते। नन्वेवमापेक्षिकप्रवृत्तेर्मुख्यत्वमेव स्यात्, तथा च देवदत्ते बलवच्छब्दप्रवृत्तिं नैव गौणीं मन्यते। सत्यमेवं, यदा तावन्न्यूनमात्रापेक्षयैव प्रयुज्यते यदा त्वविशेषप्रवृत्तेस्तदधिकबलेष्वपि बलवद्बुद्धिर्जाता तदा स एव शब्दः कुतश्चिदपि न्यूनबले वर्तमानो गौणः संपद्यते। तथा यदि विध्युद्देशोपात्ते शूर्पेऽन्नकरणत्वमनूद्यते। ततस्तन्न्यूनमात्रापेक्षया वा मुख्यत्वं न्यूनानुपादानाद् वा सामान्यतः प्रवृत्तस्य सर्वप्रकृष्टगामित्वबुद्धौ सत्यां गौणता। भवतस्तु अपूर्वविधानादत्यन्तसाधकतमत्ववर्तमानत्वयोः क्रियां प्रत्युपादानान्न्यूनापेक्षागौणत्वयोर्निमित्तं नास्तीत्यतिक्लेशः स्यादित्यसमानम् ॥२६॥।

अभ्युपेत्यवादोऽयम्। यद्यपि हेतुविधानम् तथापि न दर्विपिठरादेः प्रसङ्गः। कुतः, शूर्पं हि विधायान्नकरणं हेतुरुच्यते। सोऽपि च न लोके प्रसिद्धः शब्दमेव दृष्टान्तवाचिनमनुमाय साधयितव्यः। तदनुमाने च श्रुतहेतुत्वान्यथानुपपत्तिप्रमाणम्। सा च यावत्येव हेतुत्वमुपपन्ने ततोऽधिककल्पनायै न प्रभवति शूर्पे च होमसंबन्धित्वेन प्रतिज्ञातेऽन्यधर्मस्याहेतुत्वात्, अवश्यं तद्गतमेवान्नकरणत्वं

शब्द इति ]। विध्युद्देशान्तरमाकाङ्क्षितमन्येन चानुपनयनादर्थोपनीतं केवलं हेत्वपेक्षं यत् प्राशस्त्यम् तस्य हेतुरवधार्यत इति। वर्तमानक्रियाशब्द इति। यदि भूतभविष्यद्क्रियावाचिनस्तदा क्रियात्वमिति। न चैवं भूतत्वं कुतश्चित् सिद्धमिति। अपूर्वार्थविधित्वादिति। तन्न्यूनमात्रापेक्षया वा मुख्यत्वमिति। अनुवादत्वात् प्रमाणान्तरोपनीतापेक्षणीयलाभादिति ॥२६॥

वक्तव्यम् । सन्निवेशश्च तदवच्छिन्नमेव तद्गम्यते । लोकेऽपि च यं धर्मिणं प्रतिज्ञाय यो हेतुरुपदिश्यते स प्रथमं तावत् तद्गतविशेषात्मनैव प्रतीयते। तदात्मकस्य तु साध्यांशानुगमाभावात् सामान्यमात्रं विवक्षितमिति दृष्टान्त-प्रयोगवेलायामेवावधार्यते । वेदहेतूनां पुनर्न सामान्यात्मना साध्यसंबन्धोऽवगतो न विशेषात्मना सोऽधुनैवार्थापत्त्या कल्पनीयः । तत्र विशेषस्योपादानात् सामान्य-प्रसिद्धेश्च तत्परित्यागनिमित्तस्यासंभवादुपात्तविशेषमात्रोपसंहृतान्यथानुप-पत्तिस्तद्गतमेव दृष्टान्तवचनं कल्पयति । तदकल्पने हि हेतुनिर्देशः श्रुतो विरुध्यते । यदि तु दर्विपिठरादिगतान्नकरणत्वहोमसंबन्धाविनाभावो न कल्प्यते। न किञ्चिच्छ्रुतं दृष्टं वा नावकल्पते । तस्मादीदृशं दृष्टान्तवचनं कल्प्यं यद्यच्छूर्पमन्नकरणं तेन तेन जुहोतीति । तदेतद्विशेषदृष्टमनुमानम्। लोकेऽपि तृणधूमदर्शनात्तृणाग्निरेवानुमीयते नाग्निमात्रम् । यथा च गमनं गोशब्दव्युत्पत्तिनित्तत्वेनोपादीयमानं सास्नादिमत्सामान्यप्रत्ययोत्तरकालं तद्गत-मेव निमित्तत्वं प्रतिपद्यते न गन्तृमात्रविषयमिति गोशब्दव्यवस्था तथा शूर्पगतान्नकरणहेत्वपदेशान्नान्यगतहेतुत्वप्रसङ्गः, तत्रैतावानर्थः स्यात् । यद्यदन्नकरणसमर्थं शूर्पं तेन तेन होतव्यं न दर्विपिठरादिग्रहणम् । यथा बलवदुपध्मातेऽग्नौ दहनहेतुत्वेनोक्ते स एवानुपध्मातो न दहेन्न तु शङ्खादयो बलवदुपध्माता दहन्ति । तस्माद् व्यवस्था । यदि पुनः शूर्पगतान्नकरणव्यतिरेकेण महासामान्यं विवक्ष्यते ततो यद्यद्गृहीतं तस्य तस्य काचिदन्ननिमित्तता विद्यत इत्यव्यवस्थितत्वाद्धोमाक्षिप्तद्रव्यमात्रानुवादः सन्नर्थकोऽन्नकरणशब्दः । तस्मादन्नहेतुत्वेन स्तुतित्वमेव वरमिति ।।३०।। ।

यद्यदन्नकरणं शूर्पमिति । शूर्पेणान्नकरणत्वावान्तरसामान्यं शूर्पत्वै-कार्थसमवाय्युपलक्षयति । तथा यदन्नकरणसमर्थं शूर्पमित्यत्राप्येवं न तु शूर्पस्यान्नकरणत्वं विशेषणम्, शूर्पस्यानुवादात् । यदि च शूर्पं विशेष्येत ततस्तदेव फलं हेतोरिति । तस्मादलं हेतुत्वेनेत्युपसंहारानुप-पत्तिः । शूर्पत्वैकार्थसमवायिनस्तु तदव्यभिचारिणोऽन्नकरणावान्तर सामान्यस्योपादाने शूर्पव्यक्तय एव विनियोज्याः । ताश्च शूर्पश्रुत्यैवं विनियुक्ता इत्युपपद्यते ।।३०।।

## मन्त्राधिकरणम् ।

इहानर्थक्यशब्दश्रवणात्[1] केचिदेवं संदेहमुपन्यस्यन्ति किम् अर्थवन्तो मन्त्रा उतानर्थका इति । तत्त्वयुक्तम्—

स्पष्टे शब्दात्प्रतीतेऽर्थे नानर्थक्यं हि शङ्क्यते ।
अग्नौ दहति दृष्टे वा दग्धृत्वं किं विचार्यते ।।

सर्वत्र हि कार्यदर्शनाच्छब्दानां शक्तयः कल्प्यन्ते । तच्चार्थप्रत्यायनं मन्त्रेष्वप्युच्चार्यमाणेषूपलभ्यते । न च विशिष्टस्तु वाक्यार्थ इत्येवमादिप्रतिज्ञा-मात्रसाध्योत्तराः पूर्वपक्षा भवन्ति । तस्मादयुक्तोऽयमुपन्यास इति मत्वाह किं विवक्षितवचना मन्त्रा उताविवक्षितवचना इति । नन्वनेनैव हेतुनेदमपि न विचारणीयम् । नैष दोषः । अर्थवतामपि वाक्यानां द्वैविध्यदर्शनात् । उच्चारणार्थप्रत्यायने ह्यविनाभूते तत्रान्यतरविवक्षया प्रयुज्यमानेऽपि कश्चिन्नान्तरीयकं भवति । यद्यर्थप्रत्यायनं विवक्ष्यते तदोच्चारणमर्थात्, अथोच्चारणविवक्षा ततोऽर्थप्रत्यायनमनुषङ्गात् । तथा जपेषु विषविद्यासु चेत्यस्ति विचारावसरः । कः पुनरस्य[2] प्रमाणलक्षणेन संबन्धः । पूर्वमेवोक्त-

किमर्थवन्तोऽनर्थका वा मन्त्रा इत्युपन्यस्तस्यान्यैः सन्देहस्य त्यागेनान्यथोपन्यासः । *भाष्यकृतस्तस्यायुक्तियुक्ततां* मत्वेति प्रतिपादयन्न-न्येषां मतमुपन्यस्य निरस्यति — इहानर्थक्यशब्दश्रवणादिति ।

आनर्थक्यमतदर्थानाम् इति [मी० सू० १।२।१।] साधारणीय-मन्त्रार्थवादनामधेयेषु पूर्वपक्षप्रतिज्ञा सार्थवादेषु निराकृता॰मन्त्रेष्विदानीं निराकर्तव्यतयार्थाविद्यमानतया पक्षीक्रियते । अभिधेयश्च शब्दस्यार्थः । तस्मादर्थवन्तोऽनर्थका इति सन्देह इति ।

नन्वनेनैव हेतुनेति स्पष्टत्वादर्थविवक्षायां लोके तथा दर्शनादिति । कथमर्थवत्त्वे द्वैविध्यमुच्चारणस्याविवक्षितवचनत्वेऽर्थस्याप्रतीतिरेव स्यात् । तत्राह — उच्चारणार्थप्रत्यायने हीति । उच्चारणस्य नान्तरीयकत्व-प्रतिपादनं दृष्टान्तत्वेनेति । यदि विवक्षिताविवक्षितवचनसन्देहान्मन्त्रो-पन्यासः प्रमाणलक्षणे कः सम्बन्धः पक्षद्वयेऽपि प्रयोगित्वानवग्रहादिति [?] पृच्छति — कः पुनरस्येति । उत्तरमाह — पूर्वमेवेति । यथा मन्त्रविचारस्य

१. इहानर्थक्यश्रवणादिति मुद्रितपुस्तपाठः ।
२. कथं पुनरस्येति मुद्रितपुस्तकपाठः ।

मेतत् । यथाम्नायस्य क्रियार्थत्वादिति [मी० सू० १।२।१।] अयमेवात्र पूर्वपक्ष इति तदुत्तरेणैव च निराकाङ्क्षत्वान्न पुनरभिहितम् । एवं हि मन्यते यत्र सोऽरोदीदित्येवमादेः कथञ्चित्संबन्धापादनं, तत्र मन्त्रेषु कः संदेहस्तस्मादुपयोगविशेष एव चिन्तनीय इति ।

सङ्गतिरिति । कीदृशं तद्दत्तमित्याह — यथाम्नायस्येति । आनर्थक्य-मतदर्थानाम् [मी० सू० १।२।१।] इत्यनेन मन्त्राणामपि धर्मेऽनुपयोगित्वं पक्षीकृतमिति व्याख्यातं तत्रैव ।

ननु नायमिदानीं मन्त्रविचारावसरे पूर्वपक्ष आश्रीयते । तत्कथ-मानर्थक्याभिधानं मन्त्रेष्वपि समानमुच्यते । अत आह — अयमेवेति । अत्र मन्त्रनिरूपणेऽयमेव मूलभूतः पूर्वपक्ष इति । स एव तर्ह्युपन्यस्य निराक्रियताम् । तत्राह — तदुत्तरेणैवेति । कथं तेनैव नैराकाङ्क्ष्यम् । अत आह — एवं मन्यत इति । सोऽरोदीदित्येवमादीनां लक्षणया प्राशस्त्यपरत्वं, तस्य च विध्युद्देशानुप्रवेशः कथञ्चिदध्ययनविधिबोधितार्थो-पयोगित्वबलेन यत्र क्रियते तत्र मन्त्रोपयोगे कः सन्देहः । विवक्षितवचनत्वे तावत् विध्यपेक्षितानुष्ठेयस्मृतिसामर्थ्यस्य प्रत्यक्षत्वात् स्पष्ट एवोपयोगः । वचनविवक्षायामपि प्रयाजादिवदिति । तस्मादानर्थक्यशङ्कयैवो-पन्यस्तानां मन्त्राणामर्थवादोपयोगप्रतिपादनेनैव सिद्धसामान्योपयोगानां तन्निर्वाह्ययोपयोगविशेष एव चिन्तनीयतयावशिष्यते इत्याह — तस्मादुपयोगविशेष एवेति । ननु यदि पक्षद्वयेऽप्युपयोगसंभवस्तदा विशेष-चिन्तेयं स्यात् । न तु पूर्वपक्षे धर्मप्रमित्युपयोगसंभवः । व्रीह्यादिवत्तु साधनत्वेन स्यात् । पूर्वपक्षे 'सिद्धप्रमाणभावस्य धर्मे वेदस्य सर्वंश' इति प्रामाण्येनोपयोगिप्रतिपादनमारब्धम् । तथा चार्थवादाधिकरणे आनर्थक्यपक्ष एवोक्तम् ।

अथ वा मन्त्राणामिव पूर्वपक्षेऽर्थवादानामपि पाठमात्रेणोप-कारितास्तु इति । तत्कथमस्य विशेषविचारत्वम् । तदुच्यते, यथैव पदार्थानामभिमतसाधनता लक्षणे स्वसमवायिन्येव धर्मरूपे पदावबोधि-तानां प्रतिपत्त्युपायत्वमिष्यते तद्वत् पाठोपनीतानां मन्त्राणामपि । तथा च विधिर्विधेयस्तर्क इति वेद इति । वदन्ति तेनेदमस्य साधन-

तत्र विधिस्तुतित्वे तावत्स्वयमेव निराकरिष्यति, अविधिसरूपत्वात् । प्रदेशान्तरविहितस्तुत्यसम्भवाच्च । परिशेषात्स्वरूपप्रयोगे सत्यर्थोच्चारणयोः किं विवक्षितमिति विचार्यते । सामसु तु वाचकत्वाभावादात्मप्रयोगमात्राक्षराभि-

मिति धर्मप्रतीतेरर्वागुच्चारणादारभ्य प्रमाणशरीरं तत्र प्रवेशान्मन्त्राणामस्ति पूर्वपक्षे धर्मप्रमितावुपयोगः । अर्थवादाधिकरणे तु उपेक्षणीयत्वेनैव मुख्यः पूर्वः पक्षः, यदभिप्रायेणेदमुच्यते । पाठोपयोगिता तु पक्षान्तरं, तेन तस्यापि प्रथमपादावबोधितसामान्यनिर्वाहाय विशेषणविचारत्वमेव सूच्यत इति व्याख्येयमिति ।

अथ वैवं व्याख्या कर्माङ्गत्वेन प्रयुज्यमाना मन्त्राः कमुपकारं कुर्वन्तीत्यङ्गप्रयोजनविचारस्य प्रमाणलक्षणे का सङ्गतिरित्याह — कः पुनरस्येति । तत्राह — पूर्वोक्तमेतदिति । आम्नायस्य यत्प्रामाण्यं प्रतिज्ञातं तत् क्रियार्थत्वेनोपपादितम् । न च मन्त्राणां क्रियाप्रतिपत्त्यर्थता अतश्चानर्थक्यमित्येवं मन्त्राक्षेपस्य दर्शिता सङ्गतिः । अयमपि स एवाक्षेपोऽर्थो विवक्षाद्वारेण क्रियते । तस्मात् संगच्छते । यदि स एवायं पूर्वपक्षः किमिति तथैव विधीयमानभावनांशाननुप्रवेशेन मन्त्रार्थस्य न क्रियते । अर्थवादेषु हि भावनानुप्रवेशो दर्शितः न मन्त्रेषु । तत्राह — तदुत्तरेणैवेति । कथं नैराकाङ्क्ष्यमित्यत्राह — यत्र सोऽरोदीदिति । सत्या मर्थवादविवक्षायामसङ्गतिरित्याशङ्क्य वक्तुमिति मत्वानर्थक्यवादी विवक्षितवचनतायामेव विप्रतिपद्यते नोपयोगविशेष एव विहितार्थप्रकाशन-रूपश्चिन्तनीयः । यद्युपपद्यते भवति प्रतीत्युपयोगात् प्रामाण्यं, न चेत् व्रीह्यादिवदप्रामाण्यमिति ।

अत्र *भाष्यकारो* विवक्षिताविवक्षितवचनत्वे उपन्यस्यते । एवं विवृतवान्, किमर्थप्रकाशनेनोपयुज्यन्ते किमुच्चारणेनेति । तत्र विवक्षित-वचनत्व एव विधिस्तुत्योरपि संभवात् । यथाविहितार्थप्रकाशनमात्रोपसंहृतं विवक्षितवचनत्वम् । तथोपन्यस्यति — तत्र विधिस्तुतित्वे इति । स्वयं सिद्धान्तवाद्येव यथा विधिस्तुतित्वेन निराकरिष्यते द्वितीयाध्याये 'अपि वा प्रयोगसामर्थ्यादित्यत्र [मी० सू० २।१।३१] । तदा तस्यापि दर्शने स्वरूपप्रयोगः सिद्ध इति साम्नामपि मन्त्रग्रहणेनोपादानात् । तत्र वाचकत्वासंभवात् कथमयं विचार इत्याशङ्क्योत्तरं ददाति —सामसु त्विति ।

व्यक्तिपरत्वगतसंदेहः । कथं पुनः पूर्वपक्षवादिनः श्रुत्यसंयुक्तानां केषाञ्चित्मन्त्राणां प्रयोगसिद्धिः ।

केचिदाहुः, अप्रयोगार्थमेवासावविवक्षितार्थत्वे यतते, न ह्यनाश्रितार्थान् मन्त्रान् कश्चिदपि प्रयुङ्क्ते । अतो यच्च किमुच्चारणमात्रेणोपकुर्वन्तीति सिद्धवत् प्रयोगाभिधानं नैतदञ्जसैव द्रष्टव्यम् । अयं हि तत्र दुष्टोऽभिप्रायः यदि नामोच्चारणमात्रोपकारं वक्ष्यति । तत्र शक्ष्याम्यस्याप्रयोगं वक्तुमिति। यद्यपि प्रयोजनकथने बर्हिर्देवसदनं दामीत्ययं बर्हिर्लवनात् प्रच्याव्यते । तदनेन प्रकारेण प्रयोगप्रच्यावनमेव द्रष्टव्यम् । अथ वा याज्ञिकदर्शनेनाविगानात् प्रयोगसिद्धिमविचार्येतरो विचारः । किमर्थं तु याज्ञिकप्रसिद्धिरुपेक्षिता । यतः सैव तावत् युक्तायुक्तत्वेन न विचार्यते । तत्रायमभिप्रायः । सर्वथा तावद् दृढमेषां स्मृतिन्यायेन प्रयोगित्वमवस्थितम् । तन्न शक्यं बाधितुम् । तस्यैव त्विदं मूलं निरूप्यते । तद्यदि पूर्वपक्षो भविष्यति ततोऽन्यप्रमाणाभावाद् विनियोजकश्रुत्यनुमानेन मूलं कल्पयिष्यामः । सिद्धान्ते तु लिङ्गप्रकरणयोरेव मूलत्वाध्यवसानम्

**किमर्थप्रकाशनेनेत्युपलक्षणं दृष्टत्वसामान्येन सामसु अक्षराभिव्यक्तिमुपलक्षयति । किं दृष्टोऽक्षराणामभिव्यक्तिसंस्कारः सामशब्दाभिधेयस्योच्चारणविशेषस्य, उत प्रधानकर्म सामादृष्टार्थमिति । पश्चिमे व्याख्यान इयं योजना सामसु वाचकत्वाभावात् न पृथक् प्रामाण्यमिति । न साम्नां विचारविषयत्वम् । अनेनैव तु सन्देहेन तत्रैष सन्देहः । यदृचामप्युच्चारणार्थता । साम्नामात्मप्रयोगमात्रपरत्वम् । अथार्थप्रकाशनार्थता तदा तेषामपि प्रयोजनवदक्षराभिव्यक्तिपरत्वमिति । कथं पुनः पूर्वपक्षवादिन इति । अविवक्षितवचनत्वेन लैङ्गिकेन विनियोगाभावात् असत्यङ्गत्वे नास्ति कर्मणि प्रयोगे प्रमाणमिति । केचिदाहुरिति । तेषां मते नायं विशेषविचारः किन्तु अर्थवत्त्वेऽनुपयोगं वक्तुमशक्नुवन्नानर्थक्यवादी वदति । भवेदेषामुपयोगः, यद्येते विवक्षितवचनाः, तदेव तु न संभवतीति । कथं तर्हि किमुच्चारणेनोपयुज्यन्ते इत्युपयोगमङ्गीकृत्य तद्विशेषाभिधानम् । तद्व्याचष्टे — अतो यच्चेति । नैतदञ्जसेति । सम्बन्ध इति । पश्चिमे व्याख्याने सिद्ध एवाविवक्षितवचनत्वेन प्रामाण्येऽतिशयोऽयं प्रयोगाभावोऽप्यभिमत इति ।**

अथवैवं पूर्वपक्षेऽपि प्रयोगः । स्वाध्यायाध्ययनविधिनैव मन्त्राः पुरुषार्थाय नीयन्ते । तथा हि दर्शपूर्णमासादिभिः क्रमप्रकरणाभ्यां यावत्संस्पृश्यते तत्सर्वमुपकारकत्वेन स्वीक्रियते प्रयाजादिवाक्यानि मन्त्ररूपमपि च ।

तत्र प्रयाजादिवाक्यानि अर्थं समर्प्य चरितार्थानि स्वरूपसंस्पर्शे सत्यपि प्रयोज्यतां न प्रतिपद्यन्ते । मन्त्राः पुनः कर्मानौपयिकार्थाभिधायित्वात् तेनांशेनानपेक्षिताः स्तुतिविधिस्मृतीनां तु प्रकारान्तरेण सिद्धिरिति प्रयोगवचनेनैषां रूपमेवाङ्गीक्रियते । स्वाध्यायाध्ययनचोदनापि प्रत्यासन्नतरमन्त्रस्वरूपमेव समर्प्य चरितार्थत्वान्न विप्रकृष्टमर्थाभिधानं यावद् गच्छति । प्रयाजादिवाक्येष्वपि तावद्रूपग्रहणमेव प्रसक्तमासीत्तत्त्वाभिप्रेतार्थदानेन युक्तं न त्विह तथा किञ्चित् । शब्दे च कार्यस्यासंभवादर्थे कार्यं विज्ञायते । मन्त्राणां तु शब्द एव संभवति । अवश्यं ह्यर्थप्राधान्यपक्षेऽपि पुरुषः शब्दे नियोक्तव्यः । तद्व्यापारोत्तरकालत्वादर्थाभिधानस्य । तस्माद्रूपमेवाङ्गम् । तथा च तदर्थशास्त्रादीन्युच्यन्ते । परिहारसूत्रक्रमानुरोधेन विपर्यस्तान्युदाहरणान्यभ्यादानात्प्रभृति दातव्यानि । ***भाष्यकारस्तु*** यथा तथोदाहृतैरपि कार्यसिद्धि मत्वैवमुपन्यस्तवानुरुप्रथा उरुप्रथस्वेत्यादि, यथा साक्ष इति । नीलीरोगाद्युप-

अथ वैवं पूर्वपक्षेऽपि प्रयोग इति । **अर्थनैरपेक्ष्येण प्रयोगमुपपादयन् पूर्वपक्षमेवारभते — क्रमप्रकरणाभ्यामिति । विकृतौ प्रकृतधर्मपरिपूरितकथंभावाकाङ्क्षायां क्रम इति । स्तुतिविधिस्मृतीनामिति । विधिस्तुत्योरन्यतः प्रसिद्धम् अपि वा प्रयोगसामर्थ्यान् मन्त्रोऽभिधानवाची स्यादित्यत्र [मी० सू० २।१।३१] । वक्ष्यति स्मृतेर्बुद्धशास्त्रादिति [मी० सू० १।२।३३।] सूत्रे । प्रयाजादिवाक्येष्वपीति । पूर्वं प्रयाजादिवाक्यानामर्थसमर्पणेन चरितार्थत्वात् प्रयोज्यतायां नास्ति प्रमाणमित्युक्तम् ।**

**इदानीमध्ययनविधेर्मन्त्रविषयप्रयोगप्रामाण्यमुक्त्वा स एव प्रयाजादिवाक्येष्वपि प्रमाणमित्याशङ्क्य युक्त्यन्तरेण बाधते । प्रधानोपकारिप्रयाजादिसमर्पणं दृष्टमुत्सृज्य नादृष्टं कल्पयितुं शक्यते । तच्चाप्रयुज्यमानैरपि कृतमिति । शब्दे च कार्यस्यासंभवादिति । स्मृतेरप्यन्यतः सिद्धेरर्थाभिधानादप्यदृष्टं कल्पनीयमित्यभिप्रेत्यैतदुच्यते — तदर्थशास्त्रादीन्युच्यन्त इति ।**

हृतेन्द्रियस्य चक्षुरस्त्येवेति परैर्दृश्यते, परेण तु नीयमानमुपलभ्य न पश्यतीति ज्ञायते। तथा मन्त्ररूपमालोचयतामर्थप्रकाशनशक्तिबुद्धिर्यद्यपि भवति तथापि परेण विनियोगं दृष्ट्वा स्वयं विनियोजकशक्तिर्नास्तीति गम्यते। ततश्चार्थ-तन्त्रत्वम्। अन्यथा स्वयमेव विनियुज्यते। नन्वर्थवादार्थमिति लिङ्गप्रकरणानु-मितमन्त्रविधिस्तुत्यभिप्रायम्। न हीति च्छेदः। विधिनैकवाक्यतयार्थवादाः स्तुत्यर्थाः कल्पिताः। प्रदेशान्तरस्थस्य तु प्रत्यक्षस्यानुमानिकस्य वा विधेरात्मनः समीपेऽर्थवादमपश्यतः स्वयं प्ररोचनाशक्त्याविर्भावेन व्यावृत्तापेक्षत्वान्न दूरस्थया स्तुत्या कार्यम्। तथाश्वादाने रूपादेव प्राप्तत्वान् मन्त्राणां तां चतुर्भिरादत्त इत्यनर्थकं वचनम्। चतुःसंख्यामपि ब्रुवदेतन्मन्त्रगतामेव ब्रूयान्न क्रियागताम्। न ह्यन्यगुणोऽन्यगामी भवति। न च निष्क्रियत्वात्कर्माङ्ग-त्वेनोपदेष्टुं शक्यते। तेनैवं वाक्यं भवेद्य एते चत्वारस्तैरश्वादानं कुर्यात् ते च प्रागेव वचनाच्चत्वार इत्यानर्थक्यम्। क्रियानङ्गत्वादेव च संख्यायाः समुच्चयशब्दाभावाच्च प्रत्येकं च सामर्थ्याद्विकल्पः प्रसज्यमाना न शक्यो वार-यितुम्। अस्मत्पक्षे पुनर्वचनगम्यत्वाद्दृष्टस्य न चतुर्भ्यः प्रागस्तित्वे प्रमाणमिति युक्तः समुच्चयः। उभयोरपि तावद्रशनयोरश्वगर्दभबन्धनार्थमादानमर्थप्राप्तत्वान्न विधीयते। यदि मन्त्रोऽपि रूपात् प्राप्तोऽनर्थकं वचनम्। परिसंख्येति परेर्वर्जनार्थत्वात् तद्विषया बुद्धिरभिधीयते। सापि गर्दभरशनाया आदाने वा स्यान्मन्त्रे वा। उभयथा च त्रिदोषी। विधिपरः सन्न गृह्यत इति स्वार्थं जह्यात्। परस्य च वाक्यस्य गर्दभरशनां नेत्यस्यार्थे कल्पेत। प्राप्तं च रूपादर्थाद् वा मन्त्रमादानं वा बाधेत। अदृष्टार्थत्वे त्वन्धन्यायेन यत्रैव नीयते

न ह्यन्यगुणोऽन्यगामीति परिच्छेदकत्वेनाङ्गत्वम् संख्यायाः, तच्च द्रव्ये स्थितम् अतः क्रियाङ्गत्वासम्भव इति। अथ कारकत्वेनाङ्गत्वमुच्यते। तत्राह — न च निष्क्रियत्वादिति। सापि गर्दभरशनाया इति। यदादानाश्वाभिधानीसम्बन्धविवक्षा तदाश्वाभिधानी-मादत्ते न गर्दभाभिधानीमित्यादाने गर्दभाभिधानी परिसंख्या। अथ मन्त्राश्वाभिधानीसम्बन्धविवक्षा तदानेन मन्त्रेणाश्वाभिधानीं न गर्दभाभिधानीमिति मन्त्रे गर्दभाभिधानी परिसंख्येति। प्राप्तं च रूपादर्थाद् वेति। रूपान्मन्त्रप्राप्तिः, अर्थादादानप्राप्तिः। नहि रशनामादाय

तत्रैव वर्तिष्यते । यदि चाश्वाभिधानीमिति संबन्धः स्यात् ततः परिसंचक्षीतापि न त्वसावस्ति । कारकाणां क्रियापरिहारेणान्योन्यसंबन्धाभावात् । तेन वाक्यमपि क्रिययैव सम्बध्नीयात् । एका च सा । प्रकरणापूर्वसंयोगश्चावशिष्टस्तस्मान्न परिसंख्या प्रयोजनं कथयति । अतो न प्रमाणं बर्हिरित्यादि तदा हि महाप्रयोगवचनेन सर्वे मन्त्राः केवलप्रधानार्थास्तत्प्रयोगाबहिर्भाववृत्तयो नाङ्गैः सम्बध्येरन् । पाठक्रमानुरोधात्तु तदापि नैव व्युत्क्रमेण प्रयोगः कर्माण्यनादृत्य सकृदेवानुवाकमध्यायं वा पठित्वानुष्ठीयते ॥३१॥ ।

अग्निर्मूर्धेति योऽर्थः प्रतीयते स मूर्धाग्निरित्यनेनापीत्यनर्थको नियमः । यस्य त्वदृष्टार्थता तस्य क्रमान्यत्वे तदुच्चारणजन्यादृष्टप्रमाणाभावात्, क्रमान्यत्वं न युक्तमिति नियमार्थवत्ता । अथ नियतप्रत्यायनाददृष्टं कल्प्येत तदुच्चारणादेवोपपद्यते । तदधीनत्वात् नियतप्रतीतेः । यस्तु दृष्टार्थेषु प्रकृतिप्रत्ययसमासेषु नियमो दृश्यते यथेन्द्राग्नी नीलोत्पलम् राजपुरुषश्चित्रगुर्निष्कौशाम्बिरिति ।

युक्तं तत्र विपर्ययेऽपशब्दार्थान्यत्वानर्थक्यप्रसङ्गात् । अजाद्यदन्तविशेषणत्वादिनिमित्तो हि तत्र नियतः पूर्वनिपातः स्मर्यते । तेनाग्नीन्द्रावित्यसाधुत्वं

तया बन्धुं[द्धुं ?] गर्दभः शक्यत इति । यदि चाश्वाभिधानीमिति मन्त्रे गर्दभाभिधानीसम्बन्धपरिसंख्यां दूषयति ।

वाक्यमपि क्रिययैव सम्बध्नीयादिति । तत्रादानोद्देशेन मन्त्र उपादेयः । न चोद्दिश्यमानस्याश्वाभिधान्या विशेषणं संभवति । अत आदानमन्त्रेण सम्बन्धात् परिसंख्यासंभव इत्यभिप्रायः । यदि प्रधानप्रयोगाः बहिर्भाववृत्तित्वमात्रे प्रमाणं नाङ्गसम्बन्धे तदा किमङ्गसन्निधिः प्रयोगे नादर्तव्यः । तत्राह — पाठक्रमानुरोधात्तु इति । विशेषस्त्वनुष्ठानमीदृशं यथा सिद्धान्ते मन्त्राः क्रमेणाम्नाताः क्रमाम्नातैः कर्मभिः यथासंख्येनान्विता विभज्य प्रयुज्यन्ते । नैवमत्र । किन्त्वेवमित्याह — कर्माण्यनादृत्येति ॥३१॥

तदधीनत्वान्नियतप्रवृत्तेरिति । तेन प्रत्यायनं नियमार्थमप्युच्चारणनियम एव पुरुषः प्रवर्तनीयः । ततश्च तत एवादृष्टमस्तु किं परम्परयेति । अग्नीन्द्रावित्यसाधुत्वमिति । प्रत्येकपदार्थप्रतीतिः साधुमूलैव । तन्मूला चार्थावगतिः, संख्यावगतिश्च प्रचयमूला यत्तत् समासपदं प्रयुक्तं तन्नेदृशं

पुरुषराज इत्यर्थान्यत्वम् कौशाम्बिनिरित्यनर्थकत्वम् । यस्त्वग्नीन्द्राविति क्वचित्-प्रयोगः स छान्दसोऽग्नेर्वाभ्यर्हितत्वस्य विवक्षयेति मन्तव्यम् । तुल्यकक्षार्थ-प्रतीताविन्द्राग्नीपदमेव व्यवस्थितम् ।

नन्विहापि क्रमान्यत्वादमन्त्रत्वं स्यात् । तदेवार्थपरत्वे सति तदविनाशे तु किं निमित्तमिति न विद्मः । तेन मन्त्रप्रसिद्धौ **वाक्यनियमात्** [मी० सू० १।२।३२ ।] इत्यपि सूत्रम् । अथ वास्त्वप्रकरणाधीतवाक्यनियमात् । न ह्यर्थाभिधानेऽन्यदीयस्यात्मीयस्य च विशेषः ।

अथ वा मन्त्रपौरुषेयवाक्ययोस्तुल्यार्थाभिधानसामर्थ्ये मन्त्रवाक्य-नियमोऽदृष्टार्थः । अथ वानेकध्यानादिस्मरणोपायप्रसङ्गे वाक्यनियमात् । न हि दृष्टेऽर्थे मन्त्रस्य ध्यानादेर्वा कश्चिद्विशेष इत्यदृष्टार्थता ॥३२॥

न ह्यविद्वान्विहितोऽस्तीत्यवश्यं तावदग्नीधात्मीयाः पदार्थाः प्रागेव कर्मप्रक्रमादवगन्तव्याः । तत्र प्रैषः पिष्टपेषणन्यायेनार्थं ज्ञापयितुम-शक्नुवन्नदृष्टार्थो भवति । अथ स्मारको मन्त्र इत्युच्यते । तदपि नास्ति । ब्राह्मणज्ञानाभ्यासपाटवनिमित्तसंस्कारादेव तत्सिद्धेः । संस्काराभि-व्यक्तिहेतुरपि पूर्वपदार्थसमाप्तिर्ब्राह्मणमेव वा भविष्यति नार्थो मन्त्रैः । तत्र यदुच्यते संस्कारविशेषो भविष्यतीति नासावदृष्टादन्यः संभवत्यतः पूर्वपक्षापत्तिः । यदि हि प्रतीतोऽप्यर्थो नैव दृष्टं साधयति ततो यत्तद्दूरमपि गत्वावश्यं कल्पनीयं तदुच्चारणदेव वरमिति ॥३३॥

न चतुःशृङ्गादि किञ्चित्कर्म तत्संबन्धि वा प्रकृतौ विकृतौ वा विद्यते । यद्यपि च गुणवादेन किञ्चित्स्यात्तथापि तदनुष्ठानाभावान्न तत्स्मृत्या कार्यम् ।

**वाचकमिति** । **पुरुषराज इति** । पुरुषस्य विशेषणत्वादन्यार्थत्वम् । **कौशाम्बिनिरिति** । नात्र कौशाम्ब्या अपादानत्वप्रतीतौ कारणमस्ति । निर्गत इति च गत्यर्थस्य यथान्वाख्यानमेव प्रयोगे तादर्थ्यादक्रियायुक्तानां च निरादीनामवाचकत्वादर्थान्तरस्याप्यभाव इत्यानर्थक्यमिति । **अभ्य-र्हितत्वस्य विवक्षयेति** । अभ्यर्हितं पूर्वं निपततीति स्मरणात् ॥३२॥

**नन्वदृष्टोऽपि** संस्कारः प्रत्यायनाद् भविष्यति । कथं पुनः पूर्वपक्षा-पत्तिरित्युच्यते । तत्राह — **यदि हि प्रतीतोऽप्यर्थ इति** ॥३३॥

**तथापि तदनुष्ठानाभावादिति** । तस्य गौणस्वरूपस्यानुष्ठानाभावात् । तथा प्रतिपादनमदृष्टाय यज्ञप्रयोगोऽनेन प्रतिपाद्यः । तस्य च

न च ज्ञायते क्व प्रदेशे प्रयुज्यतामिति । तत्र मन्त्रपाठक्रमानुरोधेनोच्चारण-मापततीति सिद्धः पूर्वः पक्षः । मा मा हिंसीर्मा मा संताप्समित्यादीनि वेदिहविर्धानादिविषयत्वादचेतनेऽर्थबन्धनात् [मी० सू० १।२।३५ ।] इत्यत्राप्यु-दाहरणम् । इह त्वप्रसक्तायां हिंसायां प्रतिषेधानर्थक्यम् ।।३४।।

ओषधे त्रायस्व, शृणोत ग्रावाण इति च सम्बोधनं कार्यनियोगाभिमुख्य-करणार्थम् । न चाचेतनस्याभिमुख्यं संभवति । न च पशुत्राणे प्रातरनुवाकश्रवणे वा प्रैषेण प्रवृत्तिरुपपद्यत इत्यानर्थक्यमर्थविवक्षायाम् ।।३५।। ।

द्युत्वमन्तरिक्षत्वं चादितेरेकानेकत्वं चरुद्रव्यस्य विप्रतिषिद्धम् । न चैष विप्रतिषिद्धोऽर्थः कर्मौपयिकः कथञ्चिददिति[1]र्देवतान्तरिक्षं द्यौर्वा भवेत् । न च स्तुत्यर्थतयापि हेतुद्वयं परिहर्तुं शक्यं, ब्राह्मणे हि विधिशेषभूताः स्तुतयोऽर्थवन्त्यो भवन्ति । मन्त्रस्तुतिस्तु अप्रयोजनत्वान्नादर्तव्या ।।३६।।

स्वाध्यायाध्ययनस्य कर्मार्थत्वाद् यत्कर्मण्युपयोक्ष्यते तदभ्यसितव्यम् । तच्चैवं विद्वांसः सन्तो वृद्धाः शिष्यानक्षरावधारण एव प्रवर्तयन्ति सन्निहितेऽप्यर्थे न तद्वचनाभ्यासे । तेनावश्यं तेषामुच्चारणमेवाङ्गत्वेनाभि-प्रेतमिति ।।३७।। ।

केचित्पदार्था ज्ञानेनाविज्ञेयाः । केषांचित्तु वाक्यार्थ एव न ज्ञायते । न

विततत्वान्न मन्त्रोपस्थापितस्यानुष्ठानम् । अतः स्मरणस्यानपेक्षितत्वात् अदृष्टार्थत्वमिति । अस्यैवोपोद्बलकम् — न च ज्ञायते क्व प्रदेश इति । येनापि वक्तव्यम् यज्ञप्रयोगप्रकाशकोऽयमिति । तेन तस्य विततत्वात् न प्रदेशविशेषावधारणम् प्रयोजनवशेन शक्यम् । अतः पाठक्रमेण यत्र स्थाने पठितस्तत्र प्रयोक्तव्यः । पाठक्रमश्चासत्यर्थे प्रमाणमिति दृष्टेनार्थेन प्रसक्तस्योच्चारणार्थतां दर्शयतीति पूर्वपक्षसिद्धिः ।।३४।।

कथञ्चिदिति । देवतेति । कथं [वादितिर्देवतेति] पूर्वं विरुद्धरूपद्वय-योगित्वमेकस्य विरुद्धमित्युक्तम् । इदानीमेकैकरूपयोगित्वमपि विरुद्धमुच्यते । या देवतादितिः सा कथं द्यौर्भवेत् अन्तरिक्षं वा भवेदिति ।।३६।।

केचित् पदार्थाज्ञानेनेति । काण्डकेति पदार्थो न ज्ञायते । वाक्यार्थस्तु इन्द्रो ज्ञायत एव इन्द्रः सोमस्य काण्डकेति मन्त्रे सृण्येवेत्येव-मादेस्तु प्रकाशंया देवतापि न ज्ञायते । वाक्यार्थज्ञानेन पदार्थ-

---

१. कथं वा अदितिर्देवतेति मुद्रितपुस्तकपाठः ।

च मन्त्रार्थः सत्तामात्रेणोपकरोति क्रियावेलायामस्मर्यमाण इति यदेकान्तेन शक्यं कर्तुमुच्चारणं तदेव कार्यमित्यवधार्यते ॥३८॥

अर्थप्रकाशनपक्षे यस्य योऽर्थः स एव तेन प्रकाशयितव्यः। केचिच्चानित्यैरकर्माङ्गभूतैश्चार्थैरर्थवन्तो मन्त्रा लक्ष्यन्ते। यथा किं ते कृण्वन्ति कीकटेषु गाव इति। अयं हि दृढेनाध्येतॄणां स्मरणेन विश्वामित्रस्यार्षं गम्यते। तेन किल- कर्मार्थं धनं प्रार्थयमानेनेन्द्रोऽभिहितः। त्रैलोक्याधिपते याः कीकटेषु जनपदेषु गावस्तास्तव किं कुर्वन्ति। ते हि नास्तिकाः किं क्रतुनेति वदन्तो न किञ्चित्कर्मानुतिष्ठन्ति। अतश्च ता नाशिरं सोमसंस्कारार्थं दुहत न घर्मं तपन्ति। न धर्मतपने पयोदानेन साधनीभवन्ति। तस्मात्प्रमगन्दस्य कीकटाधिपतेर्यद्वेदो धनं तदस्माकं नैचाशाखं नगरमाभर। हृग्रहोर्भश्छन्दसीति भकारः। अथ वास्मान्प्रति तद् विभृहि धारय पोषय चेत्येतन्नो मघवन्रन्धया साधयास्माकमिति छान्दसं दीर्घत्वम्। यद्येतद्विवक्षितं तथा सत्यादिमदर्थाभिधानाद् वेदस्य कृत्रिमत्वेनाप्रामाण्यं प्रसज्यते। न चान्यो मन्त्रार्थः शक्यते वक्तुमप्रतीतेः। अतोऽर्थसदसद्भावावनादृत्याक्षरोच्चारणं फलवदाश्रयणीयमिति ॥३९॥

**ज्ञानमपि तत्रोक्तमेवेति। यदेकान्तेन·······कार्यमिति। यदेकान्तेन पक्षद्वयेऽप्यनुष्ठेयं पुरुषस्योच्चारणं तदेव सर्वत्र शक्यम् नार्थप्रत्यायनमित्यवधार्यते। कर्तव्यतया तदेव कर्तव्यं न प्रत्यायनमिति। अथ वा तदेवावधार्यत इति सम्बन्धः। यतः शक्यं नान्यदिति। अनित्यसंयोगः सिद्धवद्धेतुत्वेनोच्यते। सिद्धश्चासौ मन्त्रानित्यतायां हेतुः नार्थाविवक्षायां न ह्यर्थसंयोग एवार्थासंयोगे हेतुः। तेनार्थविवक्षायामनित्यसंयोगप्रसङ्गादिति ईदृशोऽयं हेतुरिति प्रकृतया प्रतिज्ञया सम्बन्धं दर्शयति — मन्त्रानर्थक्यमिति [मी० सू० १।२।३१।] ॥३८॥**

**तदेतद् विवृणोति — अर्थप्रकाशनपक्ष इति। अनित्यत्वेनैव नित्यस्य कर्मणोऽनङ्गत्वमपि सूचितमिति व्याचष्टे — अकर्माङ्गभूतैरिति। यथा किं ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति घर्मं आनो भर प्रमगन्दस्य वेदो नैचाशाखं मघवन् रन्धया नः इति [ऋग्वेद ३।४।५३।१४।] किं क्रतुनेति वदन्ति इति। कीकटशब्दगतस्य योगस्य निर्वचनमिति ॥३९॥**

मन्त्रोच्चारणं तावदक्षरग्रहणेन निराकांक्षीकृतम् न साक्षात् क्रत्वङ्गत्वम् प्रतिपद्यते। अक्षराणां तु[1] द्रव्यवदनितिकर्तव्यतात्मकत्वात् प्रकरणेनाग्रहणम् एवं पदार्थज्ञानस्य वाक्यार्थप्रत्ययेन नैराकाङ्क्ष्यादग्रहणम्। वाक्यार्थप्रत्ययस्त्वकृतार्थः प्रकरणे विपरिवर्तमानः क्रियात्मकत्वात्। प्रयोगवचनाकाङ्क्षितः कर्मसमवेतानुष्ठास्यमानार्थस्मृतिफलत्वेनेतिकर्तव्यता भवति। तत्रादृष्टकल्पनानिमित्ताभावः। समाम्नानान्यथानुपपत्त्या हि तत्कल्प्येत

स्वाध्यायविधिना दर्शपूर्णमासादिगतं मन्त्राध्ययनं विधीयते। तन्न, रूपज्ञानाय मन्त्रसमाम्नायगतेन पाठेन तस्य सिद्धत्वात्। तस्मात् विनियोगज्ञानाय स तस्य कथमिति निरूप्यते। तत्र कथंभावसृष्टमपि मन्त्रोच्चारणमौत्पत्तिकमक्षरग्रहणादितात्पर्यपरम्परया वाक्यार्थप्रतीतिशेषत्वमजहत् तत्पर्यन्तं गतम् तस्यैवमुपायस्योपकरणेन विधियोगात् प्रकरणान्वयि भवति न साक्षादुपकारनिवृत्त्याङ्गं भवतीति व्युत्पादयति — मन्त्रोच्चारणं तावदिति। ग्रहणपञ्चस्वभावात् ग्राह्यसंस्कारः। ग्राह्याणां चाक्षराणां न तावत् प्रागवधृतमङ्गत्वम्। इदानीं तु तत्प्रत्येतुमशक्यमित्याह — अक्षराणां त्विति। तस्मात् तेषां पदार्थज्ञानकरणत्वेनोपादानं पदज्ञानं त्वक्षरज्ञानेनैवोपात्तं विवक्षितम्। तत्संघातविषयत्वात् पदार्थज्ञानमपि पदार्थसंस्कारः। ते च वाक्यार्थप्रत्ययोपयोगिनः। अतः पदार्थसमर्पणद्वारेण वाक्यार्थप्रतीतिप्रयोजनता तस्येत्याह — एवं पदार्थज्ञानस्येति। वाक्यार्थप्रत्ययस्त्वकृतार्थ इति। शास्त्रावधारणवेलायामुच्चार्यमाणान्मन्त्राद् वाक्यार्थप्रत्ययो दृश्यते न ततः किञ्चित्। तेनासावकृतार्थः साकाङ्क्षः। साकाङ्क्षेण प्रकरणिना संबद्ध्यते। स च कर्मप्रयोगवेलायामनुष्ठेयो मन्त्रोच्चारणं गृह्णातीति न मन्त्रस्यानुष्ठेयार्थदानेन विमोकः। प्रयाजादिवाक्योच्चारणं तु तदर्थानुष्ठानेनाग्रहणाद् विमुच्यत इति दर्शितो विशेषः। यदि ततोऽदृष्टं कल्पनीयं ततो वरमुच्चारणादेव कल्पितं तद्विषयत्वादध्ययनविधेरित्याशङ्क्य दृष्टं फलमाह — अनुष्ठास्यमानार्थस्मृतिफलत्वेनेति। यः कर्मकालेऽनुष्ठास्यतेऽर्थः नासावुपस्थितोऽनुष्ठातुं शक्यते। अयं च मन्त्रवाक्यार्थप्रत्ययस्तदा मन्त्रेण प्रयुज्यमानेन क्रियमाणस्तमुपस्थापयितुं

---

१—चेति मुद्रितपुस्तकपाठः

नोपपत्तेरर्थवत्त्वे। यद्यपि च तत्कल्पनावसरो भवेत्तथापि कामं वाक्यार्थ-प्रत्ययादेव न त्वौपयिकार्थप्रतीतिनिराकाङ्क्षाद्वाक्यात् । अवश्यं च दृष्टा-दृष्टयोर्विनियुज्यमानस्य प्रमाणमुपन्यसितव्यम्। इह च प्रकरणाददृष्टार्थता लिङ्गाच्चं दृष्टार्थता। न च प्रकरणमशक्येऽर्थे विनियोक्तुमर्हत्येकान्तेनैतदापतति यच्छक्नुयात्तन्मन्त्रेण कुर्यादिति। न चासावदृष्टं शक्नोतीति लौकिकं वैदिकं वा प्रमाणं विद्यते। तस्मादुभयोर्लिङ्गप्रकरणयोर्दृष्टार्थप्रयोगेणैकवाक्यता। एवं च सति याज्ञिकप्रयोगप्रसिद्धेर्न मूलान्तरकल्पनाक्लेशो भविष्यति। अतः स्वाभाविकमेवार्थप्राधान्यमवस्थितम्। नैर्वामिति न दृष्टोऽर्थो निर्वृत्त इत्येतावतैव तादर्थ्यमवसीयते। पुरुषार्थानुपयोगेन स्वाध्यायाध्ययनविधेरानर्थक्यात्। न च **बुद्धशास्त्राविद्यमानवचनाचेतनार्थबन्धनात्** । [मी० सू० १।२।३३-३५।] मन्त्रार्थोपयोगः। तत्र यदि दूरेऽप्यदृष्टकल्पनातो न मुच्यामहे ततोऽतिक्रमकारणा-भावादुच्चारणादेव कल्पनीयः।

उभयवादिसिद्धत्वादुच्चारणकर्तव्यतायास्तत्प्रभवत्वाच्चादृष्टकल्पनस्य। तत्रोच्यते यज्ञे यज्ञाङ्गप्रकाशनमेव प्रयोजनमिति। यद्यपि लोकवत्तैर्न संव्यवहार-स्तथापि तत्स्वरूपप्रकाशनमात्रमेवानुष्ठातॄणामुपकरिष्यति। अतश्च यावन्मात्र-मेवानौपयिकं संबोधनादि कामं तन्न विवक्ष्येत न तु तद्वशेन सर्वमेव त्यक्तव्यम्। न ह्यैकरूप्यं नाम केनचिन्नियतम्। तस्माद्यथादर्शनाभ्युपगमाद्बर्हिर्देवसदनं दामीत्येवमादीनां तावदविहतमर्थप्राधान्यम्। तां चतुर्भिरादत्त इत्यत्रापि वदामः ॥४०॥

**शक्ष्यतीत्यवगम्य तत्फलत्वेनाङ्गतया प्रतीयते ज्ञानं तज्ज्ञाततावशा-दित्यनुमेयम् । ज्ञानं वाक्यार्थप्रत्ययः, तस्य फलं स्मृतिरर्थस्य ज्ञाततेति।**

यद्यपि च तत्कल्पनावसर इति। **नियमादृष्टमभिप्रेत्योच्यत इति। तत्र यद्यपि लिङ्गमसिद्धसामान्यसंबन्धं प्रकरणबाधनेन प्रवर्तते। तथापि प्रकरणमेव लिङ्गमनुरुद्ध्यत इत्याह** — न च प्रकरणमशक्येऽर्थ इति।

कामं तन्न विवक्ष्येत इति। **सम्बोधने क्रियमाणे द्वयं निष्पद्यते अर्थरूपं प्रकाश्यते। तेन यथा ग्रहस्य क्रियान्वयं वक्तुमेकवचनं प्रयुक्तम-विवक्षितमेकत्वं बोधयति। एवमेवंविधः शब्दोऽर्थरूपविवक्षया प्रयुक्तोऽप्य विवक्षितं सम्बोधनं करिष्यति। अपेक्षितानपेक्षितप्रतिपत्तित्वेन विवक्षिताविवक्षितत्वव्यवस्थानां नैरूप्यमित्याह** — न तु तद्वशेनेति ॥४०॥

यद्यदि मन्त्राः प्राप्ताः सामर्थ्येन तथापि चतुःसंख्यामादाने विधास्यति। तत्रारुणैकहायनीन्यायेन परस्परनियमे सति मन्त्रगतचतुःसंख्याविशिष्टमादानं चोदितं समुच्चयादृते कर्तुं न शक्यत इत्यर्थात् समुच्चयफलम्।

अथ वा यावल्लिङ्गानुमिताः श्रुतयः प्रतिमन्त्रं कल्पयितुमारभ्यन्ते। तावदनेन प्रत्यक्षवचनेन चतुःसंख्याविशिष्टास्ते विहितास्तेनाप्राप्तविधिरेव वचनम्। तत्र तु विनाप्येतेन मन्त्रेष्वर्थात् प्राप्तवस्तु तत्परत्वे मन्दं फलमित्यनन्यलभ्यचतुःसंख्यार्थं तस्योपदेशः ॥४१॥

यावद्धि मन्त्राम्नानमनवगतप्रयोजनं प्रकरणी चाकृतार्थस्तावद्यत्तत्सिद्ध्यर्थं कल्प्यते, तत्सर्वं वैदिकं भवति। नैराकाङ्क्ष्योत्तरकालं तु कल्पितमपि पौरुषेयत्वादप्रमाणं स्यात्।

न च श्रुतिमकल्पयित्वा लिङ्गादेः स्वातन्त्र्येण प्रामाण्यमिति वक्ष्यते। तदेतदाह, सति च वाक्ये लिङ्गं विनियोजकं तच्चास्य नास्तीति। यदैव हि प्रकरणादनेन यजेत रशनां वा गृह्णीयादिति कल्पयितुमिष्यते। तदैवाश्वाभिधानीमित्यनेनापहारो मन्त्रस्य। यदपि नैवं संबन्ध इत्यादत्त इति कथं तर्हीत्यश्वाभिधानीमिति। तत्कारकसंबन्धासंभवात् क्रिययैव सह सामान्याभिप्रायेण द्रष्टव्यम्। तस्मान्नादानमात्रे विधीयते किं तर्ह्यश्वाभिधानीविशिष्टे।

यावल्लिङ्गमनुमिताः श्रुतय इति। यावच्चादानश्रुतिरर्थान्न कल्प्यते तावदुभयविशिष्टाधानविधिना मन्त्रसंख्ययोः परस्परनियमापादनात् संख्याविशिष्टा मन्त्रा विहिता भवन्ति ॥४१॥

परिसंख्यादोषान् परिहरति — यावद्धि मन्त्राम्नानामिति।

ननु *भाष्यकारः* प्राप्तमादाने मन्त्रमङ्गीकृत्याश्वाभिधानीसंबन्धे विधेयं दर्शयति — नैवमभिसंबन्धमित्यादिना। तत्राह — यदपीति। इत्यश्वाभिधानीमिति। कर्मशक्त्याक्षिप्तया क्रिययैवाश्वाभिधानीविशिष्टायाः सम्बन्धमाह यतः कारकाणां न साक्षात् सम्बन्धः नेत्यादत्त इति चादानसामान्येन सम्बन्धं वारयति, मा भूद् गर्दभरशनादानेऽपि प्राप्तिरिति। न सामान्याभिप्रायेणेति। इति शब्दोऽत्र द्रष्टव्य इति। अश्वाभिधानीविशिष्टे विधीयत इत्यभिधाय विशिष्टानुवाददोषदर्शनात्।

अथ वा फलतः पश्चात्तनकारकसंबन्ध उपन्यस्यते । सर्वथा दर्शशास्त्रता नास्ति । यदि हि यदेव मन्त्रवचनात् प्राप्नुयात्तदेव प्रत्यक्षवचनेनोच्यते । ततो वयमुपालभ्येमहि ।

नन्वेवमप्राप्तविधिरेवायं संजात इति न वक्तव्यम् परिसंख्येति । फलेनैवमभिधानाददोषः । सर्वत्र हि परिसंख्याशब्दादेवकाराद्वा विना न श्रुत्या परिसंख्या नियमो वोच्यते विधिरेवं त्वेवं जातीयकस्य फलेनैवं व्यपदेशः । कस्तर्हि विधिनियमपरिसंख्यानां भेदः ? उच्यते ,

विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्ते परिसंख्येति कीर्त्यते ।।

विधिरेव हि केनचिद्विशेषेणैवं भिद्यते । तत्र योऽत्यन्तमप्राप्तो न च प्राप्स्यति प्राग्वचनादित्यवगम्यते तत्र नियोगः शुद्ध एव विधिः, यथा व्रीहीन्प्रोक्षतीति । यत्र तु प्राग्वचनात्पाक्षिकी प्राप्तिः संभाव्यते तत्राप्राप्तिपक्षं पूरयन् यो विधिः प्रवर्तते स नियन्तृत्वान्नियम इत्युच्यते, यथा व्रीहीनवहन्तीति । तण्डुलनिष्पत्त्यर्थाक्षेपादेव तत्सिद्धेर्न तत्प्राप्तिमात्रं विधेः फलं किं तह्यप्राप्तांशपूरणम् । तदप्राप्तिपक्षे च तण्डुलैरुपायान्तराण्याक्षिप्येरन् ।

पक्षान्तरमाह — अथ वा फलत इति । आदानमेवोभयविशिष्टं विधीयत इत्यभिप्रायः । सर्वत्र हि परिसंख्याशब्दादिति । परिसंख्याशब्दो नकारादिति । किं तर्हि विधिनियमपरिसंख्यानामिति । फलाविशेषं पश्यतः प्रश्नः । तथा हि यथाश्वाभिधान्यामेव प्राप्तिर्नान्यत्र । एवं व्रीहिष्वेव प्रोक्षणावघातौ नान्यत्र । यथा चावघातो नित्यः तथा प्रोक्षणमपीति ।

अथ वा योऽयं फलविशेषो भवति स तर्हि स्वरूपगतः । को विशेष इत्यज्ञानादेव प्रश्न इति । अप्राप्तांशपूरणनियमफलमुच्यते । तत्र चान्यनिवृत्तेरविद्यमानत्वात् कथमफलत्वमिति । अत आह — तदप्राप्तिपक्षे चेति । उपायान्तरैः समानत्वात् केन विशेषेणावघात एवं नित्यो भवेदित्युपायान्तरनिरीक्षणेनैव पक्षे तदप्राप्तेरुपायान्तराणामवघातवदाक्षेपः । पूर्णे त्वप्राप्तांशेऽवघातेन्न तत एव तण्डुलनिर्वृत्तौ सत्यामाक्षेपस्या-

पूरणे तु सति या तेषां निवृत्तिरसावर्थान्न वाक्यात् । न च तद्द्वारेण[1] नियमः । परिसंख्या हि तथा स्यात् । प्रत्यासन्नां चा[2]वहन्ति नियततामुत्सृज्य नान्यनिवृत्तिफलकल्पनावसरः । तत्प्रसक्तिद्वारा त्ववहन्तेरनियतिरासीदिति नियमान्तर्गतैवार्थान्निवृत्तिर्गम्यते । न च प्राप्ते सति विधिरयं प्रवृत्तो येनास्यान्यनिवृत्त्यर्थता कल्प्येत । प्रागेव तु प्रवर्तमानेनार्थस्य प्रापकशक्तिनिरोधादन्या प्राप्तिः कृता सा चार्थलभ्येति न तथैव व्यपदिश्यते । यः पुनः प्राङ्नियोगात्तत्र चान्यत्र च प्राप्नुयादिति संभाव्यते । यत्र वा यच्चान्यच्च सा परिसंख्या यथात्रैवोदाहृते यथा च गृहमेधीये पञ्चमे पक्षे । अत्रापि च न प्राप्ते सत्येषा प्रवर्तते, प्रापकस्य शास्त्रस्याननुमितत्वात् । कथं तर्हि यद्येतद्वाक्यं नाभविष्यत्तत एनं प्राप्स्यदिति । सर्वस्य प्रत्यक्षस्य वाक्यस्य नानुमानिकवाक्यप्रतिबन्धमात्रं फलमिष्यते । किं हि तेन पठितेन यस्यान्यतोऽप्यर्थः सिध्यति तदर्थं गर्दभरशनानिवृत्तिः फलं कल्प्यते । तेनैवं कल्प्यते कृत्वा चिन्तान्यायेन यदि नामैवं वाक्यं न भवेत्ततः कीदृशमनुष्ठानं स्यात् । तत्र मन्त्रप्राप्तिस्तावदेकान्तेन सिध्येदश्वाभिधान्यां, तद्वदेव तु गर्दभरशनायामपि प्रसज्येत ।

भावात् । तेषां निवृत्तिरिति । यदि च नियमस्यानिवृत्तिः फलमङ्गीक्रियते नियमत्वं हीयेतेत्याह — न च तद्द्वारेणेति । सन्निहितप्रयोजनासंभवे च व्यवधिराश्रीयते । संभवति चात्र सन्निहितमित्याह — प्रत्यासन्नाञ्चावहन्तीति । नियततामिति । न च शास्त्रे निवर्तयितर्यसति इतरेषामनिवृत्तिः । येनेतरनिवृत्तिः यावच्छास्त्रं नीयेत प्राप्तिशास्त्रे च क्लृप्ते तथा स्यात् । न त्वेवमस्तीत्याह — न च प्राप्ते सतीति ।

यथा गृहमेधीये पञ्चम इति । गृहमेधीये श्रुतमाज्यभागैर्यजतीति । तदतिदेशप्राप्तानुवादमात्रमनतिरिक्तार्थत्वादित्येकः पक्षः । द्वितीयस्तु उपदेशातिदेशाभ्यां संहत्यैकस्यार्थस्य प्रतिपादनं प्रकृतिवत्कर्तव्यमिदमिति । तृतीयस्तु सकलविशेषप्राप्तित्वात् अतिदेशस्य विशेषनिर्देशोऽनुवाद एव । तस्मादर्थवादार्थमाज्यभागैर्यजति यज्ञताया इति । चतुर्थस्तु नैकवाक्यतामनापन्नस्यार्थवादत्वमानर्थक्यात् । अतो यागान्तरयोर्विधिराज्यभागधर्मयोरिति । पञ्चमस्तु नाज्यभागशब्दयोरर्थान्तरकल्पना युक्ता । न च धर्मलक्षणया गौणी वृत्तिः । तस्मादङ्गान्तरेऽपि परिसंख्याफलत्वमस्त्विति ।

१. तद्वारणम् इति मुद्रितपुस्तकपाठः
२. नाञ्च इत्यस्य स्थाने न्ना वेति मुद्रितपुस्तकपाठः

यदा त्वनेन वाक्येन प्रत्यक्षेण नैराकाङ्क्ष्यादविशेषविनियोगसमर्थं-वाक्यानुमानं निषिद्धं तदा केवलाश्वाभिधानीविषयत्वसिद्धिरित्यपौनरुक्त्या-दर्थवद्वाक्यम् ।।४२।।

यद्यपि प्रदेशान्तरस्थत्वान्मन्त्रविधानं न स्तूयते तथापि प्रथनविधानात् तत् प्ररोचनया च सकलं वाक्यमर्थवत् । तस्य ह्येतदेवोत्पत्तिवाक्यम् । ननु च पुरोडाशान्यथानुपपत्तिप्राप्तत्वात् प्रथनं न विधातव्यम् । नैतन्नियोगतः प्राप्नोति । द्रुततरं हि पिष्टमप्रथितमपि प्रथेत । विधाने तु सति तादृशं कर्तव्यं येन प्रथयितव्यम् भवति । एवं चाध्वर्युकर्तृकतापि सिद्ध्यति । पठ्यमानं ह्याध्वर्यवसमाख्यां लब्ध्वा कर्तृविशेषं नियच्छति । अर्थप्राप्तं त्वसमाख्यातत्वान्न नियामकं स्यात् । एवमर्थं च यद्यप्येकान्ततोऽर्थात् प्राप्नुयात् तथापि वाक्येनैव प्रापयितव्यम् । तस्मादुपपन्ना प्रथनस्तुतिः । एवमपि यज्ञपतिमेव तत्प्रथयतीत्यनेन स्तुतौ सिद्धायां मन्त्रग्रहणमनर्थकम् । नामन्त्रस्यैव स्तुत्यर्थमुपादानात् । प्रथनं कर्तव्यं तस्य हि क्रियमाणस्यायं मन्त्रः साधनं भवति । तत्र चोरु ते यज्ञपतिः प्रथितामिति एतान्यक्षराणि प्रयुज्यन्ते तथा सति यज्ञपतिः प्रथितो भवतीति[1] गुणो लभ्यते । किमेतदेवास्य फलमिति नेत्याह । स्तुत्यर्थमेव **तद्द्रव्यसंस्कारकर्मसु** [मी० सू० ।३।१।] इति न्यायात् यद्यप्यत्र करणमन्त्राभि-हितत्वात् फलं कल्प्यते तथापि ब्राह्मणे तावत्तत्संकीर्तनमेकान्तेन स्तावकम् । मन्त्रोऽपि तु लिङ्गविनियोज्यो न फलकल्पनायै प्रभवति । करणविभक्तिवि-नियुक्तानां हि सकलोपयोगान्यथानुपपत्त्या फलसाधनता युक्ता लिङ्गानुमिता पुनः श्रुतिराकाङ्क्षावशेन क्रियाप्रकाशनमात्रविनियोगायैव ज्ञायते । तेनैवंजातीयको मन्त्रोऽपि प्रधानफलसंकीर्तनात्मिका स्तुतिरेवाभ्युपगन्तव्या कथमसति प्रथन

**षष्ठस्तु प्रत्यक्षविहिताज्यभागप्रदर्शनाच्चोदकस्तद्वर्ज्यमन्यान्यङ्गानि प्रापयतु । परिसंख्यायास्त्रिदोषत्वेन हेयत्वात्, चोदकार्थकात्स्न्र्यात्तु न तद्वर्जपक्षोऽवकल्पते । अस्तित एव नातिदेशोपसंहारपक्षः सप्तमः । तस्मात् प्रत्यक्षवाक्यसन्निधापितप्रकृतिक्लृप्तोपकाराज्यभागनिराकाङ्क्षीकृतो गृह-मेधीयो नातिदेशमपेक्षते इत्यष्टमः । एवमर्थं च यद्यप्येकान्ततोऽर्थात् प्राप्नुयादिति शक्यते च विधातुमर्थतः प्राप्तेः प्रागित्यभिप्रायः ।।४२।।**

---

१. तत्र चोरु ते यज्ञपतिः प्रथितो भवतीति पूना मुद्रितपुस्तकपाठः ।

इति। कस्यायं प्रश्नः, किं विध्युद्देशवर्तिन पुरोडाशप्रथनस्याथार्थवादगतस्य यज्ञपतिप्रथनस्येति । द्विधापि चायुक्तं पुरोडाशप्रथनं तावद् विधीयमानत्वादेव न प्रष्टव्यम्। न च मन्त्राभिधानात्तस्यास्तित्वं, किं तर्हि स्वरूपसद्भावादित्युत्तरमप्यसंबद्धम्। अथ पुनरितरार्थवादन्यायेन कथमरुदतीतिवत् प्रश्नः तथाप्युत्तरमसंबद्धम् । मन्त्रेणाध्वर्युः पुरोडाशमिति पुरोडाशेन संबध्यते न यजमानेन। तस्मादग्रन्थ इति केचित्। उभयथापि त्विदमदुष्टम्। अस्तु तावत्पुरोडाशप्रथने। तत्र हि याज्ञिकानां केषाञ्चिदयं मन्त्रः कृत्वा प्रथनमभिमर्शने प्रयुज्यते सोऽयं सिद्धान्तेन[1] पृच्छति कथमसति वृत्ते प्रथने प्रयुज्यमानेनानेन प्रथयतीति।

तत्राभ्युपेत्यवादेनोत्तरं मन्त्राभिधानादिति। यद्यपि प्रथनं प्रथनकृतत्वान्नास्ति मन्त्रेण नु सत्तयोच्यत इत्युपपन्नः शब्दार्थः। अथ वा सर्वप्रयोजकव्यापाराणां प्रयोज्यव्यापारपूर्वकत्वमर्थरूपेण स्थितमिति शब्दैरपि तथैव प्रवर्तितव्यम्। इह च स्तुतिविषयसिद्ध्यर्थं प्रथयतीत्येतद्विधीयत इत्युक्तम्। तत्राह नायं विधिः संभवति विषयानुपपत्तेः। प्रयोजकव्यापारो हि प्रतीयमानस्तद्गोचरः स्यात्, स चानुपात्तप्रयोज्यव्यापारत्वान्न प्रतीयते। तेन यथा यजेतेत्यनुक्ते याजयतीति नोच्यते तथेह प्रथेतेत्यनुक्ते प्रथयतीति न वाच्यम्। न चेह पुरोडाशः प्रथेत तेन वा प्रथितव्यमित्युपादानमस्ति। तस्मिन्नसति प्रथयतीत्यनुपपन्नम्। तदुपपादयति मन्त्राभिधानादिति प्रतीकगृहीतमन्त्रोपात्तप्रयोज्यव्यापारं हि ब्राह्मणं प्रथयतीति विधत्ते। यश्च प्रथस्वेति ब्रूत इत्यनेन

सोऽय सिद्धान्तेनेति । सोऽयमभिमर्शनाङ्गत्ववादी स्वसिद्धान्तेनानेनैव पृच्छति। अथ वा सोऽयं प्रश्नवादी स्वसिद्धान्तेन कर्मारम्भे प्रयुज्यमानो मन्त्रः कर्मणः करणं भवतीत्यनेन । तत्राभ्युपेत्यवादेनेति । लिङ्गात् प्रथनाङ्गमेव मन्त्रो याज्ञिकाचरणबोधेनेति स्वमतमभ्युपेत्याभिमर्शने विनियोग इदमुच्यते। गौणमिदमभिधानम् मन्त्रेण प्रथयतीव प्रथयतीति।

ननु प्रथनमनेन वाक्येन विधीयत इत्युक्तम्। अस्य गौणत्वे केन तस्य विधिः । तदुच्यते, सकलोऽयमर्थवादस्तदनुमितश्च विधिरिति प्रतीकगृहीतेति। प्रतीकगृहीतेन मन्त्रेणोपात्तः प्रयोज्यव्यापारः येन ब्राह्मणेन तद्ब्राह्मणम् प्रयोजकव्यापारं प्रथयतीति विधत्त इति । यश्च प्रथस्वेति।

---

१. स्वसिद्धान्तेन इति मुद्रितपुस्तकपाठः।

पुरोडाशकर्तृकां क्रियामध्वर्युः प्रेष्यतीत्येतद् दर्शयति। यद्यपि च संभाव्यमान-क्रियाणां प्रयोज्यानामनुपादायापि व्यापारं शब्देन प्रयोजकव्यापारः सिद्ध्यतीत्येतदप्युत्तरं संभवति। तथापि तूत्तरविभवादुपादानपूर्वकतैवोक्ता। अथ वास्तु यजमानप्रथने कथमसत्तीति सर्वस्तुतीनां किञ्चिच्छब्दगतमर्थगतं वालम्बन-मुक्तम्। तदत्र किं निबन्धना स्तुतिरिति तदभिधीयते। मन्त्रोक्तमर्थमाश्रित्य स्तुतिः प्रवर्तिष्यते। मन्त्रेणाध्वर्युः पुरोडाशं ब्रूत इति न पुरोडाशप्रथनो-पादानाभिप्रायम्, किं तर्हि पुरोडाशं ब्रवीति। उरु ते यज्ञपतिः प्रथतामिति। प्रथस्वेत्यपीतिकरणः प्रभृत्यर्थो न शब्दपदार्थतायै। यश्च प्रथस्वेति ब्रूत इत्यपि तदाद्यर्थं एव। प्रथतामिति ब्रूत इत्यर्थः। यश्चैवं ब्रूते स प्रथयत्यनेनैव गुणवादात्। अथ वा तदाचष्ट इत्येवं मुख्यमेव प्रथयतीत्यर्थमाश्रित्य प्रथनबुद्ध्या सिद्धा स्तुतिः ॥४३॥

अदृष्टार्थोच्चारणवादिनोऽपि तन्नियमादपरमवश्यं कल्पनीयमदृष्टं तन्ममापि प्रत्यायननियमाद् भविष्यतीत्यविरोधः। एतेन मन्त्रत्वादिनियमः प्रत्युक्तः। सत्स्वप्युपायान्तरेषु विशिष्टानुपूर्वीकमन्त्रविशेषाम्नानादुपायान्तर-निवृत्तौ नियमादृष्टमात्रकल्पनया सिद्धमर्थाभिधानम् ॥४४॥

ब्रूत इति *भाष्यम्*। मन्त्रेण प्रयोज्यव्यापारस्योपादानं दर्शयतीति व्याचष्टे — यश्च प्रथस्वेति। ब्रूत इति। अनेनैवेति [?] यश्चैवं ब्रूत इत्यनेनैवेति प्रथतामिति शब्दोच्चारणेनैवेति। कथं प्रथतामित्यभिधानात्। प्रथनकर्तृत्वं तत्राह — गुणवादादिति ॥४३॥

अदृष्टार्थोच्चारणवादिनोऽपि तन्नियमादिति। वर्णोच्चारणानां क्रमान्यत्वे विशेषानवगमात्। तन्नियमादृष्टमदृष्टोच्चारणानुग्राहकं भवतः कल्पनीयम्। तदेममपदैरर्थप्रत्यायने क्रमनियमात् भविष्यति, दृष्टार्थैरपि नियमादृष्टनिवृत्तयेऽपेक्ष्यत एवादृष्टार्थमङ्गमिति।

अथ वा नादृष्टं कल्पनीयमिति। दृष्टं त्यक्तव्यम्। तथा हि अदृष्टोच्चारणवादिनोऽपि क्रमनियमादपरमदृष्टं कल्पयता न मौलिक-मदृष्टं त्यज्यते। तथा मौलिकेऽदृष्टे फले स्थिते भवन्त्यदृष्टकल्पना न दृष्टं विरुणद्धि इति। एतेन मन्त्रत्वादि[दी]ति। एतेनादृष्टकल्पनया दृष्टार्थताविरोधेनेति ॥४४॥।

येयं संप्रैषे अग्नीदग्नीनित्यत्र बुद्धबोधनासंभवादभिधानकर्मगर्हाभिहिता साप्यनुपालम्भः । स्मरणसंस्कारार्थत्वात् । बुद्धीनां हि क्षणिकत्वात्स्वाध्यायकालोत्पन्नानां न प्रयोगकालं यावदवस्थानं तत्रावश्यं केनचिद्ध्यानप्रदिनानुसन्धाने कर्तव्ये मन्त्रो नियम्यते ।

अथ वा संस्कारत्वादिति यदि हि बोध एवावतिष्ठते ततोऽनवकाशत्वं भवेदिह तु तदीयसंस्कारमात्रावस्थानात्तदभिव्यक्तिद्वारेणास्ति ज्ञानोत्पत्त्यवसर इति न मन्त्रानर्थक्यम् ।।४५।।

चत्वारि शृङ्गेति रूपकद्वारेण यागस्तुतिः कर्मकाल उत्साहं करोति । हौत्रे त्वयं विषुवति होतुराज्ये विनियुक्तः । तस्य वाग्नेयत्वादह्नश्चादित्यदैवतत्वसंस्तवादित्यरूपेणाग्निस्तुतिरुपवर्ण्यते । तत्र चत्वारि शृङ्गेति दिवसयामानां ग्रहणम्, त्रयो अस्य पादा इति शीतोष्णवर्षाकालाः । द्वे शीर्षे इत्ययनाभिप्रायम् । सप्त हस्ता इत्यश्वस्तुतिः । त्रिधा बद्ध इति सवनाभिप्रायेण । वृषभ इति वृष्टिहेतुत्वेन स्तुतिः । रोरवीति स्तनयित्नुना सर्वलोकप्रसिद्धेर्महान्देवो मर्त्यानाविवेशेत्युत्साहकरणोपकारेण सर्वपुरुषहृदयानुप्रवेशात् । एवमनेन मार्गेणास्ति तावद्धर्मसाधनस्मृतिः ।।४६।।

हौत्रे त्वयं विषुवतीति । विषुवत्संज्ञके कर्मणि एकाहेऽयं होतृकर्तृके आज्यसंज्ञके शास्त्रे विनियुक्तः । विनियोगं व्यक्तीकर्तुं स्थानविशेषोपन्यासः । हौत्रे होतुः प्रवचने ऋग्वेद इति । तु शब्दो *भाष्यकार* व्याख्यानव्यवच्छेदार्थः । तत्र यद्यपि स्तोत्रस्य देवतासंस्कारार्थत्वं निराकरिष्यते तथापि प्रकृतत्वादस्येति । सन्निधिगामिसर्वनामयोगाच्च विषुवद्देवतागुणाभिधानेन स्तोत्राङ्गत्वमस्यते । नायं मन्त्रार्थः सम्पद्यत इत्याह — तस्य वाग्नेयत्वादिति । अग्निर्देवता अस्येत्यग्निस्तुतिः कर्तव्या । अहःशब्दव्यपदेश्यश्च विषुवानह्नश्च मुख्यस्य लोक आदित्यदेवतात्वमित्यस्यापि कर्मणोऽह्न आदित्यदेवतात्वाभिधानेनौचित्यात् स्तुतिर्भवतीत्यग्नेरेवादित्यभावमुपपादयितुमादित्यैर्धर्मैः स्तूयते । अस्ति च तेजस्त्वसामान्येनाग्निसम्बन्धोऽपि तेषामालम्बनमिति । तेषां ह्येवमर्थमेव परिपालनमिति । सूक्तं देवतादीनाम् ।।४६।।

अदितिर्द्यौरदितिरिति। नात्र द्युत्वादीनि विवक्षितानि किं तर्हि अदितौ प्रकाशयितव्यायामविद्यमानविप्रतिषिद्धधर्मोपादानं स्तुत्यर्थम् गुणवादेन त्वौदुम्बराधिकरणवत् संवादो योजयितव्यः ॥४७॥

यद्यपि पूर्वपक्षेऽयमभिप्रायो नोपन्यस्तस्तथापि संभवादुपन्यस्यते। यदि हि स्वाध्यायकालेऽर्थवचनमुपयुज्येत ततस्तदाश्रीयेत, नत्वेवमस्ति कर्मभिरसंयोगात्। तदनभ्यासस्तु प्रोक्षणादिवत्सौकर्यात् ॥४८॥

यत्तु परं कारणमविज्ञेयत्वमुक्तं तदयुक्तम्। सत एवार्थस्य पुरुषापराधेना विज्ञानात्। तत्र चार्थप्रकरणसूक्तदेवतार्षनिगमनिरुक्तव्याकरणज्ञानान्यधिगमोपायाः तेषां ह्येवमर्थमेवं परिपालनम्। यथैव च व्याकरणेन नित्यपदान्वाख्याने क्रियमाणे लोपविकारादीनामुपायत्वेनोपादानमव्युत्पन्नाश्च तैरेव पदोत्पादनमिव मन्यन्ते। तथात्र नित्यवाक्यार्थप्रतिपत्तावार्षोपाख्यानमनित्यवदाभासमानमुपायत्वं प्रतिपद्यते। तत्र यथा कश्चिद् व्याचक्षाणः पदतदवयवादीनां चेतनत्वमिवाध्यस्य विशेषबाधादिव्यापारं निरूपयत्येतेनैवमुक्तोऽयमेवं प्रत्याहेति। यथा च पूर्वपक्षोत्तरपक्षवादिनौ व्यवहारार्थं कल्पितावेवमृष्यार्षेयविषया कल्पना। अथ वा परमार्थेनैवेदमृषिभिस्तथोक्तं न तु स मन्त्रस्तैरेव कृतस्तदानीं वा पुरुषान्तरेष्वसन्नेव तेषामाविर्भूतः। तर्हि यथाद्यत्वेऽपि कश्चित्प्रकृतार्थविवक्षायां तदर्थं वाक्यमुपादित्समानस्तदर्थसरूपं मन्त्रं श्लोकं वान्यदीयं स्मृत्वा स्ववाक्यस्थाने प्रयुङ्क्ते तत्प्रत्ययेन चान्ये तदर्थमवधारयन्त्येवमिहापि वेदार्थविद्भिस्तद्वासितान्तःकरणैर्भृग्वादिभिरात्मीयव्यवहारेषु श्रुतिसामान्यरूपेण विशिष्टार्थप्रत्यायनार्थं मन्त्राः प्रयुक्तास्तद्बलेन चास्मदादीनां तदनुरूपानित्यार्थप्रतिपत्तिर्भवति। प्रत्ययदृढत्वार्थमेव चार्षस्मरणम्। तत्रैवमुपाख्यानं स्मरन्ति। यथा किल भूतांशो नाम कश्चिदृषिर्जरामरणनिराकरणार्थी सृण्येवेत्येवमादिना सूक्तेनाश्विनौ स्तुतवान्। भूतांशो अश्विनोः काममप्रा इति चान्ते संकीर्तनात्तस्यार्षमाश्विनं सूक्तमिति च द्योतितम्। तत्र सृणिरङ्कुशः सरणसाधनत्वात्तमर्हन्तौ तत्र वा साधू इति सृण्यावर्थात्कुञ्जरौ। आकारश्छन्दसि द्विवचनादेशः। ताविवात्यर्थं

नन्वार्षपरिपालनमीदृशं भूतांशेन ऋषिणा जरामरणविमोककामेनाश्विनौ सृण्येवेत्यादिना स्तुताविति। तदेवमनित्यपुरुषाचरितं कथं नित्यवाक्यार्थनिरूपणोपाय इत्याशङ्क्याह — यथैव व्याकरणेनेति।

जृम्भमाणावष्टाङ्गप्रहरणव्यापृतौ जर्भरी । तुर्फरी तू हिंसन्तौ । नितोशतिर्वधकर्मा तत्कारिणौ नैतोशौ–योद्धारौ ताविव तुर्फरी त्वरमाणौ हिंसकाविति वा । पर्फरीका शोभायुक्तौ । उदन्यतिः पिपासार्थः तत्र जातौ उदन्यजौ प्रावृषिजौ चातकौ जेमनावुदकवन्तौ जेमशब्दात्पामादिविहितो मत्वर्थीयो नप्रत्ययः । तौ यथोदकलाभेन मत्तौ भवतस्तथा यौ मदेरू तौ मे जरायुमरायु जरामरणधर्मकमर्थाच्छरीरमजरममरं च कुरुतामिति वाक्यशेषः । तेनैवं वाक्यार्थो यावङ्कुशचोदिताविव कुञ्जरौ सर्वतो जृम्भमाणौ शत्रूणां निहन्तारौ भवतो हिंस्राविव च हिंसनव्यापृतौ दाक्ष्येण च शोभेते चातकाविव चोदकलाभेन मदात् प्रीयेते तावुभावपि जरामरणयोः कुपिताविवाजरत्वस्यामरत्वस्य वा प्रीतावजरममरं मे शरीरं विधत्तामिति । 'अम्यक्सा त' इत्यगस्त्यार्षं तेन किलेन्द्रोऽमरत्वं धनं प्रार्थितस्तथा चोपरितन्यामृचि 'त्वं तु न इन्द्र तं रयिं दा' इति श्रूयते । तदेवास्यामृच्यनुषङ्गेण द्रष्टव्यम् । इयं च छन्दोमद्वितीयेऽहनि मरुत्वतीये शस्त्रे विनियुक्ता । तत्राम्यगित्यमाशब्दोऽव्ययं साहित्यवाची यतोऽमात्य इति भवति सहाञ्चतीत्यम्यक् सा त इन्द्र, ऋष्टिरायुधविशेषः पाणिक्षेप्यः अस्मे इति अस्माकं सनेमि पुराणम् । अभ्वं तोयं मरुतो जुनन्ति क्षिपन्ति अग्निश्चिदित्युपमार्थो हि स्म, अतसे शुष्कतृणे शुशुक्वान् दीप्तवान् आप इव द्वीपं दधति प्रयांसि अन्नाद्यानि । वाक्यार्थे तु प्रथमतृतीययोर्द्वितीयचतुर्थयोश्च पदानां सम्बन्धः । तत्र सेत्येतदाक्षिप्तो यच्छब्दस्तृतीयपादे कल्प्यते । शुष्कतृणे दीप्तोऽग्निरिव या लक्ष्यते तव सहचारिणी नित्यमृष्टिस्तव वल्लभा सा तावद् त्वत्प्रसादेनास्माकमेव । येऽप्यमी पुराणं जलं वृष्टिरूपेण विक्षिपन्त आप इव द्वीपमन्नाद्यानि धारयन्ति तव प्रियसखास्तेऽप्यस्माकमेव स त्वमेवं साधारणद्रव्यः सन्नमरत्वं न केवलं देहि । एकया प्रतिधापिबदितीन्द्रस्यैव स्तुतिः । एकेन प्रयत्नेनापिबत् साकं यौगपद्येन, सरांसि पात्राणि सोमस्य पूर्णानि इन्द्रः काणुका कामयमानः कामुकशब्दस्य

इयं छन्दोमद्वितीयमिति । छन्दोमशब्दोऽहःपरिमितस्य कर्मविशेषस्य वाचकः । ते च त्रयो विहिताः । तेषां छन्दोमानां द्वितीयेऽहनि मरुत्वतीये शास्त्रे विनियुक्ता । तेनास्या मरुत्वानिन्द्र एव प्रकाश्यतया प्रतीयत इत्यर्थः । अग्निश्चिदित्युपमार्थ इति । अग्निश्चिच्छब्दस्योपमार्थो वाच्यः ।

च्छान्दसो वर्णव्यत्ययः। आकारस्तु विभक्त्यादेशः। अथ वा कान्तकानीत्यादयो निरुक्तोक्ताः काणुकाशब्दविकल्पा योजनीयाः। तदेवं सर्वत्र केनचित् प्रकारेणाभियुक्तानामर्थोत्प्रेक्षोपपत्तेः प्रसिद्धतरार्थाभावेऽपि वेदस्य तदभ्युपगमात् सिद्धमर्थवत्त्वम् ॥४९॥

परं तु श्रुतिसामान्यमात्रमिति [मी० सू० १।१।३१।]। यजमानस्तावत्प्रार्थयिता इन्द्रश्च प्रार्थ्यमानः सर्वदास्ति। कीकटा नाम यद्यपि जनपदास्तथापि नित्याः। अथ वा सर्वलोकस्थाः कृपणाः कीकटाः। प्रमगन्दः कुसीदवृत्तिः स हि प्रभूततरमागमिष्यतीत्येवं ददाति। नीचाशाखः षण्ढस्तदीयं धनं नैचाशाखम्। तच्च सर्वमयज्ञाङ्गभूतं तेषां कर्मण्यप्रवृत्तेस्तदस्माकमाहरेति। शेषं गतार्थम् ॥ ५० ॥

आग्नेयीत्यग्निना देवतया लिङ्गेन तदभिधानसामर्थ्येन वा य उपदेशः स तदर्थार्हतां मन्त्रस्य द्योतयति। देवता तद्धितो ह्येष स्मर्यते यं चार्थप्राधान्येन मन्त्रः प्रकाशयति सा तस्य देवता नाभिधानमात्रेण। एकदैवत्येऽपि मन्त्रेऽनेक देवतान्तरपदप्रयोगे सति तद्दैवत्यव्यपदेशाभावात्। प्राधान्याभिधानं च नार्थ परत्वेन विनोपपद्यते ॥५१॥

ऊहदर्शनं न माता वर्धत इति। अर्थे च पुष्ट्यादिवृद्धेः प्रत्यक्षत्वात् प्रतिषेधासंभवादधिकार्थक्यात्तदङ्गेष्विति शब्दे विज्ञायते। तत्रापि स्थौल्यादिवृद्ध्यसंभवादधिकार्थवाचित्वेन द्विवचनबहुवचनयोः प्रतिषेधः। स चार्थपरत्वे सर्वपशुविशेषणमात्राद्युपादित्सायां सत्यामवकल्पते। या चान्यपदवृद्धि-

चिच्छशब्दो हीवार्थ इति। कान्तकानीत्यादय इति। कान्तं कमुदकं रसो येषु तानि कान्तकानीति ॥४९॥।

नन्वविवक्षितवचनत्वेऽपि अभिधानसामर्थ्यादाग्नेयीशब्दो भविष्यतीत्यत आह — देवता तद्धितो ह्येष स्मर्यत इति। यथान्यपदवृद्धिसद्भावप्रतीतिरिति ॥५१॥।

न माता वर्द्धत इति। मात्रादिवाचकस्य पदस्य विशेषणं सामान्येन वृद्ध्यभावो नास्तीति बोधयदन्येषु पदेषु वृद्धिसद्भावं गमयति। इयं च तदर्थस्येव मन्त्रस्येति प्रकृतेन सम्बन्धः।

सद्भावप्रतीतिरियं च । यद्यपि मातृपितृभ्यां[1] पारार्थ्यात्संबन्धिभेदादेव च भेदसिद्धेरनूह्यत्वं सदेवानुवदति तथापि न्यायावगतानूहसंकीर्तनान्न्यायरहितेषूहसंप्रत्ययात्प्रकृतौ विवक्षितार्थता विज्ञायते । अन्यथा तु तददृष्टमविकृतैरेव साध्येत । तथा यद्यप्यन्यदैवत्यः पशुराग्नेय्येव मनोता कार्येत्यूहप्राप्तिदर्शनमेवमुस्राणां वपानामित्येवमादीनां यथार्थमूहितानामेवाम्नानमपि विवक्षितार्थं भविष्यति । इतरथा प्राकृतपदत्यागेऽन्यकल्पने चादृष्टद्वयं कल्प्येत ॥५२॥

विधिरेव च ब्राह्मणाभिधस्तत्र तत्र पर्यायैरवयवान्वाख्याननिर्वचनादिभिश्चार्थप्रकाशनपरत्वं दर्शयति । अर्थानाश्रयणे हि सर्वं तदनर्थकं स्यात् । तस्माद् विवक्षितवचना मन्त्रा इति सिद्धम् ॥५३॥

*इति श्रीमद्भट्टकुमारिलस्वामिविरचिते मीमांसाभाष्यव्याख्याने*
*तन्त्रवार्तिके प्रथमाध्यायस्य द्वितीयः पादः*

ननु यद्ययं प्रतिषेधः स्यात् ततः प्राप्तिं गमयेदिति । अनुवादः स्वयं स चाप्राप्तिमेव गमयतीत्याशङ्कते—यद्यपि च मातृपितृभ्यां[1] पारार्थ्यादिति । परार्थानामनूहं साधु शब्दाधिकरणे वक्ष्यामः । तथापि न्यायावगतेति । न्यायेनानवगतस्यानूहस्येदं सङ्कीर्तनम् । एवं हि न मातेति विशेषणमवकल्पते । प्रयोजनवत्ता चानुवादस्य ततश्चास्मात्तन्न्यायरहितेषु ऊहसंप्रयोगे भवति । तथा यद्यप्यन्यदेवत्यः पशुरिति । वायव्यपशावतिदेशप्राप्तस्त्वं ह्यग्ने प्रथमो मनोतेति मन्त्रः । तत्राग्निपदस्थाने वायुपदे प्राप्ते वचनमिदं यद्यप्यन्यदेवत्य इति । एवमुस्राणामिति । उस्रादिद्रव्येषु यागेषु छागस्य वपाया मेदस इति । अतिदेशप्राप्तः मन्त्रः छागादिमन्त्रपदस्थान उस्रादिपदनिक्षेपेण पठितः । स यद्यर्थपरत्वान्मन्त्राणां यथार्थमूहितानां पाठस्ततो न किञ्चिददृष्टं कल्पनीयम् । पाठस्य च मन्त्रत्वप्रसिद्ध्या प्रयोजनवत्त्वम् । अदृष्टार्थत्वे तु मन्त्राणां छागपदस्य प्रतीतमदृष्टसाधनत्वमिह नास्ति । अप्रतीतं चोस्रादिपदानामस्तीत्यदृष्टद्वयं कल्पनीयमिति ।

इति महामहोपाध्यायपरितोषमिश्रकृतावजितायां
प्रथमस्याध्यायस्य द्वितीयः पादः समाप्तः ।

---

१. मातृप्रभृतीनामिति मुद्रितपुस्तकपाठः ।

अथ प्रथमाध्यायस्य तृतीयः पादः ।

## स्मृत्याचारप्रामाण्याधिकरणम् ।

एवं तावद् विध्यर्थवादमन्त्रा[नामधेया]त्मकस्य वेदस्य धर्मं प्रत्युपयोगः साधितः । इदानीं पौरुषेयीषु स्मर्यमाणार्थावधिषु मन्वादिप्रणीतनिबन्धनासु

एवं तावद्विध्यर्थवादमन्त्रात्मकस्येति । विध्यर्थवादमन्त्रात्मिकानां स्मृतीनां प्रामाण्यं वेदमूलत्वेन वक्तव्यम् । सिद्धे च त्र्यंशवेदप्रामाण्ये तद्वक्तुं शक्यमिति तत्प्रसिद्धिकीर्त्तनम् । नामधेयत्वे प्रतिपादनं तु लोकादपि सिद्धेः । स्मृतिप्रामाण्येनानपेक्षितमिति । ततः प्रागेवापेक्षितार्थप्रतिपादनानन्तरमारम्भः । विधित्वेन प्रामाण्यं प्रथमपादोक्तयुक्तिसङ्कीर्णंसिद्धमन्त्रार्थवादयोरुपयोगवर्णनात् । द्वितीये पादे तदतिरिक्ताङ्ग उपसंहृतमिह सङ्कीर्त्यंत इति ।

इदानीं पौरूषेये[यी]ष्विति । पौरुषेयत्वेनौत्पत्तिकत्वेन हेतुना प्रामाण्यसिद्धिरुक्ता । स्मर्यमाणोऽर्थो विधिर्यासां नार्थमतिक्रम्य तस्य प्रमाणमपि विषयीकुर्वन्तीति । मन्वादिप्रणीतो ग्रन्थो निबन्धनं यासामनेन वेदार्थव्यवहारित्रैवर्णिकगृहीता त्रैवर्णिकप्रणीता च स्मृतिश्चिन्त्यत इत्युक्तम् । एवं तेषामेव ग्रन्थानिबद्धो य आचारः । तत्रापि चिन्ता सामो हि पूर्वपक्षहेतुः शब्दत्वम् । सिद्धान्तहेतुश्च मन्वादिपरिग्रहदार्ढ्यम् । अतस्तुल्यवद्विचारविषयत्वम् । अनेन वृत्तवर्त्तिष्यमाणकथनेन सङ्गतिरस्य विचारस्य दर्शिता । धर्मं जिज्ञासुः त्र्यंशवेदप्रामाण्यं श्रुतत्वान्मूलसम्भावनया वेदार्थस्यैव धर्मस्य स्मृतितोऽपि प्रतीतिं संभावयति, मूलानुपलब्धेश्च तदभावम् । तत्र यद्यनुपलम्भोऽभावं साधयत्येव । स्मृतिस्त्वन्यथापि सम्भवति ततोऽप्रामाण्यम् । वैपरीत्ये प्रामणतेति, धर्मजिज्ञासाया विचारप्रयोजिकाया विद्यमानत्वात् । चोदनैव प्रमाणमिति स्थित एव प्रमाणलक्षणौपयिकस्मृतिविचारः क्रियमाणः सङ्गच्छत इति । एते सङ्गतिप्रकाराः । यथा प्रतिज्ञातं धर्मे वेदः प्रमाणमिति [तथा] तद्दर्शयितव्यम् । सिद्धश्चासौ प्रामाण्यमर्हति । तत्र प्रमाणं दर्शयताध्ययनसिद्धस्य वेदस्य प्रतीतिशक्तिमात्रप्रतिपादनाद्धर्मप्रमाणत्वं दर्शितं भवति । इतरस्य पुनः प्रतीतिशक्तिवत् स्वरूपसिद्धिरपि वक्तव्या । सापि प्रतिपत्तिनिरासेनोच्यते । तेनैवमत्रावतारः, धर्मं

स्मृतिष्वनिबद्धेषु चाचारेषु चिन्ता । तत्र किञ्चिदुदाहृत्य विचारः कर्तव्य इत्यष्टकादिस्मरणानि मन्वादिस्थानि तद्ग्रन्थसमर्पितानि प्रमाणाप्रमाणविचार-विषयत्वेनोदाह्रियन्ते संदेहहेतुश्चाभिधीयते ।

पारतन्त्र्यात्स्वतो नैषां प्रमाणत्वावधारणा ।
अप्रामाण्यविकल्पस्तु द्रढिम्नैव विहन्यते ॥

जिज्ञासुस्तस्य प्रमाणं जिज्ञास्यमानो वेदप्रामाण्योपपत्तीरवधार्य वेदं प्रमाणमवधारयन् स्वयमनधीते वेदे स्मृत्युपस्थाप्ये संशेते ।

अथ वा धर्मे वेदः प्रमाणमित्युक्तम् । स्मार्त्तोऽप्यर्थः परिग्रह-दार्ढ्याद्धर्मतया परिस्फुरति । न च तत्र वेदोऽस्ति, तत्कथं तदित्युपन्यासः । यदि हि धर्म एवासौ वेदरचनास्त्येव । तदा धर्मोद्देशेन वेदप्रामाण्यविधि-रनुपपन्नः ।

तत्रैक एवं समर्थयन्ते धर्म एवासौ न भवतीति । अपरे वेदोऽस्तीति । अथ वा चोदनैव प्रमाणम् , नान्यदित्युक्तम् । तत्र चोद्यम् नन्वविदुषामुपदेश आचारो वा नावकल्पते । तस्मादनुभूतवस्त• इति । तत्रैक आह, धर्मस्यान्य-प्रमाणकत्वमनपवादयुक्तिव्यवस्थितमशक्यं हातुम् । तस्माद् व्यामोह उपदेश इति । अपरस्तु परिग्रहदार्ढ्यात् व्यामोहेऽपि अवकाशः । तस्मात् सम्भवद्वेदस्वं [ ? ]योगानां वेदादेवेति । अत्र *भाष्यकारेणो*दाहृतम् — 'अष्टका कर्त्तव्या' 'गुरूरनुगन्तव्य' इति । तन्मन्दफलम् । यतो स्वरूपमुदाहरणेन निदर्श्यते । तेनानिदर्शिते रूपविशेषे शक्यते विशेषनिरूपणमिति । यथा वाक्यमुदाह्रियते वचनव्यक्तिनिरूपणाय । न च हेतुरूपगतः कश्चिद्विशेषश्चिन्तनीयः । अतः स्मृतिरित्येव प्राप्ति किंरूपोदाहरणेनेत्यत आह — किञ्चिदुदाहृत्येति । नात्र रूपप्रदर्शनं तद्गतं विशेषं निरूपयितुं विवक्षितम् , किन्तु विचारः क्वचिद्विषये भवतीति विषयो दर्शयितव्यः । तत्र[1] सामान्येनोपादानाद्विशेषेणो-पादानं नैराकाङ्क्ष्यं समर्थमिति कृतम् । तत्र[2] च मन्वादिग्रन्थो न विचार्यते । यतोऽर्थे बुद्धिस्थे कृते ग्रन्थरचना नान्यथेत्यसन्देहः । तेन ग्रन्थेन[3] प्रत्यक्षेण प्रत्यक्षीकृतं स्मरणं विचार्यते । तदेतदुक्तम् — तद्ग्रन्थ-समर्पितानीति ।

१. ततः आ० मा० । २. अत्र आ० मा० । ३. ग्रन्थेनैव आ० मा० ।

मन्वादिवचनं स्मृत्यपेक्षं स्मृतिश्च मूलप्रमाणापेक्षिणीति नैकस्यापि वेदवन्निरपेक्षप्रामाण्यनिश्चयः । यतस्तु वेदवादिनामेवाविभागेना[1]विच्छिन्नपारम्पर्यंपरिग्रहदोऽस्त्यमतो नाप्रामाण्याध्यवसानमिति युक्तः सन्देहः । तत्र पूर्वपक्षवादो वदति नैषां प्रामाण्यमेवापेक्षितव्यमिति । कुतः,

पूर्वविज्ञानविषयं विज्ञानं स्मृतिरुच्यते ।
पूर्वज्ञानाद्विना तस्याः प्रामाण्यं नावधार्यते ॥

सर्वस्मरणानि हि प्रत्यक्षाद्यवगतेऽर्थे तदानुरूप्येणोपजायमानान्यर्थं समर्थयन्ति तदिहाष्टकादीनां स्वर्गादिसाध्यसाधनभावं प्रत्यक्षादीनि तावन्न गृह्णन्तीति साधितम् । शब्दोऽपि यथाग्निहोत्रादिषु प्रत्यक्षेणोपलभ्यते नैवं मन्त्राः ।

प्रत्यक्षानुपलब्धे च शब्दे सद्भावकल्पना ।
धर्मास्तित्वप्रमाणाद्धि विप्रकृष्टतरा भवेत् ॥

शब्दस्य तावदेकमेव प्रत्यक्षं प्रमाणम् । स चेत्तेनानवगम्यमानोऽप्यस्तीत्युच्यते । ततो वरं धर्मास्तित्वमेव निष्प्रमाणकमभ्युपगतमिति ।

प्रत्यक्षावगतेऽर्थे तदानुरूप्येणेति । प्रमाणमात्रोपलक्षणं परिच्छेदे प्रत्यक्षग्रहणम् । अथ वा प्रमाणान्तरमूलापि स्मृति[1]स्तन्मूलं प्रत्यक्षं सामान्येन विशेषेण वा तद्विषयमपेक्षते । क्वचिच्च प्रत्यक्षाद्यवगत इत्येव पठ्यत इति ।

धर्मास्तित्वप्रमाणाद्धीति । न धर्मे योग्यमिदं प्रमाणमिति किञ्चिन्निरूपितम्, यस्यानुदयादभावोऽध्यवसीयते । किन्तु यदा तु न किञ्चित् प्रमाणमस्ति, तदा केवलसत्त्वं[2] प्रतिपद्येमहीति न[3] धर्मास्तित्वं प्रमाणं परिच्छेदो न तथा प्रमाणद्विषयाद्विप्रकृष्टो दूरे । यथा प्रत्यक्षानुदयादवधारिताभावस्य शब्दस्या[4]ध्यवसानमिति । दुष्टपुरुषेति । दुष्टपुरुषेणाकुलितचेतसां[5] निश्चयमनासादयतामिति ।

१. °वाविगानेनाविच्छिन्नेति काशीमुद्रितपाठः ।
१. तदिति नास्ति आ० मा० ।
२. केन सत्यमिति आ० मा० ।
३. 'हीत्यसत्यत्वं तेन ध० इति आ० मा० ।
४. °शब्दस्यास्तित्वाध्यव° आ० मा० ।
५. °ण दुष्टेनाकुलित° आ० मा० ।

न वानुमानमप्यस्मिन्नष्टकाश्रुतिकल्पने ।
न हि स्मृतिस्तया व्याप्ता दृष्टान्यद्वानुमापकम् ॥

यथैव धर्मे संबन्धादर्शनान्न किञ्चिल्लिङ्गं क्रमते तथाष्टकादिश्रुतावपि ।

न वागमेन तद्बोधो नित्येन कृतकेन वा ।
विस्रम्भः कृतके नास्ति नित्यो नैवोपपद्यते ॥

यद्यप्यैन्द्रियकत्वादष्टकादिस्मृतीनां पौरुषेयागमगम्यत्वं संभवति । तथापि विप्रलम्भभूयिष्ठत्वादश्रद्धेयवचनेषु पुरुषेष्वनध्यवसानम् । दृश्यन्ते ह्यनागमिकानप्यर्थानागमिकत्वाध्यारोपेण केचिदद्यत्वेऽप्यभिदधानाः । तेन मन्वादिभिरपि किमष्टकाश्रुतीरुपलभ्य वेदमूलत्वं स्वनिबन्धनानां प्रतिज्ञातमुतानुपलभ्यैव श्रद्धेयवाक्यत्वार्थमिति दुष्टपुरुषाकुलितचेतसां भवति सन्देहः । तावता च प्रामाण्यविघातः । नित्यस्य वचनस्यादिमत्स्मरणमूलप्रतिपादने व्यापार एव नास्ति । न च मन्त्रलिङ्गानि स्वयं मूलत्वं प्रतिपद्यन्ते । विधिशून्यत्वात् । न च मूलान्तरं न्यायागतं सूचयन्त्यन्यपरत्वात् । न च सर्वेषां स्मृतिप्रणयिनामविगानम् । येन पौरुषेयागमबलादुपलब्धपूर्वश्रुतिमूलत्वं स्यात् ।

न च विज्ञायते वाक्यं कीदृशं तैर्निरूपितम् ।
अर्थवादादिरूपाद्धि पश्यामो भ्राम्यतो बहून् ॥

अन्यपरत्वादिति । यदि हि विशिष्टकर्मकर्त्तव्यताप्रतिपादिनो मन्त्रा भवेयुस्तदा तस्य विधिमनुमापयेयुः । ते तु रात्र्यादिस्वरूपमात्रपरा[1] इति । स्यादपि मन्वादिवचनाद्वेदमूलत्वाध्यवसानम् । यदि वेदानुरूपं स्मरणं स्यात्तन्मूलत्वे हि तस्यैकरूपत्वात्[2] स्मृतिभिरपि संवादिनीभिर्भवितव्यम् । नत्वेतदस्तीत्याह[3] — न च सर्वेषामिति । गम्यतां वा सद्भाव[4]-भूयिष्ठत्वात् तद्वचनानां[5] वेदो मूलं भ्रान्तिरेव तु तत्सम्बन्धिनी[6]त्याह — न च विज्ञायते वाक्यमिति ।

---

१. स्वरूपपरा आ० मा० मात्रपदमिह नास्ति । २. तस्यैकत्वात् आ० मा० ।
३. नत्वेवमस्तीत्याह आ० मा० । ४. °बासंवादभू० आ० मा० ।
५. तद्वचनात् आ० मा० । ६. ततो भवतीत्याह आ० मा० ।

यदि ह्येतदेकान्तेन गम्येत यथाविधिवाक्यान्येव मन्वादिभिरुपलब्धानीति । ततः क्वापि कल्पना स्यादद्यत्वेऽप्यन्यपरार्थवादादिवचनेभ्योऽपि भ्राम्यन्तः पुरुषा दृश्यन्ते । तेन तेष्वप्याशङ्का भवति । मृतसाक्षिकव्यवहारवच्च प्रलीनशाखामूलत्वकल्पनायां यस्मै यद्रोचते स तत्प्रमाणीकुर्यात् । तस्मान्नागमेनापि मूलोपलब्धिः ।

उपमानं त्वदृष्टेऽर्थे सदृशे चानिरूपिते ।
नैवेष्टमिति तेनापि न मूलश्रुतिसाधनम् ॥

अर्थापत्त्यापि यत्किञ्चिन्मूलमित्यवगम्यते ।
तच्चाप्रमाणपक्षेऽपि भ्रान्त्यादि न विरुद्धयते ॥

यदि हि श्रुतिकल्पनेन विना स्मृतिर्नोपपद्यते ततः सम्यङ्मूला स्यात् । सम्भवति तु स्वप्नमूलत्वेन तेनानैकान्त्यादर्थापत्तेः सामान्यतो दृष्टस्य वानवकाशः । तस्मादनुपलब्धिगोचरापन्नायां श्रुतौ सत्स्वपि मूलान्तरेषु अभिप्रेतमूलाभावान्निर्मूलत्वाभिधानम् ।

ननु ये विदुरेवमितिकर्तव्यताक एवं फलकश्चासौ पदार्थः कर्तव्य इति । अथ वा ये कर्तव्योऽसावितीत्थं विदुस्ते तथा विजानन्तस्तादृशाः कथमिवास्मान् विप्रलब्धुं न कर्तव्योऽसाविति वदेयुः । नन्वन्य एवं वदन्ति कर्तव्य इति, अ न वा कर्तव्य इत्याहुः ।

कथमन्यत्वं यदा तेषामप्येवमयं स्मर्यत इति कथिते भवत्येवं प्रतिपत्तिः । अथ वा ये मन्वादयो विदुरकर्तव्योऽयं पदार्थ इति कथमिव ते विनापराधेन

ततः क्वापि कल्पना स्यादिति । अस्माभिस्तस्य वाक्यस्यानुपलम्भे प्रलीनास्ताः शाखा इत्यादिकेति । न च प्रलीनशाखामूलत्वेन मन्वादि[1]स्मृतीनां वेदमूलत्वे[2] विस्रम्भसम्भव[3] इत्याह — मृतसाक्षिकव्यवहारवच्चेति । यत्र ह्यन्यथाभावे बाधसम्भवस्तत्र बाधाभावात्तथात्वनिश्चयः बाधकसम्भवाद्वा मृषावादः[4] स्यादनन्यगोचरे तु बाधायोग्यत्वादेवाविस्रम्भ[5] इति ।

---

१. मन्वाद्युक्तेः स्मृतीनां आ० मा० । २. वेदमूले आ० मा० ।
३. विस्रम्भभाव आ० मा । ४. मृषाभावं आ० मा० ।
५. °देव बिस्रम्भ इति आ० मा० ।

लोकं वञ्चयितुं वदिष्यन्ति कर्तव्य एवायमिति ।

स्मरणानुपपत्त्येति । ये तावन्मन्वादिभ्योऽर्वाञ्चः पुरुषास्तेषां यज्ज्ञानं तत्तावदनवगतपूर्वार्थत्वान्न स्मृतिः । मन्वादीनामपि यदि प्रथमं किञ्चित्प्रमाणं संभाव्यते, ततः स्मरणं भवेन्नान्यथा । कस्मात्पुनः पुत्रं दुहितरं वातिक्रम्य वन्ध्यादौहित्रोदाहरणं कृतम् । स्थानतुल्यत्वात् । पुत्रादिस्थानीयं हि मन्वादेः पूर्वविज्ञानं दौहित्रस्थानीयं स्मरणमतश्च यथा दुहितुरभावं परामृश्य दौहित्रस्मृतिं भ्रान्तिं मन्यते तथा मन्वादिभिः प्रत्यक्षाद्यसंभवपरामर्शादष्टकादिस्मरणं मिथ्येति मन्तव्यम् । तथैव पारम्पर्येणाविच्छेदादयं वेद इति वाक्यानुमानाभिप्रायेणोक्तम् ।

इतरस्त्वर्थस्यैवाविच्छेदस्मरणमयमाहेति मत्वा पुनर्निर्मूलत्वमाह । वेदः पुनः सविशेषः प्रत्यक्षगम्यस्तत्र घटादिवदेव पुरुषान्तरस्थमुपलभ्य स्मरन्ति । तैरपि स्मृतमुपलभ्यान्येऽपि स्मरन्तोऽन्येभ्यस्तथैव समर्पयन्तीत्यनादिता । सर्वस्य चात्मीयस्मरणात्पूर्वमुपलब्धिः संभवतीति न निर्मूलता । शब्दसंबन्धव्युत्पत्ति-

अथ वा ये मन्वादयो विदुरिति । व्यवहितकल्पनया **भाष्यं** व्याचष्टे एवमसौ पदार्थ इत्यस्य न कर्त्तव्य इत्यन्त[1]पठितेन सम्बन्धस्ततः कर्त्तव्य इति, कथमिव ते वदिष्यन्तीति[2] ग्रन्थ इति । ये. तावन्मन्वादिभ्य इति । प्रथमे व्याख्याने उत्तरमुत्पन्नज्ञाना अपि ते तस्य मूलासम्भवादाहुर्नैतदेवमिति । द्वितीये व्याख्याने आह — मन्वादीनामपीति । अन्यथा संविदानस्यान्यथावादानुपपत्त्या तथात्वमवगम्यते । यदि तज्ज्ञानस्य मूलं सम्भाव्येत । तदसम्भवे तु मन्वादिष्वेव पुरुषत्वाद्रागमोहादि[3]कल्पना लघीयसीति । पुत्रस्थानीयं हि मन्वादेरिति । कारणाभावात् कार्यस्यासम्यक्त्वमुच्यते । न च बन्ध्यादुहितुः कारणाभावः, किन्तु दौहित्रस्येति । वाक्यानुमानाभिप्रायेणेति । स्थूलदोषत्वादभिप्रायवर्णनम् । स्मृत्या वेदमनुमाय ततोऽर्थनिश्चयः । ततः स्मृतिप्रणयनम् । एवं परस्यापि तया स्मृत्या वेदानुमानमिति सर्वेषामनुमितो वेदः स्मृतिमूलस्य विज्ञानस्य कारणमिति ।

नन्वस्तु वेदाक्षरेषु प्रत्यक्षं कर्तृ ग्रन्थान्तरसाधारणमतोऽयं वेदोऽयमवेद इत्यत्र पुरुषपरम्परैव प्रमाणमित्यत्राशङ्क्याह — शब्दसम्बन्धव्युत्पत्ति-

१. पदार्थ इत्यन्तस्याकर्तव्य इत्यन्ते आ० मा० ।
२. वेदयिष्यन्तीति आ० मा० ।
३. रागादिकल्पना आ० मा० । मोहपदमिह नास्ति ।

मात्रमेव चेह वृद्धव्यवहाराधीनम् । प्रागपि हि वेदशब्दादन्यवस्तुविलक्षणं वेदान्तरविलक्षणं वाध्येतृस्थमृग्वेदादिरूपं मन्त्रब्राह्मणादिरूपाणि चान्यविलक्षणान्युपलभ्यन्ते । सर्वेषां चानादयः संज्ञा इति तद्द्वारेणोत्तरकालमपि गम्यमानानां प्रत्यक्षत्वं साधितम् । नन्वष्टकादिषु पुरुषान्तरस्थेष्वपि कुम्भकारक्रियास्विव किञ्चिद्विज्ञानमूलमस्ति । यदि हि कर्मस्वरूपमात्रं स्मर्येत ततः पाकादि तदिन्द्रियैरस्यानुतिष्ठतो दृष्ट्वा परे स्मरेयुः । यतस्त्विह स्वर्गादिसाध्यसाधनसंबन्धः स्मर्यते नासौ पुरुषान्तरेषूत्पद्यमानः कैश्चिद्दृश्यत इत्यन्धपरम्परान्यायेनाप्रमाणता । सर्वस्यानादिव्यवहारोपन्यासेन वेदवत्प्रसिद्ध्यभिमानो भवत्यतोऽन्धपरम्परानिदर्शनम् । वेदे हि प्रामाण्यस्यानादित्वमिहाप्रामाण्यस्य । कथम्—

यो यो ग्रहीता जात्यन्धः स स्वयं नोपलब्धवान् ।
स्वातन्त्र्येणागृहीते च प्रामाण्यं नावतिष्ठते ॥

तादृशं वाष्टकादिस्मरणम् । न च चोदना मूलभूतोपलभ्यते । न चाननुभूतसंबन्धोऽनुमातुं शक्यते । यदि च वेदानुपलभ्य स्मृतयः प्रवर्तिताः स्युस्ततोऽर्थस्मरणवदित उपलभ्यायं मन्त्रादिभिः प्रणीत इत्यपि पारम्पर्येण स्मर्येत ।

मात्रमिति । संघातभेदः प्रत्यक्ष एव । तत्र च कर्त्तुरस्मरणेन नित्यत्वात् प्रामाण्यमिति[1] सिद्धे पटादिवद् व्यवहारा[2]द्वेदशब्दवाच्यतेति । प्रत्यक्षत्वं संघातविशेषाणां व्युत्पादयति[3] — प्रागपि हीति । तेन नायं शब्दोपाधिः प्रत्यय इति । यद्यपि शब्दसम्बन्धात् स्यात्तथापि न भ्रान्तिः तादूरूप्यादर्थस्येत्याह[4] — सर्वेषां चानादयः संज्ञेति । एवमन्धपरम्परातुल्यता अष्टकादिस्मरणस्य परिह्रियेत । यदि प्रत्यक्षमनुमानं वा चोदनायां स्यात्, न तु तदस्तीत्युक्तमित्याह — न च चोदनामूलभूतेति । एवं स्मृतिमूले वेदे प्रमाणं नास्तीत्युक्तम् ।

सम्प्रति तस्याभाव एव प्रमाणमुपन्यस्यति — यदि च वेदानुपलभ्येति । व्यापकस्य स्मरणस्याभावाद् व्याप्यस्य विज्ञानमूलस्याप्यभाव इति ।

---

१. इति नात्र पठति आ० मा० ।
२. सिद्धे चेयं घटादिवद्वृद्धव्यवहारात् आ० मा० ।
३. प्रतिपादयति आ० मा० ।
४. तादूरूप्यादस्येत्याह आ० मा० ।

स्यादेतद्, अर्थस्मरणेन कृतार्थानां निष्प्रयोजनं मूलस्मरणमादराद्भ्रष्टमिति। तदयुक्तम्। न हि यत्कृतं प्रामाण्यं तदेव विस्मर्तुं युज्यते। अर्थस्मृतेः स्वतः प्रामाण्याभावात्। सर्वे पुरुषास्तावदेतज्जानन्ति यथा वेदमूलज्ञानाद्विना प्रामाण्यं न निश्चीयत इति। ते कथमिव तत्रानादरं कुर्युः। अपि च—

येन यत्नेन मन्वाद्यैरात्मवाक्यं प्रपाठितम्।
कस्मात्तेनैव तन्मूलं चोदना न समर्पिता॥

यदि हि तैरप्यर्थमात्रमेवान्येभ्योऽधिगतं न वेदो दृष्ट इति ततस्तत्पूर्वकेष्वप्ययमेव पर्यनुयोग इति निर्मूलसंप्रदायत्वप्रसङ्गान्निर्मूलत्वान्न मुच्यसे। यदि तु प्रलीनशाखामूलता कल्प्येत ततः सर्वासां बुद्धादिस्मृतीनामपि तद्द्वारं प्रामाण्यं प्रसज्यते। यस्यैव च यदभिप्रेतं स एव तत्प्रलीनशाखामस्तके निक्षिप्य प्रमाणीकुर्यात्। अथ विद्यमानशाखागता एवैतेऽर्थास्तथापि मन्वादय एव[1] सर्वे पुरुषास्तत एवोपलप्स्यन्ते। युक्ततरा च स्वाध्यायाध्ययनविधेः साक्षाद् वेदादेव प्रतीतिरिति स्मृतिप्रणयनवैयर्थ्यं स्यात्। न च तद् विज्ञायते। कीदृशाद् वाक्यादिदं मन्वादिभिः प्रतिपन्नं किं विधिपरादुतार्थवादरूपादिति। पश्य,

महतापि प्रयत्नेन तमिस्रायां परामृशन्।
शुक्लकृष्णविवेकं हि न कश्चिदधिगच्छति॥

येन यत्नेन मन्वाद्यैरिति। **यद्यासीद्वेदः स एव समर्पितः स्यादसमर्पणात्तु नासीदित्यवसीयत इति।**

यदि तु प्रलीनशाखेति। **अध्येतृपुरुषक्षयादालस्याद्वा तेषामन्येषां च स्वशाखाध्ययनकृतार्थत्वाच्छाखोच्छेदमुपलभ्य तदर्थनिबन्धनं मन्वादीनामागामिपुरुषोपकारायेति।** तदेतद् दूषयति — ततः सर्वासामिति। **एवमविस्रम्भणीयायाः स्मृतेः प्रणयनं व्यर्थमिति प्रणयनोपेक्षैव तैः कृता स्यादिति।** अथ विद्यमानशाखा इति। **तेन पठ्यन्त एव तानि वचनानि मनुना न समर्पितानीति।** तत्राह — तथापीति। **यथाग्निहोत्रादीनि पठ्यमानाद्वेदादेवोपलभ्यन्ते तथाष्टकाद्यपीति।** व्यर्थता स्मृतेरिति। न च विज्ञायते कीदृशादिति। **एवमविस्रम्भस्यावश्यंभावित्वात् सति वेदे स्मृतिप्रणयनवैयर्थ्यमिति।** महता प्रयत्नेनेति। **प्रमाणशून्यो मूलविशेषनिश्चयो[1]ऽशक्य इत्यत्र दृष्टान्तः। न च वेदोऽखिलो धर्ममूलम् [ मनुस्मृतिः**

---

१. इव इति काशीमुद्रितपाठः

१. निर्णयो आ० मा०।

न च मन्वादिवचनाद् वेदमूलत्वं निश्चिनुमः। ते हि निर्मूलमपि विप्रलम्भादिहेतोरुक्त्या[1] लोकं वञ्चयितुमेव वदेयुः । तस्माद-प्रमाणम् ॥६॥

सर्वथा तावन्मन्वादिप्रणीताः सन्निबन्धनाः स्मृतयः शेषाणि च विद्या-स्थानानि स्वार्थं प्रतिपादयन्त्युपलभ्यन्ते। मन्वादीनां चाप्रत्यक्षत्वात् तद्विज्ञान-मूलमदृष्टं किञ्चिदवश्यं कल्पनीयम्। तत्र च

भ्रान्तेरनुभवाद्वापि पुंवाक्याद् विप्रलम्भनात् ।
दृष्टानुगुण्यसाध्यत्वाच्चोदनैव लघीयसी ॥

सर्वत्रैव चादृष्टकल्पनायां तादृशं कल्पयितव्यं यद् दृष्टं न विरुणद्धि न चागतदृष्टान्तरमासञ्जयति। तत्र भ्रान्तौ तावत् सम्यङ्निबद्धशास्त्रदर्शन विरोधापत्तिः सर्वलोकाभ्युपगतदृढप्रामाण्यबाधश्च। इदानीन्तनैश्च पुरुषैरपि

२।६।] इत्यादिवचनात् विस्रम्भणीयत्वमङ्गीकृत्य स्मृतिप्रणयनमित्याह —न च मन्वादिवचनादिति। एवं सति मूले स्मृतिप्रणयनं व्यर्थत्वान्नाप्तस्य हितैषिणो युक्तम्, असति तु विप्रलिप्सोर्घटते। तस्मादप्रमाणं स्मृतिरिरिति। स सर्वथा तावदिति । प्रामाण्याप्रामाण्यपक्षयोरिदं तावत्[1] सिद्धमिति । सन्निबन्धना इति । विद्यमाननिबन्धनाः शोभननिबन्धना वा निबन्धन-[2]सम्भवेन प्रत्ययिततरनिबन्धयितृपुरुषमात्रपारतन्त्र्यं दर्शितम् । परम्परया तु स्मरणेऽनेकपुरुष[3]पारतन्त्र्यं स्यात्। निबन्धनदोषान्निबन्धयितुरप्रत्ययित-तरत्वानुमानं निबन्धनसाधुत्वेन प्रत्युक्तम्—शेषाणि चेति। सर्वेषां विद्यास्थाना-नामदृष्टसाधनांशे प्रामाण्यप्रतिपादनम् स्मृतित्वाविशेषा[4]दिदमेवेति दर्शितमिति। सम्यङ्निबद्धेति। भ्रान्तोऽपि सम्यगेतदिति मन्वानस्तत्परस्मै विवक्षति । तेन भ्रान्तिवादिनापि सम्यग् विवक्षाङ्गीकर्त्तव्या मन्वादीनां त्रिचतुरज्ञानव्यस्थितेनापनीतबाधाशङ्केनोपदेशः क्रियते। तेन सम्यग्विवक्षया भ्रान्तिकल्पना विरुध्यते । शास्त्राच्च यदेवमर्थं इति दर्शितम् । तद् यावत् स्वरूपेणाबाधितस्तावत् स्वोपपत्तये प्रमाणमूलमपेक्षते भ्रान्तिकल्पनां तु विरुणद्धीति।

---

१. उक्त्वा इति काशीमुद्रितपुस्तकपाठः

१. तावत् इति पदं नास्ति आ० मा०। २. सद्भवेत् आ० मा०।

३. स्मरणेनैकपुरुष आ० मा०। ४. विशेषादिहत्यमेवेति आ० मा०।

भ्रान्तिर्मन्वादीनामनुवर्तिता । तत्परिहारोपन्यासश्च मन्वादीनामित्यनेकादृष्ट-कल्पना । अनुभवेऽपि स एव तावदनुभवः कल्पयितव्यः । पुनश्चेदानीन्तन सर्वपुरुषजातिविपरीतसामर्थ्यकल्पना मन्वादेस्तच्चेत् सर्वज्ञवादे निराकृतम् । पुरुषवाक्यपराप्यन्धपरम्परया निराकृता । न हि निष्प्रतिष्ठप्रमाणात्मलाभो दृश्यते । तथा विप्रलम्भेऽपि तत्कल्पना । विप्रलिप्सा प्रयोजनं लोकस्य च तत्र भ्रान्तिः तस्याश्चेयन्तं कालमनुवृत्तिरित्याद्याश्रयणीयम् । उत्पन्नस्य च दृढस्य प्रामाण्यनिराकरणाद् दृष्टविरोधः । तस्मात् सर्वेभ्यश्चोदनाकल्पनैव ज्यायसी । तत्र हि तन्मात्रादृष्टाभ्युपगमः । शेषास्तु महाजनपरिग्रहादयः सर्वेऽनुविधीयन्ते । संभाव्यते च मन्वादीनां चोदना पूर्वविज्ञानकारणत्वेन । तदर्थमेवाह, तेनोपपन्नो वेदसंयोगस्त्रैवर्णिकानामिति । यानि पुनरनुपपन्नवेद संभावनानां म्लेच्छादीनामतीन्द्रियार्थस्मरणानि तेषां मूलकल्पनावेलायामेव चोदना संभावनापदं नारूढेति मिथ्यात्वहेतुभूतचतुष्टयपारिशेष्याद-प्रमाणत्वम् । संभावितायां पुनश्चोदनायां कारणान्तरनिषेधे कृते निर्मूलत्वा-संभवात् परिशेषसिद्धं चोदनामूलत्वम् । यत्तु किमर्थं चोदना नोपलभ्यन्त इति । तत्र केचिदाहुः नित्यानुमेयास्ता न कदाचिदुच्चार्यन्ते । यथा लिङ्गादि-कल्पिताः । कथमनुच्चारितानां मूलत्वोपपत्तिरिति चेत्, नैष दोषः । पाठा

**तत्परिहारोपन्यासश्चेति । स्मृतिग्रन्थग्राहिणः प्रतिस्वज्ञानस्य भ्रान्त-स्यापि भ्रान्तित्व[1]परिहारेणाभ्रान्तत्वं मन्वादिभिर्दर्शितमिति कल्पनीयमिति । अनुभवपुरुषवाक्यपरम्परयोः प्रामाण्यदूषणेन भ्रान्तिपक्षनिक्षेपः क्रियते । तत्र च पूर्वोक्तमेव दूषणमिति । सम्भवद्वेदसंयोगत्वेन मन्वादीनां स्मृति-प्रामाण्यं वदतां म्लेच्छाः स्मृतयः प्रामाण्यान्निरस्ता इत्याह — यानि पुनरनुपपन्नेति ।**

**मिथ्याहेतुमूलचतुष्टयेति[2] । मूलकल्पनावेलायां मूलचतुष्टयम् । तत्रानुभवपुरुषवाक्यपरम्परयोरालोच्यमानयोर्भ्रान्तित्वापत्तेर्मिथ्यात्वहेतुत्वम् । कल्पनातिरेकाच्च पूर्वमकल्पनीयत्वमेषामुक्तम् । अन्यथागतौ तु कल्पनाति-रेकोऽप्यङ्गीक्रियत इति ।**

---

१. भ्रान्तत्व आ० मा० ।

२. °भूतचतु° आ० मा० । अयमेव पाठः पुनःसंस्करणे तन्त्रवार्त्तिके ।

विच्छेदवत् पारम्पर्येण स्मरणात् तत्सिद्धेः । यथैव हि ग्रन्थः सम्प्रदायाद-विच्छिन्नोऽस्तित्वं भजते तथैव प्रतिज्ञया नित्यानुमेयश्रुतिसंप्रदायाविच्छेद सिद्धिः । तत्त्वयुक्तम् । अन्धपरम्परान्यायादेव । या हि चोदना न कदा-चिदुच्चार्यते तस्याः सर्वपुरुषप्रत्यक्षादिप्रसराभावाद् दुर्लभतरमस्तित्वम् । तथा च स्मृतेरपि सैव वन्ध्यादौहित्रतुल्यता । लिङ्गादीनां तु नित्यत्वान्नित्य

पाठाविच्छेदवदिति । यथैव पाठाविच्छेदेन प्रत्यक्षविच्छेदः । एवम-नुमानकारणस्मरणाविच्छेदेनानुमानाविच्छेदः । तदेतद्विवृणोति । यथैव हीति । उपाध्यायेन शिष्यस्य प्रत्यक्षीकरणाय पाठः सम्प्रदायः । ततः प्रत्यक्षी-कृत्यासावन्येभ्यः प्रत्यक्षीकरोति सोऽप्यन्येभ्य इति अनादित्वाद्यथादोषः । एवमन्यस्य स्मरणमुपलभ्य प्रतिजानात्यस्य मूलं वेद इति । ततोऽनुमान-सिद्धस्य वेदस्यार्थं स्मरति । तस्य स्मरणादन्योऽप्यनुमिनोति । एवमुच्चारणेनैव स्मरणेन संप्रयच्छन्तो वेदमप्रत्यक्षमप्यनुमानविषयत्वाद्धार-यन्ति[1] । प्रतिज्ञयेति प्रतिज्ञाशब्देनानुमानज्ञानं लक्षयति । तत्त्वयुक्तम् — अन्ध-परम्परान्यायादेवेति । भवेदेतद् यद्यस्ति वेद इत्यनुमीयेत । नत्वेतदस्ति । उक्तं हि पुरुषवचनादेवमयं पुरुषो वेदेति भवति । प्रत्ययो[2] वक्त्रधीहेतु-संभवाच्चार्थनिश्चय इति । अत्र चार्थनिश्चयाय धीहेतुमनुसन्दधानो नार्थसंस्पर्शि प्रमाणं लभते यथैवायं मानवीयात् स्मरणात् मनुरेवं वेदेति प्रतिपाद्यार्थमनिश्चिन्वानस्तन्निश्चयाय मनोः प्रामाण्यं मृगयते । तथा मनुरपि मन्वन्तरस्य सोऽप्यन्यस्येति । प्रत्यक्षे सति सर्वेषां ज्ञानं पूर्वपूर्व-ज्ञानसापेक्षमर्थेन प्रामाण्य[3]मन्धपरम्परयेति ।

लिङ्गादीनां त्विति । स्मृत्यनुमानं लिङ्गापेक्षं लिङ्गं च सर्वेषां प्रत्यक्ष-सिद्धम्, न किञ्चिदपेक्ष्य निश्चेतव्यम् । यथा च लिङ्गवन्मन्त्राम्नानमेव विनियोजकश्रुत्याम्नातयोपचरितं श्रुतिस्वरूपं लभते नैवं नित्यानुमेया ।

---

१. °वेदमप्रत्यक्षविषयमप्यनुमानविषयं धारयिष्यन्तीति आ० मा० ।

२. इतः..............वेदेति यावत् पंक्तिः पूनामातृकायां नास्ति केवलमाद्यार मातृकायां समुपलभ्यते ।

३. °सर्वेषां ज्ञानं पूर्वज्ञानापेक्षमर्थेन प्रमाणं तुल्यमाद्यपरम्परयेति° आ० मा० ।

मनुच्चरितश्रुत्यनुमानकारणत्वमविरुद्धम् । तेन वरं प्रलीनश्रुत्यनुमानमेव । न च प्रलयो न संभाव्यते । दृश्यते हि प्रमादालस्यादिभिः पुरुषक्षयाच्चाल्पविषयत्वम् । न चैवं सति यत्किञ्चित्प्रमाणमापत्स्यते । शिष्टत्रैवर्णिकदृढस्मरणान्यथानुपपत्तिलभ्यत्वात् श्रुत्यनुमानस्य । यद्वा विद्यमानशाखागतश्रुतिमूलत्वमेवास्तु । कथमनुपलब्धिरिति चेदुच्यते—

शाखानां विप्रकीर्णत्वात्पुरुषाणां प्रमादतः ।
नानाप्रकरणस्थत्वात्स्मृतेर्मूलं न दृश्यते ॥

यत्तु किमर्थं वेदवाक्यान्येव नोपसंगृहीतानीति । संप्रदायविनाशभीतेः । विशिष्टानुपूर्व्या व्यवस्थितो हि स्वाध्यायोऽध्येतव्यः श्रूयते । स्मार्ताश्चाचाराः केचित्क्वचित्कस्यांचिच्छाखायाम् । तत्रापि तु केचित्पुरुषमेवाधिकृत्याम्नायन्ते । येन क्रतुप्रकरणाम्नाताः केनचिन्निमित्तेनोत्कृष्यमाणाः पुरुषधर्मतां भजन्ते । यथा 'मलवद्वाससा सह न संवदेत्' तस्मान्न ब्राह्मणायावगुरेत्' इत्येवमादयः । तत्र यदि तावत्तान्येव वाक्यान्युद्धृत्याध्यापयेयुस्ततः क्रमान्यत्वात्स्वाध्यायविधिविरोधः स्यात् । अनेन च निर्देशेनान्येऽप्यर्थवादोद्धारेण विधिमात्रमधीयीरन्कर्मौपयिकमात्रं वा । तत्र वेदप्रलयः प्रसज्येत । न चावश्यं मन्वादयः सर्वशाखाध्यायिनः । ते हि प्रयत्नेन शाखान्तराध्यायिभ्यः श्रुत्वार्थमात्रं स्ववाक्यैरविस्मरणार्थं निबध्नीयुः । न च वाक्यविशेषो ज्ञायते । यथैव हि स्मृतेर्दृढत्वाद्भ्रान्तिमूलत्वं नास्त्येवमर्थवादमूलत्वमपि । शक्नुवन्ति हि ते विध्यर्थवादौ विवेक्तुम् । तत्र स्मृतेर्विध्यात्मकत्वात्प्रकृतितादात्म्यानुमानलब्धास्पदेऽर्थवादपूर्वकत्वं निष्प्रमाणकम् । अपि च वेदोऽखिलो धर्ममूलं, स सर्वोऽभिहितो वेद इति च स्वयमेव स्मर्तृभिरात्मा बध्वा समर्पितस्तच्चैतन्नियोगतस्तत्कालैः कर्तृभिर्बुद्धिकारित्वादुपलब्धमतः सिद्धं वेदद्वारं प्रामाण्यम् । यस्तु कर्तृसामान्यात्स्वतन्त्रमेव प्रामाण्यं वेदमूलत्वं वानुमानेन साधयति तस्यार्थकामानुसारिभिर्दृष्टार्थैराचारैरनेकान्तः । श्रूयमाणश्रुत्यधीनप्रामाण्यापत्तेश्च विरुद्धता । तस्मादर्थापत्तिरेवात्राव्यभिचारादुपचारात्पश्चान्मानादनुमानत्वेनोक्ता । अस्या

नहि सावर्णा एव[?] । एकपदवाक्ये त्वाम्नानाभावे कथं स्तुत्य इत्यपि वक्तव्यमिति । उपचारात्पश्चान्मानादिति । योगादप्ययमनुमानशब्दः प्रवर्त्तमानः समुदायशक्त्या त्रिरूपलिङ्गज एव ज्ञाने प्रवर्त्तते ।

एव स्मृतेर्द्रढिम्न इति । दृढत्वात् कारणानुमानमथवा दृढत्वस्य । न हि मनुष्या इहैवेति । निःशेषसंस्कारच्छिदा मरणेनान्तरितत्वात् कर्मफलसंबन्धानुसन्धानासंभवेनोच्यते । स्मृतिवैदिकपदार्थयोः कर्तृसामान्यादुपपन्नो वेद-संयोगस्त्रैवर्णिकानामिति । चोदनामूलसंभावनापदलाभार्थम् विस्मरण-मप्युपपद्यत इति । दृश्यते ह्यद्यत्वेऽपि अर्थस्मरणं ग्रन्थनाशश्च । यदा तु शाखान्तरेषु विद्यन्त एव ताः श्रुतयस्तदापि कस्यां शाखायां काः पठ्यन्त इत्यस्यांशस्य विस्मरणम् । वैदिकत्वमात्रं तु प्रामाण्यसिद्धये परिपालयन्ति । तद् विशेषज्ञानं पुनरनौपयिकत्वादनादर्तव्यमेव । तथा प्रत्युपस्थितनियमाना-मिति । आगतमागतं निमित्तं प्रति ये नियम्यन्ते वृद्धवयः प्रत्युत्थानादयस्तेषाम-दृष्टार्थत्वादेव प्रामाण्यमिति । एतदयुक्तम् । कुतः,

धर्मं प्रति यतोऽत्रेदं प्रामाण्यं प्रस्तुतं स्मृतेः ।
तस्मात् कृष्यादिवत्तेषामुपन्यासो न युज्यते ॥

तेनोक्तमुपचारादिति । *भाष्यकृता* जन्मान्तरानुभूतं च न स्मर्यत इत्युक्तम् । तद्येन च हेतुना येन च प्रयोजनेनोक्तं तदनुभाष्य *भाष्यं* दर्शयति — निः शेषसंस्कारेति । निःशेषं संस्कारमुच्छिनत्ति । मरणं न व्याध्यादिवत्-सशेषम् । यतोऽजातस्यापूर्ववत्सर्वव्युत्पत्त्यपेक्षत्वम् । यदि च जन्मान्तरानुभूतं स्मर्यते ततो [1]जन्मान्तरे चित्रामहमकरवमिह जन्मनि पशवो मे मिलन्ति । अन्यस्य च तामकृतवतः पशवभाव इत्यन्वयव्यतिरेकाभ्यां साध्यसाधनसम्बन्धानुसन्धानं भाव्येत[2], नेतरथा । तेन तदसम्भवेन प्रयोजनेन स्मरणाभाव उच्यत इति । स्मृतिवैदिकपदार्थयोरिति । उपपन्नो वेद[3]संयोग इत्यनयोर्नैकग्रन्थता । किन्तु ग्रन्थस्त्वनुसीयत इत्यन्वयः । सौत्रो हेतु*र्भाष्यकारेणोक्तः* । स्मृतिवैदिकपदार्थयोः कर्तृसामान्यादिति । यच्च तस्य तात्पर्यव्याख्यानमुपपन्नो वेदसंयोगस्त्रैवर्णिकानामिति । तच्चोदना-रूपस्य मूलस्य सम्भावनापदलाभार्थमिति ।

---

१. जन्मान्तरे च तामहमकरवमिह च जन्मनि इव एवो[?] मे सिद्ध्यति आ० मा० ।

२. स भाव्येत आ० मा० ।

३. °संयोग इति च नानयोरेकग्रन्थता आ० मा० ।

न हि यावत्किञ्चिदाचरणं तस्य सर्वस्य मूलमिह प्रमाणीक्रियते। धर्मजिज्ञासाधिकारात्। यदि च गुर्वनुगमादीनां केवलं दृष्टार्थत्वमेव स्यात्ततः कृष्यादिवद्धर्मं प्रत्यप्रामाण्यमेवेति नोपन्यसितव्या। स्यादेतदप्रामाणत्वेनैषामुपन्यास इति।

न, तथा सति हेतुदर्शनाच्च [मी० सू० १।३।४।] इत्यत्रोदाहर्तव्या भवेयुः। तस्माच्छ्रेयांसमिति च दर्शनं निष्फलम्। न च नियोगतः शास्त्रादृते प्राप्तिः। शक्यते ह्युपायान्तरेणापि सामदानादिना गुरुरध्यापनादीनि कारयितुम्। तत्रास्ति नियमविधेरवकाशः। सर्वत्र च यथा कथञ्चिल्लोकपङ्क्तिसहायोपादानात्मरक्षणप्रीत्युत्पादादिका दृष्टार्थता *भाष्यकारोक्ता* शक्या वक्तुम्। न चावघातादीनां वृष्टिकामयागादीनां च दृष्टार्थानामवैदिकत्वम्। तस्मात्सत्यपि दृष्टार्थत्वे संभाव्यते वेदमूलत्वं नियमादृष्टसिद्धेरनन्यप्रमाणकत्वात्। अतश्च गुर्वनुगमनादेर्नैमित्तिकत्वादक्रियायां प्रत्यवायः करणे च न भवति। दृष्टं च प्रीतो गुरुरध्यापयिष्यतीत्येवमादि निष्पद्यते। नियमाच्चाविघ्नसमाप्त्यर्थापूर्वसिद्धिः। एवं च 'आचाराद्गृह्यमाणेषु तथा स्यात्' [मी० सू० ६।२।१०।] इत्यत्र सकृदसकृद्वानुष्ठानमिति विचारो युक्तः। इतरथा तु दृष्टार्थत्ववशेनैवोदकपानादिवदवधारणं स्यात्।

यत्तु *भाष्यकारेण* दृष्टार्थत्वादेव प्रामाण्यमित्युक्तं तत्पूर्वपक्षवाद्यतिशयार्थम्। एतदुक्तं भवति। यास्तावददृष्टार्थाः स्मृतयस्ताः कथञ्चिदप्रमाणी-

---

लोकपङ्क्तिसहायोपादानमिति। लोकपङ्क्त्यादीनां प्रीत्यन्तानामुत्पादिका दृष्टार्थता। लोकपङ्क्तिर्लोकसंग्रहः[1]। तथा यजमानाध्यापकयोर्याजकाः शिष्याश्च सहायाः। सवनगतक्षत्रियवैश्यवधनिषेधे ब्राह्मणेनात्मरक्षा[2] स्वकुटुम्बभरणे गृहस्थस्य प्रीतिरिति। नैमित्तिकत्वादिति। नैमित्तिकत्वादवश्यं कर्त्तव्यम्। अवश्यकर्त्तव्यता[3] च नान्तरेण क्रियायां प्रत्यवायं भवतीति। एवं चाचाराद्गृह्यमाणेष्विति। भिन्ने जुहोतीत्यादिविहितानां कर्मणां निमित्तप्रयुक्तत्वात् यावन्निमित्तभावमावृत्तिः प्रतिपादिता सातिदिश्यते। गुर्वनुगमने सकृत्कृते कृतः शास्त्रार्थ इति न पुनः क्रियेतेति

---

१. लोकपंक्तिर्लोकसंग्रह इति नास्ति आ० मा०।
२. °वैश्यवधब्रह्महत्येति यागेनात्मरक्षा आ० मा०।
३. अवश्यकर्तव्यता स्थाने सा इतिमात्रम् आ० मा०।

कुर्याद्भवान्, इमाः पुनर्गुर्वनुगमनादिविषया कथमिवाप्रमाणं भविष्यन्तीति । सभाप्रपादीनां यद्यपि विशेषश्रुतिर्नैव कल्प्यते तथापि परोपकारश्रुत्यैव समस्तानामुपादानात्प्रामाण्यम् । तस्माच्छ्रेयांसमित्यश्वे गर्दभेनानुगन्तव्ये सिद्धवच्छ्रेयसामूनैरनुगमनं दर्शयति । यथा धन्वनि निरुदके कृता प्रपाः परेषामुपकुर्वन्त्येवं त्वमिति देवतास्तुतिपरे वाक्ये सिद्धवत्प्रपासद्भावस्तस्याश्च पारार्थ्यं दृश्यते । गोत्रचिह्नं शिखाकर्म तत्राप्याचारनियमस्यादृष्टार्थत्वान्नैव तावन्मात्रमेव प्रयोजनम् । शक्यं ह्युपायान्तरेणापि गोत्रं स्मर्तुं, तेनान्य एवाभिप्रायः । कर्माङ्गभूतं तावच्चतुरवत्तपञ्चावत्तादिविभागसिद्ध्यर्थमवश्यं स्मर्तव्यं गोत्रम् । अतश्च तच्चिह्नार्थमपि तावच्छिखाकल्पस्मृतेः प्रामाण्यमस्तु । तन्नियमादृष्टस्य त्वेकान्तेनैवानन्यगतित्वात् पुरुषार्थता सेत्स्यतीति । तेन सर्वस्मृतीनां प्रयोजनवती प्रामाण्यसिद्धिः । तत्र यावद्धर्ममोक्षसंबन्धि तद्वेदप्रभवम् ।

**पक्षं निवर्तयितुम् । तस्मादेते गुर्वनुगमनादयो निमित्ताद्युपजनने सत्याचर्यमाणा दृश्यन्ते । अतो निमित्तप्रयुक्ता यावन्निमित्तं चावर्त्तनीया इति । चतुरवत्तं पञ्चावत्तेति । चतुरवत्तस्य सामान्येन विहितस्यापवादः । पञ्चावत्तं भृगूणामित्येवमादि श्रूयत इति ।**

**तन्नियमादृष्टस्य त्विति । योग्यतया शिखाकल्पस्य गोत्रस्मृतिद्वारेणास्तु कर्मौपयिकत्वम् । तन्नियमादृष्टस्य तु न योग्यता । न च प्रकरणादीनि क्रतुगामित्वे प्रमाणम् । अतः पुरुषादन्यत्र गतिर्नास्त्येवेति । पुरुषार्थतेति । इदानीं यद्यपि वेदमूलतया सामान्येन स्मृतीनां प्रामाण्यमभिहितं तथापि यास्वेव योग्यतया यास्वेव अशब्दत्वेनाप्रामाण्यापत्तिः [1]सम्भवत्येव वेदमूलत्वेन प्रामाण्यं तास्वेव धर्माधर्मविषयास्विदं द्रष्टव्यम् । अर्थसुखसाधनीनां[2] तु राजैवंविधान [?] माप्तान् कुर्यात् । एवं तैर्मन्त्रयेत । तथा तूर्यघोषेण हर्षित इत्येवमादीनां प्राणान्तरमूलत्वेनोपपत्तेर्न वेदमूलत्वम् । नापि[3] धर्मे प्रामाण्यम् । अस्त्येव तु तासामपि मानान्तरमूलत्वेन पुरुषो-**

---

१. सति च वेदमूलत्वे प्रामाण्यम् आ० मा० ।

२. °सुखसाधनोपदेशिनीनां तु आ० मा० ।

३. धर्मे इति नास्ति आ० मा० ।

यत्त्वर्थसुखविषयं तल्लोकव्यहारपूर्वकमिति विवेक्तव्यम् । एषैवेतिहास पुराणयोरप्युपदेशवाक्यानां गतिः । उपाख्यानानि त्वर्थवादेषु व्याख्यातानि ।

यत्तु पृथिवीविभागकथनं तद्धर्माधर्मसाधनफलोपभोगप्रदेशविवेकाय किञ्चिद्दर्शनपूर्वकं किञ्चिद्वेदमूलम् । वंशानुक्रमणमपि ब्राह्मणक्षत्त्रियजातिगोत्रज्ञानार्थं दर्शनस्मरणमूलम् । देशकालपरिमाणमपि लोकज्योतिःशास्त्र-

पयिकेऽर्थे प्रामाण्यमिति वक्तुम् । सामान्येन प्रामाण्यं तावदुपसंहरति — तेन सर्वस्मृतीनामिति । महाजनपरिगृहीतवाक्यत्वादिभिः[1] स्मृतिकाराणामप्रतिहतोपदेशित्वेन[2] सिद्धेन सर्वस्मृतीनां प्रयोजनवतीनां प्रामाण्यसिद्धिरिति । सम्प्रति विवेचयति—तत्र यावद्धर्ममोक्षेति ।

किञ्चिद्वेदमूलमिति । यागेन स्वर्गोपभोगः सम्वत्सरशतं क्रियत इत्यादि वेदार्थः । न च सन्निहितविविध[3]दुःखेनैतद्देशजेन शरीरेण नैरन्तर्येण सुखोपभोगः सम्भवतीत्यर्थापत्त्या विलक्षणस्य देशस्यावगमो वाक्यशेषेभ्यश्च तस्य विशेषावधारणम् धर्माधर्मसाधनस्य चार्यावर्त्तादेः [4]प्रमाणान्तराद् दर्शनमिति । देशकालपरिमाणमिति । देशपरिमाणं चतुर्विंशत्यङ्गुलो हस्तस्ते चत्वारो धनुः धनुःसहस्रं क्रोशस्तेऽष्टौ योजनमिति । तथा भूमण्डलदेवतावत्यन्तरे रविमण्डलम् । तत एतावति चन्द्राङ्गारबुधा भार्गवादय इत्यादि । तथा भूरविचन्द्रमण्डलानामेतावत् परिमाणमिति । तथा कालपरिमाणम् पञ्चदशनिमेषाः काष्ठाः । काष्ठास्त्रिंशत्कलाः । कलास्त्रिंशन्मुहूर्त्तम् । त्रिंशन्मुहूर्त्तमहोरात्रम् । तैस्तावद्भिर्मासस्तैर्वर्षं तैर्युगं युगादय इति । तत्र हस्तमुहूर्त्तादिपरिमाणस्य दर्शनं मूलं लोकव्यवहारोपयोगित्वं च प्रसिद्धम् । ज्योतिःशास्त्रे मुहूर्त्ताद्युपयोगः प्रसिद्धः । देशपरिमाणस्याप्येवमुपयोगो गणितं यथासिद्धमुज्जयिन्यामेव पूर्वापरयोस्तु योजनैः [5]संख्यावान्तरकल्पना । ग्रहाणामेवं भुवोत्तरविशेषज्ञानं ग्रहगणितोपयोगिभूचन्द्रसूर्यमण्डलपरिमाणज्ञानं चन्द्रसूर्यग्रासविशेषज्ञानोपयोगि मूलं चैतयोरेतन्मूलगणितफलेन मानान्तरसंवादिना परावृत्त्य गणितरूपमनु-

---

१. वाक्यत्वादीनि आ० मा० । २. °हितोपदेशसिद्धेन आ० मा० ।
३. °दुःखहेतुना नानेनैतद्देशजेन आ० मा० । ४. प्रमाणाद्दर्शनमिति पू० मा० ।
५. संख्याया अन्तरम् विशेषकल्पनं आ० मा० ।

व्यवहारसिद्धचर्थं दर्शनगणितसंप्रदायानुमानपूर्वकम् । भविष्यत्कथनमपि[1] त्वनादिकालप्रवृत्तयुगस्वभावधर्माधर्मानुष्ठानफलविपाकवैचित्र्यज्ञानद्वारेण वेदमूलम् । अङ्गविद्यानामपि क्रत्वर्थपुरुषार्थप्रतिपादनं लोकवेदपूर्वकत्वेन विवेक्तव्यम् । तत्र शिक्षायां तावद्वर्णकरणस्वरकालादिप्रविभागकथनं तत्प्रत्यक्षपूर्वकम् । यत्तु तथाविज्ञानात्प्रयोगे फलविशेषस्मरणम् । मन्त्रो हीनः स्वरतो वर्णतो वेति च प्रत्यवायस्मृतिस्तद्वेदमूलम् । एवं कल्पसूत्रेष्वर्थवादादिमिश्रशाखान्तरविप्रकीर्णन्यायलभ्यविध्युपसंहारफलमर्थनिरूपणं तत्तत्प्रमाणमङ्गीकृतम् । लोकव्यवहारपूर्वकाश्च केचिदृत्विगादिव्यवहाराः सुखार्थहेतुत्वेनाश्रिताः। व्याकरणेऽपि शब्दापशब्दविभागज्ञानं साक्षाद्वृक्षादिविभागवत्प्रत्यक्षनिमित्तम् । साधुशब्दप्रयोगात्फलसिद्धिरपशब्देन तु फलवैगुण्यं भवतीति वैदिकम् । छन्दोविचित्यामपि गायत्र्यादिविवेको लोकवेदयोः पूर्ववदेव प्रत्यक्षः । तज्ज्ञानपूर्वकप्रयोगात्तु फलमिति श्रौतम् । तथा चानिष्टं श्रूयते । यो ह वाविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण यजति याजयति वेत्यादि । ज्योतिः शास्त्रेऽपि युगपरिवर्त

**मानम् । अनादित्वाच्च नेतरेतराश्रय दोष इति सम्प्रदायशब्देन दर्शितमिति । भविष्यत्कथनमपीति । अनादिकालत्वेन नित्यवेदविषयत्वाविरोधस्तेन युगस्वभावाद्धर्मस्य चाधर्मस्य चानुष्ठाने फलविपाकस्तादृशो भवतीति वेदाज्ज्ञात्वा भविष्यत्कथनमिति ।**

**ऋत्विगादीति । ऋत्विगादिभिर्व्यवहारा ऋत्विगादिव्यवहारा इति । युगपरिवृत्तीति [युगपरिवर्तेति] । व्यवस्थितस्याहोरात्ररूपस्य गणितोन्नयनं तस्य व्यवस्थितिः । एवं युगमेतावद्भिरहोरात्रैः । तत्रादेरहोरात्रादारभ्यान्तं यावन्नियतं तेषां रूपम् । तत्राहर्गणनां कृत्वा ज्ञायतेऽस्येदं रूपमिति । यथा दिवसस्याष्टमोऽयं मूहूर्त्तः । तेना[1]स्मिन्नहोमध्ये सूर्य इति । इदमेव युगादिकालपरिमाणज्ञानस्य गणितोपयोगित्वं पूर्वमुक्तम् । चन्द्रादित्यगतिविशेषावच्छिन्नः कालस्तिथिनक्षत्रव्यपदेश्य इति तद्गतिविभागेन तयोर्ज्ञानम् । यथा च व्याकरणे प्रकृतिप्रत्ययादिप्रक्रिया साधुशब्दावधारणे लिङ्गम् । एवमत्र गणितम् । गणितोन्नीतस्य चन्द्रादित्यादेर्गतिविशेषान्वयस्य प्रत्यक्षेण संवादः । ततो निश्चितान्वयस्य गणितलिङ्गस्य**

---

१. मुद्रितपाठस्तु 'भाविकथनमपि' इति ।

१. तेन नमोमध्ये आ० मा० ।

परिमाणद्वारेण चन्द्रादित्यादिगतिविभागेन तिथिनक्षत्रज्ञानमविच्छिन्नसंप्रदाय गणितानुमानमूलं ग्रहसौस्थ्यदौःस्थ्यनिमित्तपूर्वकृतशुभाशुभकर्मफलविपाकसूचनं तद्गतशान्त्यादिविधानद्वारेण वेदमूलम् । एतेन सामुद्रवास्तुविद्यादि व्याख्यातम् । ईदृशा वा विषयः सर्वत्रानुमातव्याः । ईदृशे गृहशरीरादि-सन्निवेशे सत्येतदेतच्च प्रतिपत्तव्यमिति । मीमांसा तु लोकादेव प्रत्यक्षा-नुमानादिभिरविच्छिन्नसंप्रदायपण्डितव्यवहारैः प्रवृत्ता न हि कश्चिदपि प्रथममेतावन्तं युक्तिकलापमुपसंहर्तुं क्षमः । एतेन न्यायविस्तरं व्याचक्षीत ।

विषयो वेदवाक्यानां पदार्थैः प्रतिपाद्यते ।
ते च जात्यादिभेदेन सङ्कीर्णौ [?] लोकवर्त्मनि ॥
स्वलक्षणविविक्तैस्तैः प्रत्यक्षादिभिरञ्जसा ।
परीक्षकार्पितैः शक्याः प्रविवेक्तुं न तु स्वतः ॥
वेदोऽपि विप्रकीर्णात्मा प्रत्यक्षाद्यवधारितः ।
स्वार्थं साधयतीत्येवं ज्ञेयास्ते न्यायविस्तरात् ॥

तथा च मानवेऽप्यभिहितम्—

प्रत्यक्षमनुमानं च शाब्दं च विवधागमम् ।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥ मनुस्मृतिः ।१२।१०५।

तथा — यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः । मनुस्मृतिः ।१२।१०६ ।

इत्यादिभिस्तर्कविशुद्धिराश्रिता प्रायेण च मनुष्याणामधर्मभूयिष्ठत्वात् तज्ज्ञाना-प्रतिबद्धाः प्रतिभास्तेषु तेषु कुमार्गेषु प्रवर्तन्ते । तत्र लोकार्थवादोपनिषत्-

परस्मै उपदेशस्ततस्तस्याप्याप्तोपदेशावगतान्वयस्यानुमानसंवादः । परस्मै चोपदेश इति [?] । सम्प्रदायाविच्छेदात् प्रामाण्यमिति ।

ते च जात्यादिभेदेनेति । आहवनीये जुहोतीति वाक्यार्थप्रतीत्युपायभूतो होमो लोकदृष्टो होमरूपेण क्रियान्तरेभ्यो संकीर्णः, एवं जातिव्यक्तिरूपौ तुल्यौ तस्य भेदौ ताभ्यां न विविक्तः, किन्तु होम इत्येव संकीर्णबुद्धिविषय इति । स्मृतीनां परम्परया धारणं महाजनेन प्रामाण्यकारणमुक्तम् । तदिदं पाखण्डिपरिगृहीतैस्तर्कशास्त्रैरनैकान्तिकं मा भूदिति तेषामपि मूलमुपयोगं[1] धारणप्रयोजनं च दर्शयति — प्रायेण च मनुष्याणामिति ।

१. °मुपयोगावधारणस्य प्रयोजनं आ० मा० ।

प्रसूतैस्तर्कशास्त्रैः सर्वविप्रतिपत्तिमुखप्रदर्शनम्। तदुपपत्तयस्तत्बलाबलपूर्वकं च निश्चयद्वारं कथ्यते। अन्यथा पुनः —

प्रतिभान्त्यः स्वयं पुंसामपूर्वा ह्युपपत्तयः।
भ्रान्तिं बहुमताः सत्यः कुर्युरज्ञानबोधनात्॥

सर्वासु तु प्रदर्शितासु स्वातन्त्र्येण विशोधयन्तः काश्चिदुत्सृज्यान्याः प्रमाणीकरिष्यन्ति। यदपि च नित्यानित्यपृथक्त्वैकत्वसामान्यविशेषव्यतिरेकाद्येकान्तप्रतिपादनं तदपि पक्षपातादृतेऽन्यतरांशनिरूपणाशक्तेः। अवश्यं च सर्वात्मकवस्तुयुगपद्ग्रहणासंभवात् तद्भागोपनिपातिपदविषयविवेकार्थमेकैकनिरूपणमादरेण कर्तव्यम्। अन्यथा येऽनवाप्तसामान्यविशेषाद्युपपत्तयः पुरुषास्ते पदप्रतिपाद्यं निष्कृष्टं वस्तुभागं लोकमात्रालोचनेन नैवाध्यवस्येयुः। मन्त्रार्थवादोपात्ताश्च स्तुतिनिन्दास्तत्तन्नित्यानित्यैकपृथक्त्वैकान्तमाश्रित्य तत्र-तत्र विधिप्रतिषेधाङ्गत्वेन प्रवर्तमानाः पक्षपातप्रतिपादितवस्तुधर्मवैचित्र्यादृते निरालम्बनाः स्युः। याश्चैताः प्रधानपुरुषेश्वरपरमाणुकारणादिप्रक्रियाः सृष्टिप्रलयादिरूपेण प्रतीतास्ताः सर्वा मन्त्रार्थवादज्ञानादेव दृश्यमानसूक्ष्मस्थूलद्रव्यप्रकृतिविकारभावदर्शनेन च द्रष्टव्याः। प्रयोजनं च स्वर्गयागाद्युत्पाद्योत्पादकविभागज्ञानम्। सर्वप्रलयोपवर्णनमपि दैवपुरुषकारप्रभावप्रविभागदर्शनार्थम्।

**एवं तत्त्वनिर्णयाङ्गत्वमुक्त्वा साक्षादपि वस्तुविभागे[1] व्यापृतिं[2] दर्शयति—यदपि नित्यानित्येति। नासतो विद्यते भावः। [भगवद्गीता २।१६] इति यत् सत्तन्नित्यमिति केषाञ्चित् प्रतिपादनम्। अन्येषां त्वर्थक्रियाकारित्वमिति[3]। तच्चानित्यस्यैव[4] संम्भवति। अतः सदनित्यमिति द्वैताद्वैतवादिनोः पृथक्त्वापृथक्त्वप्रतिपादनम्। [5]सामान्यविशेषयोः परस्परं व्यतिरेक एकान्तत इत्येकेषाम्। आदिशब्दात्तयोरेवाव्यतिरेक एकान्तत इति प्रतिपादनमन्येषामिति।**

**स्वर्गयागाद्युत्पाद्येति। यदा हि सूक्ष्मात् कारणादतिस्थूलं जगज्जायते तदा यागशक्तेः सूक्ष्मायाः स्थूलस्य च स्वर्गस्योत्पाद्योत्पादकभावो नाश्चर्यं इति।**

---

१. वस्तुनिर्णये आ० मा०। २. वृत्तिं आ० मा०।
३. इति स्थाने सत्त्वम् आ० मा०। ४. तच्च नित्यस्यैव आ० मा०।
५. इत..........प्रतिपादनमिति यावत् आ० मा० इत्यत्र नास्ति।

सर्वत्र हि तद्बलेन प्रवर्तते तदुपरमे चोपरमतीति विज्ञानमात्रक्षण-भङ्गनैरात्म्यादिवादानामप्युपनिषदर्थवाद[1]प्रभवत्वं विषयेष्वात्यन्तिकं रागं निवर्तयितुमित्युपपन्नं सर्वेषां प्रामाण्यम् । सर्वत्र च यत्र कालान्तरफलत्वादि-दानीमनुभवासम्भवस्तत्र श्रुतिमूलता । सांदृष्टिकफले तु वृश्चिकविद्यादौ पुरुषान्तरे व्यवहारदर्शनादेव प्रामाण्यमिति विवेकसिद्धिः ॥२॥

## श्रुतिविरुद्धस्मृतीनामप्रामाण्याधिकरणम् ।

स्मृतिप्रामाण्यमुत्सृष्टं प्रसक्तं सर्वगोचरम् ।
सति वेदविरुद्धत्वे तदिदानीमपोद्यते ॥
[2]विरोधे त्वनपेक्षं स्यादसति ह्यनुमीयते ॥
विरोधे वेदवाक्येन तेन चार्थेऽनधिष्ठिते ॥

सर्वत्र हि तद्बलेनेति । यस्मात्सृष्टौ सकलपुरुषकारणाभावे[1] दैवाज्जगज्जायते प्रलये च सम्पूर्णे पुरुषकारे दैवोपरमादुपरमो जगत्कारणस्य तस्मादन्यत्रोभयसम्भवेऽपि तस्य दैवस्य बलेन प्रवृत्त्युपरमौ, तदेव प्रधानम् । तस्माद्वैदिकेष्वेव कर्मसु प्रवर्त्तितव्यमिति । [वि] ज्ञानमात्र-क्षणभङ्गेति । विषयेष्वात्यन्तिकं रागं निवर्त्तयितुं नैरात्म्यवादिनामिति सम्बन्ध इति ॥२॥

पूर्वापवादत्वेन विचारस्य सङ्गतिमाह — स्मृतिप्रामाण्यमुत्सृष्टमिति ।

ननु श्रुतिलिङ्गाधिकरण एव प्रत्यक्षश्रुतिविरुद्धानुमानिकी श्रुतिरनु-मातुमशक्येति[2] प्रतिपादयिष्यति किमनेनेति । उच्यते, तत्राङ्गाङ्गिनोरा-काङ्क्षाप्रमाणकं श्रुत्यनुमानं प्रत्यक्षश्रुत्यापादितनैराकाङ्क्ष्ये मूलविच्छेदा न्नोदेतीति वक्ष्यते। अत्र तु नार्थाकाङ्क्षयानुमानम्, किन्तु मन्वादिज्ञानस्य मूलत्वेन। तद्विरोधिश्रुतिदर्शनेऽपि स्वानुरूपश्रुतिकल्पनं किमिति न करोतीत्य-त्राशङ्कां निवर्त्तयितुमारम्भ इति । अपवादस्य रूपं सूत्रेणैवाह — विरोधे त्वनपेक्षं स्यादिति [मी० सू० १।३।३।]। तेन चार्थेनाधिष्ठित इति । तुल्यन्यायस्य तादृरूप्यपरिच्छेदस्य दृष्टान्ततयोपन्यास इति । [3]यथाप्रत्यक्षश्रुति-परिच्छिन्नेऽर्थे श्रुत्यनुमानं नास्ति, प्रत्यक्षत एव श्रुतेः पठितत्वात् । तथेह

---

१. °दर्थवादं° इति पदं काशीमुद्रितपुस्तके नास्ति ।
२. विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम् । [मी० सू० १।३।३]
१. पुरुषकाराभावे आ० मा० । २. °मातुं शक्येति आ० मा० ।
३. यथेत्यत आरभ्य......'दृष्टान्त इति यावत् आ० मा० इत्यत्र नास्ति ।

यावती स्मृतिः प्रत्यक्षवेदवाक्यविरुद्धा तां सर्वामुदाहृत्य संप्रधार्यते । किं पुनस्तादृश्यपि धर्मप्रमाणत्वेनावधार्यते । किं वा पर्युदस्यत इति । कुतः संशय इति चेदुच्यते—

विरोधपरिहाराद्वा सति वा तुल्यमूलतः ।
अबाधो वा भवेदस्या बाधो वा तद्विपर्ययात् ॥

एकविषये विरुद्धार्थोपसंहारिणी विज्ञाने विरुध्येते बलवदबलवत्त्वनिर्णया च्च बाध्यबाधकभावं प्रतिपद्येते । तद्यदि शङ्कितविरोधयोरपि श्रुतिस्मृत्योः केनचित्प्रकारेण भिन्नविषयत्वेन व्यवस्था सिध्येत् । विधेयप्रतिषेध्ययोर्वा विरोधा भावादेकस्मिन्नपि विषये समुच्चयसंभवादेकप्रयोगगतत्वासंभवाद्वोभयोः प्रामा- ण्याङ्गीकरणेन प्रयोगान्तरे वोभयानुग्रहः स्यादित्येवं विकल्पाश्रयणेऽप्यत्यन्त- विरोधाभावात्प्रत्यक्षानुमितश्रुतिजनितज्ञानयोश्च वैदिकत्वाविशेषे तुल्यबलत्व- कल्पनादुभयप्रामाण्यमुपपत्स्यते । ततो यथोपन्यस्तविषयेऽपि स्मृतिप्रामाण्यमपे- क्षितव्यम् । अथ तु प्रयत्नेनान्विष्यमाणेऽपि न विषयान्तरकृता व्यवस्था नापि

**श्रुत्यनुमानं नास्तीति दृष्टान्तः । एवं दर्शितसंगत्यधिकरणमारभते । यावती स्मृतिरिति ।**

**भिन्नविषयत्वेन व्यवस्था सिध्येदिति । तद्यथा गार्हस्थ्यायोग्यं प्रति अष्टाचत्वारिंशत्वर्षब्रह्मचर्योपदेशस्तद्योग्यं प्रति कृष्णकेशाग्न्याधान- विधानम् — विधेयप्रतिषेध्ययोर्विरोधाभावादिति । औदुम्बरीस्पर्शनं विधेयम् । तेन[1] स्मार्त्तस्य वेष्टनस्य प्रतिषेध्यत्वम् । तयोरौदुम्बर्यामविरोध एकदेशे स्पृश्यते वेष्टयते चैकदेशान्तर इति । अथ वा विधिद्वययोगो भोजनस्य न विरुध्यते । यतो राजक्रयात्प्राग् भोजनं प्रतिषेध्यम् उपरिष्टाद्भोजन- सङ्कल्पो विधेयः । तयोरेकस्मिन्नेव प्रयोगे क्रयणावधिद्वय[2]योगवर्जनमनुष्ठानं च सम्भवतीति । प्रयोगान्तरे वेति । ज्योतिष्टोमे यद्युद्गातापच्छिद्येत अदक्षिणः स यज्ञः समाप्यः[3] । अथ ते न पुनर्यजत तत्र न दद्यात् यत् पूर्वस्मिन् दास्यतः स्यात् । यदि प्रतिहर्त्तापच्छिद्येत सर्ववेदं संदध्यादिति श्रुतयोरदाक्षिण्यसर्वदाक्षिण्य[4]योर्विकल्पः समुच्चयो वेति सन्देहे तत्र**

---

१. अनेनैव आ० मा० । २. योर्वजनमनुष्ठानं आ० मा० ।
३. संस्थाप्यः पू० मा० । ४. सर्वस्वदानयोः आ० मा० ।

प्रमेयाविरो[१]धात्समुच्चयो नापि विकल्पेनोभयानुग्रहः, किं तर्ह्युभयपीडनादत्यन्तविरोध एव । प्रत्यक्षानुमेयश्रुत्योश्च लौकिकप्रत्यक्षानुमानवन्महान् बलविशेषस्तदा गत्यन्तराभावादुभयानुग्रहासंभवे श्रुतिबलीयस्त्वेन स्मृतिप्रामाण्यमुपेक्षणीयं भविष्यतीति ।

किं तावत्प्राप्नुयादत्र विरोधेऽपि प्रमाणता ।
अप्रामाण्यप्रसङ्गे हि मर्यादातिक्रमो भवेत् ॥

अनाशङ्कितविप्रलम्भभ्रान्त्यादिमूला ह्यव्याहतवेदमूलत्वावधारणाः स्मृतयो निर्व्याजप्रामाण्याः शक्यन्ते धर्मव्यवहाराङ्गत्वेन स्थापयितुम् । यदा तु वेदविरुद्धत्वहेतुदर्शनपरस्परविगानादिना केनचिदपि च्छलेनासामप्रामाण्यं कल्प्यते तदा बहुशाखाखिलप्रकरणादिभेदभिन्नेषु वेदेषु श्रुतिलिङ्गाद्यात्मकोपदेशनामादिद्वारातिदेशात्मकविचित्रप्रमाणभागेषु को जानाति का स्मृतिः कीदृशेन वेदभागेन विरुध्यमाना कदानुमास्यत इति । अतश्चैवं जाताशङ्कैर्नैव क्वचिदपि विश्वस्येत अविश्वासाच्चात्यन्तमेव प्रामाण्यं प्रतिहन्येत । तथा हि—

विधिप्रतिषेधाद्विकल्पः स्यात् [मी० सू० ६।५।५१ ।] इत्युपक्रम्य सिद्धान्तमुक्तम् प्रयोगान्तरे वोभयानुग्रहः स्यात् [मी० सू० ६।५।५२ ।] इति । तेन पुनर्यजेतेति प्रयोगद्वयसम्भवादुभयानुग्रहार्थं समुच्चय इति । तदनेन प्रयोगभेदेनाप्यनुग्रहे नातीव बाध इति । अप्रामाण्यप्रसङ्गे हीति । अस्याभिप्रायः, अङ्गीकृतस्मृतिप्रामाण्येन[१] भवता वेदविरोधविषये तदपवादः[२] क्रियते । मूलान्तरासम्भवं च निश्चित्य स्मृतिप्रामाण्यमङ्गीकर्त्तुं शक्यम्, न मूलान्तरप्रतिपत्तिकारणाभावमात्रेण । ततश्च निश्चिते[३] मूलान्तराभावे कथं वेदविरोधेऽपि तदनुज्ञानम् । तदेतदाह — अनाशङ्कितेति । तेन यदि स्मृतिः प्रमाणं तदा वेदमूलकत्वमर्यादा नातिक्रमितव्या । यदि तु तामतिक्रम्य वेदविपरीतविषये मूलान्तरमनुज्ञायते तदा सर्वत्र विरोधसम्भावनायां पूर्वाधिकरणसिद्धान्तहानिः स्यादित्याह — यदा तु वेदविरुद्धेति ।

---

१. °न्तराविरोधात् इति काशीमुद्रितपाठः ।

१. °प्रामाण्येनैव आ० मा० । २. तदस्तवः आ० मा० ।

३. ततश्चानिश्चिते आ० मा० ।

कदाचिच्छ्रुतिमूलत्वमुक्त्वा भ्रान्त्यादिमूलता ।
स्मृतिभिः प्रतिपन्ना चेत्कस्तामिन्द्रोऽपि वारयेत् ॥
एकमूलव्यवस्थायां मूलान्तरनिराक्रिया ।
अप्रामाण्यनिवृत्त्यर्थं शक्या न तदुपेक्षणे ॥

किञ्च—

परस्परविरुद्धत्वं श्रुतीनां न भवेद्यदि ।
स्मृतेः श्रुतिविरुद्धायास्ततो मूलान्तरं भवेत् ॥

यदा तूदितानुदिताग्निहोत्रहोमविधिवदतिरात्रगतषोडशिग्रहणवच्च सहस्रशः श्रुतयोऽप्यसंभवद्युगपदनुष्ठानार्थतया परस्परविरुद्धा दृश्यन्ते तदा यदि नाम कासांचित्स्मृतीनां स्ववेदशाखागतवचनविपरीतार्थशाखा[1]न्तरवचनमूलानामधीतवाक्यविरोधो दृश्यतेऽतस्तावतैव सर्वशाखाप्रत्ययकर्मव्यवहारिणां स्वयमश्रुतानधीतत्वमात्रेण दृढस्मरणोपस्थापितपुरुषान्तरस्य श्रुतिनिराकरणं न शोभते, **न चैकं प्रतिशिष्यत [मी० सू० २।४।१६]** इति हि सर्वश्रुतीनां सर्वपुरुषान्प्रति प्रामाण्यादध्ययनवच्च स्मृतेरपि श्रुतिधारणसामर्थ्यात् ।

तस्माद्यथा विरोधेऽपि पठ्यमानप्रमाणता ।
पठितस्मर्यमाणानां तथैवेत्यवधार्यताम् ॥

**ननु विरोधाशङ्कां हेत्वन्तरेण निराकृत्य प्रामाण्यमध्यवस्यामः । कथमत्यन्तं प्रामाण्यं प्रतिहन्यते । तत्राह—तथा हि कदाचित् श्रुतिमूलत्वमिति । सकलवेदादर्शनेन विरोधाशङ्काया निवर्त्तयितु[1]मशक्यत्वान्न भ्रान्त्यादिमूलत्वं निराकर्त्तुं शक्यमिति । न चैतद्विरुद्धस्मृति[2]मूलवेदाभावं गमयितुं शक्तम्, उभयोः सम्भवादित्याह — किञ्च परस्परविरुद्धत्वमिति । यदि सम्भवत्यपि शाखान्तरीया श्रुतिः स्वशाखाधीतया सह तं प्रति प्रामाण्ये तुल्या न स्यात् । यदि वा तस्याः सद्भावेन दृढं प्रामाण्यं[3] स्यात् । यथा स्वशाखाया[4] अध्ययनं तदा बाध्येत, नत्वेतदुभयमस्तीत्युक्तम् । सर्वशाखाप्रत्ययमेकं कर्मेति । दृढस्मरणेति । तदेतदुभयं विवृतं—न चैकं प्रतीति । अध्ययनवच्चेति ।**

---

१. °र्थंवेदशाखान्तरेति काशीमुद्रितपाठः

१. निराकर्तुं आ० मा० । २. विरुद्धश्रुतिदर्शनं स्मृतिमूल० आ० मा० ।
३. प्रमाणं आ० मा० । ४. स्वशाखाधीताया आ० मा० ।

किञ्च — अविरोधे श्रुतिर्मूलं न मूलान्तरसंभवः ।
विरोधे त्वन्यमूलत्वमिति स्यादर्धवैशसम् ॥
मूलान्तरं निरस्तं च सामान्येनैव यत्पुरा ।
तदनुप्राण्यते पश्चात् विरोधेनेत्यतिक्रिया ॥
तेनासां श्रुतिमूलत्वं सर्वदैव व्यवस्थितम् ।
मूलान्तरप्रवेशे वा किं तत् प्रामाण्यतृष्णया ॥
किञ्च भ्रान्त्यादिमूलानां सम्भवासम्भवाश्रयः ।
स्मृतीः प्रति विरुद्धोऽयं बाधपक्षो न युज्यते ॥
तेनासां यदि वा नैव क्वचिदस्ति प्रमाणता ।
सर्वत्राव्याहता वा स्यात् न त्वर्धजरतीयता ॥

अविरोधे श्रुतिर्मूलमिति । यस्यैव मन्वादिवचनस्य श्रुतिमूलत्वमेव, नान्यमूलत्वमिति रूपं निरूपितमविरुद्धस्मृतिविषये तस्यैव विरुद्धस्मृतिविषये भ्रान्त्यादिमूलत्वमित्यर्द्धाभ्यां वैशसं विरुद्धता । तुल्यन्यायस्य समुदायस्य । अर्द्धेन वार्द्धान्तरस्य वैशसं तुल्यन्याये समुदाये स्यादिति । एवं सर्वत्र विरोधसम्भावनायां दुर्लभं प्रामाण्यं स्यादित्युक्तम् । इदानीमसत्यपि विरोधे मूलान्तरसम्भावना वारयितुमशक्येत्याह — मूलान्तरं निरस्तमिति । यथोचितक्रियासम्पत्तावप्यनुपरमोऽतिक्रिया तया च पूर्वसिद्धस्य नाशोऽभिमतान्तरानवाप्तिश्च पाकादिषु प्रसिद्धा । सेयमापद्येत स्मृतिप्रामाण्यं प्रतिपाद्य पुनस्तत्रैवापरं विशेषं प्रतिपादयत इति ।

किञ्च भ्रान्त्यादिमूलानामिति । बाधो हि स्वतः प्रमाणस्य बलवद्विरोधाद्भवति । तेनाबाधपक्षे[1] स्वतः प्रामाण्यसिद्धये भ्रान्त्यादीनामसम्भव इत्यङ्गीकर्त्तव्यम् । बाधसिद्धये च तेषामेव सम्भव इति । भ्रान्त्यादिमूलानां यौ सम्भवासम्भवौ तयोराश्रयत्वाद्विरुद्धोऽयं स्मृतीः प्रति बाधपक्ष इति । पूर्वं विरोधविषये मूलान्तरमनुज्ञातमशक्यमन्यत्र निराकर्त्तुम् । तस्मादैक्यरूप्यमङ्गीक्रियतामित्युपसंहृतम् । तेनासां श्रुतिमूलत्वमिति । इदानीं तु मूलान्तरविषयौ सम्भवासम्भवौ न सम्भवतः । तस्मादैकरूप्यमस्त्वित्युपसंहरति — तेनासां यदि वेति ।

---

१. तेन बाधपक्षे आ० मा० ।

विरुद्धत्वं च जानन्ति स्मर्तारस्ताः स्मरन्ति यत् ।
वेदमूलबलं त्यक्त्वा किमन्यत् तत्र कारणम् ॥

गृह्यमाणनिमित्तत्वात् यद्युच्येताप्रमाणता ।
उत्प्रेक्षणीयहेतुत्वात् सा सर्वत्र प्रसज्यते ॥

रागद्वेषमदोन्मादप्रमादालस्यलुब्धताः ।
क्व वा नोत्प्रेक्षितुं शक्याः स्मृत्यप्रामाण्यहेतवः ॥

अदुष्टेन हि चित्तेन सुलभा साधुमूलता ।
दुष्टमूलत्वलाभस्तु भवत्याशयदोषतः ॥

का वा धर्मक्रिया यस्यां दृष्टो हेतुर्न युज्यते ।
कथञ्चिद् वा विरुद्धत्वं प्रत्यक्षश्रुतिभिः सह ॥

लोकायतिकमूर्खाणां नैवान्यत् कर्म विद्यते ।
यावत् किञ्चिददृष्टार्थं तद् दृष्टार्थं हि कुर्वते ॥

वैदिकान्यपि कर्माणि दृष्टार्थान्येव ते विदुः ।
अल्पेनापि निमित्तेन विरोधं योजयन्ति च ॥

तेभ्यश्चेत् प्रसरो नाम दत्तो मीमांसकैः क्वचित् ।
न च कञ्चन मुञ्चेयुर्धर्ममार्गं हि ते तदा ॥

प्रसरं न लभन्ते हि यावत् क्वचन मर्कटाः ।
नाभिद्रवन्ति ते तावत् पिशाचा वा स्वगोचरे ॥

क्वचिद् दत्तेऽवकाशे हि स्वोत्प्रेक्षालब्धधामभिः ।
जीवितुं लभते कस्तैस्तन्मार्गपतितः स्वयम् ॥

तस्माल्लोकायतस्थानां धर्मनाशनशालिनाम् ।
एवं मीमांसकैः कार्यं न मनोरथपूरणम् ॥

यच्चादौ श्रद्धया सिद्धं पुनर्न्यायेन साधितम् ।

अदुष्टेन हि चित्तेनेति । **मन्वादीनामविद्यमानदोषतया निरूपितेन चित्तेन । अथ वा प्रतिपत्तुर्मन्वादिष्वदुष्टेन निराशङ्केन चित्तेनेति ।**

लोकायतिकमूर्खाणामिति । **सर्वाप्रामाण्यवादिनामिदं मतमङ्गीकृतं चापादयत्येव सर्वाप्रामाण्यमतः श्रुतिस्मृतिप्रामाण्यन्यायविरुद्धमिदम् ।**

**विरोधेनाप्रामाण्यमित्यनेनाहेति — यच्चादौ श्रद्धया सिद्धमिति ।**

आज्ञासिद्धप्रमाणत्वं पुराणादिचतुष्टयम् ।
तत्तथैवानुमन्तव्यं कर्तव्यं नान्तरा श्लथम् ॥
सर्वं श्लथयतः सीदेद् दुर्नद्धशकटादिवत् ।
पक्षो योऽङ्गीकृतो येन तमत्रस्यन् स निर्वहेत् ॥
हारयेदन्तरा त्र्यस्यन् भीतोपद्रवकारिभिः ।
वेदश्च यदि दृष्टार्थं श्रूयमाणविरोधि वा ॥
न विदध्यात्ततस्तादृक् स्मृतिस्तन्मूलतां त्यजेत् ।
यदा तु हन्ति पिष्यादि कर्म दृष्टं सहस्रशः ॥
दृष्टार्थं विहितं वेदे तदा किं हेतुदर्शनैः ।
ऋत्विग्भ्यो दक्षिणादानं तानूनप्त्रादि कर्म च ॥
यदृत्विग्यजमानानां दृष्टार्थं सर्वमिष्यते ।
तद्यदद्यवैदिकं तादृक् स्यात्ततोऽन्यदवैदिकम् ॥
यदा चैवंविधान्येव वेदे कर्माणि सन्ति नः ।
तदा किं नाम दृष्टार्थं बुद्ध्या सिध्येदवैदिकम् ॥
तेनादावेव या क्लृप्ता स्मार्तानां वेदमूलता ।
निर्वोढव्येह सैकान्तात्किमिदं खिद्यतेऽधुना ॥
तस्माद्वेदविरुद्धानां दृष्टार्थानां च हेतुभिः ।
स्मृतीनां न प्रमाणत्वं विहन्तव्यं मनागपि ॥

योऽयमनादिकालीनपरीक्षकपरम्परापरिग्रहः स बलवान्, स्वोत्प्रेक्षित न्यायात् । तेन तत्परिग्रहादेवाज्ञानरूपान् स्मृतिप्रामाण्ये श्रद्धाया न्यायेनाप्यनुगमः कर्त्तव्यः । यदि तु विरुद्धस्मृतिविषये परम्परापरिग्रहोऽप्रमाणीक्रियते तदेतरश्रुतिस्मृत्योरपि प्रामाण्यमवसीदेत् । वेदस्यापि परम्परापरिग्रहादेव लब्धास्पदं प्रामाण्यं कर्त्तृस्मृतिविरहादकर्त्तृतां गमयत् दृढीभवतीति । वेदश्च यदि दृष्टार्थमिति । अत्र विरोधिनः प्राग्दर्शितस्यैव वेदस्य दृष्टान्ततयोपन्यासः । अत एव दृष्टार्थमेवोपरिष्टादुदाहरति — यदा त्विति । यथाविरोधि प्राग्दर्शितं तथादृष्टार्थमपि द्रष्टव्यमित्यर्थः । तानूनप्त्रं कर्म प्रयोगात्प्रागृत्विग्यजमानयोः सन्देहनिवृत्तये संवादो वेदचोदित इति ।

अविशिष्टं[1] प्रमाणत्वं सर्वासां प्राप्तमीदृशम् ।
विरोधेऽप्यधुना युक्तमेवं प्राप्तेऽभिधीयते ॥
विरोधे त्वनपेक्षं स्यात्प्रामाण्यं स्मृतिबन्धनम् ।
अविरोधे हि वेदेन तन्मूलमनुमीयते ॥
या तु वेदविरुद्धेह स्मृतिः काचन दृश्यते ।
सा तु स्याद् भ्रान्तिमूलैव न स्पष्टश्रुतिमूलिका ॥
स्वातन्त्र्येण प्रमाणत्वं स्मृतेस्तावन्न संमतम् ।
वेदमूलानुमानं च प्रत्यक्षेण विरुध्यते ॥
वेदवाक्यानुमानं हि तावदेव प्रवर्तते ।
तदर्थविषयं यावत्प्रत्यक्षं नोपलभ्यते ॥
प्रत्यक्षे श्रूयमाणे तु न विद्येतानुमानिकम् ।
न हि हस्तिनि दृष्टेऽपि तत्पदेनानुमेष्यते ॥
स्मृतीनां श्रुतिलिङ्गत्वमस्ति हस्तिपदादिवत् ।
तत्प्रत्यक्षविरुद्धत्वे तद्वदेव निवार्यते ॥
तावदेव स्फुरन्त्यर्थाः पुरस्तादानुमानिकाः ।
यावत्प्रत्यक्षशास्त्रेण मूलमेषां न कृन्त्यते ॥
कृत्तमूलाः स्फुरन्त्योऽपि स्मृतयो न चिरायुषः ।
निराधारत्वदोषेण शाखा इव वनस्पतेः ॥
न हि स्वतः[2]प्रमाणत्वं स्मृतीनामुपपद्यते ।
नान्यमूलं यतस्तत्स्यात्तत्तु मूलं न विद्यते ॥

तद्वदेव निवार्यत इति । सन्निकृष्टत्वाविशेषेण वैपरीत्यपरिच्छेदस्योपमेयत्वे ताद्रूप्यपरिच्छिन्नस्य दृष्टान्तत्वमिति ।

ननु मानान्तरापहृतविषयं मानान्तरमनुत्पत्त्या बाध्यते । स्मार्तार्थज्ञानं तूत्पन्नं कथं तस्य बाध इत्याशङ्क्याह—तावदेव स्फुरन्त्यर्था इति । ज्ञानमात्ररूपेण तदुत्पन्नं प्रामाण्यं तु तस्य मूलापेक्षम्[1] । तत्र प्रत्यक्षतया मूलवत्त्वानुमानस्य श्रुत्या निराकृतत्वात् तदपि निराधारतया निराकृतमेवेति ।[2] मूलापेक्षित्वमेवाह—नहि स्वत इति । यतो वेदाख्यान्मूलात्तत्प्रामाण्यं

१. अवशिष्टमिति काशीमुद्रितपाठः । २. साक्षादिति मुद्रितपाठः ।

१. मूलापेक्षया आ० मा० । २. मूलापेक्षतामेव दर्शयति आ० मा० ।

प्रत्यक्षप्रतिबद्धा हि श्रुतिर्नास्त्यानुमानिकी ।
नैराकाङ्क्ष्यात् प्रमातॄणामनुमानं न लभ्यते ॥
प्रमेयं यत्परिच्छेद्यं भवेत् केन चिदात्मना ।
तस्य स्यात् तत्परिच्छेदात् सावकाशप्रमाणता ॥
ताद्रूप्येण परिच्छिन्ने तद्विपर्ययतोऽपि वा ।
भूयस्तस्मिन् प्रमेये हि न प्रमाणं प्रवर्तते ॥
भिन्नकक्षागते ये च प्रमाणे तत्र धावतः ।
तयोः शीघ्रेण निर्णीते मन्थरं न प्रवर्तते ॥
तद्धि दूरमपि प्राप्तमेकमप्यगतं पदम् ।
इतरेण गतेऽनादावेकान्तेनैव जीयते ॥
यत्र शीघ्रतरं नास्ति तस्यार्थस्यापहारकम् ।
चिरेणापि व्रजेत्तत्र दुर्बलं न निवार्यते ॥
न हि येन प्रमाणत्वं लब्धपूर्वं कदाचन ।
तेन तत् सर्वदा लभ्यमित्याज्ञापयतीश्वरः ॥
सर्वमुत्पद्यमानं हि यद्यन्येन विरोधिना ।
न रुध्यते ततस्तस्य सिद्धिः कालेन लभ्यते ॥

स्यात्, तत्तु मूलं न दृश्यत[1] इति । सम्प्रति यथा[2] प्रत्यक्षस्यानुमानप्रतिबन्धकत्वं सिद्धम् । तत्स्मारयति — नैराकाङ्क्ष्यात्प्रमातॄणामिति । एवं प्रमिते प्रमाणं नोदेतीत्युक्तम् । एवं चानुमानेनैव नोत्पत्तव्यम् । लिङ्गदर्शनापेक्षित्वेन प्रत्यक्षकक्षागतत्वादित्याह — भिन्नकक्षागते ये चेति । बाध्यं च यद्यपि स्वगतदोषादर्शनादर्थपरिच्छेदार्थमारभत एव व्यापारम् । ततश्च दूरमपि गतम् । [3]यद्येकमप्यर्थनिश्चयेन गतं तत्तथापीतरेण शीघ्रनिश्चयोत्पादिनापहृतविषयत्वाज्जीयत इत्याह — तद्धि दूरमपीति । ततश्च[4] परेण विषयापहाराद् बाध्यते, न स्वदोषादतो बाधितम[5]प्येवात्रान्यत्र शीघ्रतरप्रमाणाभावात्प्रमाणीभवतीति । अविरुद्धस्मृतिप्रामाण्योपयोगि व्युत्पादयति — यत्र शीघ्रतरमिति ।

---

१. विद्यते आ० मा० । २. यथानुमानस्य प्रत्यक्षप्रतिबन्धकत्वं आ० मा० ।

३. यद्येतदप्यर्थनिश्चयपदमगतं तथापीतरेण औ० मा० ।

४. यतश्च आ० मा० । ५. मप्येकत्र आ० मा० ।

यस्य तूत्पद्यमानस्य मूलमेव निकृत्यते ।
मुखं वा रुध्यते तस्य नात्मलाभः कदाचन ॥
न च यद् बलवद्रुद्धमात्मानं नैव विन्दति ।
अविरोधेऽपि तेनात्मा न लब्धव्यः कथञ्चन ॥
न चापि बाधकाभावाल्लब्ध आत्मेति सर्वदा ।
लब्धव्यः स विरोधेऽपि पूर्वसामान्यदर्शनात् ॥
उत्सर्गश्चापवादश्च सर्वत्रैवोपलभ्यते ।
तत्र नोत्सर्गमात्रेण सर्वमेवावरुध्यते ॥
अपवादेन वा यस्मादुत्सर्गो बाधितः क्वचित् ।
तस्मात्सर्वत्र बाध्योऽसावित्येतदपि नेष्यते ॥
विषयाविषयौ ज्ञात्वा तेनोत्सर्गापवादयोः ।
बाधाबाधौ विवेक्तव्यौ न तु सामान्यदर्शनात् ॥
यो हि सामान्यदृष्टेन व्यवहारं निनीषति ।
तृष्णाच्छेदो भवेत्तस्य मृगतृष्णाजलैरपि ॥
बाधितां मृगतृष्णां वा दृष्ट्वा ह्रदगतोऽप्यसौ ।
विप्रलम्भभयादेव न स्नानादि समाचरेत् ॥
तावदेव हि तोयादिज्ञानस्येष्टा प्रमाणता ।
न तोयं मृगतृष्णेयमिति यावन्न बुध्यते ॥
अनुमानं प्रमाणं च तावदर्थेषु जायते ।
रुध्यते विषयो यावन्नास्य प्रत्यक्षजन्मना ॥
एवं स्मृतिप्रमाणत्वे तावच्छ्रुत्यनुमानजम् ।
यावत्प्रत्यक्षया श्रुत्या विषयो नावरुध्यते ॥
अतः क्वचित्प्रमाणत्वं क्वचिदप्यप्रमाणताम् ।
व्यवस्थापयतां न्यायैर्न भवेदर्धवैशसम् ॥
प्रमाणत्वाप्रमाणत्वे प्रत्यक्षमृगतृष्णयोः ।
यथा तथैव ते स्मृत्योरविरुद्धविरुद्धयोः ॥

मूलमेव निकृत्यत इति । **स्मृतेः प्रमाणपदवीं गच्छन्त्या मूलं श्रुतिः ।** मुखं वा रुध्यत इति । **श्रुत्यनुमानस्य प्रमेयमेव मुखं**[४] **विपरीतार्थया श्रुत्या नैवमिति बोधनान्निरुद्धमिति ।**

---

४. **प्रमेयमुखं आ० मा० ।**

तस्मादेवं न वक्तव्यं सर्वासां वा प्रमाणता ।
अथ वा सा न कस्याश्चिद्यदि क्वचिदनाश्रिता ॥
तेन वेदविरुद्धानां स्मृतीनामप्रमाणता ।
रुद्धश्रुत्यनुमानत्वादन्यमूला हि ता यतः ॥
विकल्पः किं पुनस्तासां नेष्यते श्रुतिभिः सह ।

उच्यते —

विकल्पस्याष्टदोषत्वान्न तावत्स्वभ्युपेयता ।
पाक्षिके चाप्रमाणत्वे स्मृतयः सुनिराकराः ॥

तुल्यबलविकल्पोऽपि तावदष्टदोषत्वादगतिकगतिन्यायेन क्वचिदेवाश्रीयते । किमुत कक्षान्तरितप्रामाण्यविषमशिष्टविकल्पः । तथा हि

प्रमाणपदवीं यावन्नारोहत्येव हि स्मृतिः ।
बाध्यते तावदत्यन्तं श्रुत्यात्यनिरपेक्षया ॥
स्मृतेर्धर्मप्रमाणत्वं न तावत्स्वत इष्यते ।
तुल्यकक्षतया येन विकल्पपदवीं व्रजेत् ॥
पराधीनप्रमाणत्वान्न प्रमाणपदे स्थिता ।
श्रुत्या बाधितमात्रासौ पुनर्नोज्जीवितुं क्षमा ॥
तुल्यकक्षविकल्पोऽपि नाप्रामाण्येऽस्त्यकल्पिते ।
प्रमाणस्याप्रमाणत्वकल्पना च द्विदोषभाक् ॥

विकल्पः किं पुनस्तासामिति । **विकल्पाश्रयणे ह्युभयमविरोधेनैव नेतुं शक्यत इत्यभिप्रायः । विरोधमुपपादयति**—विकल्पस्याष्टदोषत्वादिति । **एकस्मिन् वाक्ये चत्वारो दोषाः प्रसज्यमानाः कथं वाक्याविरोधिन इति । किञ्चाङ्गीकृते विकल्पे पक्षे स्मृत्यप्रामाण्यं प्रसक्तं सर्वथा प्रामाण्यं निराकरोतीति**

**प्रतिजानीते** — पाक्षिके चाप्रमाणत्वे इति । **प्रथमेनार्द्धश्लोकेनाष्टदोषत्वाद्विकल्पस्य न सुखेनाभ्युपगमनीयत्वमिति वदता यत्राभ्युपगम्यते तत्र तुल्यबलत्वेन विशेषानवगमाद् गत्यन्तराभावेनात्र त्वतुल्यबलत्वात् सति गत्यन्तरे नाष्टदोषदुष्टविकल्पाङ्गीकरणं युक्तमित्युक्तम् । तद्व्याचष्टे**—तुल्यबलविकल्पोऽपीति ।

प्रमाणत्वं प्रतीतं यदुज्ज्वलत्तदपह्नुतम् ।
एकस्तावदयं दोषः स्यात्प्रतीतिविपर्ययात् ॥

तथा तदप्रमाणत्वं यदभावप्रमाणकम् ।
भावे सत्यथ भावेन विनैव परिकल्प्यते ॥

सोऽपि स्यादपरो दोषः प्रमाणार्थविपर्ययात् ।
अङ्गीकृत्यापि तौ दोषौ पूर्वं केनापि हेतुना ॥

प्रयोगान्तरकाले तु पुनर्दोषद्वयं भवेत् ।
यदभावप्रमाणत्वं पूर्वमेतस्य कल्पितम् ॥

सम्प्रत्यपह्नुवानस्य दोष एको हि जायते ।
प्रत्यक्षं दृढरूपं च यत्पुरस्तान्निराकृतम् ॥

एष जायेत दोषोऽन्यस्तदुज्जीवयतः पुनः ।
एवमेकत्र चत्वारो दोषा वाक्ये प्रदर्शिताः ॥

एत एव प्रसज्येरन् द्वितीयेऽपि प्रकल्पिते ।
एवमेषोऽष्टदोषोऽपि यद्व्रीहियववाक्ययोः ॥

विकल्प आश्रितस्तत्र गतिरन्या न विद्यते ।
व्रीहिशास्त्रप्रवृत्तौ हि यवशास्त्रेण कृष्यते ॥

श्रोता तत्र प्रवृत्तोऽपि व्रीहिशास्त्रेण कृष्यते ।
द्वाभ्यामश्वमुखीवच्च श्रुतिभ्यामभितः समम् ॥

श्रोतुराकृष्यमाणस्य बलाबलमपश्यतः ।
एकस्मिन्नुपसंहर्तुं बुद्धिं युक्त्या न पश्यतः ॥

उभयोरप्रमाणत्वं प्रतिघातात्प्रसज्यते ।
तत्र प्रमाणयोग्यस्य यदप्रामाण्यकल्पनम् ॥

तदनन्यगतित्वेन तथाप्यभ्युपगम्यते ।
सति गत्यन्तरे त्वेतन्नैव कल्पनमर्हति ॥

एकस्य वा प्रमाणत्वं परिहर्तुं न शक्यते ।
तदप्रामाण्यमात्रे तु न द्वयोरप्रमाणता ॥

सम्प्रति यथाविकल्पव्यतिरेकेण गत्यन्तराभावस्तद् विवृणोति—एवमेषोऽष्टदोषोऽपीति ।

सिद्धो लोकप्रवादोऽयमेकानेकविनाशिनाम् ।
सर्वनाशे समुत्पन्ने ह्यर्धं त्यजति पण्डितः ॥

स चायमुभयोर्नाश उभयार्थापरिग्रहात् ।
मिश्रैर्वा यजमानस्य मिश्राणां विध्यदर्शनात् ॥

नियमार्थे ह्युभे शास्त्रे यवव्रीह्योर्विधातृणी ।
प्राप्ते चान्यनिवृत्त्यंशः[1] फलमर्थात् प्रतीयते ॥

व्रीहयो निरपेक्षा हि ज्ञायन्ते यागसाधनम् ।
यवाश्चैवमतस्तेषां मिश्रत्वं नावकल्पते ॥

नैव व्रीहिभिरिष्टं स्याद्यवैर्न च यथाश्रुतैः ।
मिश्रैरिज्येत चेत्तत्र भवेदुभयबाधनम् ॥

एवमप्रतिपत्त्यैव तुल्यैषा मिश्रतामतिः ।
तेनोभयाप्रमाणत्वाद्युक्तैकैकाप्रमाणता ॥

सेयमत्यन्तमन्याय्या द्वयोरप्यनवस्थितिः ।
अव्यवस्था न युक्ता हि व्यवस्था यत्र लभ्यते ॥

सर्वत्रैव ह्येकरूपत्वावधारेणन निरूपितरूपं व्यवहर्तुं शक्यम् ।

एकानेकविनाशिनामिति । पक्षे एकविनाशः पक्षान्तरेऽनेकविनाशो येषां पुरुषाणां तेषां पुरुषाणां सम्बन्धी अयं लोकप्रवादः प्रसिद्ध इति ।

ननु मिश्रैर्यागादुभयार्थसम्पत्तिर्भविष्यतीत्याशङ्क्याह — मिश्रैर्वेति । मिश्रैर्वा यजमानस्योभयोर्नाश इति सम्बन्धः । ननु व्रीहयो विहितास्तेऽप्युपादेयास्तथा यवा अपीति । तथा च मिश्रतैव विहिता कथं विध्यदर्शनमत आह—नियमार्थे हीति । पुरोडाशप्रकृतिद्रव्यापेक्षं यागमनूद्य व्रीहयो नियम्यन्ते । यद् यावत्प्रकृतिद्रव्यापेक्षकृत्यं तद् व्रीहीणामिति । ततश्च कृतकरत्वाद्द्रव्यान्तरनिवृत्तिः । कथं चैष शास्त्रार्थो न भवति न पुनरग्नीषोमवत्परस्परापेक्षयोः साधनत्वमत आह — व्रीहयो निरपेक्षा इति । न चात्रैकैका प्रमाणताङ्गीकृतेति नासत्यपि गत्यन्तरेऽङ्गीकर्त्तव्या । यतोऽत्रागत्याङ्गीक्रियते न तु निर्दोषतया । किन्तु दुष्टैवेत्याह—सेयमत्यन्तमिति । येयं द्वयोरप्यनवस्थिता प्रमाणता सात्यन्तमन्याय्येति । कथमन्याय्येत्यत आह—अव्यवस्था न युक्ता हीति । कथमव्यवस्थायाः [1]परिहार्यत्वमित्यपेक्षायां

---

१. अपरिहार्यत्वम् आ० मा० ।

तेन यस्य प्रमाणत्वं प्रमाणं सर्वदास्तु तत् ।
यस्यापि त्वप्रमाणत्वमप्रमाणं तदुच्यताम् ॥

तदेव तु कदाचित्प्रमाणमिति न कथञ्चिदपि विश्रम्भः स्यात् । तदेतद्-व्रीहियवश्रुत्योरत्यन्तापरिहार्यत्वादवश्यमापतितम् ।

न हि तत्रैकरूपत्वे चिह्नं किञ्चिद्व्यवस्थितम् ।
येनैकत्र प्रमाणत्वं स्यादन्यत्राप्रमाणता ॥

श्रुतिस्मृत्योः पुनः स्पष्टं व्यवस्थाकारणद्वयम् ।
येन श्रुतेः प्रमाणत्वं स्यात् स्मृतेश्चाप्रमाणता ॥

स्वरूपेण तयोस्तावत्प्रमाणत्वाप्रमाणते ।
ततोऽन्यापेक्षया स्यातामप्रामाण्यप्रमाणते ॥

यो यस्य स्वरूपाश्रयो धर्मः प्राप्तः स बलवता कारणान्तरेण विपर्ययं प्रतिपद्यते । न च श्रुतिजनितप्रत्ययस्य स्मृतिजनितो बाधकत्वं प्रतिपद्यते ।

स्मार्तस्य बाधकः श्रौतो बलवत्त्वात्प्रतीयते ।
प्रत्यक्षे चानुमाने च प्रागेतद्ध्यवधारितम् ॥

श्रुतिलिङ्गे यथा चेष्टे व्यवस्थितबलाबले ।
संनिकृष्टविकृष्टार्थे तथैवेह श्रुतिस्मृती ॥

**पूर्वोक्तमेव बलाबलविशेषाभावं योजयति — नहि तत्रैकरूपत्व इति । एवं तुल्यबलविकल्पो यथाष्टदोषदुष्टस्तथापि यथाङ्गीक्रियते तथा प्रपञ्च्य सम्प्रत्यतुल्यबलयोः श्रुतिस्मृत्योर्यथागत्यन्तरस्य भावादसौ नाङ्गीकरण-मर्हति ।[1] तत्पूर्वोक्तं प्रपञ्चयति—श्रुतिस्मृत्योः पुनः स्पष्टमिति ।**

**प्रत्यक्षे चानुमाने चेति । यथा स्मार्त्तस्य प्रत्यक्षस्य श्रौतो बाधको भवतीति तत्प्रत्यक्षानुमानविषयेऽवधारिते येन न्यायेनानुमानस्य परस्य[2] प्रत्यक्षं बाधकं स एव न्यायोऽत्रेति । दृष्टान्तान्तरमाह—श्रुतिलिङ्गे इति ।**

---

१. °महतीत्येतत्पूर्वमेव संक्षेपेणोक्तं आ० मा० ।

२. परस्येति नास्ति आ० मा० ।

स्मृत्या प्रतीयते यावच्छ्रुत्या तावत्प्रमीयते ।
विरुद्धधर्मतामेको न च धर्मः प्रतीच्छति ॥

न च शीघ्रहृतेऽर्थेऽस्ति चिरादागच्छतो गतिः ।
अश्वैरपहृतं को हि गर्दभैः प्राप्तुमर्हति ।
स्मृत्या चार्थं परामृश्य यावत्तद् विषयां श्रुतिम् ॥

अनुमातुं प्रवर्तेत तावत्सोऽर्थोऽन्यतो गतः ।
किं कर्तव्यमितीदं च कर्ता यावदपेक्षते ॥

प्रमाणं क्रमते तावत् प्रमिते तन्न जायते ।
युगपत् प्रमिमीयातां यदि चार्थं श्रुतिस्मृती ॥

अगृहीतविशेषत्वात् स्यातां तुल्यबले ततः ।
यद्वा यावच्छ्रुतेरर्थः साक्षादेव प्रतीयते ॥

तस्मिन्नेव क्षणे मूलं कल्पयेत् स्वं स्मृतिः श्रुतिम् ।
ततोऽर्थविप्रकर्षेऽपि प्रमाणत्वेन तुल्यता ॥
भवेदेवं श्रुतिस्मृत्योरर्थः श्रुतिपरिग्रहात् ।
यतः स्मृत्या गृहीतेऽपि चिरेण श्रुतिकल्पना ॥
जायते क्लृप्तया तस्मात् सा बाध्येताप्रतिष्ठिता ।
स्मृतिमूलानपेक्षा हि स्मृतित्वादेव हीयते ॥
तदपेक्षा पुनः श्रुत्या बाध्यते मूलवर्जिता ।

एवं[1] तावद् विकल्पपदमनारूढाया एव स्मृतेरेको बाधप्रकारः ।

ननु श्रौतप्रत्यक्ष[1]समकालं स्मृतिग्रन्थादर्थोदया[2]त्कथं विप्रकृष्टार्थता तस्य इत्याशङ्क्य दृष्टान्ततुल्यतामाह—स्मृत्या प्रतीयते यावदिति । यदुक्तं विकल्पस्याष्टदोषत्वा[3]न्न तावत्स्वभ्युपेयता । तेन स्मृतिबाध एव न्याय्य इति । तदुपपादितं वक्ष्यमाणाद् बाधप्रकाराद्विवेकेनोपसंहरति — एवं तावदिति । यच्च बाधप्रकारान्तरमुक्तम् । पाक्षिके चाप्रमाणत्वे स्मृतेर्यः सुनिराकृत इति ।

---

१. एष इति मुद्रितपाठः । १. °श्रौतप्रत्ययसमेति° आ० मा० ।
२. अर्थज्ञानोदयादिति आ० मा० । ३. अष्टदोषदुष्टत्वात् आ० मा० ।

द्वितीयेन प्रकारेण विकल्पपदवीं गता ।
आपन्ना पाक्षिकं बाधमत्यन्तं बाध्यते स्मृतिः ॥

तद्दर्शयति । विकल्पं तु वदन् पक्षे तावच्छ्रुतिप्रामाण्यमभ्युपैतीति । तदा च स्मृत्यप्रामाण्यमवश्यंभावि तस्याश्चाप्रामाण्यकल्पनायां न श्रुतिरिव तदध्यारोपः ।

किन्तु तस्याः प्रमाणत्व श्रुतिमूलत्वकारितम् ।
यतस्तस्मादतन्मूला तदानीं सावधार्यते ॥

श्रुतिमूलत्वविच्छेदोत्तरकालं च प्राङ्निराकृतमूलान्तरोपप्लवादविगान-स्मृतपुरुषप्रणीतत्वे निर्णयाच्च नित्यत्वद्वारं निर्मूलत्वासंभवादवश्यंभावि विप्रलम्भाभिप्रायादि किञ्चिदेकं मूलमापद्यते ।

श्रुतिं मुक्त्वा च यन्मूलं स्मृतेरन्यत्प्रकल्प्यते ।
तेनैवास्याः प्रमाणत्वमत्यन्तं प्रतिहन्यते ॥

व्रीहिश्रुतिपरिग्रहकाले हि यवश्रुतेरभूतमेवाप्रमाण्यमध्यारोपितम् । तत्प्रयोगान्तरबेलायां तुल्यसांप्रदायिकाम्नायमानत्वेन संनिकृष्टविप्रकृष्टार्थत्वादि-विशेषाभावेन च पुनः सहजेन प्रामाण्येनाभिभूयते ।

न तु स्मृतेः प्रमाणत्वं पुनरुज्जीवितुं क्षमम् ।
विच्छिन्नश्रुतिमूलत्वाद्ग्रस्तं भ्रान्त्यादिहेतुभिः ॥

न ह्येकस्या एव स्मृतेः प्रत्यक्षश्रुत्यर्थपरिग्रहकालेऽनुमितश्रुतिमूलत्वं तत्परिग्रहाश्रयणे तु भ्रान्त्यादिमूलत्वमिति विरुद्धावधारणावकल्पते । आह

**तदपि पूर्वस्माद्विभज्य विवरीतुमारभते — द्वितीयेनेति । अत्रैवा-नारब्धव्याख्यानमपि *भाष्यमर्थतः* प्रसक्तं संमुग्धं विवेक्तुं योजयति — तद्दर्शयतीत्यनेन । नासति व्यामोहज्ञाने[1] विकल्पो भवतीत्यादि *भाष्येण* प्रथमो बाधप्रकार उक्तः ।**

**विकल्पं तु वदन्नित्यादिना तु द्वितीय इति विवेकमात्रं कृतं पौर्वापर्येण त्वर्थव्याख्यानमुपरिष्टात्करिष्यतीति । श्रुत्यर्थपरिग्रहवेलायां स्मृतेरवेद-मूलत्वे[2]नावधारितायास्तस्या एव पुनर्वेदमूलत्वमवधारयितुमशक्यमिति ।**

---

१. अनेनासति व्यामोहविज्ञाने आ० मा० ।

२. मूलतावधारिता तस्या एव—आ० मा० ।

सत्यं यदि प्रथममेव विकल्पकारी श्रुत्यर्थं परिगृह्य द्वितीयादिप्रयोगे स्मृत्यर्थ-परिग्रहणायोपतिष्ठेत ।

ततस्त्वदुक्तमार्गेण प्रतिहन्येत सर्वदा ।
न त्वेतस्य प्रसङ्गोऽस्ति स्मृतेः पूर्वपरिग्रहे ॥

यो हि श्रुतिं प्रथममश्रुत्वा श्रुतिमेवैकां पश्यति तस्याप्रतिहतश्रुत्यनुमाने वृत्ते

न पश्चाच्छ्रूयमाणापि श्रुतिः स्यात्प्रतिबन्धिका ।
गर्दभेनापनीतं हि हरेन्नाश्वश्चिराद्गतः ॥

न चैष नियमोऽस्ति जिज्ञासुभिः स्मृतिविरुद्धा श्रुतिरेव प्रथमं श्रोतव्येति ।

बहुजिज्ञासमानानां कदाचित्किञ्चिदापतेत् ।
पूर्वपश्चाद्विभागेन न तद्धेतुबलाबलम् ॥
आद्ये प्रपाठके येन व्रीहिशास्त्रं प्रतीयते ।
द्वितीये यवशास्त्रं च न तत्तत्प्रति दुर्बलम् ॥
स्वशाखाविहितैश्चापि शाखान्तरगतान्विधीन् ।
कल्पकारा निबध्नन्ति सर्व एव विकल्पितान् ॥
सर्वशाखोपसंहारो जैमिनेश्चापि संमतः ।
न तु पूर्वावबद्धोऽर्थो बाधेतैवोत्तरं विधिम् ॥

तस्मात् पौर्वापर्यश्रवणमनाश्रित्य 'न चैकं प्रति शिष्यत' [मी० सू० २।४।१९] इत्यनेन न्यायेन सर्वपुरुषान् प्रति नित्यावस्थितसमस्तपाठ्य-मानस्मर्यमाणवेदशाखायत्तज्ञानैर्जिज्ञासुभिरात्मीयशक्तिमात्रकारितपूर्वापरग्रहण-विभागैरेकवाक्यगतपूर्वोत्तरवर्णपदवद्बलाबलमनपेक्ष्य मातापितृप्रणीतोपदेश-वन्निर्विचिकित्समेव प्रामाण्यमभ्युपगन्तव्यम् । अन्यथा हि—

**पौर्वापर्यमेवाप्रामाण्यकारणं श्रुत्वाह — आह, सत्यं यदि प्रथममेव विकल्प-कारीति । अनेन च परोक्तहेतुप्रतिबन्धमात्रं क्रियते, न स्वपक्षसिद्धिः ।**

**न हि न त्वेतस्य प्रसङ्गोऽस्तीत्यादिना श्रुति[1]मूलत्वावधारणं सम्भवति । तस्मादनेनाप्रामाण्यहेतौ प्रतिबद्धे कर्त्तृसामान्येनैव वेदमूलत्वम् ।**

**तदेतत् स्वयमेव प्रपञ्चयति—बहुजिज्ञासमानानामिति ।**

---

१. श्रुतिमूलत्वावधारणं संभवति तस्मादनेनाप्रामाण्यहेतौ इति पंक्तिः आ० मा० नास्ति ।

पूर्वप्राप्तौ प्रमाणत्वं परत्वेनाप्रमाणताम् ।
प्रसज्यमानिकामेवं कोऽध्यवस्येत् सचेतनः ॥
इत्थं च भ्रान्तिमूलत्वप्रसङ्गे कल्पिते स्मृतेः ।
अविरोधेऽपि हि श्रुत्या प्रामाण्यं दुर्लभं भवेत् ॥
सर्वैव श्रुतिमूलातः सर्वा वा भ्रान्तिमूलिका ।
स्मृतिरेवं निरूप्येत न तु स्यान्मूलसंकरः ॥

उच्यते । यद्यपि पूर्वोपलब्धया स्मृत्या श्रुतिमनुपलभमानस्य प्रतिबन्ध रहितश्रुत्यनुमानं क्रियेत तथापि कालान्तरे श्रुतिं श्रुत्वा तत्प्रतिपक्षस्मृतेर्बाधाध्य-वसानादवश्यं भाविश्रुतिमूलत्वविच्छेदवशेन मूलान्तरसञ्चरणम् ।

ततश्च पूर्वविज्ञानं मिथ्यैतदिति चिन्तयन् ।
आदावेवाप्रमाणत्वं स्मृतेरित्यध्यवस्यति ॥

यो हि कूटकार्षापणेन कञ्चित्कालमज्ञो लोकमध्ये व्यवहरति न तेन

इत्थं च भ्रान्तिमूलत्वमिति । पूर्वं बाधादपि भ्रान्तिमूलत्वमेकदेशेऽङ्गी-क्रियमाणं मन्वादिवचनत्वस्याविशेषादर्द्धवैशसमापादयतीति परिचोद्योत्सर्ग-स्यापवादेन बाधाङ्गीकरणे न दोषः, उत्सर्गन्यायस्यानपह्नवादिति परिहृतम् ।

इदानीं तु विकल्पे पक्षे स्मृतेर्बाधाङ्गीकरणाद्विकल्पः । सा व्रीहि-यवश्रुतिवदप्रामाण्याध्यारोपमात्रेणोपपत्तेर्यदि विना कारणेन भ्रान्तिमूलत्व-मेकदेशेऽङ्गीक्रियते[1], तदा मन्वादिवचनत्वबाधाभावयो[2]रर्द्धवैशसं पुन-रापादयतीति ।

उच्यते — यद्यपीति । अनेनैतदाह वस्तुसामर्थ्यमस्माभिः प्राक्प्रदर्शित-मेकदापि भ्रान्तिमूला स्मृतिर्नान्यदापि सैव भ्रान्तिमूला भवितुमर्हतीति । न च तत्र पौर्वापर्योपयोगः ।

तथा हि यस्य तावत् प्रागविरुद्धश्रुतिदर्शनात् भ्रान्तिमूलत्वनिश्चयः स पश्चान्न प्रतिपद्यत एवान्यमूलत्वम् । योऽपि श्रुतिमनुपलभ्य स्मृतेः श्रुतिमूलत्वमध्यवस्यति, तस्यापि पश्चात्तनेन भ्रान्तिमूलत्वा[3]वधारणेन तद्बाध्यत इति । यो हीति । रूप्यपरिमाणविशेषे द्वात्रिंशत्कृष्णलके

१. अनुज्ञायते आ० मा० । २. °भावयोरविशेषादर्द्ध° आ० मा० ।
३. °मूलकत्वा° आ० मा० ।

विवेकज्ञानजनितव्युत्पत्तिनापि तथैव व्यवहर्तव्यम्। न चास्य तदानीन्तनज्ञान-मात्रबाधबुद्धिर्भवति।

समानविषयत्वाद्धि पूर्वेषामपि बाधनम्।
नहि तेषाममिथ्यात्वे मिथ्येदानीन्तनं भवेत्॥
ननु च प्रागवस्थायां श्रुतिर्यैवानुमीयते।
सैवेदानीं विरुद्धेति गम्यते न पुनः स्मृतिः॥

नैतदेवम्। प्रतिप्रयोगं प्रमाणपर्यालोचनात्। यदि ह्येकप्रयोगमात्रा लोचनेनैव[1] प्रयोगान्तराण्यप्यनुतिष्ठेयुस्ततो येन व्रीहिशास्त्रमप्रमाणीकृत्य यवाः परिगृह्येरन् स यावज्जीवं तैरेव यजेतेति नैव प्रतिपुरुषमुभाभ्यां विकल्प्य-मानाभ्यां व्यवहारः सिध्येत्। तेन यावत्प्रयोगभाविप्रमाणालोचनवशात्पूर्वानु-मितां श्रुतिं क्वचिदप्यशृण्वन्पुनरपि स्मृतिमेवोपलभ्य कर्तृसामान्यलिङ्गेनैव श्रुतिमनुमिमानः प्रत्यक्षया श्रुत्याक्षिप्तचित्ततया तत्प्रामाण्येनान्यथानुपपद्यमानेन स्मृत्यप्रामाण्यं कल्पयन्पूर्वावधारितमूलव्यत्ययमेव प्रतिपद्यते न पूर्वक्लृप्तमूलस्या-प्रामाण्याध्यारोपम् अपठ्यमानतयैवास्य सुलभावज्ञानत्वात्।

यच्चैतदनवस्थानं त्वया मां प्रति चोद्यते।
भवतोऽपि तदस्त्येव तेनाचोद्यत्वमेकतः॥

कार्षापणाभिधा विवेकज्ञानजनितेति। [1]कार्षापणाकार्षापणविवेकज्ञानं नायं कार्षापण इति। तज्जनिता व्युत्पत्तिः।

प्रतिप्रयोगं प्रमाणपर्यालोचनादिति। अत्रोपपत्तिः, निश्चितेनार्थेन व्यवहारः। न च प्राक्तनो निश्चयः क्षणिकत्वादिदानीमस्ति। तन्मूला तु स्मृतिरिदानीमनुवर्त्तमानापि नार्थे निश्चयमनिरूपितमूला करोतीति। तेन वेदस्तदर्थो वानुमीयमानो[2] मन्वादिस्मृतिमेव प्रत्यक्षेण गृहीत्वा निश्चेतव्यः। किञ्च अधीतो वेदो मन्वादिस्मरणोपस्थापितो वा धर्मव्यवहाराङ्गं प्रतीत्य-ङ्गमित्यतोऽपि प्रतिप्रयोगं मूलानुसन्धानमिति। एतदेव व्यवहारेण द्रढयति— यदि ह्येकप्रयोग इति।

यच्चैतदनवस्थानमिति। नैकदा भ्रान्तिमूलान्यदा सन्मूला[3] भवितुमर्ह-तीति प्रतिपादयितुं पौर्वापर्योपादाने कृते यदि तत्रैवादरं कृत्वा पूर्वप्राप्तौ

---

१. प्रयोगगतालोचनेनैव इति काशीमुद्रितपाठः

१. कार्षापणलक्षणे परिचयो विवेकज्ञानमयः कार्षापणोऽयं न कार्षापण इति आ० मा०।

२. तेन वेदस्तदवबोधं प्रत्यवसीयमानो वा०० आ० मा०।

३. सम्यङ्मूला आ० मा०।

यदा ह्यादौ श्रुतिं श्रुत्वा स्मृतेर्न्नान्यानुमीयते ।
तदान्यमूलतापत्तेरेकान्तेनैव बाध्यते ॥
कालान्तरेऽपि यो बाधः स्फुटत्वेनावधार्यते ।
यत्तेनाप्यप्रमाणत्वं कृतं तन्न निवर्त्यते ॥

पूर्वस्मृतिग्राहिणां च स्वयं बाधमचेतयमानानामपि पुरुषान्तरस्य श्रुतिश्रवणप्राथम्यबलेन बाधसन्तानोऽनुवर्तत एव ।

पुरुषान्तरबाधोऽपि नैवाल्पं भ्रान्तिकारणम् ।
न हि द्विचन्द्रदिङ्मोहौ न बाध्येते नरान्तरैः ॥

ननु यवश्रुतेरपि तर्हि प्रमाणत्वेन परिगृह्यमाणायाः पुरुषान्तरबाधस्तदानीमस्तीति मिथ्यात्वप्रसङ्गः ।

उच्यते पठ्यमानत्वादुन्मज्जननिमज्जने ।
सर्वान्प्रति तयोस्तुल्ये विशेषोऽन्यो न गम्यते[1] ।

प्रमाणत्वम् । परत्वे वाप्रमाणता कथमेकस्यानवस्थिता स्यादिति चोद्यते । ततो भवतापि न त्वेलस्य प्रसङ्गोऽस्ति स्मृतेः पूर्वपरिग्रह इति ।

पौर्वापर्यस्योपात्तत्वात् । तवापि तदनवस्थानमापद्यते । तदेतद्विवृणोति — यदा ह्यादाविति । यश्चात्र परिहारो न मम पौर्वापर्यं पक्षस्य साधनमिति । स ममापि तुल्य इत्यभिप्राय इति । एतच्च तुल्यन्यायत्वोपपादनायोक्तम् । परमार्थेन तु नास्त्येवास्माकमनवस्था ।

परत्वेऽपि श्रुतेस्तस्या एव प्रामाण्यादिति पूर्वोक्तमेवाह — कालान्तरेऽपीति । अथ वा यच्चैतदनवस्थानमिति युक्त्यवष्टम्भेन परपक्षेऽनवस्थानमापादयति । युक्तिश्चानन्तरमुक्ता — यदा ह्यादाविति ।

सर्वान् प्रति तयोस्तुल्य इति । तेन यथा नरान्तरगतेन[1] तात्कालिकेनाप्रामाण्येन तमेव प्रति कालान्तरीयं प्रामाण्यं न हन्यते[2] तथा तात्कालिकमपि पुरुषान्तरगतम् । तथा न हि व्रीहिश्रुतेर्नरान्तरगतप्रामाण्यं यवश्रुतितो दुर्बलत्वं करोति । तस्मिन्नेव नरान्तरे विपर्ययदर्शनात् । तदुक्तं — विशेषोऽन्यो न गम्यत इति ।

---

१—गृह्यते इति मुद्रितपाठः ।

१. पुरुषान्तरगतेन आ० मा० ।

२. उच्छिद्यते आ० मा० ।

स्मृतिस्तु यावतां पुंसां प्रथमं गोचरीभवेत् ।
तावतां सर्वदाभावान्नाप्रामाण्येन मुच्यते ॥
अप्रामाण्यपदं चैकमस्त्येवं प्रथमं स्मृतेः ।
तावता लब्धमिथ्यात्वान्न श्रुतिं बाधितुं क्षमा ॥
अध्यारोप्येत मिथ्यात्वमुज्ज्वलायाः श्रुतेः पुनः ।
लब्धमेव स्मृतौ तच्चेत् किमर्थं कल्प्यते श्रुतेः ॥

विरुद्धयोर्हि श्रुतिस्मृत्योर्विकल्पप्रसङ्गेनावश्यं कल्पनीयेऽन्यतरत्राप्रमाणा यावच्छ्रुतौ पटाच्छादनन्यायेन कल्पयितुमारभ्यते तावत्स्मृतौ स्वरूपाश्रयं क्लृप्तमेवोपलभ्य संशयच्छेदे जाते न कदाचिदप्यभूताप्रामाण्याध्यारोपकल्पनोपपत्तिः ।

ननु श्रुत्यविरुद्धायाः श्रुतिमूलत्वनिश्चयः ।
अनुमानादपि प्राप्स्यन् केनचित् प्रतिबध्यते ॥
तस्मात् कारणवैषम्यान्नोभयत्रैकरूपता ।
सिद्धचेन्मूलव्यवस्था हि प्रतिपक्षानुसारिणी ॥

ततश्चार्धवैशसप्रसङ्गनिवृत्तिः । यथा—

तावतां सर्वदाभावादिति । यदि तावन्तः पुरुषाः सर्वदा भवेयुः यावन्तः स्मृतिप्रामाण्य[1]ग्राहिणो नैकोऽपि प्रथमश्रुतिग्राही स्यात् । तदा नरान्तरस्य विपरीतग्राहिणोऽभावान्न नरान्तरस्य विपर्ययः स्यात्, न तु तावतामेवाभाव इति । अप्रामाण्यपदं चैकमिति । नानेन, श्रुत्या बलीयस्याः स्मृतेर्बाधमाह — नापि विकल्पपक्षेऽपि भ्रान्त्यादिमूलायाः सर्वदा तन्मूलकत्वम्, किन्तु द्वयोर्ज्ञानयोः सह प्रामाण्यासम्भवादेकस्याप्रामाण्यं यदि कल्पयितव्यं स्यात्तदोभयत्राव्यवस्था कल्पेत । यदा तु स्मृतौ दृश्यमानेनैवाप्रामाण्येनासम्भवः परिहृतस्तदा नाव्यवस्थया तत्कल्पनमर्हतीति । यदुक्तं श्रुतिमूलाया एव स्मृतेरप्रामाण्याध्यारोपेण विकल्पोपपत्तौ यदि विना कारणेन भ्रान्तिकारणता[2]ङ्गीक्रियते तदार्द्धवैशसप्रसङ्ग इति ।

तत्र श्रुतिविरोधस्य कारणतामुपपाद्य पूर्ववदर्द्धवैशसं निरस्यति — ननु श्रुत्यविरुद्धाया इति । स्मृत्यधिकरणापवाद इदमधिकरणम् । न च स्मृत्यधिकरणे कल्पसूत्रयोरपि प्रामाण्यं प्रतिपादितम् । स्मृतिविलक्षणत्वात् ।

---

१. प्राथम्य आ० मा० । २. भ्रान्तिमूलत्वमङ्गी° आ० मा० ।

प्रमाणत्वाप्रमाणत्वे लिङ्गादीनां व्यवस्थिते ।
पूर्वैः सह विरुद्धत्वाविरुद्धत्वनिबन्धने ॥
तथेहापि व्यवस्थेष्टा न परस्परसंकरः ।
प्रतिबन्धाभ्यनुज्ञाभ्यां श्रुत्या नास्त्येकरूपता ॥

यद्यप्यौदुम्बरीसर्ववेष्टनं धर्मशास्त्राध्येतृस्मृतिविलक्षणप्रत्यक्षश्रुत्यर्थोप संहारपरसूत्रकारोपनिबद्धं तथाप्युपरिष्टाद् वक्ष्यमाणाल्पान्तरत्वाभिप्रायेण पुरुषोपदिष्टत्वाविशेषाच्च स्मृतिवदेवोदाहृतम् । क्रीतराजकभोज्यान्नत्ववचनं यद्यप्यथर्ववेदेऽस्ति तथापि तस्याहवनीयसंबद्धयज्ञकर्मोपकाराभावात् तदधिकृतत्रयीप्रतिपादिताग्नीषोमीयसंस्थावधिभोजनप्रतिषेधविरोधात् **प्रकरणविशेषात्तु विकृतौ विरोधि स्यात्** [मी० सू० ३।६।६] इत्यनेन न्यायेनाधिकृतानधिकृतबलाबलविशेषाभिप्रायेण स्मृतिपक्षनिक्षेपाद **भाष्यकारेणोदाह्रियते** । कृष्णकेशत्वं च यद्यप्यनवस्थितवयोऽवस्थाकालविशेषं जातपुत्रत्वपक्षे सन्दिग्धसमावेशं च तथापि युवैव धर्ममन्विच्छेदित्येवमादिस्मरण[1]

**ततश्चा[1]नुपपन्नं *सूत्रकार*वचनो[2]दाहरणमित्याशङ्कते — यद्यप्यौदुम्बरीति ।**

परिहरति — तथाप्युपरिष्टादिति । **अल्पमिदमुत्तरं प्रत्यक्षश्रुत्युपसंहारित्वम्, न स्मृत्यधिकरणविषयतामापादयतीत्युपरिष्टाद्वक्ष्यतीति । तत्र स्वातन्त्र्येण प्रामाण्यं निरसिष्यते । ततश्च प्रामाण्यमनुज्ञाय स्वातन्त्र्यापनयनेन[3] वेदमूलत्वेन स्मृतिवत् प्रामाण्यमित्युक्तं भवति । न चैतद्वक्ष्यमाणवेवावसीयरो किन्तु सम्प्रत्यपीत्युक्तं — पुरुषोपदिष्टत्वाविशेषाच्चेति ।**

क्रीतराजकेति । **प्रत्यक्षवेद[4]मूलत्वान्नानुमानानुपपत्त्या भ्रान्तिमूलेयं स्मृतिः स्यादित्याशङ्का** । तथापीति **च बलवद्बाधिता दुर्बला यार्थावगतिः सा भ्रान्तिरेवेति भ्रान्तिमूलता नापैतीति ।**

कृष्णकेशत्वं चेति । **अनवस्थितवयोऽवस्थाकालविशेषत्वेन न काश्चिद्वयोऽवस्थां कालविशेषं वा नियमेनोपनयति, येन विरोधित्वेनैव ज्ञायते ।**

जातपुत्रेति । **जातपुत्रत्वपक्षसमावेशानियमाच्च व्याकुलमनिश्चायकं कस्यचिदर्थस्य कथमितरद्बाधत इति** । तथापि **युवैव धर्ममिति । यस्याम-**

---

१. स्मरणाप्रकाशितार्थं काशीमुद्रितपाठः ।

१. अतोऽत्रानुप° आ० मा० । २. कल्पसूत्रोदाहरणं आ० मा० ।
३. स्वातन्त्र्यापनये आ० मा० । ४. प्रत्यक्षमूलत्वात् पू० मा० ।

प्रकाशितार्थं यौवनावस्थापरिग्रहादन्ततो वा वयोऽर्धानतिक्रमाश्रयणादष्टा-चत्वारिंशद्वर्षब्रह्मचर्यप्रागुपनयनसंबद्धकालस्य च वयसोऽतिरेकेण[1] द्विपञ्चा-शच्चतुष्पञ्चाशन्मात्रसंवत्सरपरिमितत्वेनापरिहार्यवयोऽर्धातिक्रमावश्यंभावित्वाद् व्यक्त एव विरोधो दृश्यते । ननु च पूर्वकृतसर्ववेष्टनोत्तरकालविहित-वेष्टिताया एव स्पर्शनं संभवतीत्यविरोधः । कथमविरोधो यदा स्पर्शनं नाम त्वगिन्द्रियद्वारं स्पृश्यसंवेदनम् । न च वस्त्रान्तरिताया औदुम्बर्याः स्पर्शो गृह्यते । न च वस्त्रे स्पृश्यमान औदुम्बरी स्पृष्टा भवति वस्त्रौदुम्बरीजाति-व्यक्तिस्पर्शानामत्यन्तभेदात् ।

अथ संबन्धिसंस्पर्शात्स्पृष्टैवेत्यभिधीयते ।
भूमिस्पर्शेन तत्सिद्धेर्वृथा स्पर्शविधिर्भवेत् ॥

ननु भूमावौदुम्बरीबुद्ध्यभावाद्वस्त्रान्तरितायां च तद्बुद्ध्यव्यतिरेकाद-दृष्टान्तवैषम्यम् । तथा हि

वस्त्रान्तरितचण्डालस्पर्शेऽप्यापतिते क्वचित् ।
साक्षात्स्पृष्टवदेवेष्टा सचैलस्नानशुद्धता ॥
सत्यं तत्रेष्यते स्नानं तद्वस्त्रस्पर्शकीरितम् ।
अशुद्धकारणं तद्धि चण्डालस्पर्शवन्मतम् ॥
तथा च तद्वियुक्तेऽपि वस्त्रे तत्स्पर्शदूषिते ।
स्पृश्यमाने भवत्येव दोषः संयुक्तवस्त्रवत् ॥

°वस्थायां प्रायेण जातपुत्रत्वकृष्णकेशत्वयोः[1] समवायः सा यौवनावस्था पुत्रजन्मना बाल्यमितरेण वार्द्धकं व्यवच्छिद्योपलक्ष्यत इति स्मृत्या द्योत्यते । यदि तु यौवनोत्तरकालाप्यवस्था लक्षयितुं शक्यते, विशेषणद्वयस्य सम्भवादित्युच्यते । तथापि सम्भवद्विशेषणानामवस्थानामनुगमनादपि वयोऽर्द्धं नातिक्रमितव्यम् । उपरिष्टाद् कृष्णकेशत्वस्य प्रायिकत्वादष्टा-चत्वारिंशद्वर्षब्रह्मचर्येण प्रागुपनयनेन च सन्निधानाद् ब्रह्मचर्येणैव तत्रापि ब्रह्मचर्यविधानात्तेन सम्बद्धः कालो यस्य तस्योभयकालसम्बद्धस्य वयसोऽ-तिरेकेणेति । द्विपञ्चाशदित्युपलक्षणम् । त्रिपञ्चाशतः पञ्चचत्वाशतश्च सम्व-त्सराणां सम्भवादिति ।

---

१. °वयसः सातिरेक° इति मुद्रितपाठः । °

१. °त्वयोः समावेशः समवायः आ० मा० ।

कथं पुनरयं धर्मशास्त्रेष्वनुपनिबद्धोऽपि चण्डालस्पृष्टवस्त्रस्पर्शननिमित्तो दोषोऽध्यवसीयते ।

कथं वा नेष्यते दोषः काष्ठलोष्ठतृणादिषु ।
तत्स्पृष्टस्पृश्यमानेषु न क्रमन्तेऽत्र युक्तयः ।

तदुच्यते—

यथा काष्ठतृणादीनां मारुतादेव शुद्धता ।
स्मर्यते वाससो नैवं तोयप्रक्षालनाद्विना ।।
नन्वमेध्येन लिप्तस्य सा शुद्धिरभिधीयते ।
न लिप्तग्रहणं तत्र पाठेऽस्ति तु चिरन्तने ।।

अमेध्यस्यैवं यस्मात्पठन्ति । चण्डालस्पृष्टवाससश्चास्त्येवामेध्यता । तस्मादस्ति सलिलादिशुद्धिः । ननु च मनुष्यस्यैव चण्डालस्पर्शनिमित्त-प्रायश्चित्तविधानादशुद्धिरूपममेध्यत्वं गम्यते न द्रव्यान्तरस्य गवाश्वादेः । ततश्च वस्त्रं किं गवाश्वादिवददुष्टमुत पुरुषवद् दुष्टमिति सन्देहे गवाश्वादि-तुल्यमेवावधारयितुं युक्तम् । उच्यते—

पुरुषस्य सचैलस्य स्नानं यस्माद्विधीयते ।
तस्मात्पुरुषवद्वस्त्रं न गवाश्वादिवन्मतम् ।।

**न लिप्तग्रहणं तत्रेति । ननु गन्धलेपापकर्षणेन शौचममेध्यस्येति गन्धलेपापकर्षणोद्देशाद् लिप्तस्यैव शुद्ध्युपदेशो विज्ञायते विनापि लिप्त-ग्रहणेन । उच्यते, स्पर्शदूषितस्यैव[1] प्रागवस्थितमलोपलेपतद्गन्धापकर्षण-विधिरयम् । नहि स्नेहस्वेदमलोपलिप्तस्यैव तोयसंसर्गमात्राच्छुद्धिः सम्भवति । सम्प्रति येनाभिप्रायेण नन्वमेध्येन लिप्तस्यासौ शुद्धिरित्यभिहितं, तमाह—ननु च मनुष्यस्यैवेति । यदि चण्डालस्पृष्टस्यामेध्यतायां प्रमाणं स्यात् तदा तस्य धावनोपदेशस्तदसम्भवे तु लिप्तस्यैवावतिष्ठत इति तदा-वश्यमेवेति । पूर्वं पुरुषस्य चैतस्यौदुम्बरीस्पर्शविज्ञानं तत्स्पर्शनं व्याख्यातम् । तत्राशङ्कितमौदुम्बरीबुद्धौ वस्त्रस्यान्तर्भावात् [2]तत्स्पर्शविज्ञानेऽप्यौदुम्बरीं स्पृशामीति व्यपदिश्यते । अतोऽस्तु स्पर्शनविधेरपि स एव विषय इति चैतन्य-**

**१. पदमिदं पू० मा० नास्ति ।**

**२. तत्स्पर्शनेऽप्यौदुम्बरीं स्पृशामि ते व्यपदेशो दृश्यते आ० मा० ।**

यदापि हि शुद्धेनैव हस्तादिना चण्डालः स्पृश्यते गवादीनां तु चण्डालादिस्पृष्टानां स्नानप्रक्षालनविध्यभावाच्छुद्धिर्विज्ञायत इति न तन्मध्यपातित्वम् । अतश्च नानेन प्रकारेणौदुम्बरीसंबद्धवस्त्रस्पर्शनात्तत्स्पर्शनज्ञानोपपत्तिः । यदा तु तयैवोद्गाता स्पृष्ट उद्गायेदिति विधिस्तदावश्यमेवौदुम्बरीत्वचोद्गातृशरीरं प्राप्तव्यम् । अपाश्रयणाभ्युपगमपक्षोऽपि च स्पृष्टत्वापरित्यागेनैव स्थित इति न समस्ताच्छादितायामवकल्पते । पराश्रितमपि च वस्त्रमुद्गातुराश्रयत्वं प्रतिपद्यते । तेनैवौदुम्बर्याश्रितेनोद्गायेत् । तस्मादस्ति सर्ववेष्टनस्पर्शनयोर्विरोध इति युक्तं बाध्यबाधकव्यवस्थापनम् । अथ किमर्थं नेमौ विधी विकल्प्येते इति । स्मृतेरविधायकत्वात्स्वयमतुल्यबलत्वाच्च तदनुमितशाखान्तरपठितविधिपरिग्रहाभिप्रायेणोक्तम् । नासति व्यामोहविज्ञान इति ।

पूर्वोक्तेनैव मार्गेण व्यामोहैकान्तकल्पनाम् ।
विकल्पेऽवश्यमापन्नां स्मृतावेव नियच्छति ॥

व्यामोहविज्ञानं च ज्ञानान्तरगतव्यामोहत्वावधारणं तद्विज्ञानगतरहितस्य तु व्यवहारो न ज्ञानव्यवस्थया किन्तु वस्तुस्थित्या । तेनाशङ्कायाः समुत्थानमित्युक्तम् — अवश्यमेवेति । स्पर्शज्ञानासम्भवाच्च प्राप्तिमात्रेण स्पर्शवाचोयुक्तिरित्युक्तं — प्राप्तव्यमिति । नन्वस्पृष्टापि संयुक्तसंयोगेन विधारकत्वादौदुम्बर्यं वोद्गातुरपाश्रयो न वस्त्रधारणसामर्थ्यादित्याशङ्क्याह — पराश्रितमपीति । यदि संयुक्तसंयोगेनापि स्पर्शवत्स्पर्शवदन्तरं धारयेत्तदान्तरालिकाकाशद्वारेणापि धारयेत् । तस्मात् संयोगादेव धारणम् । तथा च वस्त्रमेवौदुम्बरीसंयोगलब्धस्थैर्यं पुरुषस्य धारकमिति । पूर्वोक्तेनैव मार्गेणेति । द्वाभ्यामश्वमुखीवच्चेत्यादि नाप्रतिपादितं यथैकैकस्याप्यव्यवस्थया व्यामोहकल्पनया विकल्प इति । अनेन विकल्पेन विरोधः[1] परिह्रियत इत्युच्यते । सति च विरोधे दुर्बलत्वात् स्मृतेः श्रुत्या बाधात् । तत्रैव व्यामोहत्वं व्यवतिष्ठत इति *भाष्यकारस्य* प्रतिपाद्यमित्युक्तं—स्मृतावेव नियच्छतीति । एवं विकल्पपदवीमनारूढाया एव स्मृतेर्बलीयस्या श्रुत्या विरोधापादनेन बाधं प्रतिपाद्य *भाष्यकारो*

---

१. अनेन च विकल्पेऽपि न विरोधः आ० सा० ।

व्यामोहरूपं वा विवक्ष्यते। तेन षष्ठीसमासः कर्मधारयो वा योज्यः। विकल्पं तु वदन्निति। कदाचित्स्मृतिमूलश्रुतिविच्छेदाद्भ्रान्त्यादिमूलत्वमापादयति। तादृश्या च सकृदपि श्रौतं विज्ञानमनुज्ञातमध्यारोप्यमाणव्यामोहाविषयत्वान्न कदाचित् प्रामाण्यं त्यजतीत्यपाक्षिकत्वाभिधानम्। एवं केवलाप्रमाणत्वपक्षग्रहस्तस्य पुनर्जीवनासंभवादपाक्षिकं च सर्ववेष्टनस्मरणमित्याह—पाक्षिकं चेति वा। विकल्पवादिसंमतपाक्षिकत्ववशादेव श्रुतिप्रामाण्यपक्षे स्मार्तश्रुतिकल्पनायामकृतायां मूलान्तरसंक्रान्तेः सर्वकालाप्रमाणत्वप्रसङ्गः। एकदापि च लब्धप्रामाण्यावकाशा श्रुतिर्दुर्बलप्रतिपक्षतया न कदाचिदपि व्यामोहो भविष्यतीति समर्थयमानो यदेव हि तस्यैकस्मिन्पक्षे मूलमित्याह—

नहि प्रमादपाठत्वं शक्यं कल्पयितुं श्रुतेः।
दुःश्रुतस्वप्नविज्ञानमूला त्वापद्यते स्मृतिः॥

तेन नैतत्पक्षे विज्ञानमिति—प्रमाणविज्ञानमभिप्रेत्योक्तम्। व्यामोहात्पक्षान्तरमिति। व्यामोहकल्पनातः प्रमाणाभावपक्षान्तरसंक्रमणं प्रतिषेधति। यद्वा स्मार्तज्ञानमेव पूर्वावधारितव्यामोहात्प्रामाण्यपक्षान्तरं न संक्रान्तमिति। दुःश्रुतस्वप्नादिमूलत्वेन श्रुतिविरोधं दर्शयति तुल्यकारणत्वादिति। बलीयः प्रतिपक्षनिराकृतत्वात्सर्वदैव श्रुत्यनुमानप्रतिबन्धान्न स्मृतेः प्रामाण्यपक्षसंक्रान्तिः। अपि चेतरेतराश्रयेऽन्यतः परिच्छेदादिति। उपरिष्टादितरेतरविरोधविवरणाद्विरोधमेवेतरेतराश्रयमाह—

परस्परविरुद्धे हि विरुद्धाव्यभिचारिवत्।
प्रमाणे यत्र दृश्येते तत्रान्येनैव निर्णयः॥

विकल्पपदवीं गताया अपि पाक्षिकेणाप्यश्रुतिमूलत्वेन सर्वदा भ्रान्तिमूलतामापादितवान् — विकल्पं तु वदन्नित्यादिना। तद् व्याचष्टे — विकल्पं तु वदन्निति। कदाचिदिति।

यद्वा स्मार्तविज्ञानमेवेति — दुःश्रुतस्वप्नादिमूलत्वेन पक्षेऽवधारितेन स्मार्तविज्ञानमेव व्यामोहात् प्रामाण्यपक्षान्तरं न संक्रान्तमिति। यद्वा भाष्यार्थं इति निगमनभाष्यम्। तस्मात् यथैवेत्यादि तुल्यकारणत्वादित्यन्तम्। तत्र तुल्यकारणत्वादिति व्याचष्टे — श्रुतिविरोधं दर्शयतीति।

प्रमाणशब्दस्य ज्ञानसमानाधिकरणत्वेन भावोत्पन्नल्युडन्तत्वेन वा नपुंसकलिङ्गत्वाद्वेदाः प्रमाणं स्मृतयः प्रमाणमितिवत्प्रमाणे स्मृतौ स्पर्शनं व्यामोह इति भवितव्यम् । तथा च[1] करणविशेषविवक्षायां वाभिधेयलिङ्गवचनानुवृत्तौ ल्युडन्ताट्टिड्ढाणञिति • [पा० सू० ४।१।१५।] ङीपि प्राप्ते प्रामाण्यं स्मृतावित्ति प्रयोक्तव्यम् । तमिममुभयभ्रष्टं भाष्यकारप्रयोगं समर्थयमानैरेवमनुगमः कर्त्तव्यः ।

प्रमाणमयते याति मूलभूतां श्रुतिं यतः ।
क्विबन्तादयस्तस्मात्प्रमाणा स्मृतिरुच्यते ॥
तत्र यद्यपि नित्यत्वात्क्विब्लोपः प्रथमं भवेत् ।
यलोपोऽपि भवेदेव वलादिप्रत्ययाश्रयः ॥
न च वर्णाश्रयत्वेन यलोपो न भविष्यति ।
[2]व्योर्वलीति यलोपो हि वलादिप्रत्ययाश्रयः ॥
यद्वा योगविभागेन वेर्व्यंवस्य च लुप्यते ।

प्रमाणशब्दस्य ज्ञानसामानाधिकरण्येनेति । ज्ञानशब्दस्याप्रयोगाद् ज्ञानशब्दस्यार्थे वृत्तिस्तत्सामानाधिकण्यं ततश्च भावोत्पन्नं ल्युडन्तत्वमित्येकः पक्षः । वा शब्दश्च वक्ष्यमाणपक्षापेक्षया । अथ वा ज्ञानशब्दं करणसाधनमभिप्रेत्य सामान्यविवक्षया नपुंसकलिङ्गतामाह — तथा च करणविशेषविवक्षायाञ्चेति । विशेषशब्देन सामान्यविवक्षां व्यवच्छिनत्ति वेदाः प्रमाणमितिवदिति । पक्षद्वयेऽपि नपुंसकलिङ्गमात्रसामान्यात् दृष्टान्त इति । कृताकृतप्रसङ्गित्वेन नित्यत्वात् विलोपे प्रथमं कृते वलःपरभूतस्याभावाद् यलोपाभावमाशङ्क्य समर्थयते — तत्र यद्यपि नित्यत्वादिति ।

परिहारान्तरमाह — यद्वा योगविभागेनेति । लक्ष्यस्य सिद्धत्वात् लक्षणमेव व्याख्यायते । वेरिति सूत्रम् । तत्र व्योरित्यनुवर्त्तते । तेनायमर्थः — व्यन्तशब्दस्य वकारयकारयोर्लोपः स्यादिति । ततो[1]ऽपृक्तस्येति सूत्रम् । तत्र वेरित्यनुवर्त्तते । तच्च व्यन्तस्यापृक्तस्यासम्भवात् रूपेणैव सम्बध्यते लोपस्य चानुवृत्तेस्तमेवं विशिनष्टि वेरपृक्तस्य लोप इति ।

---

१. तथाचेति मुद्रितपुस्तके नास्ति । अजितायां प्रतीकतया गृहीतम् ।
२. पा० सू० ६।१।६६ ।
१. इतः लोप इति इति यावत् अा० मा० नास्ति ।

वकारश्च यकारश्चेत्येवं लोपो भविष्यति ॥
यलोपे च कृतेऽकारो यः शुद्धः परिशिष्यते ।
तदन्तावधिकात्पश्चादतष्टाप् क्रियते स्त्रियाम् ।
[1]अकः सवर्णदीर्घत्वं परयोरन्तरङ्गतः ।
सर्वेणापि ततः कृत्वा प्रमाणेत्यनुगम्यते ॥

तदेतदितराश्रयं भवतीत्युक्तम् ।

यद्वा श्रुत्यप्रमाणत्वात्स्मृतेः प्रामाण्यमिष्यते ।
सिद्धाच्च तत्प्रमाणत्वाच्छ्रुत्यप्रामाण्यकल्पना ॥
तथा श्रुतिप्रमाणत्वात्स्मृत्यप्रामाण्यकल्पनम् ।
तदप्रामाण्यसिद्ध्या च श्रुतिप्रामाण्यनिश्चयः ॥

तदिदं विकल्पवादिन उभयत्रेतरेतराश्रयत्वमेकान्तवादिनस्त्वन्यतरत्र ।

तत्रान्यतः परिच्छेदाद्वाच्यं हेत्वन्तरं स्फुटम् ।
भाष्यकारस्त्विहोक्त्वैवं तयोरेकैकमुक्तवान् ॥

तत्र स्पर्शनस्य क्लृप्तं मूलं कल्प्यं स्मृतेरिति ।

नैवात्यन्ताप्रकृतहेत्वन्तराभिप्रायेणान्यतः परिच्छेदोऽभिहितः । प्रकृतयोरपि च यत्कृतमितरेतराश्रयत्वं तद्व्यतिरिक्तधर्मदर्शनान्निश्चीयमाने भवत्येवान्यतः परिच्छेदः ।

स्वतः स्थितात्प्रमाणत्वाच्छ्रुतेः स्यात् क्लृप्तमूलता ।
स्मृतेः श्रुत्यनुमापकप्रामाण्यात्कल्प्यमूलता ॥

**वेरिति सूत्रस्य चान्त्यसूत्रबाधकत्वमनवकाशत्वात् । यदि हि नित्यत्वाद्विलोपः प्रथमं स्यात् । व्यन्तशब्दाभावाद्वेरिति सूत्रमनवकाशं स्यात् ।**

**परयोरन्तरङ्गत इति । पूर्वपरयोरेक आकारः संहितायां विधीयते तत्रैकपदवर्तिनोः संहिता शीघ्रं प्रतीयते । सिद्धं हि पदं पदान्तरेण संहितां भजते । किञ्च दीर्घादीर्घयोर्धातुप्रत्ययाकारयोर्दीर्घ आदेशः आन्तरतम्यातिशयात् शीघ्रं प्रतीयते । न तथा धातूपपदाकारयोर्ह्रस्व इति ।**

---

१. पा० सू० ६।१।१०१ ।

ततश्च प्रत्यक्षश्रुत्यप्रामाण्यकल्पनायत्तं स्मृतेः प्रामाण्यं तद्बलेन च श्रुत्यप्रामाण्यं कल्पयत इतरेतराश्रयत्वमपरिहार्यम् ।

न चाध्यारोप्यमाणापि श्रुतेः स्यादप्रमाणता ।
न च तस्यामसिद्धायां स्मृतिप्रामाण्यसंभवः ॥

बलवन्तं पराजित्य यः प्रतिष्ठातुमिच्छति ।
हस्तिना पादयोधीव संतिष्ठेताचिरादसौ ॥

एवं तावत्स्मृतिप्रामाण्यं कल्पयन्नेव तद्वादी पराजीयते । यदा तु श्रुतिप्रामाण्यगतमितरेतराश्रयत्वमालोच्यते तदा तत्रापि प्रतिपक्षभूतस्मृत्यप्रामाण्यापेक्षया निरपवादप्रामाण्यावधारणसिद्धेः पराधीनत्वात् पूर्वसिद्धस्मृत्यप्रामाण्यलिप्सायाम्,

सिद्धमेवाप्रमाणत्वं स्वरूपाश्रयमादितः ।
क्षणमात्रमपि प्राप्य श्रुतिः प्रामाण्यमश्नुते ॥

तेन यत्तदाद्ये पदकेऽननुमितावस्थायां श्रुतावापातक्षणमात्रे स्मृतेरप्रामाण्यं दृश्यते तावतैव लब्धप्रमाणत्वात् श्रुतिः सर्वदा निरपवादप्रामाण्या भवतीत्यन्ततः परिच्छेदः ।

तेनैकत्र श्रुतेराद्यात् प्रामाण्यादवसीयते ।
स्मृत्यप्रामाण्यतोऽन्यत्र क्षणमात्रावधारितात् ॥
कृत्वैकमवधिं तस्मात् सिद्धमाद्ये क्षणे दृढम् ।
आनुपूर्व्या व्रजेत्तावद्यावत्सिद्धोऽपरः स्फुटः ॥

तेनैकत्र श्रुतेराद्यादिति । स्मृतिप्रामाण्यगतेतरेतराश्रये श्रुतेराद्यात् प्रामाण्यादवसीयतेऽवसानं गम्यते, निश्चीयते वा न प्रमाणं स्मृतिरिति । अन्यत्र तु श्रुतिप्रामाण्यगतेतरेतराश्रये स्मृतेराद्यादप्रामाण्यादवसीयते श्रुतिः प्रमाणमिति । एतदेव पुनर्निरूपणदार्ढ्याय प्रपञ्चयन्नाह — कृत्वैकमवधिमिति । श्रुतिप्रामाण्यापेक्षितं स्मृत्यप्रामाण्यं स्वतः सिद्धमवधिः । स्मृत्यप्रामाण्यात्तयानपोदिता श्रुतिरनपवाद्या श्रुत्या विरोधात् स्मार्त्तश्रुतिकल्पनानुपपत्तिः । ततश्च कल्पितया चापि श्रुत्या विरोधाभावात् प्रत्यक्षश्रुतिप्रामाण्यप्रतिष्ठापनम् । एवं श्रुत्यनुमानाधीनस्मृतिप्रामाण्यापेक्षितविपरीतं स्वतः श्रुतिप्रामाण्यमवधिः तस्योपलम्भान्न स्मृतेर्मूललाभः । अलब्धमूलया

तदेकेन मार्गेण दर्शयति कल्प्यमूलत्वात् स्मृतिप्रामाण्यमनवक्लृप्तमित्यादि यावत्स्मार्तंश्रुतिकल्पनमनुपपन्नं प्रमाणाभावादिति ।

द्वितीयमार्गेऽपि श्रुतिप्रामाण्यदर्शनादारभ्य तावन्नेतव्यं यावत्तदेव निरपवादं सिद्धमिति । व्रीहियवबृहद्रथन्तरविधीनां त्वनन्यगतिकत्वात्कक्षान्तरितपदका इव स्थानभेदाभावात् तुल्यबलतयानवस्थितविकल्पाश्रयणं प्रागुपदिष्टमेव योज्यम् । अतो नापेक्ष्यं प्रत्यक्षश्रुतिविरुद्धस्मृतिप्रामाण्यमिति ॥३॥

इतश्च न प्रमाणत्वं मूलहेत्वन्तरेक्षणात् ।
व्यभिचारे हि नोत्पत्तिरर्थापत्त्यनुमानयोः ॥

श्रुतिविरोधभग्नप्रसरायां हि स्मृतौ पूर्वोक्तेन न्यायेन श्रुत्यनुमानप्रतिबन्धादाकाङ्क्षितमूलान्तरावश्यकल्पयितव्यत्वाच्च ।

क्वचिद्भ्रान्तिः क्वचिल्लोभः क्वचिद्युक्तिविकल्पनम् ।
प्रतिभाकारणत्वेन निराकर्तुं न शक्यते ॥
स्मृतेश्च श्रुतिभग्नायाः कारणान्तरसम्भवः ।
न तु श्रुतेरतः सैव तद्विरोधे हि बाध्यते ॥

च स्मृत्या न श्रुतिमूलत्वबलेन स्मृत्यप्रामाण्यापादनम् । अतश्च बाधकाधीनस्यापि श्रुत्यप्रामाण्यस्यापेक्षितस्यालाभात् स्मृतिरप्रमाणमेवेति । सेयमानुपूर्वी *भाष्यकारेणैका* दर्शितेत्याह — तदेकेन मार्गेणेति ।

द्वितीयेनाप्येवं द्रष्टव्येत्याह — द्वितीयमार्गेऽपीति । पूर्वमेकमवधिं कृत्वा परम्परया तावत् व्यवहर्त्तव्यमित्युक्तम् ॥३॥

इदानीं तु श्रुतिप्रामाण्यदर्शनात् तस्यैव निरपवादसिद्धिमाह । तत्रैवं श्रुतिव्याख्या श्रुतिप्रामाण्यं तावद् दृश्यते । केवलमपवादाभावाय स्मृत्यप्रामाण्यमपेक्षत इत्येवं सम्प्रत्युपन्यासः । पूर्वं त्वपेक्षितस्याबाधितत्वेनोपन्यासः कृत इति । स्मृतेश्च श्रुतिभग्नाया इति । पूर्वं विरोधनिराकृतश्रुतिमूलायाः स्मृतेर्मूलान्तरप्रसूतत्वापादनं नाशोभनं दर्शनान्मूलत्वसमर्थानां हेतूनामिति व्याख्यातम् । सम्प्रत्येवं व्याचष्टे श्रुतिस्मृतिविरोधे यदेतत् स्मृत्यप्रामाण्यमुक्तं तदेतदपि शोभनम् । अप्रमाणेन ह्यसन्मूलेन भवितव्यम् । न च श्रुतौ तत्सम्भवः । स्मृतौ च दृष्टानामेव लोभादीनां मूलत्वं सम्भवतीति । *भाष्यकारोऽ*धिकरणान्तरेणापि सूत्रं व्याख्यायोपपन्नतरं

यथैव वेदमूलत्वमनेकान्तान्न लभ्यते ।
तथान्यमूलतापीति तदाशङ्क्येदमुच्यते ॥
उपपन्नतरं चैतद्वेदवाक्यानुमानतः ।
दृष्टे हि सत्यदृष्टस्य कल्पना निष्प्रमाणिका ॥

अधिकरणान्तरं वेति ।

सर्वव्याख्याविकल्पानां द्वयमेव प्रयोजनम् ।
पूर्वत्रापरितोषो वा विषयाव्याप्तिरेव वा ॥

अपरितोषस्तावत्प्रथमेनैव श्रुतिविरुद्धत्वहेतुना बलवता सिद्धे बाधे नान्वाचयहेतुरतीव प्रयोजनवान् । अधिकरणान्तरे पुनः पूर्वोक्तहेतुनिरपेक्षः पर्याप्त एवैकः स्मृतिबाधनायेति स्वतन्त्रत्वेन प्रदर्शनम् । विरोधेन च न व्याप्तायाः स्मृतेरप्रमाणतद्व्याप्तौ नापवादान्तरोद्भवः । वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णाति इत्यग्नीषोमप्रणयनार्थं विसर्जनहोमकालसंबन्धियजमानाच्छादनं वासोऽध्वर्युर्हरति मुक्तकमेवैतदावरणानुमितं स्मरणम् । एवं यूपहस्तिनो दानमाचरन्तीति यूपपरिव्याणशाटकं यूपहस्तिशब्देन निर्दिश्याध्वर्युहर्तव्यतयाचारानुमितयैव स्मृत्या प्रतिपादयन्ति ।

तत्रापि वेदमूलत्वकल्पना नोपपद्यते ।
कर्तृसामान्यतः प्राप्ता लोभसंभवपूर्वकात् ॥

चैतदिति वक्ष्यति । तच्चाभिधानं तुल्यन्यायत्वात् प्रथमेऽपि व्याख्याने द्रष्टव्यमिति *वार्तिककारो* वक्ष्यति । यथा त्वत्र सम्बध्यते तथाह — यथैव वेदमूलत्वमिति । यद्यपि वेदविरोधादश्रुतिमूलत्वावगमे पारिशेष्याद्धेत्वन्तरलाभः सम्भवति तथापि हेतुदर्शनादिति [मी० सू० १।३।४।] एतत्सूत्रार्थमात्रनिरीक्षणेनाशङ्का । परिहारस्तु विरोधमनपेक्ष्यापि शक्यतेऽन्यमूलत्वं[1] निश्चेतुमुपपत्तिमत्तरत्वेनेति ।

## वेदबाह्यग्रन्थानामप्रामाण्याधिकरणम्

नापवादान्तरोद्भव इति । स्मृतिप्रामाण्यस्यापवादोऽप्रामाण्यम् । तच्चेद्विरोधाद्यत्राविरोधे[2] यूपहस्तिनो दानमाचरन्तीत्यस्य प्रामाण्यमस्त्वित्यपवादस्याप्रामाण्यस्यापवादान्तरं प्रामाण्यं तस्याप्रामाण्यहेतुद्वयाभिधानेनोद्भव इति ।

१. °तेऽन्यमूलत्व° आ० मा० । २. तच्चेद् विरोधाद् हस्ताविरोधे आ० मा० ।

ऋत्विजो हि प्रयोगमध्यपतितं यजमानं प्रक्रान्तकर्मावश्यसमापनीयत्वनिबद्धसमाप्त्युत्तरकालभावि स्वाच्छन्द्यं च विदित्वा कार्यवत्तावेलायामेव खलगत[1]प्राधान्यविभागव्यावृत्तभृतकवत् स्वयमुत्पाद्योत्पाद्य तानि तान्यादेयकानि श्रद्धाजनकार्थवादपुरःसरं याचन्ते। प्रत्यक्षश्रुतिविहितदेयान्तरनिदर्शनव्यामोहितश्च यजमानः श्रद्दधानतया तथैव प्रतिपद्य तेभ्यः प्रयच्छतीति तैरेषा स्मृतिः प्रवर्तिता स्यादित्याशङ्कायां वेदमूलत्वं नानुमीयते। पूर्ववच्च लोभपूर्वकत्वकल्पनमेवोपपन्नमिति निर्णयात्सन्देहनिवृत्तिः। इदं च भाष्यकारेण प्रदर्शयता तुल्यकारणत्वात् पूर्वत्रापि प्रदर्शितमेवेति योजयितव्यम्।

एतावत्त्विहाधिकरणद्वयेऽपि वक्तव्यम्।

स्मृतीनां श्रुतिमूलत्वे दृढे पूर्वं निरूपिते।
विरोधे सत्यपि ज्ञातुं शक्यं मूलान्तरं कथम्॥

स्मृतीनां श्रुतिमूलत्व इति। न तावदत्र वस्तुगतो विरोधो विद्यते, अनुष्ठानविषयत्वात्। योऽपि हि व्रीहीनुपादत्ते नासौ यवानां यागसाधनत्वशक्तिमवजानीते[1]। किन्त्वेकेनैव साध्यसिद्धौ किमपरेणेति नोपादत्ते। प्रमेयद्वयोपपत्तेश्च नैकस्य विपरीतार्थताकारितमाभासत्वम्। अतः प्रामाण्यद्वयोपपत्तिः। प्रमाणद्वयोपायस्त्वनागतानुष्ठानप्रत्यय एकप्रयोगासम्भवाद्विरुध्यते। एकप्रयोजनप्रयुक्तत्वादनुष्ठानस्य। एकैकस्माच्च तत्सिद्धेर्विकल्पेनैव न्यायः[2]। सति प्रमाणयोस्तुल्य[3]बलत्वे बलवत्त्वे त्वेकतरजन्यानुष्ठानप्रत्ययानुत्पादादपवादाद् वा न प्रमाणता तस्य। तेन प्रमाणप्रसरानुष्ठानबोधबाधेन[4] तदुपायप्रमेयापहारो न विरोधिप्रमेयबाधेनेति स्थितम्। प्रमेयं [5]ह्यपेक्षितसाधनोपायमात्रमुपायस्तु प्रवर्त्तनावरोधः प्रमाणस्य। तदिदमुक्तम् — चोदनालक्षणोऽर्थो धर्मः [मी० सू०।१।१।२] इति। ततश्च यथा प्रत्यक्षानुदयेनाग्नौ निरस्तेऽप्यनुमानासम्भवस्तथा तावदत्र नास्ति प्रमेययोरविरोधात्। न ह्यसर्ववेष्टितौदुम्बरीस्पर्शनवतः प्रयोगस्य सगुणत्वं

---

१. खलगतधान्यविभागव्यापृतभृतकवदिति पाठो भवितुं युक्त इति भातीति पूनामुद्रितपुस्तकटिप्पणी।
१. अपजानीते पू० मा०। २. न्याय्यः आ० मा०।
३. अतुल्यबलत्वे त्वेकस्येतरजन्येति आ० मा०। ४. बोधाभावेन आ० मा०।
५. अपेक्षितसाधनत्वम् उपायस्तु आ० मा०।

शाखान्तरविप्रकीर्णानि हि पुरुषान्तरप्रत्यक्षाण्येव वेदवाक्यानि पुरुष-धर्मानुष्ठानक्रमेणापठितानि वेदसमाम्नायविनाशभयात् स्वरूपेणानुपत्यस्यार्थोप-निबन्धनद्वारलभ्यानि विशिष्टध्वनिस्थानीयेन तेनैव परोक्षाण्यपि व्यज्यमानानि पिण्डीकृत्य स्मर्यन्ते। तत्र यथैवाप्तप्रत्ययादिदमिह पठचत[२] इति कथितमुच्चा-रितमनुच्चारितं वा शिष्याः प्रतिपद्यन्ते तथैव सूत्रकारवचनान्यध्यापकवचन-स्थानीयानि स्वानुरूपवेदवाक्यसमर्पणमात्रं कृत्वा निवृत्तव्यापाराणीति न

सर्ववेष्टितौदुम्बरीस्पर्शनरहितस्यापि सगुणत्वेन विरुद्धचते। यस्यापि विधिरेव प्रमेयः स्यात् साध्यश्च तस्यापि तत्साधने विषयांशेऽविवादात् प्रमेयाविरोधः। न चानुष्ठानप्रत्ययानुत्पादात् श्रुत्येव लिङ्गस्य बोधः। यत्र ह्याम्नानसाकाङ्क्षतया[1] श्रुत्यनुमानम्.। तत्र प्रत्यक्षश्रुतिजनिते नैराकांक्ष्येऽनुमानबीजोच्छेदान्नानुमानम्। आप्तोपदेशस्य तु मूलप्रमाणानु-मानहेतुत्वम्, न प्रमेयविरोधमन्तरेण प्रमाणान्तरेण प्रतिबद्धुं शक्यते। न चोपजातानुष्ठानबोधापवादकत्वेन बाधः। सामान्यविशेषशास्त्रादि-भेदाभावात्। तेन यदि स्मृतिभिः श्रुत्यनुमानंमदृढं स्यात्, भवेत् प्रत्यक्षया श्रुत्या दृढया बाधः, न तु तदस्ति। दार्ढ्यं स्य स्मृत्यधिकरण-सिद्धत्वात्। तदेवेदं प्रत्यक्षश्रुत्यविशेषापादकं[2] प्रपञ्चयति — शाखान्तर-विप्रकीर्णानीति। विप्रकीर्णत्वेन स्वप्रत्यक्षनिवृत्त्या नाभावसिद्धिरित्याह — पुरुषान्तरप्रत्यक्षाणीति। अनेनेदमाह मन्वादिवचनं श्रुतिविषयस्य प्रत्यक्ष-समर्पणं कृत्वा निवृत्तव्यापारम्। न च तत्र तस्य केनचिद्विधिनाप्यशक्ति राप्तवाक्यत्वात्। यत्तु तत्प्रत्यक्षं तस्य नात्मीयेन प्रत्यक्षेण सह कश्चि-द्विशेष इति। यदि हि वेद एवास्ति स एव किमिति न समर्पितो मन्वादि-भिरिति चोद्यानवतारायोक्तं—पुरुषधर्मानुष्ठानक्रमेणेति। एवमाप्तोपदेशात् दृढे परप्रत्यक्षे श्रुत्युपस्थाने न पुरुषाधीनत्वमात्रे दुर्बलत्वं वाच्यम्। पठ्य-मानस्यापि तदविशेषादिति दर्शयति — तत्र यथैवेति।

---

१. पठ्यत इति काशी मुद्रितपाठः।

१. ह्याम्नातस्याकाङ्क्षया आ० मा०। २. विशेषोपादानम् आ० मा०।

तात्वादिध्वनिप्रेरणवत्पौरुषेयत्वेन परिभवितव्यानि ।

वेदो हीदृश एवायं पुरुषैर्यः प्रकाश्यते ।
स पठद्भिः प्रकाश्येत स्मरद्भिर्वेति तुल्यभाक् ॥
अनुच्चारणकाले च संस्कारैरेव केवलैः ।
तत्कृतस्मरणैर्वायं वेदोऽध्येतृषु तिष्ठति ॥
तेनार्थं कथयद्भिर्या स्मृतार्था कथ्यते श्रुतिः ।
पठिताभिः समानासौ केन न्यायेन बाध्यते ॥
स्मृतिशास्त्रं च यद्येकं भवेत्कृस्नमवैदिकम् ।
तन्मुक्त्वैकं ततोऽन्यानि व्यवहाराङ्गतामियुः ॥

ताल्वदिध्वनिप्रेरणवदिति । प्रत्यक्षेऽपि श्रुतिविषये पुरुषाधीनता दर्शिता । सति च पुरुषाधीनत्वे यथा वेदरूपेऽन्यथाकरणे चास्ति बहुभ्यः स्यात् निराक्रियेत्येवं[1] पौरुषेयत्वे दोषं निरस्यन्निश्चय एवं महाजनपरिगृहीतमन्वादिवचनदर्शिते परोक्षेऽपि विद्यमानमपि हि प्रत्यक्षं वर्णसमूहमात्रपर्यवसितम् नानादिसम्प्रदायावगतत्वं तस्य निरूपयितुं शक्तम् । तमेवार्थं स्फुटीकरोति — वेदो हीदृश एवायमिति । एवं प्रत्यक्षानुमानिकयोर्वेदयोः पुरुष[2]प्रत्ययाधीनत्वमविशिष्टं प्रतिपाद्य सम्प्रति प्रामाण्योपस्थापकस्मरणाधीनत्वं संस्काराधीनत्वं चाविशिष्टमिति दर्शयति — अनुच्चारणकाले चेति । यथैव प्रत्यक्षोपहितः संस्कारस्तदनुरूपं स्मरणं जनयतीति मन्वादिस्मरणात् कारणपरम्परामनुमाय मन्वादिप्रत्यक्षस्य वेदस्य सिद्धिरेवमधीयमानस्य प्रत्यक्षानुरूपमपि स्मरणं यथास्मरणं हि पाठः, स्मरणं च संस्कारद्वारेण प्रत्यक्षानुरूपमतः सम्प्रदायकाले प्रत्यक्षीकृतस्य पाठोऽयमिति निश्चीयते । विशेषस्त्वेतावानन्यदीयेन स्मरणेन क्वचिदन्यप्रत्यक्षोन्नयनं क्वचिदात्मीयेनात्मप्रत्यक्षस्य । न चास्मत्प्रामाण्ये विशेषः । सर्वमेव हि[3] कस्यचिदन्यदीयं कस्यचिदात्मीयमिति । अथ न प्रत्ययितपुरुषप्रणीतत्वाङ्गीकरणेनैव स्मृतिशास्त्रस्य विरोध्येकदेशेऽप्रामाण्यमुच्यते । किन्त्वेकदेशे विरोधिदर्शनात् शास्त्रस्यैवाप्रत्ययितपुरुषप्रणीतत्वम् । तत्राप्याह — स्मृतिशास्त्रं च यद्येकमिति । उपपद्यत एवैतत्, किन्त्वेवं महाजनपरिग्रहस्तस्य न स्यात् । यदा तु वेदमूलानुमाने कारणं महाजनपरिग्रहः सर्वत्र समानो दृश्यते । सर्वत्र चानुस्रियमाणो भूयिष्ठं मूलभूतो वेदस्तदा त्वप्रणीतत्वेन वेदमूलत्वे निश्चित एव शास्त्रस्य विरोध्येकदेशा-

---

१. निवारणमित्येवं आ० मा० । २. पुरुषप्रत्यक्षाधीनत्व° आ० मा० ।
३. सर्वमेव हि पू० मा० इत्यत्र नास्ति ।

कठमैत्रायणीयादिपठितश्रुतिमूलिकाः ।
दृश्यन्ते स्मृतयः सर्वा भद्रोपनयनादिषु ॥
तदा तन्मध्यपात्यैकं वाक्य किञ्चिदपस्मृतिः ।
मूलान्तरोद्भवं वक्तुं जिह्वा नो न प्रवर्त्तते ॥
बाधिता च स्मृतिर्भूत्वा काचिन्न्यायविदा यदा ।
श्रूयते न चिरादेव शाखान्तरगता श्रुतिः ॥
तदा का ते मुखच्छाया स्यान्नैयायिकमानिनः ।
बाधाबाधानवस्थानं ध्रुवमेवं प्रसज्यते ॥

यच्चैतत्सर्ववेष्टनस्मरणं स्पर्शनश्रुतिविरुद्धत्वेनोदाह्रियते । एतज्जैमिनिनैव च्छान्दोग्यानुवादे[1] शाट्यायनिब्राह्मणगतश्रुतिमूलत्वेनौदुम्बरीप्रकरणे च शाट्यायनिनां तामूर्ध्वदशेनोभयत्र वाससी दर्शयतीति 'वैष्टुतं वै वासः श्रीर्वै वासः श्रीः सामे' इति दर्शिते तत्प्रसङ्गेनौदुम्बरीवेष्टनवाससोऽपि प्रकाशश्रुतिमूलत्वमेवान्वाख्यातम् ।

प्रामाण्यम् । महाजनपरिग्रहावधारणेन स्वप्रत्यक्षं पुरस्कृत्य न शक्नुमो वक्तुमित्याह — कठमैत्रायणीयादीति । किञ्च यत्सामग्रीकं ज्ञानं क्वचित्प्रमाणमिष्यते न तत्सामग्रीकस्य ज्ञानस्य क्वचिदाभासत्वम् । नहि सत्संप्रयोगजं क्वचित्प्रत्यक्षाभासं भवति । यदा तु सामग्रीसाम्येऽप्याभासत्वं स्यात्तदा सामग्रीदूषणान्न तत्सामग्रीकं क्वचित्प्रमाणं स्यात् । बाधज्ञानस्य च सामग्रीविरोधिवेददर्शनं स्मृतिमूलस्य चादर्शनमात्रं न पुनर्योग्यानुपलम्भः, स हि सकलवेदार्थनिरूपणे स्यात् । वेदशाखानां तु सकृच्छ्रवणमपि दुरुपपादं दूरेऽर्थनिरूपणम् । सा चेयं सामग्रीव्यभिचारदूषितेति व्युत्पादयति — बाधिता च स्मृतिर्भूत्वेति ।

यच्चैतत्सर्ववेष्टनस्मरणमिति । स्पर्शनं श्रुतिविरुद्धत्वेन यदुदाहृतं तत्र शाट्यायनीयशाखागतश्रुतिमूलत्वेन स्वग्रन्थे छान्दोग्यानुवादे जैमिनिनोदाहृतमिति अनुषङ्गेण समाप्तिः ।

अथ वा स्पर्शनश्रुतिविरुद्धत्वेन यदेतदुपलक्षितं सर्ववेष्टनस्मरणमित्युद्दिश्योदाहृतमेतज्जैमिनिनेत्याह । *जैमिनेः* श्रुतिमूलत्वप्रतिपादनं दर्शयति — औदुम्बरीति । औदुम्बरीप्रकरणे चेत्यादिर्दर्शयतीत्यन्तो

---

1. °ग्यानुपदे काशीमुद्रितपाठः ।

ततश्च श्रुतिमूलत्वाद्बाध्योदाहरणं न तत् ।
विकल्प एव हि न्याय्यस्तुल्यकक्षप्रमाणतः ॥
विरुद्धत्वे च बाधः स्यान्न चेहास्ति विरुद्धता ।
न हि वेष्टनमात्रं नः स्पर्शश्रुत्या विरुध्यते ॥
यदि द्वित्राङ्गुलं मध्ये विमुच्योत्तरभागतः ।
वेष्ट्यं तौदुम्बरी तत्र किं नाम न कृतं भवेत् ॥
सर्वा वेष्टयितव्येति न ह्येवं सूत्रकृद्वचः ।
न ह्यस्याः क्रियते कैश्चित् कर्णमूलेषु वेष्टनम् ॥
परिशब्दोऽपि यस्तत्र सर्वतो वेष्टनं वदेत् ।
तद्वर्जितसमन्तत्वे सोऽर्थवानेव जायते ॥
लोभमूलं च यत्तस्याः कल्प्यते सर्ववेष्टनम् ।

**जैमिनेर्ग्रन्थः । अस्यार्थः — शाट्यायनिशाखिनामौदुम्बरीप्रकरणे तामूर्ध्वदेशेन वाससा परिवेष्टयतीति श्रुतिस्तच्छब्देन प्राकृतायामौदुम्बर्यामपि वासो दर्शयतीति । स्वग्रन्थे वैष्टुतवाससः प्रथमं[1] दर्शितत्वादुभयशब्दो द्वितीयस्योदुम्बरीवाससः प्राप्त्यर्थः । च शब्दस्यौदुम्बरी प्रकरणे चेति समुच्चयोऽर्थः । तदेतद्व्याख्यानं श्रीर्वै वास इत्यर्थवादपुरस्सरं सामसाधनविष्टुतिसम्बद्धे वाससि दर्शितेऽनेन ग्रन्थेनौदम्बरीवेष्टनवाससोऽपि प्रकाशश्रुतिमूलत्वमेवान्वाख्यातमिति ।**

**यदि द्वित्राङ्गुलं मध्य इति । द्वित्राङ्गुलमुत्तरभागतो विमुच्य मध्ये वेष्टितौदुम्बरीति सम्बन्धः । यतो वक्ष्यति—न ह्यस्याः क्रियते कैश्चिदिति । कर्णमूलेष्विति । कर्णयोर्मूले च सन्निधानात् कर्णयोरेव मूलम् । अथ वा निखातो भागो मूलं यदपेक्षया मध्य इत्युक्तम् । यद्यपि तत्र स्पर्शो न सम्भवति तथापि सर्ववेष्टनाभावं दर्शयितुमुच्यते ।**

**यत्तु हेतुदर्शनात् [मी० सू० १।३।४ ।] इत्यनेन श्रुतिविरुद्धेऽप्यर्थे स्मार्तस्य[2] लोभः कारणमित्युक्तम् । येनाविरुद्ध एवोपपत्तिमति चार्थेलोभातिशयो दृश्यते । तदस्मरणात्तु न लोभः कारणमित्याह — लोभमूलञ्चेति । यद्यस्मात्कारणादुद्गातुस्तद्वासो भवतीति लोभमूलता कल्प्यते । तत्तस्मादेव मूलाग्रपरिधानयोः सुतरां लोभः सिध्येत् । अविरुद्धता चैवं**

१. पूर्वं आ० मा० । २. स्मरणस्य आ० मा० ।

तल्लोभः सुतरां सिध्येन्मूलाग्रपरिधानयोः ॥
अन्तरीयोत्तरीये हि योषितामिव वाससी ।
स्मरेत्कौशेयजातीये नोद्गातैकं गुणैर्विना ॥
प्राक् च लोभादिह स्पर्शः कुशैरेवान्तरीयते ।
वेष्टितैषा कुशैः पूर्वं वाससा परिवेष्टयते ॥
कुशवेष्टनवाक्ये च न किञ्चिद्धेतुदर्शनम् ।
नियमेऽपि च तद् दृष्टं [1]नैवोर्ध्वदशवाससः ॥
क्रीतराजकभोज्यान्नवाक्यं चाथर्ववैदिकम् ।
न च तस्याप्रमाणत्वे किञ्चिदप्यस्ति कारणम् ॥
यदि यज्ञोपयोगित्वं नेहास्त्याथर्वणश्रुतेः ।
अर्थान्तरप्रमाणत्वं केनास्याः प्रतिहन्यते ॥
शान्तिपुष्टयभिचारार्था ह्येकब्रह्मर्त्विगाश्रिताः ।
क्रियास्तया प्रमीयन्तेऽत्राप्येवात्मीयगोचराः ॥
न चायमपि यज्ञाङ्गविधिः शान्त्यादिशास्त्रवत् ।
अतोऽस्यापि प्रमाणत्वं पुरुषार्थेन वार्यते ॥
न ह्येतद्यजमानस्य नर्त्विजामुपदिश्यते ।
सर्वेभ्यः पुरुषेभ्यो हि भोज्यान्नत्वमिदं श्रुतम् ॥
वाक्यान्तरैर्निषिद्धं यद्दीक्षितान्नस्य भोजनम् ।
तस्यैव श्रूयते पश्चादभ्यनुज्ञाविधिद्वयम् ॥
अग्नीषोमीयसंस्थायां क्रीते वा सति राजनि ।
सोऽयं कालविकल्पः स्यादाशौचच्छेदकालवत् ॥

**सम्भवतीत्यभिप्रायः । तेनेदृशं स्मरणं लोभमूलत्वे स्यादित्याह — अन्तरीयोत्तरीये हीति । अन्तरं पूर्वापरकार्ययोर्मध्ये परिधानवासो यदन्तर्वास इति स्मरन्ति ।**

**स्नातकानाञ्च नित्यं स्यादन्तर्वासस्तथोत्तरमिति ।**

**क्वचिच्चान्तरीयशब्देनैव स्मृतम् ।**

**नान्तरीयैकदेशस्य कल्पयित्वोत्तरीयताम् ।**

**आचामेदिति ? सोऽयं कालविकल्पः स्यादित्युक्त्वा कालविकल्पस्यानुपपत्तिमाशङ्क्य दृष्टान्तेनोपपादयति—आशौचच्छेदकालवदिति । परो दृष्टान्तेऽपि**

[1] °नैवोर्ध्वं दश° इति काशीमुद्रितपाठः ।

ननु चाशौचकालोऽपि धर्मपीडाद्यपेक्षया ।
अतः समविकल्पत्वं नैव तस्यापि संमतम् ॥
यस्य ह्यल्पेन कालेन शुद्धिर्भोज्यान्नतापि वा ।
स कस्मात्तावता शुद्धो दीर्घकालत्वमाश्रयेत् ॥
एकरात्रे त्रिरात्रे वा शुद्धस्य ब्राह्मणस्य च ।
अशुद्धिरनुवर्तेत दशरात्रं कथं पुनः ॥
पापक्षयो हि शुद्धत्वं धर्मयोग्यत्वमेव वा ।
प्राग्दशाहात्कथं तस्य सदसद्भावकल्पना ॥
एवं प्राक् पशुसंस्थानाद्दीक्षितान्नविशुद्धता ।
अस्ति नास्तीति चेत्येवं सहते नावधारणम् ॥
स्यादेतद्येन यः कालः पुरस्तात्परिगृह्यते ।
तस्यासावेव होमस्य प्रागूर्ध्वोदयकालवत् ॥
युक्तं समविकल्पत्वमुदितानुदितत्वयोः ।
न काचिदत्र पूर्वोक्ता सदसत्त्वविरोधिता ॥
न चानुदितहोमोक्तावुदितोक्तिरनर्थिका ।
क्लेशक्षयव्ययादीनां नातिरेकोऽत्र कश्चन ॥
इह त्वल्पेन कालेन शुद्धेर्या दीर्घकालता ।

व्यवस्थामङ्गीकृत्य विकल्पाभावमाह — ननु चाशौचकालेऽपीति । विकल्पानाश्रयणे कारणद्वयं पक्षयोरसाम्यं [1]वस्तुविरोधश्च । तत्र प्रथमं कारणमुभयोरेव दृष्टान्तदार्ष्टान्तिकयोराह — यस्य ह्यल्पेन कालेनेति ।

द्वितीयमपि दृष्टान्ते तावदाह — एकरात्रे त्रिरात्रे वेति । एवं दार्ष्टान्तिकेऽप्याह — एवं प्राक् पशुसंस्थानादिति । [2]समविकल्प एव पुरुषान्तरशब्देन व्यवस्थाविकल्पः । न काचित्त्र पूर्वोक्तेति । उदितानुदितहोमयोरनुष्ठानात्मकत्वान्न स्थितवस्तुगता सदसद्विरोधितेति । इह त्वल्पेन कालेनेति । सदसत्त्वविरोधात्तावद्दीर्घकालतानुपपन्नेत्युक्तम् । एतन्न्यायमूलया स्मृत्यापि निवार्यत इति न्यायदार्ढ्यार्थमेवोच्यते । विषयाल्पत्वा[3]त्तावत् दृष्टान्तेऽपि न विकल्प्यत इत्युक्तम् ।

---

१. श्रुतिविरोधश्च आ० मा० ।
२. समविकल्प एव ... विकल्पः पंङ्क्तिः नास्ति आ० मा० ।
३. विषयान्यत्वात् आ० मा० ।

न वर्धयेदघाहानि सानेनापि निवार्यते ॥
क्लेशप्रायं च तं पक्षं नाश्रयेतैव कश्चन ।
ततोऽनङ्गीकृते तस्मिन् स्यात्तद्वाक्यमनर्थकम् ॥

तेनर्ते विषयान्यत्वान्न विकल्पोऽवकल्पते ।
स चोक्तो धर्मपीडाख्यस्तत्र चाह्नामवर्धनम् ॥

दन्तजातानुजातान्यकृतचूडेषु च क्रमात् ।
चितिक्रिया त्र्यहैकाहास्तत्र चाह्नामवर्धनम् ॥

तथा गौतमेनाप्युक्तम् — राज्ञां च कार्याविघातार्थम् [गौ० ध० सू० २।५।४३ ।] ब्राह्मणानां च स्वाध्यायानिवृत्त्यर्थमिति । [ गौ० ध० सू० २।५।४४ ।]

अथ वान्तर्यदाशौचनिमित्तं किञ्चिदापतेत् ।
तत्र शेषेण या शुद्धिस्तच्छेषोऽयं भविष्यति ॥

न वर्धयेदघाहानि निमित्तादागतान्यपि ।
पूर्वस्यैव हि कालस्य प्रसङ्गेन तदङ्गता ॥

**इदानीं तमन्यं विषयमाह — स चोक्तो धर्मपीडाख्य इति । धर्मक्रियानिरतस्य तत्पीडा मा भूदिति अल्पकालताशौचस्य । तत्र चाह्नामवर्द्धनं तस्मिन्विषये दीर्घकालता नास्त्येव, येन कालविकल्पः स्यादिति । कृतचूडेषु च क्रमादिति । न पाठक्रमः किन्त्ववस्थाकालयोरुत्कर्षापकर्षस्थानसाम्यम् । तथा च *गौतमेनेति* । धर्मपीडोदाहरणमिति ।**

**तत्र शेषेण या शुद्धिरिति । तच्चेदन्तः पुनरापतेत्तच्छेषेण शुद्धयेरन्निति स्मृतेरयं तच्छेषो भविष्यति । अनेनैकरात्रादिविधेः शेषाहो विषय इति दर्शयति । विषयव्यवस्था हि दर्शयितुमुपक्रान्ता स्मृतिस्त्वियं व्यवस्थामेवान्यतः प्राप्तामनुवादभूतोपोद्बलयतीत्युक्तम् । विकल्पे हि यत्रैकरात्रमाशौचं तत्रैव दशरात्रमित्यहर्वृद्धिसम्भवः । सोऽनया वार्यते । यत्रैकरात्रं न तत्र दशरात्रं कुर्यादन्यत्र तदिति । यदि तु दशरात्रनिमित्तादागतानि कथं न वर्द्धनीयानीत्यत आह — पूर्वस्यैव हीति । प्रथमनिमित्तागताशौच-**

प्रवृत्तोऽनपवृक्तश्च दशरात्रादिकोऽवधिः ।
अन्तः पतितमाशौचं स व्याप्नोति स्वसंख्यया ॥

वितत्य दश संख्या हि तान्यहानि व्यवस्थिता ।
शक्नोत्येव परिच्छेत्तुमन्तराशौचमागतम् ॥

शुद्ध्यशुद्धी ह्यदृष्टत्वाद्विज्ञायेत यथाश्रुति ।
नन्वेवं भोजनस्यास्ति विषयावधिकारणम् ॥

तत्र दीर्घावधिर्व्यर्थः स्यादल्पावध्यनुज्ञया ।
तस्मादिहापि वैषम्यहेतुर्वाच्योऽवधिद्वये ॥

अत्राप्यसंभवे तस्य दीक्षिते वा ददत्यपि ।
तन्नियुक्तकदत्तान्नं भोज्यं सोमक्रये कृते ॥

परिच्छेदाय निमित्तादारभ्य कल्पितः [1]कालो मध्यपतितमप्याशौचं परिच्छिनत्ति । कालकल्पनामेव दर्शयति — प्रवृत्तोऽनपवृक्तश्चेति । कल्पितेऽपि दशरात्रे कथं तेनान्तःपतितस्य तदेकदेशवर्तिनो व्याप्तिरित्यत आह — वितत्य दशसंख्या हीति । नात्र प्रत्येकमहान्याशौचसम्बन्धीनि यावद्दश सम्पद्यन्ते, किन्तु दशरात्रावधारणोपायभूतानि । स त्वेकः कालोऽशौचस्य । सम्पन्नं च तत्राशौचमतस्तन्निवृत्तौ निवर्त्तते । एवञ्च व्याख्या —

वायुः कर्मार्ककालौ च शुद्धेः कर्मणि देहिनामिति ।

कालेनाशौचमपनीयते । तत्रान्यार्थमपि कल्पितः कालः शक्तेरन्यदप्यपनयति । यदि कर्मयोग्यत्वमशुद्धिस्तदान्यत्वमपि नास्ति । फलतोऽस्मिन्व्याख्याने च संख्यया व्याप्त्यभिधानम् । [2]तत्संख्ययैवास्याप्यपनयादिति । कथं या दशरात्रेण शुद्धिर्दृष्टा तामेकरात्रेण प्रतिपत्स्यामह इति न वक्तव्यम् । यतः — शुद्ध्यशुद्धी ह्यदृष्टत्वादिति । श्रुतिश्च तावता चरितार्थेति दर्शितम् । अथ वा यदुक्तं न वर्द्धयेदघाहानि निमित्तादागतान्यपीति ।

तत्र हेत्वन्तरमिदं वचनादिति । विषयावधिकारणमिति । विषयविशेषेऽवधिभावस्य व्यवस्थापकं कारणं न पश्याम इति ।

दीक्षिते वा ददत्यपीति । पक्षान्तरमस्ति हि भोजनानुज्ञानम् ।

१. कालोऽन्तः पतितमप्या० आ० मा० ।
२. तत्संख्यैरहोभिरस्याप्यपनयादिति आ० मा० ।

आपद्धर्मा यथैवान्ये मुख्यासंभवहेतुकाः ।
तथैव प्राणपीडायां क्रीतराज्यकभोजनम् ।।
हन्तैवमप्रमाणत्वमुक्तमन्यप्रकारकम् ।
जग्धवानापदि ह्यार्तो विश्वामित्रः श्वजाघनीम् ।।

उच्यते—

एकं विनाप्यनुज्ञानात् क्रियते गत्यसंभवात् ।
क्रियतेऽनुज्ञया त्वन्यद्विशेषश्च तयोर्महान् ।।
सामान्येनाभ्यनुज्ञानाद्विशेषश्च विशिष्यते ।
विशेषोऽत्यन्तनिर्दोषस्तोकदोषेतरक्रिया ।।
तथा च मनुनाप्युक्तमापद्धर्मगतं प्रति ।
तत्रत्यपापशेषाणामन्ते शौचं भविष्यति ।।
कर्मणा येन केनेह मृदुना दारुणेन वा ।

[1]अन्यं प्रदापयेदन्नं भोज्यन्तद्‌द्विजसत्तमैरिति ।

तद्राजक्रयस्योपरीत्युच्यते । यदुक्तमसम्भवेऽन्नस्य भोज्यं सोमक्रये कृत इति, तद्विवृणोति — आपद्धर्मा यथैवान्य इति ।

हन्तैवमप्रमाणत्वमिति । प्रायश्चित्तैरपनेष्यामि [2]पापमिति दुष्टमपि शरीररक्षणाय क्रियते । तेन प्रमाणान्तरमूलेयं क्रिया । शास्त्रप्रमेयस्यादोषवत्त्वस्याभावादिति ।

विशेषश्च तयोर्महानिति । अनुज्ञाशास्त्रस्य साफल्यं दर्शितम् । ननु —

जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः ।
आकाशमिव पङ्केन न स पापेन लिप्यते ।। [मनु० १०।१०४ ।।]

इति सामान्येनानुज्ञानात् सिद्ध एवासौ विशेषः । किमनेनेत्याशङ्क्याह — सामान्येनाभ्यनुज्ञानादिति ।

तथा न *मनुजाप्युक्तम्* — कर्मणा येन केनेति । सामान्येनाभ्यनुज्ञानेऽपि समर्थो धर्ममाचरेदिति प्रायश्चित्तमुपदिशन्नस्ति सामान्याभ्यनुज्ञानेऽपि दोषलेश इति [3]दर्शयतीति ।

---

१. अन्यैः आ० मा० । २. दोषमिति आ० मा० ।
३. दर्शयतीति आ० मा० इत्यत्र नास्ति ।

उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत् ।। इति ।
धर्मश्च प्रथमं तावत्प्रायश्चित्तात्मको भवेत् ।
ततस्तेन विशुद्धस्य फलार्थोऽन्यो भविष्यति ।।

यत्तु क्रीतराजकभोज्यान्नत्ववचनं तद्गत्यन्तरासंभवे निर्दोषत्वज्ञापनार्थमेव ज्ञायते । तत्रापि तु —

प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते ।
स नाप्नोति फलं तस्य परत्रेति विचारितम् ।।

इति निन्दितत्वान्न संभवद्भोज्यान्तरेणापि लोकयात्रादिवशेन भोक्तव्यम् ।

यदि वा कालवैषम्यादसत्समविकल्पयोः ।
अर्थभेदव्यवस्थानादविरोधोऽवधार्यते ।।

दीक्षितान्नमभोज्यं स्यादक्रीते राजनि ध्रुवम् ।
क्रीते त्वभोजनं नाम मनःकर्म नियम्यते ।।

यथैवाश्राद्धभोजित्वं यथा वा मांसभक्षणम् ।
श्रेयसे विहितं धर्म्यं न सर्वत्र निषिध्यते ।।

श्राद्धमन्तर्दशाहं हि नियोगेन निषिध्यते ।
एकोद्दिष्टं सदेकेश्शां न तु पित्र्यं कदाचन ।।

तत्राश्राद्धभोजित्वनियमः स्वर्गायेति विज्ञायते । तथा षष्ठ्यष्टमीचतुर्दशीपञ्चदशीषु मांसभक्षणमैथुनादिक्रियाप्रतिषेधाद् गृहस्थस्यान्यत्र कामचारे प्राप्ते तदकरणनियमः श्रेयसे विहितः । यथाह —

न मांसभक्षणे दोषो न मद्ये न च मैथुने ।
प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ।। इति । [मनुस्मृतिः ५।५६]

ननु च वाक्यद्वयदर्शनात्तत्र संयोगपृथक्त्वं युक्तमिह त्वेकमेव दीक्षितान्नभोजनप्रतिषेधवाक्यं कथं प्राक् क्रयात् प्रतिषेधति तदुत्तरकालं च प्रागग्नीषोमीयसमाप्तेर्निःश्रेयसेन नियच्छतीति ।

**नन्वेवं भोजनसम्भवेन कश्चिदुत्तरमवधिं प्रतीक्षते । तत्र तदुपदेशानर्थक्यमत आह — तत्रापि तु — प्रभुः प्रथमकल्पस्येति ।**

**न तु पित्र्यं कदाचनेति । सपिण्डीकरणात्पूर्वमेकोद्दिष्टं श्राद्धम् । सपिण्डीकरणेन तु पितृत्वमापन्ने पितरि पित्र्यं पार्वणविधानेनेति ।**

**निःश्रेयसेन नियच्छतीति । निःश्रेयसेन कारणेन प्रयोजनेनेत्यर्थं इति ।**

तदुच्यते—

स्याद्वाक्यद्वयमेवैतदवधिद्वयकल्पितम् ।
यः पूर्वः प्रतिषेधोऽत्र संस्थितः क्रीतराजके ॥
परोऽवधिः पुनस्तस्य नैकत्वादवकल्पते ।
द्वितीयान्नादनानुज्ञादर्शनात्तेन गम्यते ॥
अभोजनविधिर्नूनमस्त्यन्योऽप्यान्तरालिकः ।
न हि पूर्वमनुज्ञाते स्यादनुज्ञान्तरं पुनः ॥
वरणादभ्यनुज्ञाते निर्वापे किमनुज्ञया ॥

यथाध्वर्योर्वरणवेलायामेव सर्वं यजमानेन यज्ञोपयोगि स्वयमनुज्ञातमेवेति निर्वापमन्त्रे प्रसवशब्देन तदानीन्तनयजमानानुज्ञाप्रकाशनं न क्रियते तथेह क्रीतराजकावस्थानुज्ञातभोजनानुज्ञावचनमग्नीषोमीयसमाप्तौ पुनरुक्तमित्यवश्यं नियमेन प्रतिषेधान्तरेण वा वारितस्यानुज्ञानार्थमित्यवगम्यते ।

प्रतिषिद्धाभ्यनुज्ञा च विकल्पेनैव दूष्यते ।
पर्युदस्ताभ्यनुज्ञानं तस्मादिष्टं व्यवस्थया ॥

दीक्षितान्नविशिष्टाभोजननियमो हि श्रेयोर्थिभ्यो विधीयते ।

पाश्चात्यभोजनानुज्ञा नान्यथा ह्युपपद्यते ।
अदृष्टार्थप्रसङ्गित्वान्न विधिश्चायमिष्यते ॥
एवं विषयनानात्वादविरोधादबाधनम् ।

अष्ट[1]चत्वारिंशद्वर्षं वेदब्रह्मचर्याचरणस्यापि स्मृतावेव पक्षान्तरविकल्पो-

**ननु यद्यनुज्ञावचनमिदं तदा भोजननियमविधिं कल्पयेत् । अपूर्वविधिरेव त्वयं भोजनस्य फलाय कस्मान्न भवतीत्याशङ्क्याह — अदृष्टार्थप्रसङ्गित्वादिति । दृष्टप्रयोजनैव भोजनभावना न साध्यान्तरमपेक्षते । तादृश्यास्तु विधिः किमर्थं इति पर्यनुयोगो यदि न प्रतीततादृरूप्यापरित्यागेन परिहर्त्तुं शक्यते । तदा न प्रतीतिबोध उचित इति पर्युदस्ताभ्यनुज्ञानेन परिह्रियत इति ।**

---

१. आपस्तम्ब ध० सू० १।२।१२ ।

पनिबन्धनादाश्रमान्तरविषयत्वसंभवाद्वा विरोधाभावः । तथा हि—

वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् ।
सामर्थ्याश्रमयोग्यत्वमङ्गीकृत्यैतदुच्यते ॥ [मनुस्मृतिः ३।२]

गौतमेनापि द्वादशवर्षाण्येकवेदब्रह्मचर्यं चरेदिति [ गौ० ध० सू० १।२।५१] प्रथमकल्पमाशुगार्हस्थ्यप्रतिपत्त्यर्थमुक्त्वा द्वितीयकल्पे द्वादश प्रति-वेदं वा सर्वेष्वि [गौ० ध० सू० १।२।५२] त्यष्टाचत्वारिंशत्परिग्रहः कृतः ।

स्मृतावेव पक्षान्तरविकल्पोपन्यासादिति उपक्रममात्रम् । यतः स्मृता-वेव वैदिकोऽपि पदार्थपक्षोऽङ्गीकृतस्ततो नास्ति विरोध इत्युक्त्वा अथ वा यथा स्मार्त्तयोरसमत्वात् पक्षयोर्विषयभेदादविरोधो वाच्यः, तथैव स्मृत्यनुष्ठितार्थेन[1] वेदेना[2]प्युच्यतामित्याशङ्क्याह — आश्रमान्तरविषयत्व-सम्भवाच्चेति । अध्ययनार्थमुपेतस्य समाप्ताध्ययनस्याश्रमविकल्पः स्मर्यते । तस्याश्रमविकल्पमेके ब्रुवते । ब्रह्मचारी गृहस्थो भिक्षुर्वैखानस इति । तत्र च गार्हस्थ्यानेकवैदिक[3]कर्माधिकारकारणत्वादितरेषां चातथाभावान्न समो-विकल्पः । तेन गार्हस्थ्यायोग्यं प्रतीतरोपदेशः । तद्विषयत्वञ्चाष्टाचत्वारिंश-द्वर्षपक्षस्य । वैदिकस्तु पक्षो नायोग्यं प्रति सम्भवतीति गार्हस्थ्यस्य योग्योऽस्य विषयस्तेनाविरोध इति । आश्रमान्तरविषयत्वञ्चाष्टाचत्वारिंशद्वर्षपक्षस्य स्मृतावेव पक्षान्तरोपन्यासादवगम्यत इति स्मृतिव्याख्यया दर्शयति—तथा हि वेदानधीत्येति ।

वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम् ।
अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ॥ [मनु ३।२।] इत्ययोग्यं प्रत्युपदेशासम्भवाद् गार्हस्थ्याश्रमयोग्यं प्रति वैदिकस्य पक्षस्योपदेशः वेदान् वेदौ वेदमिति च सामर्थ्यमेव विशेषकमङ्गीकृत्योच्यते । यदि वेदान् वेदौ वाधीयानस्य कालोऽतिक्रामेत्तत एकमपि वेदमधीत्य शीघ्रं गृहस्थो भवेदिति[4] । ततश्चाष्टाचत्वारिंशद्वर्षपक्षो गार्हस्थ्यासमर्थविषयो विज्ञातो भवति । एवं तावन्मानवे गौतमीयेऽप्याह—तथा गौतमेनापीति । प्रथमकल्प-

---

१. स्मृत्यनुज्ञातार्थेन आ० मा० । २. वेदेनापि युक्तमित्याह आ० मा० ।
३. वैदिककर्माधिकरणत्वात् । ४. भजेदिति आ० मा० ।

तत्रैवं शक्यते वक्तुं येऽन्धपङ्ग्वादयो नराः ।
गृहस्थत्वं न शक्ष्यन्ति कर्तुं तेषामयं विधिः ॥
नैष्ठिकब्रह्मचर्यं वा परिव्राजकतापि वा ।
तैरवश्यं ग्रहीतव्या तेनादावेतदुच्यते ॥
उपकुर्वाणकेनैव याप्यः कालो बहुस्ततः ।
संप्राप्य ज्ञानभूयस्त्वं पवित्रैः क्षीणकल्मषैः ॥
सर्वाश्रमातिरिक्तेन स्वाध्यायेनैव शोधितः ।
स्तोकैरप्याश्रमाचारैर्गतिमिष्टां गमिष्यति ॥

द्वैपायनादयश्चाहुः—

परिनिष्ठितकार्यस्तु स्वाध्यायेनैव हि द्विजः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥ [म० भा० १२।६०।१२]

यानि च प्रतिदिनप्रयुज्यमानऋक्सामयजुर्ब्राह्मणकल्पव्याख्यानादि-ब्रह्मयज्ञनिमित्तानि फलानि क्रत्वनिक्कतपुरुषेभ्योऽन्यानर्थक्यप्रसङ्गाद्व्यावृत्तानि जपध्यानमात्राधिकृतब्रह्मचारिपरिव्राजकविषयत्वेनावतिष्ठन्ते तान्यपि स्वाध्याय-

वचनस्य मानवीयवचनव्याख्यानेनैव व्याख्यातत्वात् द्वितीयकल्पवचनं व्याचष्टे । तत्रैवं शक्यते वक्तुमिति । अध्ययनार्थमुपेत उपकुर्वाणः कथं[1] मैत्र इति । मैत्रीप्रधानस्तस्मादध्ययननिष्ठः स्यान्नहि तत्र कस्यचित् पीडा यथा यज्ञेषु । अथ वा मैत्रो मित्रदेवत्यः । त्रयीमयी च मित्रदेवता । तेन त्रयीमयः स्यादिति ।

जपध्यानमात्राधिकृतेति । स्वाध्यायो हि सर्वानाश्रमिणः प्रतिविधीयते । ब्रह्मचारिणां हि प्रकृत्योक्तं गुरोः कर्मशेषेण यजत[2]इति । तथा परिव्राजकमपि ।

अधियज्ञं ब्रह्म जपेदाधिदैविकमेव च ।
आध्यात्मिकञ्च सततं वेदान्ताभिहितञ्च यत् ॥ इति ।

तत्राध्ययने च ज्ञाने च फलार्थवादो यज्ञानधिकृतं प्रति, अध्ययनज्ञानयोः पारार्थ्येनाज्ञानात् । फलमात्रेयो निर्देशात् [मी० सू० ४।३।१८] इति

१. कथमित्यस्य स्थाने कः इति आ० मा० ।
२. जपेदिति आ० मा० ।

विज्ञानभूयस्त्वेन भूयिष्ठानि भविष्यन्तीति प्रतिवेद[दं]ब्रह्मचर्योपदेशः। यो वा कश्चिन्मेधावितया शीघ्रमेव वेदचतुष्टयमप्यधीत्य यथोपपत्तिकालं तदर्थज्ञानाभियोगमपरित्यजन् ग्रहणान्तं वेत्येतत्पक्षाश्रयणेन गृहस्थो भवेत्तं प्रति द्वादशाष्टाचत्वारिंशद्वर्षपक्षावनेनैव स्मरणेन पूर्वपक्षीकृताविति नातीव श्रुतिविरुद्धत्वेनोदाहर्तव्यौ।

तेन नैव श्रुतिस्मृत्योर्विरोधोऽतीव दृश्यते।
श्रुत्योरेव ह्यसौ दृष्टः क्वचिद्वा नैव विद्यते॥
तेनात्र यदि वा कर्मप्रयोगोऽयं निरूप्यते।
यदि वा बाध्यमानत्वमुक्तं बाह्यं स्मृतीः प्रति॥

फलमपि बोधयेत्। तत्त्वपेक्षया कल्प्यमानमप्यपेक्षाविरहादन्यानर्थक्यदोषापत्तेश्च यज्ञाधिकृतविषयं नेति तदितरविषयं विज्ञायते। कथं परिव्राजकस्य मोक्षविरोधिना फलान्तरेण सम्बन्ध इति चेत् इष्यत एवासावपरिनिष्ठ ज्ञानस्याश्रमधर्ममात्रात्। तथा हि परिव्राजकं प्रकृत्योक्तम्।

इदं शरणमज्ञानामिदमेव विजानताम्।
इदमन्विच्छतां स्वर्गमिदमानन्त्यमिच्छताम्॥ इति॥

ज्ञानोदयफलप्रतिबन्धिपापक्षयफलानाश्चाध्ययनज्ञानानामस्त्येव मोक्षोपयोग इति। एवं गार्हस्थ्ययोग्यं प्रति द्वादशवर्षाणि तदयोग्यं प्रत्यष्टाचत्वारिंशद्वर्षाणि ब्रह्मचर्यमुद्दिश्य गौतमेनोक्तम्— ग्रहणान्तं वेति। [1]इदमपि गार्हस्थ्ययोग्यमेव प्रति सामर्थ्यपेक्षया व्याख्येयम्। यदि शीघ्र-[2]मेवातिमेधावितया वेदं वेदौ वेदानप्यधीत्य गार्हस्थ्यं प्रतिपत्तुं शक्तस्तदा द्वादशापि वर्षाणि न प्रतीक्षेतेति। ततश्च वेदविरुद्धस्य पक्षस्य स्मृत्यैव निराकृतत्वान्न स्मृतेर्वेदविरुद्धत्वमित्याह—यो वा कश्चिदिति। वेदचतुष्टयमिति नावधार्यते किन्तु वेदचतुष्टयमपीति द्रष्टव्यम्। वेदानधीत्य वेदौ वेति [मनु० ३।२] *मानवात्*। यथोपपत्ति उपपत्त्यनुरूपं उपपन्नमित्यर्थः। कालं गार्हस्थ्यकालम् अपरित्यजंस्तस्याधीतस्य वेदचतुष्टयस्यार्थज्ञानेऽभियोगमपरित्यजन्। गृहस्थो भवेत् अर्थज्ञानमपि कुर्वन्नुपपन्नं गार्हस्थ्यकालमतिक्रामन्नित्यर्थः। तं प्रत्यष्टाचत्वारिंशद्वर्षपक्षस्तावत्स्मृत्यैव परित्यक्तो मनाक् सम्भाव्यमानविरोधद्वादशवर्षपक्षोऽपि यावत्त्यक्त इति। यद्यपि

१. तदपि आ० मा०। २. शीघ्रमेधावितया पू० मा०।

एतद्धि जैमिनिनात्यन्तं हितोपदेशिना जिज्ञासुभ्यः प्रतिपाद्यते ।

यावदेकं श्रुतौ कर्म स्मृतौ वान्यत्प्रतीयते ।
तावत्तयोर्विरुद्धत्वे श्रौतानुष्ठानमिष्यते ॥

व्रीहियवादिष्वपि तावत्प्रत्यक्षश्रुतिविहितेषु यदि कश्चिद्यावज्जीवमप्येकमेव पक्षमाश्रित्य व्यवहरेन्न स कदाचिदप्युपालम्भास्पदं गच्छेत् ।

ततश्च तुल्यकक्षापि यदि नाम स्मृतिर्भवेत् ।
तथापि नैव दोषोऽस्ति श्रुत्यर्थमनुतिष्ठताम् ॥

यानि स्मृतिवचनान्यर्थमात्रमेव प्रतिपाद्य मूलभूताः श्रुतीरनुदाहृत्य निवृत्तव्यापाराणि तेषु श्रुत्यनुमानव्याजसापेक्षप्रामाण्येषु सत्सु वेदवचनमनपेक्षत्वात्प्रमाणतरत्वेन सुतरां विश्रम्भणीयमिति श्रद्धाविशेषेण ग्राह्यतरार्थं विज्ञायते । सूत्रार्थोऽप्येवं योजयितव्यः । श्रौतस्मार्तविज्ञानविरोधे यदनपेक्षम-

**जैमिनिनार्थतत्त्वं विचार्य[1] दर्शनीयम् । अवगतार्थानां तु व्यवहारो यथावगति सम्भवत्येव । न तत्र *जैमिनेरधिकारस्तथापि* व्यवहारार्थमर्थतत्त्वनिरूपणात् यत्रार्थसाम्येऽपि व्यवहारविशेषो न्याय्यस्तत्राप्तेन [2]हितैषिणा अर्थनिरूपणेन लोकपरम्पराव्यवहारनिरूपणमपि क्रियते । यदि न क्रियते तदा *जैमिनिना* अर्थसाम्यस्योक्तत्वात् तद्गौरवादेव व्यवहारसाम्यमपि कुर्युः । तदेतदाह—एतद्धि जैमिनिनेति ।**

**यावदेकं श्रुतौ कर्मेति । यावत्स्मृतौ न[3] तन्मूलभूतायां श्रुतौ तावदेवम् । यदा तु श्रुतावुपलप्स्यते, तदा नैवमिति यावच्छब्दार्थः ।**

**ननु यदि श्रुतिमूलत्वात्स्मृतिः प्रमाणं कथं तदर्थाननुष्ठानम् । अथाननुष्ठानं कथं प्रामाण्यं, विकल्पेन ह्यनुष्ठानाद्विरोधिनोरुभयोः प्रामाण्यमुपपादितमत आह — व्रीहियवादिष्वपीति । यथार्थत्वं हि प्रामाण्यम्, न तदर्थानुष्ठानेन भवति । यस्त्वप्रामाण्यं पक्षेऽभिहितम् । तत्पुरुषेण तस्य विद्यमानस्या[4]ध्यनाश्रयणात्फलाभावेनेति । एवमनुपपत्तिं परिहृत्य श्लोकं व्याचष्टे—यानि स्मृतिवचनानीति ।**

---

**१. विचार्यंदानीं दर्श॰ आ॰ मा॰ ।**
**२. हितैषिणार्थनिरूपणं नोपरते व्यवहारनिरूपणमपि क्रियते आ॰ मा॰ ।**
**३. आ॰ मा॰ नेति नास्ति । ४. स्याप्याश्रयणात् आ॰ मा॰ ।**

पेक्षावर्जितं यस्य वापेक्षणीयमन्यन्नास्तीत्येवं पाठद्वयेऽपि पूर्वसूत्रात्प्रमाणशब्द-मनुषङ्गेण संबध्य यदनपेक्षं तत्तावत्प्रमाणं स्यादिति तदानीन्तनव्यवहारमात्र-प्रतिपत्त्यर्थमेवोच्यते ।

ततश्च न तावच्छाखान्तरीयविद्यमानश्रुतिमूलत्वाशङ्कायां सत्यामेवा-त्यन्तनिराकरणपक्षः परिग्रहीष्यते । न च प्रत्यक्षश्रुत्यर्थानुष्ठानहानिः । यदा तु क्वचिच्छाखान्तरे स्मरणमूलं श्रुतिरपि प्रत्यक्षीभविष्यति तदोभयोस्तुल्य-बलत्वाद्विकल्पो भविष्यत्येव । नन्वनेनैव न्यायेन स्वशाखाविहितविरुद्धशाखा-न्तरगतमप्यग्राह्यं स्यात् । सत्यम्,

वार्तामात्रेण तद्यावत्तावन्नैव ग्रहीष्यते ।
यदा तु श्रवणं प्राप्तं तदास्मान्न विशिष्यते ॥
अतश्चैवं श्रुतिस्मृत्योर्विशेषोऽनेन दर्श्यते ।
नात्यन्तमेव बाध्यत्वं न चाप्यत्यन्ततुल्यता ॥

## बाह्यग्रन्थानामप्रामाण्यनिरूपणम् ।

यद्वा यान्येतानि त्रयीविद्भिर्न परिगृहीतानि किञ्चित्तन्मिश्रधर्मकञ्चुक-च्छायापतितानि लोकोपसंग्रहलाभपूजाख्यातिप्रयोजनपराणि त्रयीविपरीता-संबद्धदृष्टशोभादिप्रत्यक्षानुमानोपमानार्थापत्तिप्राययुक्तिमूलोपनिबद्धानि सांख्य-योगपाञ्चरात्रपाशुपतशाक्यग्रन्थ[1]परिगृहीतधर्माधर्मनिबन्धनानि विषचिकित्सा-वशीकरणोच्चाटनोन्मादनादिसमर्थकतिपयमन्त्रौषधिकादाचित्कसिद्धिनिदर्शन -

पाठद्वयेऽपीति । **यदपेक्षावर्जितमित्येकः पाठो दर्शितः । अपरोऽपि यदनपेक्ष्यं तत्तावदिति ।**

यद्वा यान्येतानीति । **सांख्यादिपरिगृहीतधर्माधर्मनिबन्धनानि यान्ये-तानि तेषामेवैतदनपेक्षत्वमुच्यते । युक्तञ्चैतत् तथा हि एवंविधानीति । तेषां स्मृत्याभासापादकं रूपं कथयति—त्रयीविद्भिरित्यादिना ।**

किञ्चित्तन्मिश्रेति । **तेन त्रयीवित्परिगृहीतेन मिश्रत्वाद्धर्मकञ्चुकस्य धर्मसदृशस्य छाया पतितानि प्रतिपाद्यस्य धर्माभासत्वात् तच्छायया धर्मशास्त्रवदाभासमानानि । त्रयीविपरीतत्वेन त्रय्यप्रसूतत्वात् तदसम्बद्धेन दृष्टशोभादिना मूलेन प्रायेणोपनिबद्धानि, प्रत्यक्षादीनां निरस्तत्वात् प्रत्यक्षाद्याभासान्येव प्रत्यक्षाद्यभिमतानि प्रत्यक्षादीन्युक्तानि । विषचिकित्सा-**

---

१. °शाक्यनिर्ग्रन्थ परि° इति काशी मुद्रितपाठः ।

बलेनाहिंसासत्यवचनदमदानदयादिश्रुतिस्मृतिसंवादिस्तोकार्थगन्धवासितजीविका-प्रायार्थान्तरोपदेशीनि यानि च बाह्यतराणि म्लेच्छाचारमिश्रकभोजना-चरणनिबन्धनानि तेषामेवैतच्छ्रुतिविरोधहेतुदर्शनाभ्यामनपेक्षणीयत्वं प्रति-पाद्यते । न चैतत् क्वचिदधिकरणान्तरे निरूपितं न चावक्तव्यमेव गाव्यादि-शब्दवाचकत्वबुद्धिवदतिप्रसिद्धत्वात् ।

यदि ह्यनादरेणैषां न कल्प्येताप्रमाणता ।
अशक्यैवेति मत्वान्ये भवेयुः समदृष्टयः ॥
शोभासौकर्यहेतूक्तिकलिकालवशेन वा ।
यज्ञोक्तपशुहिंसादित्यागभ्रान्तिमवाप्नुयुः ॥

ब्राह्मणक्षत्रियप्रणीतत्वाविशेषेण वा मानवादिवदेव श्रुतिमूलत्वमाश्रित्य सचेतसोऽपि श्रुतिविहितैः सह विकल्पमेव प्रतिपद्येरन् ।

तेन यद्यपि लभ्येत स्मृतिः काचिद्विरोधिनी ।
मन्वाद्युक्ता तथाप्यस्मिन्नेतदेवोपयुज्यते ॥
त्रयीमार्गस्य सिद्धस्य ये ह्यत्यन्तविरोधिनः ।
अनिराकृत्य तान्सर्वान् धर्मशुद्धिर्न लभ्यते ॥
महाजनगृहीतत्वं पित्राद्यनुगमादि च ।
तेऽपि द्वीपान्तरापेक्षं वदन्त्येव स्वदर्शने ॥

तत्र श्रद्धामात्रमेवैकं व्यवस्थानिमित्तं सर्वेषां स्वपितृपितामहादिचरिता-नुयायित्वात् । यैश्च मानवादिस्मृतीनामप्युत्सन्नवेदशाखामूलत्वमभ्युपगतं तान्प्रति सुतरां शाक्यादिभिरपि शक्यं तन्मूलत्वमेव वक्तुम् । को हि शक्नु-यादुत्सन्नानां वाक्यविषयेयत्तानियमं कर्तुम् । ततश्च यावत्किञ्चित्कियन्तमपि

दिसमर्थानां या कादाचित्की सिद्धिस्तन्निदर्शनबलेन जीविकाप्रायार्था-न्तरोपदेशीनि । तच्चार्थान्तरं श्रुतिस्मृत्यर्थनिक्षेपेण तद्गन्धवासितमुप-दिशन्ति । वासना च निरूढधर्मत्वसाहित्यात् तद्वदाभासः । म्लेच्छाचारो बहुभिः समाहृतैकदेशस्य मिश्रान्नस्य भोजनाचरणम् — तस्य निबन्ध-नानीति ।

न चात्र पूर्वपक्षासम्भवादधिकरणानारम्भसम्भवादेवंविधस्येत्याह— महाजनपरिगृहीतत्वमित्यादि ।

कालं कैश्चिदाद्रियमाणं प्रसिद्धि गतं तत्प्रत्यक्षशाखाविसंवादेऽप्युत्सन्नशाखा-मूलत्वावस्थानमनुभवतुल्यकक्षतया प्रतिभायात् । अत आह — **विरोधे त्वनपेक्ष्यं स्यादिति** [मी० सू० १।३।३। ]। पारतन्त्र्यं तावदेषां स्मर्यमाणपुरुष-विशेषप्रणीतत्वात्तैरेव प्रतिपन्नं शब्दकृतकत्वादिप्रतिपादनादराच्च पार्श्वस्थैरपि ज्ञायते।

वेदमूलत्वं पुनस्ते तुल्यकक्षमूलत्वाक्षमयैव लज्जया च मातापितृद्वेषिदुष्ट-पुत्रवन्नाभ्युपगच्छन्ति। अन्यच्च स्मृतिवाक्यमेकमेकेन श्रुतिवचनेन विरुध्येत। शाक्यादिवचनानि तु कतिपयदमदानादिवचनवर्जं सर्वाण्येव समस्तचतुर्दशविद्या-स्थानविरुद्धानि त्रयीमार्गव्युत्थितविरुद्धाचरणैश्च बुद्धादिभिः प्रणीतानि। त्रयीबाह्येभ्यश्चतुर्थवर्णनिरवसितप्रायेभ्यो व्यामूढेभ्यः समर्पितानीति न वेद-

पारतन्त्र्यं तावदिति। [1]कल्पसूत्राधिकरणसिद्धान्तवत्पारतन्त्र्यमतोऽत्र **वेदमूलत्वेन धर्मशास्त्रत्वं निराकर्त्तव्यम्**। वेदमूलत्वञ्च तद्व्यवहारिभि-रेवानभ्युपगमान्निराकर्त्तुं शक्यते। अन्यच्चेति सूत्रार्थोपन्यासः। एकमेके-नेति। ईदृशो विरोधो वेदमूलस्यापि भवति न तु सकलवेदशाखाप्रसिद्धेन सकल[2]वेदवादिपरिगृहीतचतुर्दशविद्यास्थानानु[3]गृहीतेन चातुराश्रम्यादिना वैदिकेन मार्गेणेति दर्शयति — त्रयीमार्गव्युत्थितेति। यस्य यत्प्रमाणं स तन्मूलमुपदेशं करोति। त्रयीमार्गे तु [4]विप्रतिपन्नस्तद्विरुद्धाचारः कथं त्रयीधर्मानुपदिशेदिति। त्रयीबाह्येभ्यश्चेति। त्रय्यनुसारिणस्तन्मूलमेवोपदेशं गृह्णन्ति, नान्यम्। तेन तेषां ग्रहणात्तन्मूलत्वानुमानमुक्तम्। तच्चात्र विपरीतम्। चतुर्थवर्णः शूद्रो म्लेच्छादिर्निरवसितो यैर्भुक्ते पात्रं भस्मनापि न शुद्ध्यतीति।

किञ्चाप्तस्य लोकहितैषिणो वचनं प्रमाणीक्रियते। सर्वश्चात्महिता-विरोधेन तदर्थमेव वा परार्थे यतते। बुद्धस्तु क्षत्रियः सन् न त्वेवं ज्यायसीं वृत्तिमभिपद्येत कर्हिचिदित्यापद्यपि निषिद्धां ब्राह्मीं वृत्तिं प्रवक्तृत्व-

---

१. कल्पसूत्राधिकरणसिद्धं तावत् पारतन्त्र्यमतोऽवेदमूलत्वेन धर्मशास्त्रत्वं निराकर्तव्यम्— पू० मा० ।

२. सकलवेदादि आ० मा० । ३. °स्थानानुगतेन आ० मा० ।

४. मार्गे तु व्युत्पन्नः आ० मा० ।

मूलत्वेन संभाव्यन्ते । स्वधर्मातिक्रमेण च येन क्षत्रियेण सता प्रवक्तृत्वप्रतिग्रहौ प्रतिपन्नौ स धर्ममविप्लुतमुपदेक्ष्यतीति कः समाश्वासः । उक्तं च ।

परलोकविरुद्धानि कुर्वाणं दूरतस्त्यजेत् ।
आत्मानं योऽतिसंधत्ते सोऽन्यस्मै स्यात्कथं हितः ॥ इति

बुद्धादेः पुनरयमेव व्यतिक्रमोऽलंकारबुद्धौ स्थितः । येनैवमाह ।

कलिकलुषकृतानि यानि लोके
मयि निपतन्तु विमुच्यतां तु लोकः, इति ।

स किल लोकहितार्थं क्षत्रियधर्ममतिक्रम्य ब्राह्मणवृत्तं प्रवक्तृत्वं प्रतिपद्य प्रतिषेधातिक्रमासमर्थैर्ब्राह्मणैरननुशिष्टं धर्मं बाह्यजनाननुशासनाद्धर्मपीडामप्यात्मनोऽङ्गीकृत्य परानुग्रहं कृतवानित्येवंविधैरेव गुणैः स्तूयते । तदनुशिष्टानुसारिणश्च सर्वे एव श्रुतिस्मृतिविहितधर्मातिक्रमेण व्यवहरन्तो विरुद्धाचारत्वेन ज्ञायन्ते ।

तेन प्रत्यक्षया श्रुत्या विरोधे ग्रन्थकारिणाम् ।
ग्रहीत्राचरितॄणां च ग्रन्थप्रामाण्यबाधनम् ॥

प्रतिग्रहौ प्रपद्यो[1]पदिशन्नात्मनोऽपि[प्य] हितमाचरति । स एवं विपरीतमतिः । कथमन्येषा[2]मुपादेयवाक्यः स्यादित्याह—स्वधर्मातिक्रमेण चेति । मनोस्तु क्षत्रियस्यापि स्वधर्मातिक्रमो वेदेनाननुज्ञानात् । यद्वै किञ्चिन्मनुरवदत्तद्भेषजमिति । आत्मानं योऽतिसन्धत्ते सोऽन्यस्मै स्यात्कथं हि तत् इति सामान्यन्यायमुपन्यस्य बुद्धादेः पुनरयमतिक्रमस्तावदस्ति । अत्रैव चालङ्कारबुद्धिरिति अत्यन्तव्यामूढतां व्यनक्ति—बुद्धादेः पुनरिति ।

प्रतिषेधातिक्रमासमर्थैरिति । न शूद्राय मतिं दद्यान्न चास्योपदिशेद्धर्ममिति [मनु० ४।८०] च प्रतिषेधः । अनेन चानुपदेश्योपदेशलक्षणोऽपि व्यतिक्रम इति दर्शितम् । तेन प्रत्यक्षया श्रुत्येति । तेन प्रत्यक्षया श्रुत्या विरोधिनस्तत्र व्युत्थानात् तद्विरुद्धाचरणाच्च ये [3]ग्रन्थकारास्तथा विरोधिन एव ग्रन्थग्राहिणस्तदनुष्ठातारश्च तेषां यः कार्यो ग्राह्योऽनुमीयमानार्थश्च ग्रन्थस्तस्य प्रामाण्यबाधनम् । एषां हि वेदवादित्वात् यथा वेदमूलत्वनिश्चयस्तथा वेदव्युत्थानादवेदमूलस्य सूत्रकारेण सर्वगतो विरोधः सूत्रित इति चानेन व्याख्यातमिति ।

---

१. °ग्रहौ प्रतिपद्याप्यात्मनोऽप्यहित° आ० मा०।

२. सर्वेषां आ० मा० । ३. ये ग्रन्था इति आ० मा० ।

न ह्येषां पूर्वोक्तेन न्यायेन श्रुतिप्रतिबद्धानां स्वमूलश्रुत्यनुमानसामर्थ्यमस्ति।

न च शाखान्तरोच्छेदः कदाचिदपि विद्यते।
प्रागुक्ताद्वेदनित्यत्वान्न चैषां दृष्टमूलता ॥

न हि यथोपनयनादिस्मृतीनां शाखान्तरदृष्टश्रुतिसंवादः। एवं चैत्यकरण तद्वन्दनशूद्रसंप्रदानादीनां[1] संवादः संभवति। मूलान्तरकल्पनं च प्रागेव प्रत्याख्यातम्।

लोभादिकारणं चात्र बह्वेवान्यत्प्रतीयते।
यस्मिन्संनिहिते दृष्टे नास्ति मूलान्तरानुमा ॥

शाक्यादयश्च सर्वत्र कुर्वाणा धर्मदेशनाम्।
हेतुजालविनिर्मुक्तां न कदाचन कुर्वते ॥

न च तैर्वेदमूलत्वमुच्यते गौतमादिवत्।
हेतवश्चाभिधीयन्ते ये धर्मा दूरतः स्थिताः ॥

एत एव च ते येषां वाङ्मात्रेणापि नार्चनम्। [मनुस्मृतिः ४।३०]
पाखण्डिनो विकर्मस्था हैतुकाश्चैत एव हि ॥

एतदीया ग्रन्था एव च मन्वादिभिः परिहार्यत्वेनोक्ताः।

या वेदबाह्याः स्मृतयो याश्च काश्चित्कुदृष्टयः।
सर्वास्ता निष्फलाः प्रोक्तास्तमोनिष्ठा हि ताः स्मृताः ॥

[मनुस्मृतिः १२।९५]

तस्माद्धर्मं प्रति त्रयीबाह्यमेवंजातीयकं प्रामाण्येनानपेक्ष्यं स्यादिति सिद्धम् ।४॥।

न ह्येषामिति। पूर्वोक्तेन न्यायेन श्रुत्यनुमानसामर्थ्यं न ह्येषामस्ति। तत्र हेतुः—श्रुतिप्रतिबद्धानामिति। यच्च भिन्नप्रस्थानाः शाखामूलं भविष्यन्ति। उच्छिन्नत्वाच्च नोपलभ्यन्त इत्युक्तम्। तत्राह—न च शाखान्तरोच्छेद इति। अनादिर्वेद इति कर्तृविरहादवगतम्। यदि चास्यानुवृत्तिकारणं नियतं स्यात्तदानादित्वमुपपद्यते। यदि तु कदाचित् सामग्र्युच्छेदः सम्भवेदनादौ काले न कदाचिन्न भूता सामग्रीति कथमनादेर्वर्त्तमानकालं यावदनुवृत्तिः। आदिमतस्तूत्पत्तिकालादारभ्य तावत्कालं नोच्छेदसामग्रीभूतेति स्यादनुवृत्तिः। तस्मादकर्तृत्वेन नित्यत्वस्य सिद्धत्वान्नोच्छेदसम्भव इति। वेदवादिशिष्टविगर्हितत्वाच्चावेदमूलत्वमिति विरोधिशब्दस्यार्थं व्याचक्षाण आह—एत एव च ते येषामिति। एतदीया ग्रन्था एवेति ।४॥

१. संप्रदानकदाना काशीमुद्रितपाठः।

## शिष्टाकोपाधिकरणम् ।

शिष्टाकोपे एवं तावत् पुरुषार्थस्मृतीनामविरोधे विरोधे च प्रमाणत्वाप्रमाणत्वे निरूपिते, संप्रति तु क्रत्वर्थानां यज्ञोपवीतोदकाचमनदक्षिणहस्ताचरणस्मृतीनां बहुश्रुत्यर्थमध्यपातिनीनां विरोधाविरोधमात्रमेव विचार्यते। तन्निर्णये तु कृते पूर्वाधिकरणाभ्यां प्रमाणत्वाप्रमाणत्वसिद्धिः।

कथं पुनर्विरुद्धत्वं कथं वा न विरुद्धता।
श्रुत्यर्थविगुणत्वेन तदभावेन चेष्यते॥

यदि यज्ञोपवीतादीनि क्रतुमनुप्रवेश्यमानानि चोदकप्रयोगवचनाभ्यां न परिगृह्यन्ते निराक्रियन्ते वा ततो विरोधः। यदि पुनरानुगुण्यात्प्रकरणादिपठितवत्स्मृत्यनुमितवाक्यसंयोगेन क्रतुमनुप्रविशन्ति न च पूर्वगृहीतं किञ्चिद् बाधन्ते ततो न विरुद्धानीति। अन्यत्तु दर्शनं सत्यपि विरोधे प्रमाणप्रमेयबलाबलविसंवादात्संदेहः। तथा हि—

श्रुतिस्मृत्योर्विरुद्धत्वे ज्ञातमेव बलाबलम्।
धर्मधर्मिविरोधे च धर्मिणो बलवत्तराः॥

वक्ष्यति हि **अङ्गगुणविरोधे च तादर्थ्यादिति** [मी० सू० १२।२।२५] न चेह स्मार्तः कस्यचिदपि श्रौतस्य पदार्थस्य बाध आशङ्क्यते। क्रमकालपरिमाणानि तु समस्तपदार्थधर्मत्वेन निश्चितानि। तत्र यदि प्रमाणबलाबलम्

एवं तावत्पुरुषार्थस्मृतीनामिति। **नानेन क्रत्वर्थानां पूर्वाधिकरणाविषयत्वमुच्यते किन्तु पुरुषार्थानां प्रमाणत्वाप्रमाणत्वे निरूपिते समाप्ता निरूपणेति। क्रत्वर्थानां त्वस्ति वक्तव्यविशेषो यत्रेदमधिकरणमित्याह**— सम्प्रति तु क्रत्वर्थानामिति। **चोदकः प्रकृतावेव पदार्थानां विधायकः। अथ वा विकृतौ प्राकृतपदार्थप्रापकः। यथा च परिग्रहापरिग्रहौ तदुपरिष्टाद्भविष्यतीति।**

अङ्गगुणविरोधे च तादर्थ्यादिति। [मी० सू० १२।२।२५] **अङ्गं दीक्षणीयाप्रधानं ज्योतिष्टोमः, तयोरुभयोरपि गुणः पर्वकालत्वम्। तस्योभयत्र सम्पादनाभावे कस्य वैगुण्यमनुज्ञायतामित्यत्रोक्तमङ्गगुणोऽपि प्रधानं सगुणं कर्त्तुमनुष्ठीयते, नान्यत् प्रयोजनमङ्गेन सगुणेन। यदि च तदनुष्ठानेन**

बलीयस्ततो बलवच्छ्रुतिप्रमेयत्वाद् दुर्बलस्वभावैरपि क्रमादिभिराचमनादीनां बाधः। प्रमेयबलाबलबलीयस्त्वे तु पदार्थधर्मेभ्यः क्रमादिभ्यः पदार्थत्वेनाचमनादयो बलीयांस इति सत्यपि स्मृत्याख्यप्रमाणे दुर्बलत्वे बलवदाश्रयानपि स्वरूपेण दुर्बलान् क्रमादीनेव बाधिष्यन्ते ।

किं युक्तमविरुद्धत्वं क्रत्वर्थाङ्गस्मृतेरपि ।
न तदर्थक्रियायां हि श्रुतं किञ्चन हीयते ।।

यथैव विज्ञातबलाबलैरपि श्रुत्यादिभिः समाख्यापर्यन्तैर्यावन्तः शेषाः प्रमीयन्ते ते सर्वे शेषिकथंभावेन प्रार्थिता इत्थंभावेन सहानारभ्यवादाधीतैर्गृह्यन्ते ।

स्मृत्या तथैव संतुष्ट्या[1] शिष्टाचारेण चार्पिताः ।
गृह्यन्ते भावनाभाव्यैरपूर्वैः साधनांशवत् ।।

कथंभावापेक्षितापूर्वोपकारस्याज्ञातपरिमाणाङ्गसाध्यत्वाद् यावत् किञ्चिद्येन केनचिदपि [2]प्रमाणेन प्राप्नोति तत्सर्वमङ्गं भवति। तस्मादाचमनादीन्यपि यज्ञप्रयोगाङ्गानीत्युपन्यस्तेऽभिधीयते ।।५।।

[3]न शास्त्रपरिमाणत्वात्पदार्थोऽभ्यधिको भवेत् ।

साक्षात्प्रधानं विगुणमापद्यते। कस्तदुपेक्ष्य परम्पराया गुणवत्तामाद्रियते। तस्मादङ्गगुणबाधेन प्रधानगुणोपादानमिति ।

किं युक्तमविरुद्धत्वमिति। उभयप्रकारेऽपि पूर्वपक्षे विरोधस्याङ्गीकृतत्वात्तददर्शनेन सिद्धान्तोपक्रममधिकरणं सूत्रितम्—शिष्टाकोपेऽविरुद्धमिति चेदिति। [मी० सू० १।३।५]। अतो विरोधाभावोपदर्शनम्। पूर्वपक्षिणा तूपदर्शिते विरोधेऽपि उभयथा सिद्धान्तो भविष्यति। विरोधेऽपि प्रमेयबलाबलबलीयस्त्वाद्विरोधपरिहाराद्वेति[1] ।।५।।

न शास्त्रपरिमाणत्वादिति। [मी० सू० १।३।६] [2]शास्त्रे परिमितक्रमेयत्तासु निर्माणैर्मितत्वात् कृतमानत्वादित्यर्थः। स्मार्त्तप्रवेशे च पदार्थो-

१. सप्तम्या काशीमुद्रितपाठः।
२. प्रमाणेन न प्राप्नोतीति काशीमुद्रितपाठः। ३. मी० सू० १।३।६।
१. हाराच्चेति आ० मा०। २. शास्त्रेण परिमितैः क्रमेयत्तासु आ० मा०।

शास्त्रितं परिमाणं हि कोऽतिक्रमितुमर्हति ॥
शास्त्रेण हि पदार्थानां परिमाणं त्रिधा गतम् ।
क्रमेयत्ताशुनिर्माणं रूपं तदिह बाध्यते ॥
द्वाभ्यां श्रुत्यादिषट्काभ्यां कालेयत्ताक्रमात् स्थितान् ।
पदार्थाः प्रविशन्तो हि बाधेरन् स्मार्तलौकिकाः ॥

सर्वे हि पदार्थाः प्रधानकालान्न विप्रकृष्टव्या इति प्रयोगवचनेन प्रतिपादितम् । तत्र स्मार्तशिष्टलोकाचारप्रमाणकपदार्थानुष्ठानविक्षेपाद्दक्षिणैकहस्ताधीनविलम्बितानुष्ठानाच्च प्रधानप्रत्यासत्तिबाधप्रसङ्गः ।

समस्तप्रयोगकालाश्च पूर्वाह्णमध्यन्दिनादयोऽतिक्रम्येरन् । क्रमश्च यः श्रुत्यर्थपाठस्थानमुख्यप्रवृत्तिवत् क्रमैरवगतः, स च वैदिकपदार्थारूढतया विज्ञाताश्रयप्रमाणपरिमाणः सन्नन्यथात्वं क्षुतादिनिमित्ताचमनव्यवधानात्प्रतिपाद्येत । एवमायासस्रस्तोपवीतपुनःकरणव्यवधानेऽपि योजनीयम् ।

ऽभ्यधिको भवेत् । ततश्च पूर्वपरिमाणविरोधः[1] स्यादित्यनेन विरुद्धत्वं दर्शितम् । तत्र च प्रमाणबलाबलात् प्रमेयबलाबलस्य बलीयस्त्वमित्यत आह—शास्त्रितं परिमाणं हीति । न स्मृत्या दुर्बलया प्रमेयबलीयस्त्वमाश्रित्यातिक्रमितुं शक्यमिति । पूर्वार्द्धं विवृणोति—शास्त्रेण हीति । आशु निर्माणशब्देन कालावच्छिन्नतोक्ता । सा च त्रेधा व्याख्यास्यते । प्रधानाददूरकालता, पूर्वाह्णत्वाद्यनतिक्रमः प्रयोगशैघ्र्यं चेति ।

द्वाभ्यां श्रुत्यादिषट्काभ्यामिति । प्रयोगश्रुत्या पूर्वाह्णादिश्रुत्या च कालः, श्रुतिलिङ्गादिभि[2]रियत्ता, श्रुत्यर्थादिभिः क्रम इति । स च वैदिक[3]पदार्थाविरुढतयेति । पौर्वापर्यमात्रं क्रमस्तस्य स्मार्त्तपदार्थानुष्ठानेऽप्यनपगम इत्याशङ्क्येदमुच्यते । न क्रमेणानुष्ठानमित्येतावत् प्रतिपन्नम्, किन्तु वैदिकवत् पदार्थान् प्रतिपद्य तदाश्रयक्रमप्रतिपत्तिरासीत् । तेन[4] नैषां स्मार्त्तपदार्थानामिति । निर्ज्ञाताश्रयो निर्ज्ञातश्रुत्यादि[5]प्रमाणस्य क्रमः । तेन श्रुत्यादिभिर्यस्य यतः पूर्वत्वं परत्वञ्च बोधितम्, ततस्तस्यानुष्ठीयमानं तत्प्रमाणकं स्यात् । तथा च निर्ज्ञात[6]प्रमाणः स्वाश्रयपरिमाणादेवैतावतां

१. माण भ्रंशः आ० मा० । २. °लिङ्गादिरियत्ता आ० मा० ।
३. पदार्थरूढयेति आ० मा० । ४. तेनेति आ० मा० न पठति ।
५. प्रमाणकश्च आ० मा० । ६. परिमाणः आ० मा० ।

यो ह्यसावन्तः स्मार्तः पदार्थः क्रियते तदा ।
तस्य क्रमप्रमाणं हि न श्रुत्याद्यवगम्यते ।।

[1]अक्तपरिमाणस्य क्रमस्य नान्यदपि किञ्चित् प्रमाणमवकल्पते । तथा श्रुत्याद्यवगतप्रचयशिष्टपदार्थपरिमाणमवश्यमध्वर्य्वादिभिरविस्मृतसमस्तपदार्थ-निर्माणायावधारणीयम् । ततश्च प्रथमापरिकल्पितपश्चादागतस्मार्तपदार्था-नुष्ठाने पूर्वावधारणभ्रंशात्समस्तकृताकृतनिरूपणादनिवृत्तवैगुण्याशङ्कस्य सम्यक्कृतत्वदार्ढ्यनिमित्तसंस्कारपाटवाभावादपूर्वदौर्बल्येन न्यूनफललाभ-प्रसङ्गः ।

पदार्थानामिति । अथ वा श्रुत्यादिभिर्यावानवगम्यते, तावानेव वेति परि-माणम् । तत्राचमनादिप्रवेशे सत्याश्रयान्यत्वं तत्परिमाणान्यत्वञ्च स्फुटम् । प्रमाणविसम्वादमेवाह—यो ह्यसावन्तरिति । न च स्मार्तेन पदार्थेन क्रमा-न्तरं प्रमाणान्तराच्छ्रौतादेव भविष्यतीति वक्तव्यमित्याह—अक्तपरिमाण-स्येति । अञ्चतेर्गत्यर्थस्य ज्ञाने प्रयोगः । श्रुत्यादिषट्केन यावानवगत-स्तावानेवेत्यवगतपरिमाणस्य नेदानीमन्यत् परिमाणा[1]न्तरं स्मार्त्तेन पदार्थेन सह क्रमोपकल्पकं सम्भवतीति क्रमकालविरोधो दर्शितः । इयत्ताविरोधस्तु स्फुट एव । शास्त्रीयतां त्वस्याह—तथा श्रुत्याद्यवगतेति । यदा हि संख्याताः पदार्थाः पूर्वं भवन्ति तदानुष्ठानवेलायामस्मृतोऽस्ति पदार्थः । किंवा सर्वंकृतमिति[2] संख्यासम्पत्त्यसम्पत्तिभ्यामवगन्तुं शक्यते । तेन प्रयोगचोदन-येयत्तावधारणमाक्षेपाच्चोदितं कृतञ्च पदार्थचोदनाभिः प्रचयादिति प्रति-पादित इयत्ताविरोधः । ततश्च प्रथमेति । तत इदं विरुद्धत्वमापद्यत इतीयत्ताविरोधप्रसूतं विरोधान्तरं दर्शयति । [3]संख्येवान्तरावगमनपूर्व-संख्याबाधात् पूर्वावधारणभ्रंशः । न च स्मार्त्तैः सहेयत्तावधारणं चोदितम्[4] प्रयोगवचनस्यावसितव्यापारत्वादिति सूचितम् — प्रथमापरिकल्पितपश्चादा-गतेति । इयत्तावधारणभ्रंशात् सकलकृताकृतत्वनिश्चयस्ततोऽत्रानिवृत्त-

---

१. उक्तपरिमाणस्येति मुद्रितपुस्तकपाठः ।

१. °मन्यत् प्रमाणम् आ० मा० । २. सर्वमिति आ० मा० ।

३. संख्येयान्तरागमेन पूर्वं संख्याबाधात् आ० मा० ।

४. चोदितमिति पू० मा० न पठति ।

तच्चातिशयवत्सर्वं सार्थवादाद् विवेर्गतम् ।
न्यूनत्वाक्षमयावश्यं विरुद्धां बाधते स्मृतिम् ॥

परिमितश्रुत्याद्युपदेशातिदेशात्मकाङ्गशास्त्रपरिमाणत्वाद्वा न तद्बद्यति-वैगुण्याशङ्कस्यापूर्वदौर्बल्यम् । कथमवधारणभ्रंशात् कृताकृतत्वानिश्चय इत्यत्र हेतुः सम्यक्कृतत्वदार्ढ्यस्य निमित्तमियत्तावधारणहेतु[1]संस्कार-पाटवम् । यत इदानीमियत्तां स्मृत्वा तावताङ्गभूतत्वात् सम्यक् कृतत्व-दार्ढ्येन भवितव्यम् । तस्याभावादिति । अनिवृत्तवैगुण्याशङ्कस्यापूर्वं-दौर्बल्यम् । एवं प्रयोगचोदनया ह्यनेक[2]पदार्थोपक्रमसेकमनुष्ठानञ्चोदितम् । एकत्वं तस्यैकोपक्रमसंहारत्वेन । निवृत्ते ह्येकस्मिन् पदार्थेऽनुपरत एवापरं निवर्त्तयति । सकलनिवृत्त्युत्तरकालन्तूपरतमिति । तेनैका तावतां क्रिया । सेयं कृतत्वाशङ्कयोपरमत अकृतत्वात् शङ्कया चानुपरमत उपसंहारशैथिल्या-न्नोपसंहारेण सम्यगवच्छिद्येत । तत्रानुष्ठितसाधनानामङ्गप्रधानानां कस्य-चिदुपादाना[3]दुत्पद्यत एवापूर्वम् । [4]अकृतसम्यगनुष्ठानशङ्कया तु तस्य-दौर्बल्यम् । अनुष्ठानेन तान्यपूर्वनिवृत्तौ विनियुज्यन्त इत्येतावद्धि शास्त्र-प्रमेयम् । तत्र फलसाधनशक्त्यतिशयवतो विनियुक्तस्यपकर्षातिशयो हीयते, न शक्तिसामान्यमिति । एतच्छास्त्र[5]चोदितपदार्थानुसारेणावसीय-मानं शास्त्रेऽन्तर्भवति । तथा च श्रुतिर्यदेव श्रद्धया[6] करोति तदेव वीर्यवत्तरं भवति । तथा स्मृतिः श्रद्धाकृते ह्यक्षये ते [मनु० ४।२२६] इति । अथवा वाचनिक एवायमर्थः । सम्यक् क्रियायामश्रद्धधानस्य फलापकर्ष इति । तच्चातिशयवत् सर्वमिति । अर्थवादः प्रवर्त्तनामुपबृंहयति । प्रवर्त्तनाति-शयात्तु प्रमेयफलेऽतिशयावगतिरिति ।

परिमाणविरोध एव सूत्रस्य व्याख्यानान्तरमाह — परिमितेति ।

---

१. संस्कारोऽवगम्यते । इदानीं आ० मा० । २. पदार्थोपरक्तमेकम् आ० मा० ।
३. उपपद्यत एवानुपूर्वम् । आ० मा० ।
४. असम्यगनुष्ठानशङ्कयेति आ० मा० ।
५. बोधित आ० मा० । ६. विद्यया पू० मा० ।

रिक्ताङ्गशास्त्रावकाशः । सहकर्तव्यतावगतेषु[1] च पदार्थेषु सर्वात्मना त्वरमाणस्य यावानेवात्यन्ताशक्त्या कालविप्रकर्षो भवति, तावन्मात्रमेव प्रयोगवचनोऽनुमन्यते। शक्तस्तु क्षणमात्रमपि यदि विक्षेपं कुर्यात्तदस्य प्रयोगवचनविधिर्न सहेत। तस्मात् त्रिविधस्यापि शास्त्रपरिमाणस्यान्यथाकरणान्नाचमनाद्यविरुद्धमिति ॥६॥

उच्यते तेष्वदर्शनाद्विरोधस्येति [मी० सू० १।३।८] वा समाप्तिः। अनन्तरसूत्रे विप्रतिपत्त्युपात्तविरोधाभावोक्तेरनुपयुज्यमानत्वादिह च प्रक्रान्तविरोधाभावस्यावश्यवचनीयत्वात्, उपयोगसद्भावेऽपि च काकाक्षिवदनुषङ्गेण तन्त्रेण चोभयसंबन्धात्।

अपि वा कारणं दृष्टं यस्मादेषु न गृह्यते।
तस्मान्नाचमनादीनां क्रतुश्रुतिविरुद्धता ॥

विरोधत्याजितश्रुतिविरुद्धता। विरोधत्याजितश्रुतिमूलस्य हि स्मरणस्य

परिमितानि तावच्छ्रुत्यादीन्युपदेशात्मकान्यङ्गशास्त्राणि शेषलक्षणोपदर्शितानि । तत्परिमाणत्वञ्चाङ्गानाम् । यावन्ति श्रुत्यादीनि श्रौतादिविभागेन तावन्त्येवाङ्गानि। अतस्तावद्भिरेव [1]प्रधाननिर्वृत्ताववधारितायां नाङ्गान्तरनिक्षेपाय शास्त्रान्तरावकाश इति।

कालविरोधमेव प्रकारान्तरेणाह—सह कर्त्तव्यतावगतेष्विति । सहकर्त्तव्यतावगतिरेकप्रयोग[2]वचनोक्ता व्याक्षेपविरोधिनीति ॥६॥

प्रक्रान्तविरोधाभावस्येति । यद्यपि विरोधमङ्गीकृत्यापि सिद्धान्तः कर्त्तुं शक्यते तथापि शिष्टाकोपेऽविरुद्ध [मी० सू० १।३।५] मित्यविरोधेन[3] प्रक्रान्तस्य सिद्धान्तस्य समाप्तिः कर्त्तव्येति। अपि वा कारणं दृष्टमिति। दृष्टकारणविरहात् प्रामाण्यम् । सति च प्रामाण्ये प्रयोगवचनपरिग्रहादुत्तरकालीना क्रमकालपरिमाणकल्पना। तेनाविरोधोऽपि भवतीति । यथा तावत् कारणादर्शनात् प्रामाण्यम्, तदाह — विरोधत्याजितेति। विरोधादप्यप्रामाण्यं सत्येव हेतुदर्शने, तदभावे तद्विरोधाङ्गीकरणेऽपि नाप्रमाण-

---

१. सहकर्तव्यापगतेषु मुद्रितपुस्तकपाठः।

१. प्रधानोपकारनिवृत्ताव° आ० मा०। २. वचनोत्थाप्याक्षेप आ० मा०।

३. विरोधेन सिद्धान्तस्य प्रक्रमात् तत्समाप्ति. आ० मा०।

यस्य मूलान्तरमिदं नामेत्येवं संभवदुत्प्रेक्षामात्रेणोपप्लवते तत्राल्पेनैव प्रयासेन निराशङ्कमप्रमाणत्वं निश्चीयते ।

यत्र तूत्प्रेक्षयाप्यन्यत् कारणं नावलम्ब्यते ।
अत्यन्तानन्यमूलत्वाच्छ्रुतितस्तत्प्रमाणता ॥

न वाचमनादिस्मृतेः कामक्रोधलोभद्वेषमानलज्जादिकारणं किञ्चित्संभाव्यते, यन्मूलत्वेन श्रुतिमूलत्वमपह्नूयेत ।

अनन्यमूलिकायां च श्रुतौ मूलेऽवधारिते ।
विरोधेऽपि प्रमाणत्वं स्मृतेः श्रुत्या न वार्यते ॥

इयत्ताक्रमकालाश्च श्रौतत्वाद्बलवत्तराः ।
पदार्थधर्मभावात्तु दुर्बलत्वादबाधकाः ॥

ननु पूर्वभावित्वात्प्रमाणबलाबलमेव प्रमेयबलाबलाज्ज्यायस्त्वेन प्रतिभाति । उच्यते—

नैव तावच्छ्रुतिस्मृत्योः स्वरूपेण विरुद्धता ।
बलाबलपरीक्षा वा प्रमेयद्वारिका हि सा ॥

प्रमेयगतं हि विरोधमालोच्य प्रमाणविरोधबुद्धिर्भवति ।

तद्यस्यामेव वेलायां विरोधो दृश्यते तयोः ।
प्रमेययोः स्वरूपस्थं तस्मादेव[1] बलाबलम् ॥

येषां पदार्थधर्मत्वाद्दौर्बल्यं पूर्वनिश्चितम् ।
न तेषां श्रुत्यवष्टम्भात्तत्पश्चादपगच्छति ॥

पदार्थत्वेन येषां च बलीयस्त्वं निरूपितम् ।
न स्मृतेर्दुर्बलत्वेन पुनस्तदपनीयते ॥

---

**तेति । अस्मिन्नेव विरोधाङ्गीकरणावसरेऽपि द्वितीयसंशयेऽपि सिद्धान्तः । इतश्च विरोधे प्रमाणतेत्याह—इयत्ताक्रमकालाश्चेति ।**

**ननु च प्रमेयबाधे प्रमाणबाधस्य नियतत्वात् स्वीयमप्रामाण्यम्[1]-**

---

१. तस्यामेव काशीमुद्रितपाठः ।

१. स्वीयं प्रामाण्यमपेक्षमाणा श्रुतिः आ० मा० ।

नित्यमेवाप्रमाणं यत्तदेवं बाधमर्हति ।
आपेक्षिकाप्रमाणं तु स्यात्प्रमाणमपेक्षया ॥
न च प्रमेयदौर्बल्यबलीयस्त्वनिबन्धनम् ।
प्राप्तं स्मृतिप्रमाणत्वं प्रमाणस्थेन बाध्यते ॥
न च प्रमेयदौर्बल्ये सत्यपि श्रुतिबाधनम् ।
तावता मन्दतेजस्त्वात्स्मृतिस्तां नैव बाधते ॥
एतदेव श्रुतेः पार्श्वाद् बहु यत्र स्मृतिर्वृथा ।
महास्मृत्यापि या काचिन्न शक्या बाधितुं श्रुतिः ॥
युगपत्प्राप्तिहेतुश्च विरोधस्तुल्यकार्ययोः ।
इह तु द्वयमप्येतन्नास्ति तेनाविरुद्धता ॥

नपेक्षमाणाच्छ्रुतिर्बाधेतैव स्मृतिप्रमाणत्वमत आह—न च प्रमेयदौर्बल्य इति । [१]नासौ प्रमेयबाधः प्रमाणेऽपि संक्रामति, यतो बाधिता अपि क्रमादयः पदार्थैस्तदानुगुण्येनात्मानं निवेशयन्त्येवेति । तावतेति प्रमेयबलीयस्त्वमात्रेणेति । एवं तावदङ्गीकृतेऽपि विरोधे यथा प्रामाण्यं भवति तथोक्तम् ।

इदानीं विरोधाभावं प्रागुक्तमेवाङ्गीकृतेऽपि दौर्बल्ये प्रामाण्यहेतुं व्युत्पादयति—युगपत्प्राप्तिहेतुश्चेति । न युगपत्प्राप्त्या विनियोजकप्रमाणव्यापारविप्रकर्षो वार्यते । श्रुत्यादीनामविरोधप्रसङ्गात् । किन्तु क्रमवद् विधिव्यापारभेदनिर्देशः ।

यदि हि पदार्थवत् क्रमोऽपि विनियोज्यः स्यात्तदा वेदवेदिक्रमाचमनयोर्विरोधः स्यात् । स च कथं स्यात्, यदि पदार्थवत्क्रमोऽप्युपकुर्यात् । [२]यदा तु करणोपकारसाधनत्वेन [३]विनियुक्तान् पदार्थान् गृहीत्वा प्रयोगं विदधत् तद्विशेषणं पदार्थक्रमं श्रुत्यादिसहायो नियच्छति विधायकस्तदा विलक्षणकार्यत्वादयुगपत्कालता [४]ततो यथा प्रतीतपदार्थानुसारित्वं

१. इह आड्यारमातृकायां प्रमादोऽवलोक्यते आ० मा० २६३ पृष्ठसंख्यायाः दशमीं पंक्तिमारभ्य २६५ इत्यस्याः पृष्ठसंख्यायाः पञ्चमीं पंक्ति यावत् पूर्वलिखितस्यैव विषयस्य पुनर्लेखनमस्तीति ।
२. यदितु आ० मा० ।
३. पदार्थान् विनियुक्ताद् गृहीत्वेति आ० मा० ।
४. ततो यथेत्यारभ्य न तद्विरोधितेति यावत् आ० मा० नास्ति ।

कालेयत्ताक्रमाणां हि सर्वान्ते प्राप्तिरिष्यते ।
सुजघन्यप्रमाणोऽपि पदार्थः पूर्वमश्नुते ॥
प्राप्तेषु हि पदार्थेषु क्रमः पश्चादपेक्षते ।
यदा प्राप्तेष्वसौ क्लृप्तः केन पश्चाद्विरुध्यते ॥
परिमाणमपि त्वार्थमविस्मरणसिद्धये ।
स्वयमालोच्यते प्राज्ञैः स्मार्तैः सह तदिष्यते ॥

न केनचित् प्रमाणेन पदार्थेयत्ता परिच्छिद्यते। तत्र यदि तेन विनान्ये समस्तपदार्थस्मृतिहेतवो न स्युस्तत एतदप्येकं कारणमिति परिमाणमपि स्थाप्येत। तस्यामपि त्ववस्थायां यथा श्रौतमात्रपरिमाणमसमाप्य समाख्या-पर्यन्तप्रापितपदार्थगतपरिमाणावधारणमाश्रीयते तथा स्मृत्याचारपर्यन्तावगत-परिमाणमाश्रयिष्यत इति निर्दोषम् ।

कालोऽपि च प्रयोगाङ्गे सर्वान्ते सोऽपि गृह्यते ।
स्मार्तैः सह ससाहित्यमाशुत्वं वा प्रपत्स्यते ॥
कालो ह्ययं प्रधानस्य सर्वाङ्गसहितस्य यः ।
अङ्गैरविप्रकृष्टत्वमीदृशस्यैव चोद्यते ॥

क्रमस्य न तद्विरोधिता। क्रमवत्कालपरिमाणयोरपि प्रयोगविषयत्वादन्ते प्राप्तिः। सेयं विवृता — परिमाणमपि त्वार्थमिति। कालोऽपि च प्रयोगाङ्ग-मिति च। नहि पदार्थोत्पत्तौ विनियोगे वा कालापेक्षा, किन्तु प्रयोगे कर्त्तव्ये कदेति तेन स्मृत्याचारावसानैः प्रमाणैः पदार्थेषु प्रापितेषु[1] तस्य प्राप्तिः । अतश्च साहित्यमङ्गप्रधानयोः प्रत्यासन्नकालत्वमाशुत्वमदीर्घ-कालत्वं प्रयोगः प्रतिपद्यमानः स्मार्त्तैः सह यादृशं भवति तादृशं प्रति-पत्स्यत इति ।

स्मार्त्तैः सहाशुत्वप्रतिपत्तिं[2] विवृणोति — कालो ह्ययमिति । त्वर-माणेन यावति काले प्रधानमनुष्ठातुं शक्यते तावतो न विलम्बः कार्यः। गृहीताङ्गस्य चानुष्ठेयता । अतोऽयं प्रधानकालो भवति, यतः सर्वाङ्ग-सहितेन तेन व्याप्यते। तावदेव तस्याशुत्वमिति । साहित्यसम्पत्तिमपि विवृणोति — अङ्गैरविप्रकृष्टत्वमिति । गृहीतसर्वाङ्गस्य यावद्भिर्व्यवधानम-

---

१. विनियुक्तेषु आ० मा० । २. संपत्तिम् आ० मा० ।

तस्माद्यत्किञ्चनप्रमाणकसर्वपदार्थप्राप्त्युत्तरकालापेक्षितसंबन्धः कालोऽपि नैव सर्वोपसंहारविरोधीति तेषु क्रमकालपरिमाणेष्वदर्शनाद्विरोधस्येत्युच्यते। यद्वा तेष्वाचमनादिषु क्रियमाणेष्वदर्शनाद्विरोधस्येति सूत्रार्थयोजना।
अपि च—

शौचयज्ञोपवीतादेर्न स्वतन्त्रपदार्थता।
सर्वं ह्यङ्गप्रधानार्थं तेन न व्यवधायकम्॥

अतदङ्गेन हि तुल्यकक्षेण व्यवधानं भवति न सर्वपदार्थेन[1]।

वेदं कृत्वा यदा वेदिमकृत्वाचामति क्षुते।
वेदिमेव करोतीति स वक्तुं शक्यते तदा॥
वेदिरेव ह्यनाचम्य कुर्वतो विगुणीभवेत्।
तामेव सगुणां कर्तुं शुद्ध्या न व्यवधास्यते॥

शक्यपरिहारं तावद्भिरङ्गीकृतमेवेति तथापि वेदोच्चारणसम्बन्धादिति। कथं ब्रह्मयज्ञप्रकरणसम्बद्धस्य मन्त्र[1]प्रयोगमात्राङ्गत्वमिति वक्तव्यम्। तदुच्यते — गृहीतस्य स्वाध्यायस्याहरहः पाठः प्राशुभावोपयोगिप्रयोगानुसन्धानप्रयोजन इति वक्ष्यति। कर्माभ्यासानुसन्धानं विध्यर्थश्चात्र गम्यत इति। तच्च पठ्यमानैरक्षरैः पूर्वानुभूतशक्त्यनुसारेण क्रियमाणं नादृष्टार्थम[2]ङ्गमपेक्षते। अध्ययनमप्यक्षराणि प्रतिगुणीभूतत्वान्न तावदपूर्वार्थं दृष्टशक्तित्वाच्च धर्मानपेक्षम्। अक्षराणि तु वेदत्वाय यथाक्रमं स्वरविशेषादीनुच्चारणगतान् ब्राह्मणत्वानुच्चारयितृगतान् शुश्रुषाराधितगुरुमुखाभिव्यक्त्यादीनुपादानगतान् विशेषानपेक्षन्ते। तथाचमनादीनपीति युज्यते। यदा तु [3]वेदस्यैवं सम्पत्ति[4]रित्यवगतं तदा ब्रह्मयज्ञेऽन्यत्र वा यत्र वेदः पठनीयस्तत्राचमनादिप्राप्तिः। [5]अध्ययनवर्जनस्य तूपादानद्वारत्वादन्यत्राप्राप्तिरिति। एवं प्रयोगप्रक्रमे तावदाचमनप्राप्तिस्तन्मध्ये च नैमित्तिकस्याचमनस्य वेदे[6]सिद्धवदङ्गीकरणं दृश्यत इत्याह — तथाचमनसोमेनेति। [?]

---

१. सर्वप्राणतेन काशीमुद्रितपाठः।

१. प्रयोगाङ्गत्वमिति आ० मा०। २. नादृष्टमङ्गम् आ० मा०।
३. वेदत्वस्यैवम् आ० मा०। ४. °रित्यवधृतम् आ० मा०।
५. अनध्याय इति आ० मा०। ६. वेदे आ० मा० न पठति।

इममेवार्थमभिप्रेत्य **भाष्यकारेणोक्तं** न चैवंजातीयका अर्थाः पदार्थानां व्यवधातारो भवन्तीति। इतरथा ह्यङ्गप्रधानार्थत्वेऽनाश्रीयमाणे शून्यहृदयवचनमेवैतत्स्यात्।

तस्मादाचमनादीनां क्रतुभिः संग्रहे सति।
पश्चात्प्राप्तक्रमेयत्ताकालशास्त्राविरोधिता ॥

नन्विदं[1] यज्ञोपवीतमुदाहर्तव्यम्। दर्शपूर्णमासादिषु 'उपव्ययते देवलक्ष्ममेव तत्कुरुते' इति क्रत्वङ्गप्रत्यक्षविधानात्। तथा काठके चानारभ्यवादविधिना सर्वयज्ञगतयजनयाजनसंबन्धोऽध्यापनाध्ययनसंबन्धश्च श्रूयते। प्रसृतेन वै यज्ञेन देवा स्वर्गं लोकमायन्नप्रसृतेनासुरान्पराभावयन्। प्रसृतो ह वै यज्ञोपवीतिनो यज्ञोऽप्रसृतोऽनुपवीतिनो यत्किञ्च ब्राह्मणो यज्ञोपवीत्यधीते यजत एव तत्तस्माद्यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा यज्ञस्य प्रसृत्या इति'। तथाचमनविधिरपि 'दक्षिणत उपवीयोपविश्य हस्ताववनिज्य त्रिराचम्य द्विः परिमृज्य दर्भाणां महदुपस्तीर्योपस्थं कृत्वा प्राङ्मुख उपविश्य स्वाध्यायमधीयीत' इति, यद्यपि ब्रह्मयज्ञप्रकरणे श्रूयते तथापि 'वेदोच्चारणसंबन्धात्तदङ्गत्वेनापि' इति तावज्ज्ञायमानं सर्वयज्ञानां मन्त्रवत्प्रयोगित्वात्तदङ्गं भवति। तथा च 'न सोमेनोच्छिष्टा भवन्ति' इति प्राप्ताचमनप्रतिषेधार्थमवधार्यते। दक्षिणाचारत्वं तु—

यत्राहत्य विधानेन स्यात्सव्याञ्जलिचोदना।
तस्मादेव निवर्तेत नान्यत्राशङ्क्यतेऽपि तत् ॥

'यथा वै दक्षिणः पाणिरेवं देवयजनम्' इति प्रागुदक्प्रवणविधिपरे वाक्ये देवयजनवद्यज्ञाङ्गत्वौचित्यादुपमानमवकल्पते। तेन नात्रैकमपि विरोधबाधशङ्कायोग्यमित्यनुदाहरणानि। तस्मान्नैवैतदधिकरणान्तरम्।

**यज्ञाङ्गत्वौचित्यादिति। देवयजनस्य यज्ञाङ्गत्वं स्तोतुः दक्षिणः पाणिरुपमानं कृतम्। तद् यदि देवयजनस्य प्रतिपाद्यं रूपं दक्षिणे पाणौ सिद्धं स्यात्तदोपपद्यते, नान्यथा। तेन दक्षिणे पाणौ तत्प्रसिद्धिरनुमीयत इति।**

---

१. नन्विह काशीमुद्रित पाठः।

## वेदाविरुद्धशाक्यादिवचसामप्रमाण्यनिरूपणम् ।

सूत्राणि तु पूर्वाधिकरणाक्षेपपरिहारसूत्रत्वेनैव व्याख्यातव्यानि । यत्तर्हि वेदविहितं न बाधते शिष्टान् वा वेदविदो न कोपयति । विहारारामण्डलकरण-वैराग्यध्यानाभ्यासाहिंसासत्यवचनदमदानदयादि, तद्बुद्धादिभाषितं प्रमाणेना-विरुद्धमिति चेत्, न । शास्त्रपरिमाणत्वात् । [मी० सू० १।३।६] परमितान्येव हि चतुर्दशाष्टादर्श वा विद्यास्थानानि धर्मप्रमाणत्वेन शिष्टैः परिगृहीतानि वेदोप[1]वेदाङ्गोपाङ्गाष्टादशधर्मसंहितापुराणशास्त्रशिक्षा-दण्डनीतिसंज्ञकानि, न च तेषां मध्ये बौद्धार्हतादिग्रन्थाः स्मृता गृहीता वा ।

प्रतिकञ्चुकरूपेण पूर्वशास्त्रार्थगोचरम् ।
यदन्यत् क्रियते तस्य धर्मं प्रत्यप्रमाणता ॥

तथा च प्रायश्चित्तादिदानकाले यो वाक्यमात्मीयमन्यकविकृतं वा श्लोकं सूत्रं वोच्चार्यं मानवादिप्रायश्चित्तं दद्यान्न कश्चिदपि धर्मार्थं प्रतिपद्येत ।

वेदेनैवाभ्यनुज्ञाता येषामेव प्रवक्तृता ।
नित्यानामभिधेयाज्ञां मन्वन्तरयुगादिषु ॥

---

चतुर्दशाष्टादश वेति ।

**अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः ।**
**धर्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्दश ॥ [या० स्मृ० १।३]**
**आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः ।**
**अर्थशास्त्रञ्चतुर्थञ्च विद्या ह्यष्टादशैव ताः ॥ इति ।**

**उपवेदो धनुर्वेद आयुर्वेदो गान्धर्ववेदः । दण्डनीतिरर्थशास्त्रम् । एतदुत्तरश्लोकार्थप्रदर्शनेन कृतम् । इतरैः पूर्वश्लोकस्य उपाङ्गं मीमांसा दर्शितानामेवाङ्गानां विशेषदर्शनार्थमेवोपन्यासः — शिक्षेति ।**

तस्य धर्मं प्रत्यप्रमाणतेति । **तज्जनिताया प्रतिपत्तेरनुष्ठानानङ्गत्वान्न ततः प्रतीतानुष्ठितस्यादृष्टसाधनत्वम् । अश्रेयःसाधनत्वाच्च न धर्मता । कारणञ्चात्र स्वाध्यायाध्ययनविधेरर्थावबोधनियम इति । यद्येवं मन्वादि-वचनानामप्यप्रामाण्यापत्तिरित्यत्राशङ्क्याह** — वेदेनैवाभ्यनुज्ञातेति ।

---

[1] उपवेदाः — आयुर्वेदधनुर्वेदगन्धर्ववेदाः । अङ्गानि — शिक्षादीनि । उपाङ्गं — पूर्वोत्तरमीमांसाद्वयम् । दण्डनीतिः — अर्थशास्त्रमित्यर्थः ।

तेषां विपरिवर्तेषु कुर्वतां धर्मसंहिताः ।
वचनानि प्रमाणानि नान्येषामिति निश्चयः ॥

तथा च 'मनोर्ऋचः सामिधेन्यो भवन्ति' इत्यस्य विधेर्वाक्यशेषे श्रूयते मनुर्वै 'यत्किंचिदवदत्तद्भेषजं भेषजतायै' इति प्रायश्चित्ताद्युपदेशवचनं पापव्याधेर्भेषजम् ।

न चैतच्छ्रुतिसामान्यमात्रं नित्येऽपि संभवात् ।
यज्ञेऽध्वर्युरिव ह्यस्ति मनुर्मन्वन्तरे सदा ॥
प्रतिमन्वन्तरं चैवं स्मृतिरन्या विधीयते ।
स्थिताश्च मनवो नित्यं कल्पे कल्पे चतुर्दश ॥
तेन तद्वाक्यचेष्टानां सर्वदैवास्ति संभवः ।
तदुक्तिज्ञापनाद्वेदो नानित्योऽस्तो भविष्यति ॥
प्रतियज्ञं भवन्त्यन्ये सर्वदा षोडशर्त्विजः ।
आदिमत्त्वं च वेदस्य न तच्चरित्रबन्धनात् ॥

उक्तं च—

यथर्तावृतुलिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा भाति युगादिषु ॥ इति ।
इतिहासपुराणं च कृत्रिमत्वेन निश्चिते ।
तथाऽप्यकृत्रिमे वेदे तद्विद्यात्वेन संमतम् ॥

एवं ह्युपनिषत्सूक्तम् । 'ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमथर्ववेदं चतुर्थमितिहासं पुराणं पञ्चमम्' इति । तेन प्रतिकल्पमन्वन्तरयुगनियतनित्य-ऋषिनामाभिधेयकृत्रिमविद्यास्थानकारा ये वेदेऽपि मन्त्रार्थवादेषु श्रूयन्ते तत्प्रणीतान्येव विद्यास्थानानि धर्मज्ञानाङ्गत्वेन सम्मतानि । तथा च ऋग्वेदादि-विहितयज्ञाङ्गभ्रेषप्रायश्चित्तविशेषानभिधाय 'यज्ञविज्ञात' इति । प्रायश्चित्तान्तरं

तद्भेषजमिति । भेषजतायाः प्रसिद्धायाः, स आश्रयस्तत्रैव सा व्यवस्थिता । भेषजताश्रयो हि भेषजमुच्यत इति । न च मन्वन्तराणामेवा-कस्मिकत्वात्तदधिकृतानां मनूनामप्याकस्मिकत्वं वक्तव्यम् । यतः स्थिताश्च मनवो नित्यं कल्पे कल्प इति प्रति जगत्कल्पमेव मनवो मन्वन्तराधिकृता इति । तथा ऋग्वेदादिभ्रेषेष्वित्यनेन वेदादेव साक्षाद्धर्मो ज्ञेय इति नायं

विदधत् त्रैविद्यवृद्धस्मृतिविहितविनष्टोद्देशेनैव विदधातीति गम्यते। अन्यथा हि प्रत्यक्षवेदविहितं सर्वं विज्ञातमूलविशेषत्वादविज्ञातमूलत्वेनानभिधेयमेव स्यात्। यदि च स्मर्यमाणवेदमूलग्रन्थनिबन्धनानामविज्ञातृवेदविशेषपूर्वकत्वेनापि स्थितानां प्रामाण्यं नाश्रीयेत तथा सति नैवाविज्ञातमूलं किञ्चिद्यज्ञे क्रियत इति तद्विनष्टप्रायश्चित्तविधिर्नैवोपपद्येत।

तस्माद्यान्येव शास्त्राणि वेदमूलानतिक्रमात्।
अवस्थितानि तैरेव ज्ञातो धर्मः फलप्रदः॥
यथैवान्यायविज्ञाताद्वेदाल्लेख्यादिपूर्वकात्।
शूद्रेणाधिगताद्वापि धर्मज्ञानं न संमतम्॥
तथातिक्रान्तवेदोक्तमर्यादाव्यवहारिणाम्।
संवादिष्वपि वाक्येषु नेष्यते धर्महेतुता॥
स्मर्यन्ते च पुराणेषु धर्मविप्लुतिहेतवः।
कलौ शाक्यादयस्तेषां को वाक्यं श्रोतुमर्हति॥
यथा कृतककर्पूरसुवर्णादिषु दीयते।
यद्बीजं तदपि व्यक्तमग्राह्यत्वात्प्रलीयते॥

तेन कर्मानुरूप्यसामान्यतो दृष्टार्थापत्तिबलात्तदभिप्रायकल्पितधर्माभासमध्यपतितं सन्मूलमप्यहिंसादि श्वदृति निक्षिप्तक्षीरवदनुपयोग्यविश्रम्भणीयं च

नियम आत्यन्तिकः, किन्त्वन्यस्मादपि। तच्चान्यत्र वेदमूलैव — त्रैविद्यवृद्धस्मृतिरिति। द्वयमुक्तम्। तत्र प्रथमस्योपपत्तिरन्यथा हीति। द्वितीयस्य यदि चेति। त्रैविद्यवृद्धस्य तस्यार्थस्य वेदविशेषमूलत्वं न ज्ञायते, अन्यस्य तु ज्ञातमूलता। अथ वा [1]अन्यस्याप्रामाण्यान्नैवाविज्ञातमूलस्य [2]यज्ञे क्रियास्तीति। अतिक्रान्तवेदोक्तमर्यादेति। अतिक्रान्तो वेदोक्तो यया यस्यां वा मर्यादायां तया व्यवहारिणामिति। वेदसम्वादिष्वपि विसम्वादे मध्यनिविष्टेषु नेष्यते धर्महेतुतेत्युक्तम्। तत्र दृष्टान्तो यथा कृतककर्पूरेति।

कर्मानुरूप्येति। जगद्वैचित्र्यान्यथानुपपत्त्या दृष्टातिरिक्तकारणसिद्धौ तद्विशेषः प्रायः कार्यकारणयोः सारूप्यादनायासात्मकस्य कर्मणस्तादृशमेव

१. अन्यस्यावेदमूलस्याप्रा° आ० मा०।
२. यज्ञे पक्षे क्रियैवास्तीति आ० मा०।

तन्मात्रोपलब्धं भवतीत्यवश्यं यावत्परिगणितधर्मशास्त्रेभ्यो नोपलभ्यते तावद-ग्राह्यं भवति ।

यदा शास्त्रान्तरेणैव सोऽर्थः स्पष्टोऽवधार्यते ।
तदा तेनैव सिद्धत्वादितरत्स्यादनर्थकम् ॥

तस्माद्यावत्परिगणितवेदादिशास्त्रव्यतिरिक्तनिबन्धनं तद्धर्मप्रमाणत्वेन नापेक्षितव्यमिति ।

## सदाचारप्रामाण्यनिरूपणम् ।

यत्त्वेतत् अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्, [मी० सू० १।३।७।] इति सूत्रम् । अत्र सदाचारानुदाहृत्य त्रिवर्गसिद्धयर्थं विचार्यते । तद्-विपरीतसंकीर्णव्यवहारिषु शिष्टेष्वपथ्यकारिवैद्यातुरवदविस्रम्भणीयचरितत्वात्सं-भाव्यमानवेदमूलत्वाच्च धर्मसंशयं दर्शयित्वा **धर्मस्य शब्दमूलत्वादशब्दमन-पेक्ष्यम्** [मी० सू० १।३।१।] इति पूर्वः पक्षः । क्वचिच्च **विरोधे त्वनपेक्ष्यम्** [मी० सू० १।३।३ । इत्येतन्न्यायानुसारेण । सदाचारेषु हि दृष्टो धर्मव्यतिक्रमः

**फलमित्यादि सामान्यतो दृष्टानुमानम् । अथ वोपमानमेवैतत् । सामान्यतो-दृष्टन्तु शूद्रसम्प्रदानकमपि दानं धर्मः । हिंसा च वैदिक्यप्यधर्म इत्यादि ।**

त्रिवर्गसिद्धयर्थमिति । **यद्यप्यदृष्टार्थाचारप्रामाण्यप्रतिपादनं तात्पर्यतो धर्मजिज्ञासाधिकारात् तथापि दृष्टार्थयोरपि कामार्थफलयोराचारयोर-नुषङ्गतः प्रामाण्यसिद्धेरेवमुक्तम् ।** त्रिवर्गसिद्धयर्थं [धर्म] संशयं दर्शयित्वेति । **निर्णयाङ्गत्वात् संशयस्य त्रिवर्गसिद्धयर्थता । संशये कारणमविस्रम्भणीय-चरितत्ववेदमूलत्वसम्भवौ । अविस्रम्भणीयचरितत्वे कारणं तद्विपरीतेन व्यवहारेण यः सङ्कीर्णो व्यवहारः तद्योगित्वं शिष्टेषु । यो हि वैद्य आतुरः प्रसिद्धमप्यपथ्यमाचरति, न तस्याचारात् तदातुरेणान्येनापि कर्त्तव्यमिति विस्रम्भो भवति । तद्वदन्यत्रापि ।**

क्वचिच्च विरोधे त्वनपेक्ष्यं स्यादिति [मी० सू० १।३।३ ।] **पूर्वशेष-त्वेनास्योपन्यासः । यदि हि क्वचिद्विरोधादप्रामाण्यभूतं तदा तत्सङ्कीर्ण-व्यवहारित्वेनाविस्रम्भादशब्दत्वं सिद्धयति । यदि त्वगृह्यमाणकारणानां**

साहसं च महतां प्रजापतीन्द्रवसिष्ठविश्वामित्रयुधिष्ठिरकृष्णद्वैपायनभीष्म-धृतराष्ट्रवासुदेवार्जुनप्रभृतीनां बहूनामद्यतनानां च। प्रजापतेस्तावत्प्रजापतिरुष-समभ्यैत्स्वां दुहितरम्, इत्यगम्यागमनरूपादधर्माचरणाद्धर्मव्यतिक्रमः। इन्द्रस्यापि तत्पदस्थस्य च नहुषस्य परदाराभियोगाद्धर्मव्यतिक्रमः। तथा वसिष्ठस्य पुत्रशोकार्तस्य जलप्रवेशात्मत्यागसाहसम्। विश्वामित्रस्य चाण्डालयाजनम्। वसिष्ठवत्पुरूरवसः प्रयोगः। कृष्णद्वैपायनस्य गृहीतनैष्ठिकब्रह्मचर्यस्य विचित्रवीर्यदारेष्वपत्योत्पादनप्रसङ्गः। भीष्मस्य च सर्वाश्रमधर्मव्यतिरेकेणावस्थानम्। अपत्नीकस्य च रामवत्क्रतुप्रयोगः। तथान्धस्य धृतराष्ट्रस्येज्या पाण्डुर्वाजितैर्धनैरित्यनधिकृतक्रिया। तथा युधिष्ठिरस्य कनीयोऽर्जितभ्रातृजाया-परिणयनमाचार्यब्राह्मणवधार्थमनृतभाषणं च। वासुदेवार्जुनयोः प्रतिषिद्धमातुल-दुहितृरुक्मिणीसुभद्रापरिणयनम्, उभौ मध्वासवक्षीबाविति सुरापानाचरणम्। अद्यत्वेऽप्यहिच्छत्रमथुरानिवासिब्राह्मणीनां सुरापानम्। केसर्यश्वाश्वतरखरोष्ट्रोभ-यतोदद्दानप्रतिग्रहविक्रयव्यवहारभार्यापत्यमित्रसहभोजनाद्युदीच्यानाम्। मातुल-दुहितृद्वाहासन्दीस्थभोजनादीनि दाक्षिणात्यानाम्। मित्रस्वजनोच्छिष्टस्पृष्टभोजनं

---

विरोधिनामप्याचाराणां स्मृतिवद्वेदमूलत्वमिष्यते तदा तद्विषयोऽयं स्वतन्त्र एव पूर्वपक्षहेतुरिति। यल्लोभाद्य[1]भिभूतेन शास्त्रगम्यवैरूप्यं क्रियते, स धर्मव्यतिक्रमः। यत्तु सन्निहितानर्थं जानतापि बलात्क्रियते तत्साहसमिति। इन्द्रेण गौतमभार्याहल्याभियुक्ता। ब्रह्महत्याभयादपक्रान्ते शचीपतौ [2]नहुषेण शची प्रार्थिता। उर्वशीवियोगकातरः पुरूरवास्तत्र तत्र नग्नो बभ्राम। कृष्णद्वैपायनस्य तावत् परदारेष्वपत्योत्पादनम्। तच्चापि ब्रह्म-चारिणस्तत्रापि तावन्न द्वितीयमिति निषिद्धं, त्रयाणां धृतराष्ट्रपाण्डु-विदुराणां जननमिति प्रसङ्गशब्देनोक्तम्। पाण्डुना दिशो जित्वाहृत्य धृतराष्ट्राय समर्पितैर्धनैरिति यागकथास्मरणायोक्तम्। न दुराचारत्वेना-प्रतिग्रहात्तस्य। तथा चानधिकृतस्यान्धस्य यागक्रियामेव दुराचारत्वेनोप-संहरति। योऽनेन धनुषैतल्लक्ष्यं विध्यति तस्य भार्या द्रौपदीति तत्पित्रा द्रुपदेन घोषितेऽर्जुनस्तत्कृत्वा द्रौपदीं भार्यार्थमेव लब्धवान्। ततस्तस्याः परिणयनमितरस्यानुचितम्। अथ कनीयसार्जितं ज्येष्ठमनुपजीवतीति

---

१. °ह्यभिभूतज्ञानेन आ० मा०। २. इन्द्रं पदमधिष्ठता नहुषेण आ० मा०।

सर्ववर्णपरस्परस्पृष्टताम्बूलादनतदवसानाचमननिर्णेजकधौतगर्दभारूढवस्त्रपरिधानब्रह्महत्यातिरिक्तमहापातककार्यपरिहरणादीन्युभयेषाम् । अतिस्थूलानि प्रतिपुरुषजातिकुलावस्थितसूक्ष्मस्वधर्मव्यतिक्रमणानि त्वनन्तभेदानि सर्वत्र विगानहेतुदर्शनानि च प्रायेणैव संभवन्तीति नैवंजातीयकमिश्रसदाचारधर्मत्वाध्यवसानसंभवः । किञ्च—

के शिष्टा ये सदाचाराः सदाचाराश्च तत्कृताः ।
इतीतरेतराधीननिर्णयत्वादनिर्णयः ॥

ननु—

सदाचारप्रमाणत्वं मन्वादिभिरपि स्मृतम् ।
आत्मतुष्टिः स्मृताऽन्या तैर्धर्मे सा चानवस्थिता ॥

यथाभ्यासं ह्याशयवैचित्र्येण शुभाशुभोभयहीनक्रियानुष्ठायिनामात्मतुष्टिरपि विचित्रैव भवति । तथा हि—

कस्यचिज्जायते तुष्टिरशुभेऽपि हि कर्मणि ।
शाक्यस्येव कुहेतूक्तिर्वेदब्राह्मणदूषणे ॥

लोकदृष्टविपरीताचारोपन्यासः । अयमेव पाण्डुवर्जितधनेन धृतराष्ट्रस्य । यद्यपि युधिष्ठिरेणाग्रे परिणीता तथापि भ्रातृजायात्वं भाव्यपि निश्चित्य परिणयनं विरुद्धम् ।

अथ वा येनासावर्जिता[1] स तया वृत इति वरणेन जायात्वं प्रक्रान्तत्वाद् भूतमेव । तेनायमर्थः, कनीयोऽर्जितत्वेन या भ्रातृजाया तस्याः परिणयनमिति ।

श्रद्धेयवाक्यात् पुरुषाच्छ्रुत्वा सुमहदप्रियम् ।
कार्मुकं त्यजति द्रोणः तथा जप्यो भवेदसौ । इति ।

[2]युधिष्ठिरेण पुत्रवधमलीकमसौ श्रावितः । कुन्ती वसुदेवस्वसा । सा च यद्यपि पित्रा कुन्तदेशाधिपाय दुहितृत्वेन [3]दानाज्जनयितृकुलाद् बहिर्गता ।

पिण्डगोत्रे जनयितुर्[4]न भजेद्बीजिनः क्वचित् इति वचनात् ।

---

१. येन सा निर्जिता आ० मा० ।　२. विचिन्त्य युधिष्ठिरेण आ० मा० ।
३. ज्ञानात् आ० मा० ।　४. न हरेत् कृत्रिमः क्वचित् आ० मा० ।

तथा हि—

पशुहिंसादिसंबन्धे यज्ञे तुष्यन्ति हि द्विजाः ।
तेभ्य एव हि यज्ञेभ्यः शाक्याः क्रुध्यन्ति पीडिताः ॥

तथा—

शूद्रान्नभोजनेनापि तुष्यन्त्यन्ये द्विजातयः ।
स्वमातुलसुतां प्राप्य दाक्षिणात्यस्तु तुष्यति ॥
अन्ये तु सव्यलीकेन मनसा तन्न कुर्वते ।

ततश्चानवस्थितत्वाद्यथैवात्मनस्तुष्टिरेव चेत्येतन्मनुवचनं कथमप्यन्यथा नेतव्यम् । एवमाचारश्चैव साधूनामित्येतदपीति ।

ततश्च वसुदेवाज्जातापि कौन्तेयस्या 'सपिण्डा तु या मातु'-रिति तथा मातृबन्धुभ्यः पञ्चमादिति न विवाह्या तथापि बीजिनश्चेति वचनाद् विवाह्यता । केसरिणामश्वाश्वतरखरोष्ट्राणाम् उभयतोदतान् दानप्रतिग्रहविक्रयव्यवहारो निषिद्धः । न केसरिणो ददाति नोभयतोदतः प्रतिगृह्णातीति । विक्रयोऽपि धनं गृहीत्वा दानमिति ।

स्पर्शनं नैव कुर्वीत ब्राह्मणो ब्राह्मणैः सह ।
आहतुः शङ्खलिखितौ विण्मूत्रोच्चारभोजने ॥ इति ।

असत्यपि कटुतिक्तकषायेषूच्छिष्टत्वे भोजनत्वात्ताम्बूलादने स्पर्शनिषेधः । तथाचमनविधेरपि ।

सुप्त्वा क्षुत्वा च भुक्त्वा च निष्ठीव्योक्त्वानृतानि च ।
पीत्वापोऽध्येष्यमाणश्च आचामेत् प्रयतोऽपि सन् ॥ इति ।

[ मनुस्मृतिः ५।१४५ ]

प्रयतोऽपीत्यनुच्छिष्टताङ्गीकृता । तथा च तत्स्पृष्टस्यामेध्यता न भवतीति । यदि [1]रजकधौतस्य स्पर्शनिषेधो नास्ति तदा गर्दभारोहण-समयत्वेनोपन्यासः ।

शाक्याः क्रुध्यन्ति पीडिता इति । अत्यन्तकारुण्यात् पशुहिंसया दृष्टया जनितपीडा इति ।

कथमप्यन्यथा नेतव्यमिति । यात्मतुष्टिधर्म[2]सम्वादिनो तद्विषयेय-मिति ।

---

१. निर्णेजक इति आ० मा० । २. धर्मप्रमाणसंवादिनी आ० मा० ।

स्वयमज्ञातमूलाश्च शिष्टाचारप्रमाणताम् ।
वदन्तोऽपि न शोभन्ते स्मृतिकारास्ततोऽधिकाः ॥

स्मृतिकारवचनार्थो हि शिष्टैराचरितव्यः शिष्टत्वाय । अन्यथा हि तदनपेक्षाः स्वातन्त्र्येण व्यवहरमाणा दुष्टा भवेयुर्न शिष्टाः ।

न च तेषां श्रुतिर्मूलं व्यवहारस्य दृश्यते ।
यदि च स्यात्परोक्षापि स्मर्येतैव ह्यसौ ध्रुवम् ।

तस्मान्निर्मूलत्वादनपेक्षाणि शिष्टाचरणानीति प्राप्तेऽभिधीयते ।

**अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्** [मी० सू० १।३।७] ।

दृष्टकारणहीनानि यानि कर्माणि साधुभिः ।
प्रयुक्तानि प्रतीयेरन् धर्मत्वेनेह तान्यपि ॥
शरीरस्थितये यानि सुखार्थं वा प्रयुञ्जते ।
अर्थार्थं वा न तेष्वस्ति शिष्टानामेव धर्मधीः ॥
धर्मत्वेन प्रपन्नानि शिष्टैर्यानि तु कानिचित् ।
वैदिकैः कर्तृसामान्यात् तेषां धर्मत्वमिष्यते ॥
प्रदानानि जपो होमो मातृयज्ञादयस्तथा ।
शक्रध्वजमहोयात्रा देवतायतनेषु च ॥
कन्यकानां च सर्वासां चतुर्थ्याद्युपवासकाः ।

स्वयमज्ञातमूलाश्चेति । यस्मात्स्मृतिकाराः शिष्टेभ्योऽप्यधिका इति स्वयमदृष्टमाचारमूलमिति कथं शिष्टदुष्टत्वेन सम्भावयन्ति । शिष्टानामेव हि स्मृतिकारपारतन्त्र्यमुचितमित्याह — स्मृतिकारवचनार्थो हीति । अथाचाराणां ज्ञातमूला एव स्मृतिकारा इत्युच्यते तदपि नास्ति ।

न च तेषां श्रुतिर्मूलमिति । सा हि सर्वप्रत्यक्षा तिरोहिता वा स्यात् । पूर्वत्र स्मरणमुपपद्यत एव, किन्तु सैव न दृश्यते । परोक्षत्वे तु स्मृतिकारैरर्थद्वारे स्मृतिमूलवत् स्मर्येत न तु तथा कृतम् । तस्मान्न ज्ञातमूला इति ।

दृष्टकारणहीनानीति । तद्दृष्टं कारणमुत्प्रेक्षितुमशक्यं येष्वित्यर्थः । किन्तु दृष्टफल[1]मनुमानकारणत्वेनाश्रितं येषु शिष्टैः धर्मबुद्धया यानि क्रियन्त इत्यर्थः । शक्रध्वजमहोयात्रेति । सप्तमीसमासः । देवतायतनेषु च

---

१. °मनुष्ठानेन कारणत्वेन आ० मा० ।

प्रदीपप्रतिपद्दानमोदकापूपपायसाः　　　　॥

अनग्निपक्वमाघसप्तमीपौर्णमासीफाल्गुनीप्रतिपद्वसन्तोत्सवादीनां नियम-क्रियाप्रमाणं न शास्त्रादृते किञ्चिदस्ति । स्मृतिकाराश्चाचारश्चैव साधूनां देशजातिकुलधर्माश्चाम्नायैरविरुद्धाः प्रमाणमिति वेदाविरुद्धानामाचाराणां सामान्यतः प्रामाण्यमनुमन्यन्ते । तथानध्यायाधिकार ऊर्ध्वं भोजनादुत्सव इति देशनगरोत्सवप्रामाण्याश्रयणम् । वेदेऽपि च महाव्रते प्रेङ्खमारुह्य होता शंस-तीत्येतद्वाक्यशेषे श्रूयते, यदा वै प्रजा मह आविशन्ति प्रेङ्खं तर्ह्यारोहन्तीति । महःशब्दवाच्योत्सवप्रसिद्धिरनूदिता । यत्तु परिमितशास्त्रप्रमेयत्वाद्धर्माधर्म-योरिह च तदसंभवादित्युक्तम् तद्वेदमूलत्वानुमानात्पूर्ववदेव प्रत्याख्येयम् । न च स्मृतिर्निर्मूला । विस्तरवचनानामपि प्रपाठकमात्रेणोपसंहारात् किमुत संक्षेप-वचनस्य । शक्यं च स्मृत्यनुरूपमेव वेदवचनमनुमातुम् । तथा हि—

महोयात्रेत्यनुषङ्गः । मोदकापूपपायसानग्निपक्वेत्युच्यत इति । [1]यत्तु परि-मितशास्त्रेति । परिमितशास्त्रप्रमेयं तावत् धर्माधर्मयोः न शास्त्रपरि-माणत्वादित्युक्तम् । तच्चात्र शास्त्रं नास्तीत्युक्तं पूर्वपक्षे 'न च तेषां श्रुति-मूलमिति' श्लोकेन तत्पूर्वोक्तेन न्यायेन स्मृत्यनुज्ञातत्वेनाचाराणां वेद-मूलत्वानुमानात् प्रत्याख्येयम् ।

नन्वतिबाहुल्येनाचाराणां यावदाचारं वेदस्यासंभवात् अनुज्ञानं स्मार्तं निर्मूलमित्याशङ्क्याह—न च स्मृतिर्निर्मूलेति । नानारूपेषु संक्षेपेषु अवचनस्यासंभवमाशङ्क्याह—शक्यं चेति ।

ननु सामान्येन सिद्धेनोपलक्षितोऽपूर्वो विशेषशास्त्रेण प्रतिपाद्यते । विधेयविशेषसिद्धौ तु शास्त्रमफलम् । इह च यदि विधेयत्वादाचाराणा-मसिद्धत्वं कथमाचाराणामेवोपलक्षणत्वम्, अतश्चेतरेतराश्रयत्वम् । आचारे सति शास्त्रं, शास्त्रे चाचार इत्याशङ्क्योपपादयति — तथा हीति । यथा

---

१. इत आरभ्य यद्वा शिष्टास्मतुष्टीनामिति प्रतीकपंक्तेः प्राक्भागः पूना मातृकायां नास्ति । तत्र च पत्रप्रान्तटिप्पणे लिखितं वर्तते—अत्र गलितो ग्रन्थः शोधपत्रे द्रष्टव्य इति ।

शिष्टैराचर्यमाणानां[1] सतां गोदोहनादिवत् ।
फलसंबन्धमप्राप्तं बोधयच्छास्त्रमर्थवत् ॥

न हि तदेवैकं शास्त्रप्रमाणकं यस्य स्वरूपमपि तत एवावगन्तव्यम् । अनेकाकारस्य हि प्रमेयस्य कश्चिदेवाकारः केनचित्प्रमाणेन प्रमीयते । तत्र प्रत्यक्षाद्यवगतेऽप्याचारस्वरूपे दधिगोदोहनादिवत्फलसंबन्धः शास्त्रेणावगम्यते । यागादिष्वपि च नैव स्वरूपज्ञानेन शास्त्रमपेक्षितम् । फलसंबन्धमात्रस्यैवातीन्द्रियत्वेन तदपेक्षितत्वात् । अतो न नामोपलक्षणान्तरेण शास्त्रं प्रवृत्तमुपलभ्य शिष्टाः प्रवृत्ताः । सर्वकालं तु शिष्टव्यवहारशास्त्रयोरवियोगाद्व्यवहारादेवापोद्धृत्य केनचित्स्वर्गादिसाधनत्वेन नियम्यमानाः कादाचित्कत्वपरित्यागेन नित्यप्रयोज्या विज्ञायन्ते । तेषां चार्यावर्तनिवासिशिष्टप्रयोज्यत्वमेवोपलक्षणं वेदेनापि सरस्वतीविनशनप्लक्षप्रस्रवणादिवदुपात्तमिति शक्यमनुमातुम् ।

ननु शास्त्रार्थकारित्वाच्छिष्टत्वं गम्यते यदा ।
शिष्टत्वेन च शास्त्रोक्तिरित्यन्योन्याश्रयं भवेत् ॥
नैव तेषां सदाचारनिमित्ता शिष्टता मता ।
साक्षाद्विहितकारित्वाच्छिष्टत्वे सति लब्धयः ॥

प्रत्यक्षवेदविहितधर्मक्रियया हि लब्धशिष्टत्वव्यपदेशा यत्परम्पराप्राप्तमन्यदपि धर्मबुद्ध्या कुर्वन्ति तदपि स्वर्ग्यत्वाद्धर्मरूपमेव ।

गोदोहनस्य फलसंबन्धमात्रं शास्त्रगम्यमेवमाचाराणामपीति न वैफल्यम् । अत एव नेतरेतराश्रयत्वमित्याह—अतो न नामोपलक्षणान्तरेणेति ।

यद्यपि शिष्टाचारः शिष्टैराचरणीय इति यदेवोपलक्षणं तदेव विधेयम्, न तयोर्भेदस्तथापि शास्त्रवशेन पूर्वशिष्टैराचर्यमाणोऽर्थस्तेनैवोपलक्षणेनापरकालान् प्रति विधीयते । तैश्चाचर्यमाणोऽर्थः तेभ्योऽपरकालान् प्रतीतिसर्वकालं शिष्टाचारशास्त्रयोरुद्भवादुपपत्तिः ।

सरस्वतीविनशनेति । सरस्वत्या विनशनं पृथिव्यां तिरोभावः । तस्या एव प्लक्षात् प्रभवः । प्लाक्षप्रस्रवणं ते कर्मविशेषस्य देशोपलक्षणतयोपात्ते यथा वेदविहितानुष्ठानोपलक्षितो वेदेन स्वविधेयानुष्ठानोपलक्षणत्वेनोपादीयत इत्यविरुद्धम्, तयोर्विशेषरूपेण भेदादिति । यदुक्तं तत्र

---

१. राचार्यमाणानां काशीमुद्रितपाठः ।

तद्यथा शुश्रुवान् विद्वाननूचानश्च वैदिकः ।
पुनस्तल्लक्षितो वेदे तेनैवाध्ययनादिषु ॥

तेनाहोरात्रपौर्वापर्यवदनादित्वाद्वेदतदर्थानामितरेतराश्रयत्वाप्रसङ्गः ।
स्मृतिरप्याचारं वेदवचनं वोपलभ्याभ्यनुज्ञानायैव प्रवृत्तेत्यदोषः ।

यत्तु हेत्वन्तरं दृष्ट्वा वेदमूलनिवारणम् ।
प्रत्यक्षवेदमूलेऽपि तद् दृष्टेस्तदकारणम् ॥

वेदेऽपि हि बहून्येव दृष्टार्थगन्धस्पृष्टानि विधीयन्त इति न तावता वेदमूलत्वाभावः ।

यानि तु म्लेच्छादिसमानानि नियतानियतक्रियान्तराण्यर्थे[1] सुखसाधनकृषिसेवावाणिज्यादीनि मृष्टान्नपानमृदुशयनासनरमणीयगृहोद्यानालेख्यगीतनृत्यगन्धपुष्पादिकर्माणि प्रसिद्धानि तेषु नैव कस्यचिद्धर्मत्वाशङ्कास्तीति न तत् सामान्यतो दृष्टेनेतरनिराक्रियोपपत्तिः केषांचिद्वा धर्मत्वाभ्युपगमान्न सर्वेषामेव तत्प्रसङ्गः । किन्तु —

देवब्राह्मणपूजादि यत्तेषामपि किञ्चन ।
तत्रेष्टमेव धर्मत्वं शिष्टाचारमतं हि तत् ॥

लोके हि कश्चिदाचारः शिष्टत्वेन विशिष्यते ।
कश्चित्तु प्राणिसामान्यप्राप्तस्तैरपि संगतः ॥

तत्र यः कार्यरूपेण शिष्टानेवानुवर्तते ।
स एव केवलो धर्मो नेतरः प्राणिमात्रगः ॥

दृष्टान्तः — तद्यथा शुश्रुवान् विद्वानिति अनूचान इति । स उच्यते यो वैदिको वेदाध्ययनज्ञानोपेतः स शुश्रुवान् विद्वाननूचान इदमधीयीत जानीयाद् वेति पुनस्तल्लक्षितस्तैः श्रवणादिभिर्लक्षितस्तेनैव वेदेन वेदाध्ययनादिषु । अथ वा तल्लक्षित इति तेन वेदेन लक्षितस्तेनैवेति श्रवणादिना । तत्र यथान्यस्य वेदैकदेशस्याध्ययनादिनोपलक्षितान्यस्यैकदेशस्याध्ययनाद्युपलक्षयति । एवमत्रापीति—तेनाहोरात्रपौर्वापर्यवदिति । प्रथमेतरेतराश्रयपरिहारोपसंहारः ।

स्मृतिरप्याचारमिति । स्मृत्यधिकरणोक्तेन न्यायेनाचाराद् वेदमनुमाय स्मृतिः प्रणीता । न चावश्यं स्मृतिकाराः निःशेषवेददर्शिन इत्युपपादितं तत्रैवेति ।

---

१. क्रियाण्यर्थसुखेति काशीमुद्रितपाठः ।

एतेन वैदिकानन्तधर्मधीसंस्कृतात्मनाम् ।
आत्मतुष्टेः प्रमाणत्वं प्रसिद्धं धर्मशुद्धये ॥

तथैव बहुकालाभ्यस्तवेदतदर्थज्ञानाहितसंस्काराणां वेदनियतमार्गानुसारिप्रतिभानां नोन्मार्गेण प्रतिभानं संभवतीत्याश्रित्योच्यते । 'यदेव किञ्चनानूचानोऽभ्यूहत्यार्षं तद्भवतीति' । वैदिकवासनाजनितत्वाद्वेद एव स भवति । तथा हि —

यथा रुमायां लवणाकरेषु मेरौ यथा योज्ज्वलरुक्मभूमौ ।
यज्जायते तन्मयमेव तत्स्यात्तथा भवेद्वेदविदात्मतुष्टिः ॥
एवं च विद्वद्वचनाद्विनिर्गतं प्रसिद्धरूपं कविभिर्निरूपितम् ।
सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तः करणप्रवृत्तयः ॥ इति ।

बहुदिनाभ्यस्तधर्मव्याप्तात्मनो हि न कथञ्चिद्धर्मकरणरूपात्मतुष्टिरन्यत्र संभवतीति धर्मत्वेनाभ्यनुज्ञायते ।

यद्वा शिष्टात्मतुष्टीनां वचनादेव धर्मता ।
पुण्यकृद्ध्यानवत्तस्मादाचारेष्वपि सा तथा ॥
यथा वा वरदानादौ देवताराधनोद्भवे ।
यद्वक्ष्यसि स मन्त्रस्ते विषघ्न इति मन्त्रिते ॥
लोकः स्मरति तं मन्त्रं विषापहरणादिषु ।
यथा वा सर्पसिद्धान्ते नकुलो यां किलौषधिम् ॥
दन्तैर्गृह्णाति तामाहुः समस्तविषहारिणीम् ।
यथा वा यां भुवं कश्चिदध्यावसति पुण्यकृत् ॥

यत्तु स्मृत्यनुमानस्य व्यभिचारार्थमात्मतुष्टिः स्मृतान्या तैरित्युक्तम् । तदात्मतुष्टेः प्रामाण्योपपादनेन दूषयति — एतेन वैदिकानन्तेति । परिगृहीतवेदप्रामाण्यानां शिष्टानां धर्मबुद्ध्यानुष्ठानं वेदार्थस्यैव भवति नान्यस्येति, यत्प्रतिपादितम् । एतेन प्रतिपादनेन तेषामात्मतुष्टेरपि वेदार्थ एवोत्पादात् धर्मनिर्णये प्रामाण्यम् । वेद एव सिद्धमाश्रितमित्यर्थः । एतेनेत्यस्य विवरणम् यथैवेति सिद्धमित्यस्याश्रित्योच्यत इति ।

यद्वा शिष्टात्मतुष्टीनामिति । नेदानीं यद्धर्मत्वेन स्वभावतः सिद्धं तदात्मतुष्ट्याचरणेन वोपलक्षितमित्युच्यते, किन्तु वचनोपात्तोपलक्षणयोगादेव तस्य धर्मता । यद्यपि सर्वत्र वचनस्य प्रामाण्यमेव तथापि यथान्यत्र शक्तवस्तुप्रतिपादनोपरते वचने तेनैव वस्तुना व्यवहारो नैवमत्र तस्यैकस्यानिरूपणात् । किन्तु वचनेन प्रतिपत्त्युपायत्वेन परि-

तत्संपर्कपवित्रत्वात्सेष्यते पुण्यकारणम् ।
तथाचारात्मतुष्ट्यादिधर्म्यं धर्ममयात्मनाम् ॥
वेदोक्तमिति निश्चित्य ग्राह्यं धर्मबुभुत्सुभिः ॥ इति ।

यत्तु प्रजापतिरुषसमभ्यैत्स्वां दुहितरमहल्यायां मैत्रेय्यामिन्द्रो जार आसीदित्येवमादिदर्शनादितिहासदर्शनाच्च शिष्टाचारेषु धर्मातिक्रमं पश्यद्भिः शिष्टाचारप्रामाण्यं दुरध्यवसानमिति । तत्रोच्यते —

श्रुतिसामान्यमात्राद्वा न दोषोऽत्र भविष्यति ।
मनुष्यप्रतिषेधाद्वा तेजोबलवशेन वा ॥
यथा वा न विरुद्धत्वं तथा तद्गमयिष्यति ।

प्रजापतिस्तावत् प्रजापालनाधिकारादादित्य एवोच्यते । स चारुणोदय वेलायामुषसमुद्यन्नभ्यैत्, सा तदागमनादेवोपजायत इति तद्दुहितृत्वेन व्यपदिश्यते । तस्यां चारुणकिरणाख्यबीजनिक्षेपात्स्त्रीपुरुषयोगवदुपचारः । एवं समस्ततेजाः परमैश्वर्यनिमित्तेन्द्रशब्दवाच्यः सवितैवाहनि लीयमानतया रात्रेरहल्याशब्दवाच्यायाः क्षयात्मकजरणहेतुत्वाज्जीर्यत्यस्मादनेनैवोदितेनेत्यादित्य

गृहीतादुपलक्षणात्[1] यदेव किञ्चिच्छिष्टात्मतुष्ट्याचरणविषयतां प्रतिपद्यते, तदेव श्रेयःसाधनं भवति वचनादित्युच्यते । दृष्टश्च स्वभावभिन्नानामप्येकोपलक्षणयोगादेकशक्त्याविर्भावः । यथा पुण्ययोगात्तत्कर्तृध्यानानामुच्चारयितृयोगाद्वचनानां नकुलदंष्ट्रायोगादोषधीनां पुण्यकृद्योगाद् भुवामिति ।

श्रुतिसामान्यमिति । प्रजापतिस्तावदिति । नहुषेण पुनरिति । शिष्टाचारत्वेन प्रतीयमानस्य प्रामाण्यव्यभिचारः परिहर्त्तव्यः । नहुषचरितं त्वत्यन्तबुद्धिमतोऽप्यैश्वर्यलाभात् स्खलति बुद्धिर्येनैश्वर्याद्भ्रंश्यति[2] । तथा हि नहुषस्यैवमासीदित्याख्यातमितिहासे [3]सूचितेनानन्तराजगरत्वप्राप्त्या दुराचारत्वस्य प्रख्यापितत्वेन न तस्य सदाचारान्तर्भावः । परदाराभियोगाभिधानेन दाराणामपि दुराचारत्वं प्रतिपादितम्[4] । तस्यासिद्धि-

---

१. °णावेव धर्मः यदेव आ० मा० । २. भ्रश्यते आ० मा० ।
३. तेनानन्तकालाजगरत्वप्राप्त्या आ० मा० ।
४. प्रतिपादितमित्यस्य स्थाने सूचितम् आ० मा० ।

एवाहल्याजार इत्युच्यते न तु परस्त्रीव्यभिचारात् । नहुषेण पुनः परस्त्रीप्रार्थन-निमित्तानन्तरकालाजगरत्वप्राप्त्यैवात्मनो दुराचारत्वं प्रख्यापितम् । शच्याश्च पतिभक्तिनिर्मित[1]पुण्यातिशयजनितत्तन्निराकरणावाप्तप्रभावलाभः ख्यात एव ।

वसिष्ठस्यापि यत्पुत्रशोकव्यामोहचेष्टितम् ।
तस्याप्यन्यनिमित्तत्वान्नैव धर्मत्वसंशयः ॥

यो हि सदाचारः पुण्यवुद्धया क्रियते स धर्मादर्शत्वं प्रतिपद्यते । यस्तु कामक्रोधलोभमोहशोकादिहेतुत्वेनोपलभ्यते स यथाविधिप्रतिषेधं वर्तिष्यते । तेन विश्वामित्रस्यापि यद्रागद्वेषपूर्वकमपि तपोबलारूढस्य चरितं तत्सर्वं बलवतः पथ्यमित्यनेन न्यायेन महान्ति च तपांसि कृत्वा तानि क्षयं नयत उत्तरकालं वा पापविशुद्धि प्रायश्चित्तैः प्रतिकुर्वाणस्य जीर्यत्यपि । मन्दतपसां गजैरिव महावटकाष्ठादिभक्षणमात्मविनाशायैव स्यात् । द्वैपायनस्यापि, 'गुरुनियोगाद-पतिरपत्यलिप्सुर्देवराद्गुरुप्रेरितादृतुमतीयात्' इत्येवमागमान्मातृसंबन्ध-भ्रातृ जायापुत्रजननं प्राक्कृतपश्चात्करिष्यमाणतपोबलेन नातिदुष्करम् । अन्योऽपि

**माह—शच्याश्चेति । प्रसंगाद्वा पूर्वानुक्तमाशङ्क्य परिहारः ।**

तेन विश्वामित्रस्यापीति । **येन हेत्वन्तरप्रसूत आचारो न धर्मा-दर्शस्तेन यद्विश्वामित्रस्य हेत्वन्तरप्रसूताचरितं तदुपेक्ष्यमात्मविनाशा-यैव न तैर्ग्राह्यमिति । राग आपदि कुटुम्बं भृतवति त्रिशङ्कौ शास्त्र-मतिक्रम्योपचिकीर्षा, अथ वा चण्डालमपि सशरीरं स्वर्गं नयामीति स्व-महिमप्रचिख्यापयिषा । द्वेषश्च वसिष्ठे वसिष्ठस्यासौ द्वेष्टा तत्पुत्रशापा-देव गतश्चण्डालतां क्षत्रियः सन् । तेन वसिष्ठद्वेषात् तस्य याजनम् ।**

तपोबलारूढस्येति । **तेजोबलवशेनेति दर्शितम्** । तानि क्षयं नयत इति । **तानि कृतानि तपांसि, तेन पापानुष्ठानेन क्षयं नयतस्तज्जीर्यतीति नरक-हेतुर्न भवतीति ।** द्वैपायनस्येति । **गुरुनियोगादागतं यद्भ्रातृजायासु पुत्र-जननं तन्नातिदुष्करम् । कथं गुरुनियोगादागच्छतीत्यत्र वचनोपन्यासः** अपतिरपत्येत्यादि । **कथं पराशरात्मजस्य शन्तनुपुत्रो विचित्रवीर्यो भ्राते-त्याशङ्क्योक्तम्** । एकमातृसम्बन्धेन भ्रातुरिति । **सत्यवत्यां कन्याभावे पराशराद् द्वैपायनो जातः । शन्तनोरूढायां विचित्रवीर्यः । तथापि कथं ब्रह्मचार्येवङ्कुर्यादित्यत्रोक्तम्**—प्राक्कृतेति ।

1. °निमित्तेति काशीमुद्रितपाठः ।

ग्रस्तादृक्तपोबलो निर्वहेत्स कुर्यादेव । रामभीष्मयोस्तु स्नेहपितृभक्तिवशात् विद्यमानधर्ममात्रार्थदारयोरेवं साक्षाद्व्यवहितापत्यकृतपित्रानृण्ययोर्यागसिद्धिः । हिरण्मयसीताकरणं च लोकापवादभिया त्यक्तसीतागतानृशंस्याभावाशङ्का-निवृत्त्यर्थम् । भीष्मश्च —

भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान्भवेत् ।
सर्वे तेनैव पुत्रेण पुत्रिणो मनुरब्रवीत् ।। [मनुस्मृतिः ९।१८२]

इत्येवं विचित्रवीर्यक्षेत्रजपुत्रलब्धपित्रनृणत्वः केवलयज्ञार्थपत्नीसंबन्ध आसीदित्यर्थापत्त्यानुक्तमपि गम्यते —

यो वा पिण्डं पितुः पाणौ विज्ञातेऽपि न दत्तवान् ।
शास्त्रार्थातिक्रमाद्भीतो यजेतैकाक्यसौ कथम् ।।

धृतराष्ट्रोऽपि व्यासानुग्रहादाश्चर्यपर्वणि पुत्रदर्शनवत्क्रतुकालेऽपि दृष्टवा-नेव । शापानुग्रहसमर्था महर्षयः श्रूयन्ते । तद्यथैव तद्वचनादसावन्धो जातो

विद्यमानधर्ममात्रेति । मात्रशब्देन रतये न भवन्ति सन्तानाय वेत्युक्तम् अत्र हेतुः ।

सीतायां रामस्य स्नेहो, भीष्मस्य शन्तनौ पितरि भक्तिः । भीष्मः किल पितुरर्थेन प्रार्थयमानः तत्पित्राभिहितः स्वसन्ततिराज्याभिलाषुके त्वयि सम्पन्नेति प्रतिसन्ततिरस्या न राज्यभागिनी भविष्यति तेन न मे देयेति । तत्र भीष्मः प्रतिजज्ञे नाहं राज्यं करिष्यामि न दारानुप-गमिष्यामीति । व्यवहितापत्यकृतानृण्यो भीष्म इत्युक्तमुपपादयति — भीष्मश्चेति ।

यज्ञक्रियान्यथानुपपत्तिमात्रेण पत्नीसम्बन्धावगतिमुक्त्वा मोहादप्य-नुष्ठानसम्भवात् तन्मात्रस्यागमकत्वमित्याशङ्क्य कर्त्तुरत्यन्तधर्मनैपुण्याद्वा गम्यत एव । तस्मान्नापत्नीक इष्टवानित्याह—यो वा पिण्डमिति ।

भीष्मः किल कुशानास्तीर्य पित्रेऽपि पिण्डं निर्वर्त्य पितुः पाणिं पिण्डग्रहणाय पृथिवीं भित्त्वोत्थितं प्रत्यभिज्ञायापि शास्त्रानुसारी कुशे-ष्वेव निरूक्तवानिति । धृतराष्ट्रोऽपीति । हतेषु पुत्रेषु शोकार्त्तेन धृतराष्ट्रेण सकृद्दर्शनं पुत्राणां व्यासः प्रार्थितः । तेन तद् योगबलात् समासादित-मित्याश्चर्यपर्वणि कथा ।

विज्ञायते तथा यज्ञानुष्ठानवचनात्तावति काले दृष्टवानित्यर्थापत्त्या सुज्ञानम्। यद्वा, 'यज देवपूजासंगतिकरणदानेषु' इति दानार्थ एवायं यजिर्भविष्यति क्रतुफलसमानि च दानतपश्चरणादीन्यपि श्रूयन्ते तत्कारणात् क्रतुक्रियोपचारः।

या चोक्ता पाण्डुपुत्राणामेकपत्नीविरुद्धता।
सापि द्वैपायनेनैव व्युत्पाद्य प्रतिपादिता॥
यौवनस्थैव कृष्णा हि वेदिमध्यात्समुत्थिता।
सा च श्रीः श्रीश्च भूयोभिर्भुज्यमाना न दुष्यति॥

अत एव चोक्तम् —

इदं च तत्राद्भुतरूपमुत्तमं जगाद विप्रर्षिरतीतमानुषः।
महानुभावा किल सा सुमध्यमा बभूव कन्यैव गते गतेऽहनि॥ इति।
[म० भा० १।१९०।१४]

न हि मानुषीष्वेवमुपपद्यते। तेनातीतमानुषमित्युक्तम्। अत एव वासुदेवेन कर्ण उक्तः "षष्ठे च त्वामहनि द्रौपदी पर्युपस्थास्यति" [म० भा० ५।१३८।१५] इति। इतरथा हि कथं प्रमाणभूतः सन्नेवं वदेत्। अथ वा बह्वय एव ताः सदृशरूपा द्रौपद्य एकत्वेनोपचरिता इति व्यवहारार्थापत्त्या गम्यते।

यद्वा नार्यर्जुनस्यैव केवलस्य भविष्यति।
साधारणा प्रसिद्धिस्तु निश्छिद्रत्वाय दर्शिता॥

यदुक्तं मनुष्यप्रतिषेधाद्वा न दोषोऽत्रेति तस्य विवरणम्—यौवनस्थैवेति। यत एवमुत्पन्ना अतो न मानुषीति बहुभिर्भोगस्याविरोधः। [1]किञ्च श्रीरसौ पाण्डवानां रत्यर्थमवतीर्णेति इतिहासविदां मतमतोऽपि बहुभिर्भोगस्याविरोध इत्याह — सा च श्रीरिति। अथ वा यतः श्रीरतोऽप्यमानुषीति। श्रीश्च भूयोभिर्भुज्यमाना न दुष्यतीत्यमानुषत्वादेवेति। अतएवेति। वासुदेवेन युद्धारम्भे कर्णोऽभिहितो दुर्योधनं विहाय पाण्डवान् भज। युधिष्ठिरो हि त्वां भ्रातरं ज्ञात्वा राज्येऽभिषेक्ष्यति। षष्ठे च त्वामहनि द्रौपदी पर्युपस्थास्यतीति।

यदुक्तं यथा वा न विरुद्धत्वमिति तदेतदुच्यते। अथ वा बह्वय एव ता इति।

---

१. इत आरभ्य इत्याहेति यावत् पंक्तिः अ० मा० इत्यत्र नास्ति। सा च श्रीरित्यतोऽत्र प्रारभ्यते।

यथा युधिष्ठिरोपदेशात्सभामध्यमानाय्यमाना सहसैव रजस्वलावेषं सपुत्रकस्य धृतराष्ट्रस्यायश उत्पादयितुमात्मानं प्रख्यापयितुं द्रौपदी कृतवती तथैव केवलार्जुनभार्याया एव सत्याः स्त्रीत्वं च जनेनाविदितं परस्परं संघाताविशयं च भेदप्रयोगानवकाशार्थं दर्शयितुं साधारण्यप्रख्यापनमित्येवमादिविकल्पैः सुपरिहरत्वाद्रागलोभकृतव्यवहारस्य च शिष्टैरेव धर्मत्वेनापरिग्रहस्योक्तत्वादनुपालम्भः ।

तथा च द्रोणवधाङ्गभूतानृतवादे 'प्रायश्चित्तं कामकृतेऽप्येके' [?] इत्येवमन्तेऽप्यश्वमेधः प्रायश्चित्तत्वेन कृत एवेति न तस्य सदाचारत्वा[न]भ्युपगमः । यत्तु वासुदेवार्जुनयोर्मद्यपानमातुलदुहितृपरिणयनं स्मृतिविरुद्धमुपन्यस्तं तत्रान्नविकारसुरामात्रस्य त्रैवर्णिकानां प्रतिषेधः ।

सुरा वै मलमन्नानां पाप्मा च मलमुच्यते ।
तस्माद् ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिवेत् ।। इति ।

[मनुस्मृतिः ११।९३ ।]

मधुसीध्वोस्तु क्षत्रियवैश्ययोर्नैव प्रतिषेधः केवलब्राह्मणविषयत्वात् । 'मद्यं नित्यं ब्राह्मणस्य' [?] इति वचनात् ।

**अस्ति च तेषां नीतिविदामेवंभूतो व्यवहार इति दर्शयति — यथा युधिष्ठिरोपदेशादिति । रजस्वलायाः स्वयं सभागमनमत्यन्तासम्भावितमिति तैर्न दुर्योधनो दुःशासनेनेमामानयतीति आनाय्यमानता प्रख्यापनम् । अन्याय्यमानमिति क्वचित्पाठः तत्रान्यायमाचरतीति णिच् । कर्मणि लकारः यकि णिज्लोपः । आत्मानमन्याय्याचरणेन ख्याप्यमानमित्यर्थः ।**

तथा द्रोणवधाङ्गेति । **द्रोणवधाङ्गभूतानृतवादप्रायश्चित्तं योऽश्वमेधः सोऽन्ते प्रायश्चित्तत्वेनैव कृतो न फलार्थम् ।**

**नन्वनभिसन्धिकृते प्रायश्चित्तमपराध इति स्मरणात् कथमत्र तत्प्रायश्चित्तमित्याशङ्क्योपपादितम् ।** कामकृतेऽप्येक इति । **एवमन्तेऽपीत्यपिशब्देनोक्तं रागद्वेषकृतत्वान्न तावत्तस्य सदाचारत्वाभ्युपगमस्तथान्तेऽपि कृत एव प्रायश्चित्तत्वेनापीति ।**

यदप्येतत् —

गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा ।
यथैवैका तथा सर्वा न पेया ब्रह्मवादिभिः ॥ इति ।

[मनुस्मृतिः ११।९४ ।]

एतदपि ब्रह्मवादिशब्दस्य तच्छीलतद्धर्मतत्साधुकारित्वनिमित्तत्वात् प्रवचनाश्रयणेन ब्रूञ्वदत्योरेकार्थत्वात्प्रब्रूयाद् ब्राह्मणस्त्वेषामिति नियमाद्यस्यैव प्रवचनं स एव तच्छीलस्तद्धर्मस्तत्साधुकारी वा भवति, तस्मात् ब्राह्मणा एव ब्रह्मवादिनः । तथा च मद्यसामान्यप्रतिषेधाङ्गनिन्दार्थवादेऽभिहितम् ।

अकार्यमन्यत्कुर्याद्धि ब्राह्मणो मदमोहितः ॥ इति ।

[मनुस्मृतिः ११।९६]

तस्मादेतदुक्तं भवति यथैवैकान्नसुरा त्रयाणाममप्यपेया तथा सर्वा ब्रह्मवादिभिरपेयेति । इतरथा यथैवैकेति च ब्रह्मवादिभिरिति चोभयमप्यनर्थकमेव स्यात् । श्लोकान्तरनिर्देशेनैव वर्णत्रयसंबन्धलाभात् । तेनोभौ मध्वासवक्षीबावित्यविरुद्धम् । तथा चान्यार्थदर्शनमभ्यनुज्ञानवचनम् । यन्माल्यमासीत्तत्पश्चा-

एतदपि ब्रह्मवादिशब्दस्येति । एतदपि गौतमवचनवन्मनुवचनं केवलब्राह्मणविषयमिति पूर्वेण विपरिणतानुषक्तेन समाप्यते । तत्र हेतुर्ब्रह्मवादिशब्दस्य तच्छीलादिनिमित्तत्वादिति । एवंविधश्चायं त्रैवर्णिकविषयो न भवतीत्यत्र हेतुर्यस्माद् ब्रूञ्वदत्योरेकार्थत्वात् ।

प्रवचनस्य वदत्यर्थत्वेनाश्रयणम् । प्रवचनञ्च प्रब्रूयाद् ब्राह्मणस्तेषां नेतराविति निश्चय इति नियतम् । अतो यस्यैव ब्राह्मणस्य तद्विहितं स एव ब्रह्मवादिशब्दार्थस्ताच्छील्यादिरूपो भवतीति ।

एतदेव त्रैर्वणिकविषयत्वं ब्रह्मवादिशब्दस्योपसंहरति — तस्माद् ब्राह्मण एवेति । ततश्च सिद्धमिदमपि केवलब्राह्मणविषयमिति ।

तथान्यार्थदर्शनमिति [मी० सू० ४।४।३८] । यदि ब्राह्मणस्यैव वचनान्तराद्वेदनिषेधस्तदा प्राप्तार्थ[1]त्वादन्यार्थदर्शनम् । अथ सामान्येन निषेधस्तदा विशेषानुज्ञानमिति । पर्यूहतद्व्रवतापर्युषितव्रवतामगमदित्यर्थः ।

---

१. प्राप्तत्वात् आ० मा० ।

त्पर्यौहत सुरा वै माल्यं ततो राजन्यमसजत तस्माज्जायाश्च स्नुषा च श्वशुरश्च सुरां पीत्वा विलपन्तश्चासते, पाप्मा वै माल्यं तस्माद् ब्राह्मणः सुरां न पिबेत्, पाप्मना न संसृज्या इति। तदेतदेतत्क्षत्त्रियो ब्राह्मणं ब्रूयान्नैनं सुरा पीता हिनस्ति य एवं विद्वान्सुरा पिबति' इति। मधुसीधुविवक्षयैतत्। यत्तु मातुलदुहितृपरिणयनं तयोस्तन्मातृष्वस्रीयादिसंबन्धव्यवधानेऽपि भ्रात्रादिव्यवहारादविरुद्धम्। यद्यपि वासुदेवस्वसेति सुभद्रा ख्याता तथाप्युत्पत्तौ बलदेववासुदेवयोरेकानंशायाश्च निजत्वान्वाख्यानान्मातृष्वस्रीया सुभद्रा तस्य मातृपितृष्वस्रीया दुहिता वेति परिणयनाभ्यनुज्ञानाद्विज्ञायते।

वसुदेवाङ्गजाता च कौन्तेयस्य विरुध्यते।
न तु व्यवेतसंबन्धप्रभवे तद्विरुद्धता ॥

येन ह्यन्यत्रैवमुक्तम् —

मम वर्त्मानुवर्तेरन्मनुष्याः पार्थ सर्वशः।
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः॥
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते॥ इति।

[भगवद्गीता ३।२१-२३।]

स कथं सर्वलोकादर्शभूतः सन् विरुद्धाचारं प्रवर्तयिष्यति। एतेन रुक्मिणीपरिणयनं व्याख्यातम्। यत्त्वद्यतनानामाहिच्छत्रकमाथुरब्राह्मणीनां सुरापानादि, दाक्षिणात्यानां मातुलदहितृविवाहादि स्मृतिविरुद्धमुपन्यस्तम्। तत्र केचित्तावदाहुः स्मृत्याचारयोरितरेतरनिरपेक्षवेदमूलत्वेन तुल्यबलत्वाद्विहितप्रतिषिद्धविकल्पानुष्ठानाश्रयणाददोष इति। तत्तु वक्ष्यमाणबलाबलविभागादयुक्तम्। अन्ये त्वेवमाहुः —

सर्वेषामेवमादीनां प्रतिदेशं व्यवस्थया।
आपस्तम्बेन संहृत्य दुष्टादुष्टत्वमाश्रितम्॥
येषां परम्पराप्राप्ताः पूर्वजैरप्यनुष्ठिताः।
त एव तैर्न दुष्येयुराचारैर्नेतरे पुनः॥

तथा मनुनाप्युक्तम् —

येनास्य पितरो याता येन याताः पितामहाः।
तेन यायात्सतां मार्गं तेन गच्छन्न दुष्यति॥ इति।

[मनुस्मृति ४।१७८]

येषां तु यः पित्रादिभिरेवार्थो नाचरितः स्मृत्यन्तरप्रतिषिद्धश्च ते तं परिहरन्त्येव। अपरिहरन्तो वा स्वजनादिभिः परिह्रियन्ते। ननु गौतमेनाम्नायविरुद्धानामाचाराणामप्रामाण्यमुक्तम्। आह —

यदि वेदविरोधः स्यादिष्येतैवाप्रमाणता।
स्मृतिराम्नायशब्देन न तु वेदवदुच्यते॥

न त्वेतदपि युक्तं, स्मृतिग्रन्थेऽप्याम्नायशब्दप्रयोगात्। स्मार्तधर्माधिकारे हि शङ्खलिखिताभ्यामुक्तम् 'आम्नायः स्मृतिधारकः' इति। ग्रन्थकारगतायाः स्मृतेस्तत्कृतग्रन्थाम्नायः स्मृतिग्रन्थाध्यायिना स्मृतिधारणार्थत्वेनोक्तः। ततश्च मन्वादिवाक्यप्रतिषिद्धाचाराणां प्रामाण्यमशक्यमभ्युपगन्तुम्। आपस्तम्बवचनं तु बौधायनेन स्मृतिविरुद्धदुष्टाचारोदाहरणान्येव प्रयच्छता निराकृतम्। स्पष्टकामादिहेत्वन्तरदर्शनान्न विरुद्धाचाराणामापस्तम्बवचनस्य वा श्रुतिमूलत्वोपपत्तिः। आह, केन वा ब्राह्मणीनां सुरापानं प्रतिषिद्धम्।

उच्यते — तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत्॥

[मनुस्मृति ११।९३] इत्यनेन।

ननु पुंलिङ्गनिर्देशात्स्त्रीणां न प्रतिषिध्यते।
सुरापानमतो नात्र स्मृत्याचारविरुद्धता॥

ननु गौतमेनेति। **देशजातिकुलधर्माश्चाम्नायैरविरुद्धाः प्रमाणमिति।**

ग्रन्थकारगताया इति। **ग्रन्थकारगतायाः स्मृतेर्मूलाद्यस्तत्कृतग्रन्थाम्नायः, स स्मृतिग्रन्थाध्यायिनां तस्या एव स्मृतेर्ग्रन्थमूलत्वेनानुमेयाया धारणार्थत्वेनोक्तः।**

**अथ वा स्मृतिधारणार्थत्वेन य उक्तः स ग्रन्थकारगताया स्मृतेस्तद्ग्रन्थाम्नायः। स्मृतिग्रन्थाध्यायिनामिति। ननु आपस्तम्बवचनमपस्मृतिः 'आपस्तम्बोशनोव्यासा' इति शिष्टैः परिगृहीतत्वादत एवं व्याख्यायताम्। मानवीयः सामान्यनिषेधो विशेषानुज्ञानेनापस्तम्बीयेन बाध्यते। तथा चाम्नायविरोधाद् गौतमवचनेनापि सामञ्जस्यमत आह—आपस्तम्बवचनं त्विति। परम्पराप्राप्ता एव दुष्टाचारत्वेन बौधायनेनोदाहृतास्तस्मादापस्तम्बवचनं विरुद्धविषये..............**

उच्यते —

हननप्रतिषेधेऽपि भवेत्पुंस्त्वं विवक्षितम् ।
तथा पुंस्त्ववदेकत्वविवक्षापि प्रसज्यते ॥
अहत्वा कञ्चिदेवैकं ततश्च स्यात्कृतार्थता ।
एकेन च सुरापानेऽवर्जिते पूर्ववद्भवेत् ॥
आह यत्तावदेकत्वविवक्षागतमुच्यते ।
प्रत्येकव्यक्तिसंबन्धाज्जातेर्वा तन्न दुष्यति ॥

एकैकस्या एव हि ब्राह्मणव्यक्तेर्यथाप्रसक्तवधपानयोः प्रतिषेधात् । विवक्ष्यमाणमपि तावदनूद्यमानत्वान्न क्रियाविशेषणं वा संभवति किमुत यदा जातिगतैकत्वानुवाद एवायं विज्ञायते । आह । हननप्रतिषेधे कर्मभूतस्य ब्राह्मणस्योद्दिश्यमानत्वात्सुरापाने च कर्तृत्वेनोपादीयमानत्वात्स्वर्गकामौदुम्बरीसंमानार्थं

निराकृतमविरुद्धविषयं व्याख्येयम् । दुष्येयुरितरे पुनरिति चाविहितानुष्ठानादिति । सुरापानलिङ्गविवक्षावादिनं प्रत्यतिप्रसङ्गे चोदिते स एव वदतीत्याह—आहेति । वक्तव्यमाह — आह यत्तावदिति । यत्तावदुभयत्रैकत्वं विवक्षागतमुच्यते । अहत्वा कञ्चिदेवैकमिति । एकेन सुरापाने इति च । तत्र ब्रूमो व्यक्तिविशेषणत्वेन विवक्ष्यमाणमप्येकत्वं न दुष्यति । यतः प्रतिवधं प्रतिपानं च शास्त्रमावर्तते, तेन न द्वितीयादेर्वधपानप्रसङ्गः । प्रतिवधपानं च प्रतिशास्त्रप्रवृत्ति च प्राप्तमेवैकत्वमतोऽनुवाद एकवचनं न तु किञ्चिदभिमतं व्यवच्छिनत्ति । येन दुष्येत यत एव निष्फलमस्य व्यक्तिविशेषणत्वमन्यतोऽपि विशेषणार्थसिद्धेरत एव जातेरेवेदमुच्यते । तेनापि न दुष्यतीति । एवमुभयत्रैकत्वविवक्षाप्रसङ्गपरिहारमुक्त्वा हननप्रतिषेधगते पुंस्त्वविवक्षाप्रसङ्गे स एव वदतीत्याह—आहेति । वक्तव्यमाह—हननप्रतिषेध इति ।

स्वर्गकामौदुम्बरीसंमानार्थेति । यागविधौ स्वर्गकाम उद्दिश्यते । संमान उपादीयते यजमानस्तयोर्यथा न तुल्यवल्लिङ्गस्य विवक्षाविवक्षा वा किन्तूपादेये विवक्षा नोद्देश्ये तथेहापि न तुल्यताप्रसङ्गः, किन्तु पाने

यजमानवत्तुल्यविवक्षाविवक्षयोरप्रसङ्गादुदाहरणवैषम्यम् । तथा हि —

यो ब्राह्मण इति ह्युक्ते हननप्रतिषेधतः ।
ब्राह्मणे प्रतिषेधे वा लिङ्गं नान्यद्विधीयते ॥

प्रतिषेधविधिपरो हि विधायकः शुद्धवधप्रतिषेधासंभवाद् ब्राह्मणजातिमात्रविशिष्टवधप्रतिषेधं विधाय निवृत्तव्यापारो यदि लिङ्गमपरं ब्राह्मणे वधे प्रतिषेधं वा विदध्यात्ततः प्रत्ययावृत्तिलक्षणवाक्यभेदप्रसङ्गः । येषां तु विधि-

**विवक्षा न हनन इति वैषम्यम् । तमेवोद्दिश्य लिङ्गाविवक्षान्यायमत्र योजयति—तथा हीति । यो ब्राह्मण इति । उद्दिष्टे ब्राह्मणे यस्माद् हननप्रतिषेधस्तस्माल्लिङ्गं नान्यद् विधीयते । यदि तु हननमिति पाठस्तदा हननं प्रतिषेधतो विधायकात् प्रतिषेधतः पुरुषस्येति वा योज्यम् । ब्राह्मणोद्देशस्याङ्गीकृतत्वात् तस्योपादानम्[1] । शुद्धवधेति । न हन्यात् सर्वाभूतानीति निषेधस्य भावान्न भूयः शुद्धवधप्रतिषेधसद्भावः । अथ वा वध्यस्यैव निराश्रयस्यासम्भवाद् अवश्यं भाविनि वध्यसंबन्धेऽर्थाक्षेपादुपात्तग्रहणं युक्तमिति भावः ।**

**ब्राह्मणे वधे प्रतिषेधे वेति । ब्राह्मणविशिष्टं वधमुद्दिश्य नञर्थं प्रतिषेधं विधाय यदि पुंस्त्वं[2] ब्राह्मणे विदधाति तं च ब्राह्मणं पुमांस[3]मिति तदा ब्राह्मणपदस्यावृत्तिर्विधायकस्य च । अथ वधे[4]तं वधं पुंस इति तर्हि हन्तेर्विधायकस्य चावृत्तिः । अथ प्रतिषेधेने[5]त्येतत् पुंस इति नञि प्रत्यये चावृत्तिरिति । *वार्त्तिककारेण* सामान्यदूषणं विवक्षित्वोक्तं—प्रत्ययावृत्तिलक्षणेति । एवं तावत् क्रियोपरक्तस्य नञर्थस्याक्रियारूपस्य नञा[6] विधानमिति वचनव्यक्तिमङ्गीकृत्योक्तम् । ये तु नात्र विधिरस्ति किन्तु कुर्यामिति रागतः प्राप्तमर्थं लिङनुवदति, तत्र नञभावावबोधकोऽनागतप्रवृत्तिप्रतिपादकसंबन्धस्तत्प्रतिपाद्यप्रतिकूलमभावं प्रतिपादयन् अनागतप्रवृत्तिविरोधेन न कुर्यामिति प्रत्ययमादधानो निषेधो भवति । तेन विधिप्रतिषेधौ भिन्नौ वाक्यार्थाविति वदन्ति । तेषामप्येवमविवक्षा पुंस्त्वस्येति । तन्मतमुपन्यस्यन्नेवाह—येषां त्विति ।**

---

१. °तस्योपपादनम् आ० मा० ।
२. एकत्वम् आ० मा० । ३. एकमिति आ० मा० ।
४. तच्च वधमेकमिति आ० मा० । ५. °नेत्येकेनैवेति आ० मा० ।
६. लिङा आ० मा० ।

प्रतिषेधौ नामात्यन्तभिन्नौ वेदवाक्यार्थौ तेषां प्रत्ययसंबन्धानुगृहीतशक्तिरभाव-मात्राभिधानादभ्यधिकलब्धव्यापारो नञ्विध्यर्थमपि द्वेषाद्यर्थप्राप्तं पूर्वोक्त-न्यायविवक्षितब्राह्मणविशिष्टहननाविशिष्टं चानूदितं प्रतिषिध्य चरितार्थो न लिङ्गमपरं ब्राह्मणवधविधिषु शक्नोत्यनावर्तमानः प्रतिषेद्धुमिति श्रूयमाणमपि लिङ्गप्रतिषेधं प्रत्यनुपयुज्यमानत्वादविवक्षितं भवति । एषा ह्यत्र वचन-व्यक्तिर्यत्, क्रोधादिवशेन ब्राह्मणं हन्याद् ब्राह्मणो वा हन्तव्यस्तन्नेति । विध्येकत्व-पक्षे पुनरीदृशी वाक्ययोजना यद् ब्राह्मणहननं तन्न कुर्यादिति । यो वा ब्राह्मणस्तं न हन्यादिति । ब्राह्मणविशिष्टहननप्रतिषेधविधिः शुद्धोद्दिष्टब्राह्मणविषयवध-प्रतिषेधविधिर्वेति ।

सर्वथा ब्राह्मणोद्देशान्नेह मुच्यामहे वयम् ।
न चोद्दिष्टस्य शक्येते लिङ्गसंख्ये विवक्षितुम् ।।

ब्राह्मणः सुरां न पिबेत्, न पेया ब्रह्मवादिभिरिति निमित्तदेशकालफल संस्कार्यानुपादेयपञ्चकव्यतिरेकादेकत्राख्यातप्रत्ययोपात्तगुणीभूतोपादीयमानसंख्या-

पूर्वोक्तन्यायेनेति । यद् ब्राह्मणं हन्यात्तन्नेति वचनव्यक्तावपि ब्राह्मणं हन्यादित्यनेन योऽर्थः शक्यतेऽनुवदितुं स निषेद्धव्यः । अयं च पूर्वोक्तेन न्यायेन शुद्धवधप्रतिषेधासंभवाद् ब्राह्मणविशिष्टस्य हननस्य क्रियामनुवदति । सा द्वेषादिना प्राप्ता नञा प्रतिषिध्यते । तत्र यदि तां प्रतिषिध्य लिङ्ग-मपि ब्राह्मणवधविधिषु प्रतिषेधेत तं च ब्राह्मणं पुमांसं नेति । ब्राह्मणवध-क्रियां वा पुंविशिष्टां नेति तस्य[1] स्यादपि कथञ्चित् पुंस्त्वविवक्षा नञस्त्वेवमावृत्तिः स्यादिति । ब्राह्मणो वा हन्तव्य इति वचनव्यक्त्य-न्तरोपन्यासस्तवायुक्तवाक्यान्तरमभिप्रेत्य । विध्येकत्व इति । विधेरेकत्वे निषेधे नासद्द्वितीयत्व इति । यद्ब्राह्मणहननमिति । एकस्यैव वाक्यार्थ-स्योभयथा प्रदर्शनमिदम् । यद्यर्थसिद्धिः प्रदर्श्यते [2]तदा वधस्याविधेयत्वा-दुद्देश्यत्वमाश्रित्य ब्राह्मणहननमित्युच्यते । अथ शब्दस्य व्यावृत्तिस्तदेक-प्रसरस्योद्देशोपादानविभागासम्भवाद् ब्राह्मणमुद्दिश्य वधोपरक्ता क्रियो-पादीयते । प्राप्ताप्राप्तविवेकेन तु वधस्य सिद्धस्याक्रिया विधीयत इति— फलादुद्देश्यतेति । [?] एकत्राख्यातो[तप्रत्ययो]पात्तेति । आख्यातोपात्ता

---

१. तदा आ० मा० ।

२. तदेत्यारभ्य °मित्युच्यते इति यावत् आ० मा० इत्यत्र नास्ति ।

परिच्छेद्यत्वयोग्यसाधनांशविशेषणत्वेनोपादानादितरत्र च तृतीयाविभक्तिश्रुति-वचनं विवक्षितलिङ्गस्यैव प्रतिषेधकमिति दर्शयितव्यम् ।

अतश्चाप्रतिषिद्धत्वान्नैव स्त्रीणां विरुध्यते ।
सुरापानमहिच्छत्रब्राह्मण्यस्तेन कुर्वते ॥
नैतदेवमिहाप्येतत्पुंस्त्वं नैव विवक्ष्यते ।
ब्राह्मणस्यानुवाद्यत्वात्तद्वधप्रतिषेधवत् ॥
नोपादेयत्वमेवैकं कारणत्वेन संमतम् ।
विशेषणविवक्षायाः कारणं हि महद्विधिः ॥
अनूद्यमानः सर्वो हि यथाप्राप्तमनूद्यते ।
तत्रानाकाङ्क्षितं नान्यद्विधेयेभ्यो विधीयते ॥

गुणभूतस्योपादीयमानस्य या संख्या तत्परिच्छेद्यत्वयोग्यस्य साधनांशस्य कर्तुर्विशेषणत्वेनोपादानादिति । नोपादेयत्वमेवैकमिति । एकशब्देनास्यापि कारणत्वं तद्विधिसापेक्षमित्युक्तम् । तत्रापि विधिः प्रधानं तस्यानु-ग्राहकमुपादानमित्युक्तम् ।

महद्विधिरिति महच्छब्देनेति । ननूपादेयस्य क्रियाविशेषणत्वात् क्रियैव तद्विशिष्टानुवदितव्या, सा तेनेव तद्विशेषणेनापि विशिष्टा-नुवदिष्यते । अरुणैकहायनीवच्च परस्परनियमो भविष्यति । तेनोपादानेनैव केवलेन विशेषणविवक्षेत्याशङ्क्याह — अनूद्यमानः सर्व इति । यदपूर्वशब्द-ज्ञाप्यं तस्य यथा शब्दं प्रतीतेः शब्दव्यापारापर्यवसाने पर्यवसानाभावाद् यावदुपात्तविशेषणग्रहणेन प्रतीतिः पर्यवस्यन्ती प्रमेयैकत्वेनैकवाक्यतामा-पादयति । यत्तु अनुवाद्यं न तच्छब्दगम्यं किन्तु विज्ञातमेव विधेयं तत्र विधातुमुपस्थाप्यते । तस्यैकेनैवोपलक्षणेन यथासिद्धस्योपस्थाने लब्धे पर्यवसितानुवादः शब्दो विधेयारोपितव्यापारो भवति । तदेवमनाकाङ्-क्षितत्वादनुवादावस्थायां तावदसंबद्धं विशेषणं यदि परं विधातव्यम् । तच्चा-शक्यं विधातुमित्युक्तम्—नान्यद् विधेयेभ्य इति । विधेयेभ्योऽपि न पिबेदित्या-दिभ्यो यदन्यदनुवाद्यविशेषणं तच्चानावृत्तेन विधिना विधातुमशक्यमिति । ब्राह्मणः सुरां पिबेदित्यस्य विधित्वं यत्केवलस्य सिद्धं नञ्संबन्धेऽपि

यदि हि ब्राह्मणः सुरां पिबेदित्ययमवान्तरवाक्यार्थः प्राक् प्रतिषेधसंबन्धाद्-विधिबुद्धिमवस्थापयेत्ततो गुणत्वोपादेयत्वविधिसमवायान्न ब्राह्मणपदे किञ्चिद-विवक्षितं नाम स्यात् ।

यतस्तु रागमोहादेः सुरापानं प्रसज्यते ।
ब्राह्मणादेरतस्तस्मिन्न कश्चिद्विधिसंभवः ॥
प्रतिषेधोपसंहारिमहावाक्यतिरस्कृता ।
नावान्तरविधेः शक्तिः प्रादुरस्ति कथञ्चन ॥

तेनेहापि यत्सुरां ब्राह्मणः पिबेत्तन्नेति वा वचनं व्यज्यते । यो ब्राह्मणः स न सुरां पिबेदिति वा सुराविशिष्टपानप्रतिषेधेन प्रतिषेधविधिना वा प्रत्यवाय-व्यावृत्त्या ब्राह्मणोऽनुगृह्यत इति नास्य पानं प्रतिषेधं वा प्रतिविधेयत्वोपपत्तिः ।

लोके चैतद्यथाप्राप्तं पानं स्त्रीपुंसकर्तृकम् ।
प्रतिषेधपरे वाक्ये तदवस्थमनूद्यते ॥

तदवस्थं तत् । ततश्च तद्गतलिङ्गादिविवक्षापि तदवस्थेति मतं निरा-कर्तुमुपन्यस्यति—यदि ब्राह्मण इति ।

संप्रति निराकुर्वन्नर्थस्यान्यतः प्राप्तेरर्थाद्विधेयत्वमिति तावन्नास्ति । अन्यतः प्राप्तत्वादित्याह—यतस्तु रागमोहादेरिति । न च शब्दस्य स्वरसत-स्तत्परत्वमित्याह–प्रतिषेधोपसंहारीति । तेन हननप्रतिषेधवदिहापि ब्राह्मणस्य सत्यपि पानं प्रति कर्तृत्वेनोपादाने यच्छब्दोपबद्धोऽनुवाद इत्याह—तेनेहापीति । यत्तत् पिबेत्तन्नेति । विधिनिषेधयोर्भेदे पानप्रतिषेधः विध्ये-कत्वे तु न पिबेदिति प्रतिषेधविधिः । न च क्रियानिषेधे विधेये वा क्रियो-परक्ते नञर्थे अक्रियात्मनि पुरुषस्य कर्तृत्वसंभवः । तेन स्वर्गकामस्ये-वानूदितस्यापि गुणभावेन विधानं स्यात् । अन्वयस्तु तस्य नञर्थेन प्रत्य-वायहेतोः क्रियाया निवर्तनीयत्वेन । अत्र चांशेऽनुग्राह्यतया पुरुषस्योद्देशो नोपादानम् । तदुक्तं—ब्राह्मणोऽनुगृह्यत इति । तेन पाने सत्यपि गुणभावे-ऽनुवादात् प्रतिषेधे चागुणत्वादुभयत्रापि न विधानं ब्राह्मणस्येत्याह —नास्येति । एवमनुवादत्वं व्यवस्थाप्य तस्य च यथासिद्धगामित्वेन विशेष-णानपेक्षित्वमित्युक्तम् ।

इदानीं सिद्धमेतल्लोके स्त्रीपुंसकर्तृकमत उभयविधस्यानुवाद इत्याह — लोके चैतदिति । यदा चानुवादेन यथासिद्धगामिना पुंस्त्वमन-

न च यो ब्राह्मणः पिबेदित्यनूदितं स च पुमानिति विधिव्यापाराद्विना लिङ्गविवक्षावकल्पते ।

न चास्य लिङ्गसंबन्धः केवलः सन् विधीयते ।
न पानप्रतिषेधाद्धि विधिरन्यत्र गच्छति ॥

ततश्चोभयत्राप्यविवक्षितलिङ्गसंख्यत्वं सिद्धम् । नन्वेवं सति ब्राह्मणस्त्रीवधेऽपि पुंब्राह्मणवधवद् ब्रह्महत्यास्तीति यदात्रेय्यामेव केवलायां भ्रूणहत्याप्रायश्चित्तविधानं, तन्नोपपद्यते । उच्यते —

ब्राह्मणस्त्रीवधे को वा ब्रह्महत्यां निषेधति ।
प्रायश्चित्तान्तरे तस्याः स्त्रीत्वमात्रनिबन्धनम् ॥

न च प्रायश्चित्ताल्पत्वेन निमित्तस्य ब्रह्महत्यात्वमपनीयते । पुंवधेऽपि लघुतरप्रायश्चित्तविधिदर्शनेन ब्रह्महत्यादोषाभावप्रसङ्गात् । तस्मान्न वाचनिकप्रायश्चित्ताल्पत्वेन ब्राह्मणीवधप्रतिषेध एव नास्तीत्याशङ्कितव्यम् । सुरापाने पुनः प्रायश्चित्तविशेषोऽपि न कश्चिदाम्नात इति दूरादपाकृतत्वादस्त्येवास्य स्मृत्या सह विरोधः । यापि चापस्तम्बस्मृतिवचनात्तुल्यबलत्वाशङ्का भवेत्सापि 'तस्माद् ब्राह्मणः सुरां न पिबति' इत्येतेन प्रत्यक्षश्रुतिविधिना निराकृतेति नैवंविधाचारप्रामाण्यमाशङ्कितव्यम् ।

अथ वा सदाचारप्रमाणत्वप्रतिपादनार्थं सूत्रद्वयेनाप्येतदेकमधिकरणं

पेक्षितम् । तदा च स पुमानित्यनुवादातिरिक्ताद् वाक्यव्यापारात् विधानं प्रत्येतव्यम् । विधानं च नञर्थपर्यवसितं नान्यद् विदधातीत्युक्तमतोऽप्रामाणिकी लिङ्गविवक्षेत्याह — न च यो ब्राह्मणः पिबेदिति । न च यद्युभयं विधातुमशक्यम्, तदा नञर्थापेक्षया लिङ्गसंबन्धः केवलो विधीयतामिति वक्तव्यम् ।

नञोऽनन्यप्रयोजनस्य त्यक्तुमशक्यत्वादित्याह — न चास्य लिङ्गसंम्बन्ध इति ।

पुम्वधेऽपि लघुतरेति । अपि वा नियताहारस्त्रिर्जपेद् वेदसंहितामित्यादिरुपदेश इति । [1]सूत्रद्वयेनाप्येकमधिकरणमिति । कथमस्मिन् व्याख्याने प्रथमसूत्रमिति चेत्, उच्यते पूर्वाधिकरणद्वयार्थनिगमनत्वेन तद् व्याख्येयम् ।

---

१. आ० मा० न पठति "सूत्रद्वयेनारभ्य मिति" यावत् ।

व्याख्यातव्यम् । इह यावन्ति कृष्णमृगसंचरणोपलक्षितार्यावर्तनिवासिचातुर्वर्ण्या-चरणानि तान्युदाहृत्य चिन्त्यते —

धर्मबुद्धया यदार्याणां चरित्रमुपलभ्यते ।
किं तथैव प्रमाणं तदथ वा निष्प्रमाणकम् ।। इति ।

कुतः संशयः । उच्यते —

स्मृतिवत्कर्तृसामान्यात् प्रमाणत्वेन गम्यते ।
अनिबन्धनतायास्तु भवेदप्यप्रमाणकम् ।।

ननु च स्मृतिकारैरेवैतत्प्रामाण्यमभ्युपगतं 'तद्विदां च स्मृतिशीले' [मनुस्मृतिः २।६ ।] 'आचारश्चैव साधूनां' [मनुस्मृतिः २।६ । ] 'यस्मिन्देशे य आचारः स सदाचार उच्यते' [मनुस्मृतिः २।१८ । ] अतश्च तत्प्रामाण्यादेव सिद्धम् । न, मूलाभावहेतुदर्शनातिरेकात् । शाखान्तरगतवेदवाक्यदर्शनमूलानि हि स्मरणोपनिबन्धनानि प्रमाणत्वेनाधिगतानि । ननु सदाचारदर्शनात्तन्मूलमात्र-प्रवृत्तस्मरणानां मूलान्तरानुमानसंभवः ।

यथैव च वयं तेषां द्रष्टारः केवलं तथा ।
स्मृतिकारास्ततो नैषां गम्यते मूलदर्शनम् ।।

यदि हि तैर्मूलान्यश्रोष्यन्त ततो तथैवान्यानि स्मरणानि निबद्धानि

---

**विरोधे चेदनपेक्षत्वं श्रुतिशिष्टस्याकोपे[1] प्रामाण्यमविरुद्धम्, धर्मशास्त्रे-तिहासपुराणादीनामिति ।**

**कुतः संशय इति । पूर्वमपि वा कारणाग्रहणे [मी० सू० १।३।७] इति सिद्धान्तसूत्रानुमितः पूर्वपक्ष आसीत् । तेन च कारणाग्रहणविशेषणो-पादानेन दृष्टार्थाचारसाधर्म्यमुपमीयते । तेन तत्संकरादप्रामाण्यशङ्कया दर्शिता । सम्प्रति तु न शास्त्रपरिमाणत्वादिति [मी० सू० १।३।६] शास्त्रा-भावस्य पूर्वपक्षहेतोरुक्तत्वात् संशयोऽपि तत एव दर्शयितव्य इति प्रश्नः । नामूलाभावहेतुदर्शनेति । मूलाभावदर्शनमस्यां स्मृतावतिरिच्यते स्मृत्य-न्तरेभ्यः । अथ वा श्रुतिरूपमूलाभावस्य हेत्वन्तरस्य च दर्शनमिति । तत्र हेत्वन्तरं दर्शयति — ननु सदाचारेति । तन्मूलमात्रप्रवृत्तान्येव वचनानीति प्रतिजानाति—यथैव च वयं तेषामिति । अत्र हेतुं वेदमूलस्मृतिवैधर्म्यमाह— यदि हीति ।**

---

१. °शिष्टस्य मार्गस्याकोपे आ० मा० ।

तथैवैतान्यपि निबद्धान्येवाभविष्यन् । यतस्तु स्वयमुपलब्धानुरूपमनिबध्य परप्रत्ययेनैव सदाचाराः प्रमाणमित्याहुः । अतो न दृष्टमूलत्वेनाध्यवसातुं शक्यमिति विचार्यते । तत्र पूर्वाधिकरणद्वयबलेन प्रामाण्यं प्रतिज्ञायते कर्तृसामान्याद्विधिस्मृतिविरोधरहितत्वाच्च ।

न हि केचित्सदाचाराः श्रौतस्मार्तविरोधिनः ।
अतस्तत्तुल्यकारित्वात्प्रामाण्येनावधारिताः ॥
स्मृतिकाराभ्यनुज्ञानं महदन्यच्च कारणम् ।
तेषामज्ञातमूलानां न ह्यनुज्ञोपपद्यते ॥ इति ।

तदपाकुर्वन्नाह —

न [1]शास्त्रपरिमाणत्वाद्धर्माधर्मस्थितेरमी ।
शिष्टाचाराः प्रमाणत्वं लभन्ते शब्दवर्जिताः ॥

शास्त्रपरिमेयत्वं तावत्परिमाणशब्दवाच्यं धर्माधर्मयोरवस्थितं परिमितानि च शास्त्राणि वेदोपवेदादीनि । न च तेषां मध्ये सदाचारशास्त्रं किञ्चिदस्ति । न च सदाचारः स्वयमेव शास्त्रं, नापि तद्दर्शनमनुष्ठानं वात्यन्तपरायत्तत्वात् प्रमेयत्वाच्च । स्मृतेस्त्वेतद्विषयाया निर्मूलत्वमुक्तमेव ।

किञ्च मूलं भवेदेकमनेकमिति चिन्तिते ।
नैव द्विविधमित्येतदनुमातुं हि शक्यते ॥

न तावद्देशजातिकुलभेदाद्भिन्नानामपरिमितस्वरूपाणामेकश्रुतिमूलत्वम् ।

न हीदृशी श्रुतिर्येतान् सर्वाचारान् ग्रहीष्यति ।
शब्दाभिधेययोस्तेषां व्यक्त्याकृत्योरसंभवात् ॥

यावदाचारं हि वेदवाक्यानि कल्पयतां वेद एवैकः कल्पयितव्यः । एकस्य तु वाक्यस्य नैकस्यचिदपरिमिताचारविधायित्वमवकल्पते, यत आचाराः प्रवर्तेरन् । न च धर्मसूत्रकारैस्तदेव दृष्ट्वाचारप्रामाण्यमुपनिबद्धम् । शेषधर्म-

इति विचार्यत इति । **न्यायमूलत्वात् स्मृतेर्न्यायस्य साध्वसाधुत्वे विचार्यते इति ।** न शास्त्रपरिमाणत्वादिति [मी० सू० १।३।६] । **प्रसक्तसिद्धान्तनिषेधेन पूर्वपक्षकरणात् सिद्धान्तेनोपक्रमते । तत्र पूर्वाधिकरणद्वयबलेनेति ।** तुल्यकारित्वादाचरितॄणामिति । अत्यन्तपरायत्तत्वादिति ।

1. मी० सू० १।३।६ ।

स्मृतिवाक्यतुल्यनिबन्धनप्रसङ्गात् । न चाचारदर्शनोत्तरकालप्रवृत्ता स्मृतिस्तेषां मूलं भवति । मूलमूलिबलाबलविपर्ययप्रसङ्गात् ।

अतः परिमितं शास्त्रमनुमातुं यतोऽर्हति ।
नाचाराणां च तन्मूलं बहूनामित्यमूलता ॥
न च स्मृतिस्वरूपापि श्रुतिरत्रानुमीयते ।
आचाराणामतत्पूर्वप्रसङ्गात् सविपर्ययात् ॥

शिष्टाचारः प्रमाणमिति हि श्रुतावनुमीयमानायामाचारः प्रथमं सिद्धो भवेत्तत्पूर्विका श्रुतिः ।

न त्वाचारस्य सा मूलमिति निर्मूलता पुनः ।

शास्त्रपरिमाणत्वादिति वा परिमिते ह्यर्थे प्रवर्तेत । अपरिमितत्वादाचाराणामुच्छास्त्रत्वमिति । परिमितार्थविषयत्वाद्वा शास्त्रस्य, "अप्राप्ते शास्त्रमर्थवत्" [मी० सू० ६।२।१८।] इति ।

दृश्यमानान्यहेतुत्वान्नात्र शास्त्रप्रमाणता ।
तस्मादर्थसुखाङ्गत्वान्नाचारेष्वस्ति धर्मता ॥
वैश्यानां सेवकानां वा वैद्यानां नगरेषु वा ।
चरित्राणां यथा चार्थसुखाङ्गत्वं तथास्त्विह ॥
तस्माच्छ्रुतिस्मृती एव प्रमाणे धर्मगोचरे ।
शीलाचारात्मतुष्टीनां गोष्ठी हास्यादितुल्यता ॥

**यथैवानुष्ठीयते तथा दृश्यत इति । अनुष्ठानं च प्रमेयं तदर्थमेव प्रमाणं मृग्यत इति । मूलमूलिबलाबलेति । यदि ह्याचारदर्शनात् स्मृतिः प्रवृत्ता तदा सैव यथाचारमनुष्ठातव्या । ततश्च मूलं स्मृतिर्दुर्बलेति मूलमूलिबलाबलविपर्ययः ।**

**अथ वा मूलमूलिभावस्य विपर्ययः । मूलिनो मूलत्वमिति [?] तथाबलाबलस्येति । सविपर्ययादित्यस्य व्याख्या भवेत् तत्पूर्विका श्रुतिरिति । शास्त्रपरिमाणत्वादिति [मी० सू० १।३।६] । शास्त्रपरिमाणत्वाच्छास्त्रीयस्यार्थस्य नापरिमितत्वमिति सूत्रयोजना । परिमितार्थविषयत्वाद्वेति । अप्राप्ते शास्त्रमर्थवदिति [मी० सू० ६।२।१८] । न्यायात् परिमिते कियत्यपि मानान्तरागोचरे शास्त्रं प्रवर्तते । न चायं तथा मानान्तरगोचरत्वाच्छास्त्रीयस्यार्थस्य शास्त्रप्रमेयत्वादस्य चातथाभावादशास्त्रीयत्वमिति ।५।।**

यद्वा सूत्रत्रयेणाप्येतदेवाधिकरणं व्याख्यातव्यम् । इहार्यावर्तनिवासिशिष्टाचारानेवोदाहृत्य पूर्ववत्प्रामाण्याप्रामाण्यसन्देहे **शिष्टाकोपेऽविरुद्धमिति** [मी० सू० १।३।५ ।] सिद्धान्तस्तावदुपक्रम्यते । तथा हि —

शिष्टं यावच्छ्रुतिस्मृत्योस्तेन यन्न विरुध्यते ।
तच्छिष्टाचरणं धर्मे प्रमाणत्वेन गम्यते ॥
यदि शिष्टस्य कोपः स्याद्विरुध्येत प्रमाणता ।
तदकोपात्तु नाचारप्रमाणत्वं विरुध्यते ॥ ७ ॥

## यववराहाधिकरणम् ।

**तेष्वदर्शनाद्विरोधस्ये** [मी० सू० १।३।८] त्येवमुपक्रमं वा सूत्रम् । शब्दार्थविषयप्रयोगशिष्टाचारविप्रतिपत्तौ सन्देहः ।

एकशब्दमनेकार्थं शिष्टैराचर्यते यदा ।
विगानेन तदा तत्र कोऽर्थः स्यात्पारमार्थिकः ॥

यववराहवेतसशब्दाः प्रियङ्गुवायसजम्बूष्वपि किल क्वापि देशान्तरे प्रयुज्यन्ते ।

तेन तद्वचनत्वे हि सन्देह उपजायते ।
अनिरूपिततत्त्वानां यावद् दृष्टानुसारिणाम् ॥
तत्राह नैव सन्देहः कर्तव्योऽत्र मनागपि ।
प्रयोगं प्रति तुल्यत्वात् सर्वलोकप्रयोगिणाम् ॥

**एवं स्मृत्याचारप्रामाण्यप्रतिपादने कृते समवायविरोधे बलाबलं निरूप्यते । निरूपितबलाबलानां हि प्रमाणानां प्रमाणाभासाद् विवेकः शक्योऽवगन्तुम् । तत्रेह शब्दार्थविषयस्य प्रयोगरूपस्य शिष्टाचारस्य शब्दस्य वा योऽर्थविषयः प्रयोगरूपः शिष्टाचारस्तस्य विप्रतिपत्तौ सन्देह इत्याह**—शब्दार्थविषयेति । ***भाष्यकारेण*** **हि शिष्टाशिष्टविशेष[1]स्यानुपात्तत्वात् प्रतिपादितप्रामाण्यस्य शिष्टाचारस्यैवेदं बलाबलनिरूपणमाश्रितम् । तेन तद्व्यक्तीकृतं** शिष्टाचारेति । **सन्देहरूपमाह** — एकशब्दमनेकार्थमिति । **एकः शब्दो यत्र एवमनेकोऽर्थो यत्रेति बहुव्रीहिः । आचरणमन्यपदार्थ इति ।**

जम्बूष्वपि किलेति । **किल शब्दः स्वानभिप्रेतत्वसूचनार्थः ।**

---

१. शिष्टाशिष्टविरोधस्या पु० मा० ।

यत्र देशे हि यः शब्दो यस्मिन्नर्थे प्रयुज्यते ।
शक्तिस्तद्गोचरा तस्य वाचिकाख्या प्रमीयते ॥
तस्याश्च सर्वगामित्वं तन्न्यायत्वात् प्रमीयते ।
नैकेषामेव सा ह्यस्ति केषाञ्चिद्वा न विद्यते ॥
ज्ञाताज्ञातविभागस्तु ज्ञातृभेदेऽत्रकल्पते ।
तस्माद्यैरपि न ज्ञाता यच्छब्दार्थस्य वाच्यता ॥
तैरप्यभ्युपगन्तव्या स्वप्रसिद्धिसमा हि सा ।
न चाल्पत्वबहुत्वाभ्यां प्रयोक्तॄणां विशिष्यते ॥
वाच्यवाचकभावोऽयमक्षपादादिशब्दवत् ।
विभीतकेऽक्षशब्दो हि यद्यप्यल्पैः प्रयुज्यते ॥
तथापि वाचकस्तस्य ज्ञायते शकटाक्षवत् ।

तथा चोक्तं शवतिर्गतिकर्मा कम्बोजेष्वेव दृष्टो विकारापन्नमार्याः प्रयुञ्जते शवमिति मृतशरीराभिधानादित्यादि । बहव एव हि धातवो नामशब्दाश्च प्रतिदेशमर्थभेदेषु व्यवस्थिता दृश्यन्ते । तस्मात् समेयमभिधाने विप्रतिपत्तिः स्यात् । एवं च विकृतिषु केषाञ्चिदर्थानां साधारणशब्दवाच्यत्वात् प्रकृताविवाविकृत-प्रयोगादार्षं चोदकोऽनुग्रहीष्यते । 'तेष्वदर्शनाद्विरोधस्य' [मी० सू० १।३।८] इत्यत्रैव चैतद् व्याख्येयम् । इतरत्र विप्रतिपत्त्यविरोधयोरघटमानत्वात् । तस्मादाचारविप्रतिपत्तेः समत्वाद् विकल्प इति प्राप्तेऽभिधीयते ॥ ८ ॥

**[1]शास्त्रस्था तन्निमित्तत्वात्प्रतिपत्तिर्बलीयसी ।**
लौकिकी प्रतिपत्तिर्हि गौणत्वेनापि नीयते ॥

तन्न्याय्यत्वादिति । **तस्य स्वर्गगामित्वस्य न्याय्यो यस्यां सा तन्न्याय्या शक्तिस्तस्य भावस्तन्न्याय्यत्वमिति ।**

**तमेव न्यायमाह** — नैकेषामिति । **[1]आर्षं वैदिकं समाम्नायावगतं रूपमिति ।**

शास्त्रस्था तन्निमित्तत्वात् [मी० सू० १।३।९।] प्रतिपत्तिरिति । **नानेन शास्त्रप्रतिपत्तिबलीयस्त्वमुच्यते । किन्तु लौकिक्योः प्रतिपत्त्योर्या शास्त्रेणा-**

---

१. मी० सू० १।३।९ ।

**१. इत आरभ्य नानाविप्रतिपत्ताविरयतः प्राक् यावत् आ० मा० इत्यत्र पंक्तिर्नास्ति ।**

नानाविप्रतिपत्तौ हि न लोकस्येह सत्यता ।
या शास्त्रानुगुणा सैव प्रामाण्येनावधार्यते ॥
लौकिकत्वे समानेऽपि शास्त्रेणाभ्यधिका हि सा ।
शास्त्रस्थाः पुरुषा ये वा प्रतिपत्तिस्तदाश्रया ॥
प्रमाणत्वेन गन्तव्या सप्रत्ययतरा हि ते ।
शास्त्रार्थेष्वभियुक्तानां पुरुषाणां हि सर्वदा ॥
स्तोकेनाप्यन्यथात्वेन शास्त्रार्थो निष्फलो भवेत् ।
लौकिकस्त्वन्यथात्वेऽपि नार्थोऽतीव विरुध्यते ॥
रसवीर्यविपाकानां भेदाद्वैद्यैर्यवादयः ।
निर्धार्याः स्वार्थतत्त्वेन धर्मसिद्ध्यै व याज्ञिकैः ॥
तस्माद्ये याज्ञिकैर्येषां वैद्यैर्वार्था निरूपिताः ।
तेषां त एव शब्दानामर्था मुख्या हि नेतरे ॥

श्रीयते तस्याः । तदेतत् स्फुटीकरोति—नानाविप्रतिपत्तौ हीति । नानाविषये लौकिकीनां प्रतिपत्तीनामियं गतिर्या शास्त्रानुगुणायां शास्त्रमनुगच्छति सा प्रमाणम् । पदपदार्थसंबन्धस्य लौकिकप्रमाणकत्वात् लोकप्रसिद्धत्वाविशेषे कस्माच्छास्त्रस्था बलीयसी स्यादित्यत्रोक्तम्—तन्निमित्तत्वादिति । यत एव नित्याच्छास्त्रादसौ प्रतिपत्तिरुपजायते, अत एव गौणभ्रान्तिप्रयोगप्रसूता नेत्यवधारणाद् बलीयसी भवति । इतरा तु [1]तथापि संभाव्यत इत्युक्तं—लौकिकी प्रतिपत्तिर्हीति ।

व्याख्यानान्तरमाह — शास्त्रस्थाः पुरुषा इति । शिष्टानामेव कापि प्रसिद्धिर्लौकिकव्यवहारानुपातिनी कापि शास्त्रीयव्यवहारगता शास्त्रव्यवहारपरम्परापरिपालिता तत्रोत्तरप्रसिद्धियुक्ताः शिष्टाः शास्त्रस्था इत्युक्तास्ते प्रमाणम् । तेषां प्रतिपत्तिः प्रसिद्धिर्बलीयसीत्यर्थः । तन्निमित्तत्वादिति । अविप्लुतशास्त्रार्थानुष्ठाननिमित्तत्वात् तेषां शब्दार्थतत्त्वेऽभि[2]योगात् प्रतीतिर्निरपवादा यतः । तदुक्तं—स प्रत्ययतरा हि ते इति ।

निर्धार्याः स्वार्थतत्त्वेनेति । स्वीयमभिधेयं स्वं तदर्थः स्वार्थः । तत्र यवादयः शब्दाः स्वार्थतया निर्धार्यमाणा यदा सम्यङ् निर्धार्यन्ते तदा

---

1. न संभवतीत्युक्तम् आ० मा० । 2. °भियोगविशेषात् आ० मा० ।

अनवस्थितशब्दार्थसम्बन्धः सति सम्भवे ।
विकल्पश्चाष्टदोषत्वान्न कथञ्चन युज्यते ॥
अविप्लुतश्च शब्दार्थो यो वेदेषूपलभ्यते ।
तत्रत्यनिर्णयात्तस्माल्लोके भवति निर्णयः ॥

यवमतीभिरद्भिरौदुम्बर्याः प्रोक्षणे विधीयमाने वाक्यशेषोऽयं 'यत्रान्या ओषधयो म्लायन्तेऽथैते मोदमानास्तिष्ठन्ति' इति बह्वीषु शाखासु श्रूयते । ***भाष्यकारेण*** वारुणप्राघासिकयवमयकरम्भपात्रवाक्यशेषत्वेनोपलब्धो यः स मन्दप्रयोजनत्वात्तथा नामास्तु ।

फाल्गुनेऽन्यौषधीनां तु जायते पत्रशातनम् ।
मोदमानास्तु तिष्ठन्ति यवाः कणिशशालिनः ॥
प्रियङ्गवः शरत्पक्वास्तावद्गच्छन्ति हि क्षयम् ।
यदा वर्षासु मोदन्ते सम्यग्जाताः प्रियङ्गवः ॥
तदा नान्यौषधिम्लानिः सर्वासामेव मोदनात् ।

एवं वराहवेतसशब्दा अपि शास्त्रस्थप्रयोगादेव निश्चीयन्ते ।

न त्वेतान्युदाहरणानि लोकप्रसिद्धेरेव व्यवस्थितत्वाद्युक्तानि । तथा हि—

नैवोच्यन्ते क्वचिद्देशे यवश्रुत्या प्रियङ्गवः ।
जम्बूं न वेतसं प्राहुर्वराहं नापि वायसम् ॥

**स्वार्थतायां यत्तत्वं तेन निर्धारिता भवन्ति । सत्यपि यवादिशब्दानां स्वार्थत्वे प्रियङ्ग्वादीनामपि किमिति न संभवतीत्याशङ्क्योक्तम्— अनवस्थितशब्दार्थसंबन्ध इति । यथैकस्य शब्दस्यार्थानेकत्वे संबन्धानवस्थानं विकल्पश्च भवति, तत्साधुशब्दाधिकरणे वक्ष्यते । पूर्वं लोकप्रसिद्ध्योरेकया शास्त्रानुगृहीतयापरां बाधित्वा निर्णय उक्तः । संप्रति वैदिक्यैव प्रसिद्ध्या शब्दार्थनिर्णयमाह—अविप्लुतश्चेति । नित्यत्वाद् वेदस्य गौणादिप्रयोगप्रसूतप्रसिद्धिमूलः शब्दार्थनिर्णयो नास्ति । तेन यत्र य शब्दार्थ उपलभ्यते तस्य तत्र निर्णयाल्लोकेऽपि शब्दार्थैकत्वाद् भूत एव निर्णय इति न तद्विपरीता प्रसिद्धिरवतिष्ठत इति । एवं यथा*भाष्य*मधिकरणं व्याख्याय दूषयति — न त्वेतान्युदाहरणानीति । अथ यद्यपि लोकप्रसिद्धिर्यवादिशब्दानां प्रियङ्ग्वादिषु नास्ति, तथापि तामध्यारोप्य न्यायव्युत्पादनं**

अध्यारोप्य विचारेण किं मुधा खिद्यते मनः ।
सन्दिग्धेषु च सर्वेषु वाक्यशेषेण निर्णयम् ॥
वक्ष्यत्येव न तेनापि पृथक्कार्या विचारणा ।

यद्यपि तत्राभिधेयसन्देहमनुदाहृत्योपादानसन्देहनिर्णयोपायव्याख्यानं करिष्यति । यावद्वाक्यशेषमेव स निर्णयो नान्यत्र । अयं त्वभिधेयनिर्णय एकत्र च कृतः सर्वत्र च कृत एव भविष्यतीत्येवमपुनरुक्तत्वमापद्यते ।

तथापि न्यायतुल्यत्वाद्यथा धृतपरिग्रहः ।
वाक्यशेषात्तथैव स्याद्यवाद्यर्थविनिर्णयः ॥

तत्सिद्धि [मी० सू० १।४।२३] सूत्रे च सारूप्यादीनां गौणवृत्तिनिमित्ता-

क्रियते तदप्यसत् यतो यत्रासौ न्यायः फलिष्यति[1] तदेवोदाहरणीक्रियताम्, किमध्यारोप[2] क्लेशेनेत्याह—अध्यारोप्य विचारेणेति । एवमुदाहरणं दूषयित्वा न्यायव्युत्पादनमपि न कार्यमन्यत्र करिष्यमाणत्वादित्याह — सन्दिग्धेषु च सर्वेषु इति । न केवलं यवाद्यनुदाहार्यं विचारणापि न पृथक् कार्येत्यपि शब्दयोजना । यदि तु पूर्वमुदाहरणाक्षेपद्वारेण विचारक्रियैवोक्ता तदा यथाक्रममेवापि शब्दः । उदाहरणाभावात्तावद् विचारस्याक्रिया । किञ्च पौनरुक्त्यं स्यात्तेनापीति । पौनरुक्त्यपरिहारमाशङ्कते — यद्यपि तत्रेति । तत्राभिधेयसन्देहमनुदाहृत्योपादानसन्देहनिर्णयोपायव्याख्यानं करिष्यते । अयं चाभिधेयनिर्णयः । एवमपुनरुक्तत्वं यद्यप्यापद्यत इति सम्बन्धः । यावद्वाक्यशेषमेवेति । एकत्र कृत इति च । आभ्यामिदमुच्यतेऽङ्गीकुर्म एव [3]सजातीयफलोदाहरणव्यापित्वं न्यायस्य । अत्र च नोदाहरणभेदादपौनरुक्त्यं ब्रूमः, किन्तु प्रतिपाद्यभेदादेवेति । दूषयति — तथापि न्यायतुल्यत्वादिति । वाक्यशेषस्य सन्दिग्धोपादेयनिर्णयोपायत्वे यो न्यायः स एवाभिधेयनिर्णयो-पायत्वेऽपि विधिस्तुत्योरेकविषयत्वस्थितेः । स्तुत्यस्यैव विधेय-त्वमिति ।

अथ सत्यपि दीर्घशूकविषयत्वनिर्णये विध्युद्देशगतस्य यवशब्दस्य प्रियङ्गुगतप्रयोगान्यथानुपपत्त्या तद्वचनतापि प्रसक्तात्र निराक्रियते । साप्यर्थापत्तिभङ्गेनान्यत्र निराकरिष्यते इत्याह — तत्सिद्धि [ मी० सू० १।४।२३।] सूत्रे चेति ।

---

१. आ० मा० इत्यत्र फलिष्यतीति पदं नास्ति । २. किं मुधारोप्य पू० मा० ।

३. समानजातीयसकलोदाहरणव्यापित्वम् आ० मा० ।

नामनुक्रमणाद्धेतससदृशजम्बूप्रत्ययसिद्धिरशब्दार्थत्वेऽपि विज्ञायत एवेति नेहोदाहृतेन कार्यम् ।

## (आर्यम्लेच्छप्रयोगविप्रतिपत्तिबलाबलचिन्तनम्)

तस्मादन्यदुदाहृत्य विचार्यमिदमीदृशम् ।
यत्र विप्रतिपत्तिः स्यादार्यम्लेच्छप्रयोगजा ॥
तत्र किं तुल्यता युक्ता किमेकैव बलीयसी ।
[1]समाविप्रतिपत्तिः स्याद् दृष्टार्थव्यवहारिणाम् ॥
आर्यास्तावद्विशिष्येरन्नदृष्टार्थेषु कर्मसु ।
दृष्टार्थेषु तु तुल्यत्वमार्यम्लेच्छप्रयोगिणाम् ॥

सर्वो हि शब्दोऽर्थप्रत्यायनार्थं प्रयुज्यते । अर्थश्च संव्यवहारप्रसिद्ध्यर्थमभिधीयते ।

तत्र यस्य विशिष्टस्य म्लेच्छेष्वर्थान्तराभिधा ।
तत्रापि तस्य सामर्थ्यमनाद्येव प्रतीयते ॥
यथैव ह्यार्यगम्येऽर्थे सम्बन्धानादिता गतिः ।
म्लेच्छगम्ये तथैव स्यादविशिष्टं हि कारणम् ॥
न प्रयोगावधिस्तस्य म्लेच्छेष्वपि हि दृश्यते ।
अनाद्योरर्थशक्त्योश्च विशेषो गम्यतां कथम् ॥
यथा च म्लेच्छदेशेऽपि धूमोऽग्नेरवबोधकः ।
एवं स्वार्थे प्रयोगस्तै[2]रिष्टः शब्दोऽपि वाचकः ॥
तस्मात्पील्वादिशब्दानां वृक्षहस्त्यादिबोधने ।
[3]समा विप्रतिपत्तिः स्यादार्यम्लेच्छप्रयोगतः ॥

इति प्राप्तेऽभिधीयते । **शास्त्रस्था वेति** [मी० सू० १।३।९] पूर्ववदेव सकलसूत्रव्याख्या योजनीया । किं च—

एवं स्वार्थे प्रयुक्तस्तैरिति । **गौणे प्रयोगे वाचकत्वव्यभिचारमाशङ्क्य स्वशब्दप्रयोगः । गौणे तु प्रयोगे यथार्थानां शब्दार्थनिर्णयोपायता नास्ति तथा तेषामपीति भावः** । आर्यम्लेच्छप्रयोग इति । **आर्यप्रयोगो वृक्षभेदे पैलवौदुम्बरौ वैश्यस्येत्यादिरिति पूर्ववदेव** । सकलसूत्रेति ।

---

१. मी० सू० १।३।८ । २. प्रयोगात्तैरिति मुद्रितपाठः ।
३. मी० सू १।३।८ ।

यथा साध्वनुरूपत्वात् प्रमादाशक्तिजेष्वपि ।
जायते वाचकभ्रान्तिस्तथैव म्लेच्छभाषिते ।।

शब्दापभ्रंशवदेव गौणभ्रान्त्यादिप्रयोगनिमित्ता अर्थापभ्रंशा भवन्ति । ते शास्त्रस्थैरेवाविप्लुतार्थक्रियानिमित्तपुण्यार्थिभिः शक्यते[1] साध्वसाधुकार्षापणमध्यादिव तत्परीक्षिभिर्विवेक्तुम् । अभियुक्तानभियुक्तज्ञानयोश्चाभियुक्तज्ञानं बलवदितरस्य सुलभापराद्धत्वात् ।

अतः शास्त्राभियुक्तत्वादार्यावर्तनिवासिनाम् ।
या मतिः सैव धर्माङ्गशब्दार्थत्वप्रमा मता ।।

एतेनार्यावर्तनिवासिमध्येऽपि—

अभियुक्ततरा ये ये बहुशास्त्रार्थवेदिनः ।
ते ते यत्र प्रयुञ्जीरन् स सोऽर्थस्तत्त्वतो भवेत् ।।

## ( स्मृत्याचारविरोधे बलाबलविचिन्तनम् )

स्मृत्याचारविरोधे वा साम्यवैषम्यसंशये ।
[2]समा विप्रतिपत्तिः स्यान्मूलसाम्याद् द्वयोरपि ।।
यथैव श्रुतिमूलत्वात्स्मरणानां प्रमाणता ।
आचाराणां तथैवेति न विशेषो बलाबले ।।

द्वितीया व्याख्या शास्त्रस्थाः पुरुषा ये वा प्रतिपत्तिस्तदाश्रयेति । शास्त्रस्था इति च म्लेच्छव्युदासेनार्यावर्तनिवासिनोऽत्र [1]गृह्यन्त इति । एवं म्लेच्छप्रसिद्धिदौर्बल्ये सूत्रं व्याख्यायेदानीमेतच्च सति प्रामाण्ये उच्यत इति । तस्यास्तु प्रमाणतैव [2]नास्तीत्याह—किञ्च यथा साध्वनुरूपत्वादिति । म्लेच्छैर्गौण्या वृत्त्या भ्रान्त्या वा तच्छब्दवाच्येऽर्थे तच्छब्देन भाषिते जायते भ्रान्तिरयमेव वाच्य इति । एवं निश्चयासामर्थ्यादप्रामाण्यमेव तस्या इत्युक्त्वा सत्यपि प्रामाण्ये दौर्बल्यमिति [3]पूर्वोपक्षिप्तमेवार्थं विवृणोति—अभियुक्तानभियुक्तयोरिति । एवं व्याख्यायमाने च यदार्यप्रसिद्धयोरभियुक्ततरप्रसिद्धेर्बलीयस्त्वमभिमतं तदपि सिद्ध्यतीत्याह — एतेनार्यावर्तनिवासीति ।

---

१. शक्यन्ते का० मु० पाठः । २. मी० सू० १।३।८ ।
१. द्रष्टव्या आ० मा० । २. न संभवतीत्याह आ० मा० ।
३. पूर्वपक्षोपक्षिप्तम् आ० मा० ।

यद्वाचारबलीयस्त्वं फलस्थत्वात्प्रतीयते ।
फलाद्वियुज्यमानं हि प्रमाणं दुर्बलीभवेत् ।।
श्रुतिराचारमूलं या फलस्था सोपलभ्यते ।
यावद्धि स्मरणं दृष्ट्वा श्रुतिरन्यानुमास्यते ।।
तावल्लब्धात्मकः पूर्वमाचारः प्रतितिष्ठति ।
प्रतिष्ठितस्य बाधश्च कीदृशः परिकल्प्यताम् ।।
तेनाचारबलीयस्त्वं समत्वं वेह युज्यते ।
स्मृतीनां वा बलीयस्त्वं शास्त्रस्था वेति वर्ण्यते ।।
उभयोः श्रुतिमूलत्वं न स्मृत्याचारयोः समम् ।
सप्रत्ययप्रणीता हि स्मृतिः सोपनिबन्धना ।।
तथा श्रुत्यनुमानं हि निर्विघ्नमुपजायते ।
आचारात्तु स्मृतिं ज्ञात्वा श्रुतिर्विज्ञायते ततः ।।
तेन द्व्यन्तरितं तस्य प्रामाण्यं विप्रकृष्यते ।
न ह्येकैव श्रुतिः काचिदाचाराणां प्रवर्तिका ।।
भिन्नाभिर्विप्रकीर्णत्वान्नास्मृताभिः प्रवर्तनम् ।
नैकप्रपाठकेनैव ह्याचाराणां विधिस्थितिः ।।
क्वचित्प्रकरणे कश्चित् कथञ्चिदुपलभ्यते ।

तद्यथाग्निप्रकरणे 'यत्सप्तदशवतीमुपधात्यन्नमेवोभयतो दधाति तस्मादुभाभ्यां हस्ताभ्यां परिगृह्य पुरुषोऽन्नमत्ति' इति। सत्यपि हेतुवन्निगदत्वे प्रसिद्धिरहिते हेत्वसम्भवात् । विधायिष्यते तु वेदे वचनेनेत्यनेन न्यायेन विध्यनुमानम् । न चैतन्नियोगतोऽर्थतः प्राप्तं येन तस्मात्प्रजा दशमासान्गर्भं धृत्वा एकादशमनु प्रजायन्त तस्मादश्वतर्यः प्रजाः इतिवत् स्वभावप्राप्तत्वेनार्थप्राप्तत्वेन वा 'तस्मादुत्तरे वयसि पुत्रान् पितोपजीवति' इतिवदनूद्येतेत्यतो[1] न्यायात्

भिन्नाभिर्विप्रकीर्णत्वादिति । स्मार्तो हि कश्चिदेकः प्रकृष्टज्ञानः सकलवेदशाखामनुस्मृत्य पिण्डीकृत्यार्थं निबध्नातीति संभवति न तु सर्व आचरितारो [2]नानावेदशाखानुसारक्षमाः । ते तु पिण्डीकृत्य परम्परया स्मृतमाचरन्तीति युक्तम् । स्मरणमूलकं च कस्यचिदेकस्य सकलवेददर्शनम् ।

२. गानवेदशाखानुसार क्षमा आ० मा० ।
१. त्यन्यार्थात् का० मु० पा० ।

पुरुषधर्मविधिः। एवम् 'अन्नमेव तद्दक्षिणतो दधाति तस्माद्दक्षिणेन हस्तेन पुरुषोऽन्नमत्ति' इति। तथा 'दीक्षितो नयनं दक्षिणं प्रथममङ्क्ते सव्यं हि मनुष्याः पूर्वमञ्जते विधृत्यै' इति। तथा यूपैकादशिन्यां 'द्वे द्वे रशने यूपमूच्छतः'। 'तस्मात् स्त्रियः पुंसोऽतिरिक्तास्तस्मादुतैको बह्वीर्जाया विन्दते नैका बहून् पतीन्' इति। तथा दर्शपूर्णमासप्रकरणेऽग्नीषोमीयविधिसम्बन्धलङ्घनेन त्वाष्ट्रवधनिमित्तेन्द्रगतब्रह्महत्यातुरीयविभागप्रतिग्रहप्रस्तावागतरजस्वलाव्रतानां भूमिशयनास्नानामांसभक्षणानभ्यङ्गानञ्जनाविलेखनाकर्तनादन्तधावनानखच्छेदना - रज्जुसंसर्जनादीनां त्रिरात्रविषयाणां प्रकरणातिरिक्तस्त्रीधर्मत्वावधारणम्।

एवं च विप्रकीर्णानामशक्यैकत्र संहृतिः।
स्मृतिमेव दृढां मुक्त्वा तस्मादस्त्यन्तरा स्मृतिः॥
तेनाचारः स्मृतिं यावदनुमातुं प्रवर्तते।
स्मृतिर्लब्धश्रुतिस्तावद्धर्ममेवावधारयेत् ॥
तस्मादाचारेभ्यः स्मृतिर्बलीयसी सन्निबन्धनेति।

## लोकवाक्यशेषयोर्विरोधे बलाबलचिन्तनम्।

त्रिवृच्चर्वश्ववालादेर्लोकेऽन्योऽर्थः प्रतीयते।
वेदे तदभियुक्तैश्च तस्मादन्यो विलक्षणः॥
तत्र किं तुल्यकल्पत्वात् पदार्थे लोकवेदयोः।
[1]**समा विप्रतिपत्तिः स्यादथवैका बलीयसी॥**
लोके तावत्त्रिवृच्छब्दस्त्रिगुणत्वस्य वाचकः।
त्रिवृद्रज्जुस्त्रिवृद्ग्रन्थिर्वेदे तु नवके स्थितः॥

त्रिवृद्बहिष्पवमानमित्युक्त्वा तृचत्रयमनुक्रान्तमिति स्तोत्रीयङ्नवकवचन एव त्रिवृच्छब्दो विज्ञायते।

तथायं चरुशब्दोऽपि लोके स्थालीनिबन्धनः।
याज्ञिकानां च वेदे च प्रसिद्धस्त्वोदनं प्रति॥

अनवस्रावितान्तरूष्मपक्वौदनवचनो हि याज्ञिकानां चरुशब्दः प्रसिद्धस्तथा वेदेऽपि 'आदित्यः प्रायणीयः पयसि चरुः' इति विहिते पश्चादुक्तमदितिमोदनेनेति वचनाच्चौदनवचनत्वं ज्ञातम्। एवमाश्ववालः प्रस्तर इत्यश्वजातीयवालमयः प्रस्तरो लोकप्रसिद्ध्या विज्ञायते। वैदिकवाक्यशेषात्तु काशेष्वश्व-

१. मी० सू० १।३।८

वालप्रसिद्धिः । एवं हि श्रूयते —

'यज्ञो वै देवेभ्योऽश्वो भूत्वापाक्रामत् सोऽपः प्राविशत् । स वालधौ गृहीतः स वालान्मुक्त्वा विवेश ह' ।

ते वालाः काशतां प्राप्ताः कार्योऽन्तः प्रस्तरस्तु तैः ।
ऐक्षव्यौ विधृती ये न ते इक्ष्ववयवात्मिके ।
लोके सिद्धे तथा वेदे काशानामेव मूलके ॥
एवमादिषु सर्वेषु प्रतिपत्तिविपर्यये ।
प्रतिपत्तेः समानत्वाद्विकल्पो हि प्रसज्यते ॥

ननु च लोकप्रसिद्धेर्धर्मं प्रत्यनङ्गत्वाद्वेदप्रसिद्धिरेव ज्यायसी ।

नैतदेवं पदार्थेषु न हि वेदो विशिष्यते ।
अदृष्टहेतुवाक्यार्थे लोकात्स ह्यतिरिच्यते ॥
तस्मादुभय्यपि त्वेषा प्रतिपत्तिः समा भवेत् ।
यदि वा पूर्वभावित्वाल्लौकिक्येव बलीयसी ॥

वेदनिरपेक्षा हि लोकप्रसिद्धिरात्मानं लभते वैदिकी पुनर्लोकप्रसिद्ध-पदान्तरसामानाधिकरण्येन सिध्येत् ।

तत्र लोकाविरुद्धा या वैदिकी सैव गृह्यते ।
लोकसिद्धिं व्यतिक्रम्य सात्मानं नैव विन्दति ॥

**'तेष्वदर्शनाद्विरोधस्य'** [ मी० सू० १।३।८ ] इति च तेषु लौकिकेषु पदार्थेष्वदर्शनाद्विरोधस्यार्थवादानां चान्यपरत्वेन गुणवादप्रायत्वात् । आदित्य-

**अथ वा बहूनां वेदैकदेशदर्शनानीति ।** तेष्वदर्शनात् विरोधस्य चेति [मी० सू० १।३।८] इत्यभिप्राय इत्यनेनास्य संबन्धः । मध्येऽभिप्रायकथनं तेष्वित्यादि मुख्यत्वाल्लौकिकेषु विरोधादर्शनं वैदिकेषु पूर्वनिविष्टलोक-प्रसिद्धिविरोधदर्शनमित्यवधारणेन दर्शितम् ।

अभिप्रायान्तरमाह — अर्थवादानां चेति । अन्यपरत्वेन स्वार्थे तात्पर्या-सम्भवाद् यथासिद्धस्यैवार्थस्य गुणाद् वादः । ततश्चादित्ययजमानरूपेण यथासंख्यं यूपप्रस्तरवचनवत् स्वर्गरूपेणाहवनीयवचनवत् सर्वार्थवादानां प्ररोचनाशेषत्वान्न पदार्थप्रतिपत्त्यङ्गत्वमध्यवसीयत इति सम्बन्धः । अत्रैव

यूपयजमानप्रस्तरस्वर्गाहवनीयादिवचनवत् कथमपि प्ररोचनाशेषत्वात् संज्ञा-संज्ञिसंबन्धकरणव्युत्पादनव्यापाररहितत्वाच्च न पदार्थप्रतिपत्त्यङ्गत्वमध्यवसीयते । तदाश्रयणे च विधिविरोधप्रसङ्गात्, तेष्वेव वा दर्शनाद्विरोधस्येत्यभिप्रायः । तथा शास्त्रस्थमन्वादिप्रसिद्धिरप्यस्मत्पक्षानुगुणैव । तथाह—

कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत् ।
त्रिवृता ग्रन्थिनैकेनेति ॥ [मनुस्मृतिः २।४४]

तस्मात्समापि तावद्भवत्विति प्राप्तेऽभिधीयते—

शास्त्रस्था प्रतिपत्तिर्या सैवात्र ज्यायसी भवेत् ।
धर्मस्य तन्निमित्तत्वात्ससाधनफलात्मनः ॥
अर्थवादकृताप्यर्थप्रतिपत्तिर्बलीयसी ।
तद्ग्राह्यत्वादृते नान्यत्तस्या ह्यस्ति प्रयोजनम् ॥

हेत्वन्तरं — संज्ञासंज्ञिसंबन्धस्य पूर्वस्य करणे सिद्धस्य व्युत्पादने[1] यादृशो व्यापारस्तद्रहितत्वम् । अस्मिन्नभिप्राये तेष्वर्थवादेषु तदीयपदार्थाग्रहणेऽपि[2] न विरोधदर्शनम्, पदार्थप्रतिपत्त्यनङ्गत्वादिति सूत्रयोजना ।

अभिप्रायान्तरमाह — तदाश्रयणे वेति । तस्यार्थवादस्तस्याश्रयणे लौकिकशब्दार्थग्राहिविधिविरोधप्रसङ्गः, तेष्वर्थवादेषु तदनाश्रयणेन विरोधदर्शनं गौणत्वेनोपपत्तेरिति । यदाह — कार्पासमुपवीतं स्याद् विप्रस्योर्ध्ववृतं त्रिवृदिति [मनु २।४४] । ननु नवतन्तुकमेव तद्रचयति, उच्यते, सन्ति तत्र नव तन्तवः । उपवीतारम्भकास्तु त्रय एव तन्तवः । तेनोपवीतं नवतन्तुरचितमिति ।

ननु धर्मसाधनावबोधपराच्छब्दाद् भवतु साधनावधारणमन्यपरा त्वर्थवादात् कथं भवेदत आह — अर्थवादकृताप्यत्रेति । यद्यपि नार्थवादः साधनं विनियुङ्क्ते, तथापि विधिस्तुत्योः समानविषयत्वनियमात् स्तुवन्नेव विनियोजकस्य विधिशब्दस्य विषयमुपदर्शयति । या चासौ नान्तरीयकी विधिविषयप्रतीतिर्यज्ञो वै देवेभ्य इत्येवं प्रवृत्तेनार्थवादेन क्रियते तां यदि विध्युद्देशो नाश्रयति तदा निष्फलैव स्यात् । ततश्चैवं प्रवृत्तिरप्यर्थवादस्य न दृष्टाय स्यादित्यभिप्रायः ।

१. वाव्युत्पादने आ० मा० । २. पदार्थग्रहणेऽपि आ० मा० ।

गौणो वा यदि वा मुख्यो वेदेनाश्रीयते हि यः ।
स धर्मसाधनत्वेन पदार्थोऽध्यवसीयते ॥
त्रिवृच्छब्दः प्रयुक्तो यः स्तोत्रीयानवकं प्रति ।
कस्तं शक्तस्ततोऽन्यत्र नेतुं जन्मशतैरपि ॥

तेन यत्र त्रिवृदग्निष्टोम इति श्रूयते तत्र तेनैवार्थेन भवितव्यम् । एवं स्तोमशब्दो यद्यपि ब्राह्मणस्तोम इत्यादिषु समुदायमात्रवचनत्वेन प्रसिद्धस्तथापि 'त्रिवृदेव स्तोमो भवति पञ्चदश स्तोमो भवति' इति वेदे श्रवणात् स्तुतेश्च मानं स्तोम इति याज्ञिकस्मरणात् तथा स्तोमे डविधिः [का० वा० ३०४५] पञ्चदशाद्यर्थ इति व्याकरणशास्त्रप्रसिद्धेरवश्यमेव त्रिवृदादिषु लोकप्रसिद्धिरति क्रमणीया। यत्तु मनुवचनं तदुभयाश्रयत्वात् समत्वेनापि युज्यते । यद्वा तत्रापि नवतन्तुकमेव त्रिवृच्छब्दात् प्रत्येष्यते तथा रशनात्रिवृत्त्वमपीति । यद्वा यथैवायं नवके दृष्टस्तथायं स्तोत्रीयागतेऽपीति । यत्रैव तत्सम्भवस्तत्रैव तत्प्रसिद्ध्यनुपाती भवति । यत्र तु संख्येयान्तरविषयत्वं तत्र वैदिकोऽर्थो गौणो गृह्यतां लौकिको वा मुख्य इति । तादृशे विषये मुख्यार्थत्वाल्लौकिकप्रसिद्धिरेव ग्रहीतव्येत्युत्तरसूत्रे वक्ष्यामः । **चोदितं तु प्रतीयेताविरोधात्** [मी० सू० १।३।१० ] इति । चरुशब्दोऽप्यन्याय्यानेकार्थाभिधानप्रतिबद्धशक्तित्वादेकत्र नियम्यमानो याज्ञिकवेदप्रसिद्धिभ्यामोदनविषय एव भवति । आश्ववालैक्षवीशब्दौ तु यदि तावद्वैदिकप्रयोगलब्धसमुदायप्रसिद्धित्वेन लौकिकीमवयवप्रसिद्धि जहीतस्ततः सिद्धमेव शास्त्रस्थप्रतिपत्तिबलीयस्त्वम् । अथापि श्येनजात्युपमित-

**तदेतदुक्तं — तद्ग्राह्यत्वादृत इति। ननु तदाश्रयणे विधौ गौणत्वं स्यादत आह — 'गौणो वा यदि वा मुख्य इति। विधौ गौणतायां प्रमाणाभावस्तच्चेदस्ति को दोषः। नावश्यं गौणतेति च यदि चेत्यनवक्लृप्त्या दर्शितम् । यदि[1] हि सादृश्यात् प्रवृत्त्यसम्भवो लौकिक्येव वा गौणी सम्भवति तत्र मुख्यत्वमेवेति । मुख्यमेवोदाहरति—[2]तथा स्तोमे डविधिरिति । स्तोमविषये डो विहितः । डान्तश्च शब्दो न स्तोत्रीयासंघातादन्यत्र दृश्यते । तेन नूनं स एव स्तोमशब्दवाच्य इति गम्यते — अथापि श्येनजात्युपमितेति । श्येनजात्युपमितस्य प्रसिद्धस्य श्येनयागस्य गौणद्वारं यत्तेन सादृश्येनापि अयमश्ववालशब्दः काशेष्वेवाप्तप्रसिद्धिस्तदर्थं एव, [3]प्रदेशान्तरेष्वप्या-**

---

१. यत्र आ० मा० ।
२. इतः पूर्वं आ० मा० इत्यत्र त्रिवृच्छब्दः प्रसिद्ध इत्यधिकः पाठः ।
३. प्रयोगान्तरेषु आ० मा० ।

प्रसिद्धश्येनयागे गौणत्वद्वारा वाप्तप्रसिद्धिः 'समानमितरच्छ्येनेन' इत्यादिष्वि-वाश्रीयते तथापि शास्त्रकल्पितत्वाद् धर्मं प्रति बलीयस्त्वम् ।

अथापि शब्दगौणत्वं तथापि बलवत्तरम् ।
स्वतन्त्रस्य हि वेदस्य दृष्टं चेन्न निवार्यते ॥
गौणं लाक्षणिकं वापि वाक्यभेदेन वा स्वयम् ।
वेदो यमाश्रयत्यर्थं को नु तं प्रतिकूलयेत् ॥

न चात्र 'सन्दिग्धेषु वाक्यशेषात्' [मी० सू० १।४।२४] इत्येतेन तुल्यार्थत्वं प्रतिपत्तिद्वयस्याप्यसन्दिग्धत्वात् ।

लौकिकी प्रतिपत्तिर्हि स्वार्थे निःसंशया स्थिता ।
वैदिक्यपि तथा स्वार्थे बाधतेऽतो विपर्ययात् ॥
तस्माच्छास्त्रगतैवैका[1] प्रतिपत्तिर्बलीयसी ।
न समा मुक्तकाचारैर्विप्रकृष्टैः ससंकरैः ॥ ६ ॥

श्रीयते । यथा स एव श्येनशब्दः समानमितरच्छ्येनेनेत्यादौ यागे, तथापि शास्त्रेण तादर्थ्येन तस्य शब्दस्य कल्पितत्वात् धर्मसाधनत्वे शास्त्रप्रमेये तस्यैव बलीयस्त्वमिति । अथैवमुच्यते गौणत्वमेवं स्यादिति । सत्यं नत्वेतद् दूषणम्, यतः सत्यपि गौणत्वे तदेव बलवत्तरमित्याह — अथापि शब्देति । शब्दस्य गौणत्वं शब्दगौणत्वमिति ।

गौणं लाक्षणिकं वापीति । लाक्षणिकं प्राशस्त्यं सर्वार्थवादेषु वेदेनैव प्रयोजनवदर्थपर्यवसायित्वमात्मनो वदताश्रितम्, वाक्यैकत्वं यत्र वेदेन दर्शितम्, तत्र [1]वाक्यभेदापादिकया वचनव्यक्त्यार्थाश्रयणमवैदिकम् । यथा वाजपेय[2]गुणविधौ । यत्र तु सोमेन यजेत, ज्योतिष्टोमेन स्वर्गकामो यजेतेति वेदेनैव वाक्यभेद आश्रितस्तत्र स एव साधुरिति । तस्माच्छास्त्रगतैवैकेति । शब्दार्थपरिपालनात्मकव्याकरणादिशास्त्रगतार्थप्रतिपत्तिर्बलीयसी न समा म्लेच्छाचारैः संस्कारैस्तथा वेदशास्त्रगता [3]प्रतिपत्तिर्बलीयसी न [4]समा-मुक्तकाचारैः स्मृतिव्यवहितैः तथाश्ववालादेः प्रसिद्धिर्बलीयसी न समा धर्मं प्रति विप्रकृष्टैराचारैरित्यधिकरणत्रयोपसंहार इति ।

---

१'. अयमजितासम्मतपाठः मुद्रितपाठस्तु शास्त्रस्थितैवैकेति ज्ञेयम् ।

१. वाक्यभेदोपपादिकया आ० मा० । २. °यवाक्ये गु° आ० मा० ।

३. स्मृतिः आ० मा० ।

४. इत आरभ्य बलीयसी नेति यावत् पंक्तिः आ० मा० इत्यत्र नास्ति ।

## पिकनेमाधिकरणम् ।

ये शब्दा न प्रसिद्धाः स्युरार्यावर्तनिवासिनाम् ।
तेषां म्लेच्छप्रसिद्धोऽर्थो ग्राह्यो नेति विचिन्त्यते ॥

तथा—

निरुक्तव्याक्रियाद्वारा प्रसिद्धिः किं बलीयसी ।
समुदायप्रसिद्धिर्वा म्लेच्छस्यैवाथ वा भवेत् ॥

म्लेच्छप्रसिद्धिर्व्यवहर्तृदौर्बल्येऽपि समुदायरूढिबलेन स्वरूपगतेन ज्यायसी प्रतिभाति ।

तत्र प्रयोक्तृदौर्बल्यस्वरूपबलवत्तयोः ।
किं तु न्याय्यतरं युक्तं ज्ञातुमित्यत्र चिन्त्यते ॥

तथा—

निरुक्तव्याक्रियाद्वारा किं शास्त्रस्था बलीयसी ।
किं वावयवविक्षेपजननात् सैव दुर्बला ॥
एवं नानोपपत्तित्वात्सन्देहे तावदुच्यते ।
निरुक्तव्याक्रियाद्वारा प्रतिपत्तिर्बलीयसी ॥
शास्त्रस्था वेत्यनेनासौ कल्प्यापि हि बलीयसी ।
सन्मूलस्य प्रमाणत्वं साध्यस्यापि वरं श्रितम् ॥
न सिद्धमप्यसन्मूलमाश्रयेण हि दूषितम् ।
कथं वेदगतैः शब्दैर्म्लेच्छस्थोऽर्थः प्रतीयते ॥
येषां दर्शनमात्रेऽपि वेद एव न पठ्यते ।
सम्भाषापि च न म्लेच्छैः सहार्यावर्तवासिनाम् ॥

तेषां म्लेच्छप्रसिद्धोऽर्थ इति । [1]पक्षसन्देहमुपपत्तिसन्देहोपन्यासाय—निरुक्तव्याक्रियाद्वारेत्यादि । अथ वा म्लेच्छस्थोऽर्थः किं म्लेच्छस्थत्वादेवासत्यपि विरोधे न ग्रहणमर्हतीति सोपपत्तिक एव प्रथमः सन्देहोपन्यासः । ततो ग्रहणार्हस्यापि सतः प्रसिद्ध्यन्तरेण सह बलाबलोपन्यासः । निरुक्तव्याक्रियाद्वारेति चोभयप्रतिज्ञानम् विवेक्तव्यम् । सैव प्रतिपत्तिः क्षमा नेतरा बाधिका चेतरस्या इति । तत्र—कथं वेदगतैः शब्दैरिति ।

---

१. पक्षसन्देहमुपन्यस्य उपपत्तिसन्देहोपन्यासः आ० मा० ।

तत्र तेषु प्रसिद्धोऽर्थः कथमार्यैः प्रतीयताम् ।
एवं च सति यस्यापि प्रसिद्धिर्नोपलभ्यते ॥
तस्यापि म्लेच्छदेशेषु सर्वेष्वन्वेष्यतां व्रजेत् ।
ततश्च निगमादीनां न कश्चिद्विषयो भवेत् ॥
अनन्तम्लेच्छदेशांश्च कः सर्वोऽनुपलप्स्यते ।
य एव स्यादनन्विष्टस्तत्र शङ्का प्रसज्यते ॥
अनन्तेषु हि देशेषु कः सिद्धः क्वेति गम्यताम् ।
निगमादिवशाच्चाद्य धातुतोऽर्थः प्रकल्पितः ॥
द्वित्रेष्वहःसु बाध्येत प्रयोगान्म्लेच्छचोदितात् ।
म्लेच्छाचारा प्रमाणत्वमथ त्वध्यवसीयते ॥
आर्यावर्ते ततः शक्या प्रसिद्ध्यन्वेषणक्रिया ।
तस्याश्चाल्पेन कालेन सदसद्भावनिर्णयः ॥
ततश्च निगमादीनां सुज्ञातः स्वार्थगोचरः ।
तस्मात्तदर्थवत्त्वाय म्लेच्छाचाराप्रमाणता ॥
धर्मे चानादरात्तेषां भ्रश्येतार्थोऽपि शब्दवत् ।
न चास्ति संस्कृतः शब्दः कश्चिन्म्लेच्छापभाषणे ॥
संस्कृतप्रतिरूपा हि तद्भाषार्थान्तरे स्थिता ।
न चावाचकरूपाणां वाचकत्वं कथञ्चन ॥

धर्मे चानादरात्तेषामिति च । मूलत [1]एवाप्रामाण्यं प्रतिपादितम् । ततश्च निगमनादीनामिति च निगमनादीनां [2]बाधकत्वं प्रतिपादितम् । अत्र च स्वतः प्रामाण्याप्रामाण्ययोग्यताविचारोऽधिकरणशरीरम् । इतरत्तु प्रासङ्गिकमविरोधात् प्रमाणेनेति[3] हेतुद्वयमभिहितमिति विवेक्तव्यमिति । कथं वेदगतैः शब्दैरिति श्लोकद्वयेनैव[4]मुच्यते । गृहीतसंबन्धः श्रूयमाणः शब्दोऽभिधायकस्तत्र येषां पिकनेमादिषु सम्बन्धग्रहणम्, ते म्लेच्छास्तावद् वेदगतान्न शृण्वन्ति, ये शृण्वन्त्यार्यास्तेषां [5]म्लेच्छस्थेषु शब्देषु सम्बन्धग्रहणासम्भव इति । क्व सिद्धिः क्वेति । क्व देशे क्वार्थं इति ।

१. °एवाप्रामाण्यप्रतिपादनम् पू० मा० ।
२. बाधकत्वप्रतिपादनम् आ० मा० ।　३. हेतुसिद्धये पू० मा० ।
४. °तेवमुच्यते आ० मा० ।　५. म्लेच्छव्यवहारगतेषु आ० मा० ।

आर्याश्च म्लेच्छभाषाभ्यः कल्पयन्तः स्वकं पदम् ।
पदान्तराक्षरोपेतं कल्पयन्ति कदाचन ।।
न्यूनाक्षरं कदाचिच्च प्रक्षिपन्त्यधिकाक्षरम् ।

तद्यथा द्राविडादिभाषायामेव तावद्व्यञ्जनान्तभाषापदेषु स्वरान्तविभक्तिस्त्रीप्रत्ययादिकल्पनाभिः स्वभाषानुरूपानर्थान् प्रतिपद्यमाना दृश्यन्ते । तद्यथौदनं चोरित्युक्ते चोरपदवाच्यं कल्पयन्ति पन्थानमतरित्युक्तेऽतर इति कल्पयित्वाहुः । सत्यं दुस्तरत्वादतर एव पन्था इति । पाप्शब्दं पकारान्तं सर्पवचनमकारान्तं कल्पयित्वा सत्यं पाप एवासाविति वदन्ति । एवं मालशब्दं स्त्रीवचनं मालेति कल्पयित्वा सत्यमित्याहुः । वैरशब्दं च रेफान्तमुदरवचनं वैरिशब्देन प्रत्याम्नायं वदन्ति । सत्यं सर्वस्य क्षुधितस्याकार्ये प्रवर्तनादुदरं वैरिकार्ये प्रवर्तत इति । तद्यदा द्राविडादिभाषायामीदृशी स्वच्छन्दकल्पना तदा पारसीकबर्बरयवनरोमकादिभाषासु किं विकल्प्य किं प्रतिपत्स्यन्त इति न विद्मः ।

तस्मान्म्लेच्छप्रसिद्धं यत्पदमार्यैर्विकल्प्यते ।
न कश्चित्तत्र विश्वासो युक्तः पदपदार्थयोः ।।
निरुक्तव्याक्रियाद्वारा यस्त्वर्थः परिगम्यते ।
पिकनेमादिशब्दानां स एवार्थो भविष्यति ।। इति प्राप्तम् ।
एवं प्राप्ते वदामोऽत्र पदं निपुणदृष्टिभिः ।
विज्ञायेताविनष्टं यत्तत्तदर्थं भविष्यति ।।

देशभाषापभ्रंशपदानि हि विप्लुतिभूयिष्ठानि न शक्यन्ते विवेक्तुम् ।

यत्तु वेदतदङ्गेषु पदं दृष्टमविप्लुतम् ।
म्लेच्छभाषासु तद्रूपमर्थे क्वचन चोदितम् ।।

आर्याश्च म्लेच्छभाषाभ्य इति । पदान्तराक्षरोपेतं यत्तु म्लेच्छैः कृतं तदूना[1]क्षरं कल्पयन्ति कदाचित् । कदाचिच्च प्रक्षिप्ताभ्यधिकाक्षरं कल्पयन्ति । अर्थाद्व्यक्षूनाक्षरं[2] तैः कृतमिति । किं विकल्प्य किं प्रतिपत्स्यन्त इति । किंशब्दस्य रूपान्तरं स्वभाषानुरूपं विकल्प्य किं प्रवृत्तिनिमित्तं म्लेच्छप्रसिद्धेऽर्थे प्रतिपत्स्यन्त इति । एवं प्रामाणिकैरार्यैर्यथा म्लेच्छप्रसिद्धघनङ्गीकृते पदेऽदृष्टार्थानुष्ठातॄणां विश्वासो न युक्त इत्याह — तस्मान्म्लेच्छप्रसिद्धं यदिति ।

---

१. तन्न्यूनाक्षरं आ० मा० । २. अर्थाद्यनूनाक्षरं आ०मा० ।

तत्तथैव प्रतीयेत प्रमाणेनाविरोधतः।
पिकनेमादि तद्धयेवं निपुणैरवधारितम् ॥
चोदितं ह्युपदिष्टं वा प्रयुक्तं वा क्रियागतम्।
म्लेच्छैरवधृतं पश्चादार्यैर्द्वैभाषिकैः क्वचित् ॥
तादृशं तु प्रतीयेत प्रामाण्येनेति निश्चितम्।
न तद्धर्मप्रमाणेन वेदाख्येन विरुध्यते ॥

अपि च— पदार्थपदसम्बन्धज्ञानापेक्षप्रवर्त्तनात्।
प्रसिद्धिर्यत्र तत्रस्था वाक्यार्थायानुगम्यते ॥
पिकादिशब्दवाच्यं वा म्लेच्छैर्यदवधारितम्।
अविरोधात् प्रमाणेन तद्विद्याद् वेदनोदितम् ॥
चोदितं वा प्रमाणेन वेदेनेत्यस्य सङ्गतिः।
आर्यैः सहाविरुद्धत्वात् तस्य तैरप्यपेक्षणात् ॥

यथैव क्लोमादयः पश्ववयवा वेदे चोदिताः सन्तोऽध्वर्य्वादिभिः स्वयमज्ञायमानार्थत्वाद् ये नित्यं प्राणिवधाभियुक्तास्तेभ्य एवावधार्य विनियुज्यन्ते। यथा च निषादेष्ट्यां कूटं दक्षिणेति विहिते य एवैतेन व्यवहरन्ति तेभ्य एवार्थतत्त्वं ज्ञात्वा दीयते। तथेह पिकनेमतामरसादिचोदितं सद्वेदादार्यावर्तनिवासिभ्यश्चाप्रतीयमानं म्लेच्छेभ्योऽपि प्रतीयेत लोकावगम्यनित्यशब्दार्थाभ्युपगमाविरोधात्। स्वेनैव प्रमाणेन प्रतीयेतेति।

यत्तु शास्त्रबलीयस्त्वादेतदग्रहणमिति। तन्न। अविरोधे दुर्बलस्यापि ग्राह्यत्वात्। यदेवात्यन्तं प्रमाणाभासमेव मृगतृष्णाज्ञानवद्भवति तत्सर्वदैव

यथैव क्लोमादय इति। क एषां पिकादिभ्यो विशेष इति चेदुक्तम् पश्ववयवा इति। पशुशरीरान्तर्वर्तिनामवयवाना[1]मुपदेशं कुर्वता वेदेनावश्यं तद्व्यवहारिम्लेच्छप्रसिद्धा एवोपादेयाः। अनन्योपायत्वात् विशस्तपश्ववयवविनियोगाधिकाराच्च तदुपदेशः सिद्ध इति।

अत एव वैदिकवाक्यार्थ इति। यतो बलवद्वाधितस्यापि प्रमाणस्याविरोधे प्रामाण्यमन्यथाभियुक्ततरार्यप्रसिद्धिबाध्यया आर्यान्तरप्रसिद्धेः। सर्वदा न प्रामाण्यं स्यात्। [2]प्रामाण्ये वा नेतरस्याबाध्यत्वमिति।

---

१. विनियोगं आ० मा०। २. अप्रामाण्ये च आ० मा०।

परिहर्तव्यं, यत्पुनर्बलवद्विरोधापेक्षमप्रमाणं भवति तद्विरोधाभावात् प्रमाणमेवे-त्यवधारणीयम् । न चैवमादि विरुध्यते । विपरीतार्थप्रसिद्धयन्तराभावात् । अत एव वैदिकवाक्यार्थस्वविषयप्रयुक्तपदार्थमात्राभियुक्ततरार्यप्रसिद्धिबलीय-स्त्वाश्रयणम् ।

प्रसिद्धौ विद्यमानायां तद्बलीयस्त्वमिष्यते ।
असत्यां तु बलीयस्त्वं वन्ध्यासुतबलोपमम् ॥

अष्टकादिषु ह्यदृष्टार्थेषु समूलकेषु स्मर्यमाणेषु गवादिपदस्वरूपतदर्थ-ज्ञानेषु च सत्यमार्याणामाप्ततरत्वाभियुक्ततरत्वे विद्येते । पिकादिषु त्वार्यबले-नैवावगतस्वरूपमात्रवाचकत्वेषु वाच्यविशेषज्ञानरहितत्वेनार्येषु निर्व्यापारी-भूतेषु पदवद्दृष्टार्थप्रतिपत्त्यर्थानादिशब्दप्रयोगलब्धसम्बन्धप्रसिद्धिम्लेच्छप्रयोगे-भ्योऽर्थानिर्णये सति न किञ्चिद्विरुद्धमाकाङ्क्षितपदार्थज्ञानं च सेत्स्यति । निगमनिरुक्तव्याकरणैरपि न चैवमादीनामर्थान्तरं किञ्चिदुदाहृतं, यत्प्राप्य कृतार्थाः सन्त इतरेषां प्रसिद्धिं परित्यजेम ।

काल्पनिक्याः प्रसिद्धेश्च या क्लृप्ता सा बलीयसी ।
तस्यां सत्यं हि नात्मानमितरा लब्धुमर्हति ॥
आश्रयाणां च दौर्बल्यं धर्मं प्रति निरूपितम् ।
दृष्टार्थव्यवहारेषु कृष्यादाविव तुल्यताम् ॥
तस्माद्यथैव सेवादौ गृहादिषु च कौशलम् ।
म्लेच्छानामधिकं तद्वदभिधेयार्थनिर्णये ॥

शब्दस्वरूपं तावत्तेनाभियुक्तत्वाच्चिरविनष्टाविनष्टत्वेन न विविञ्चीरन् । यस्तु कथमप्यविनष्ट एव शब्दस्तेषामपि प्रयोगविषयमापन्नस्तस्य चार्यवदेवानादि-वृद्धव्यवहारपरम्परयार्थं जानन्ति तत्किं तेषां निराकर्तुं शक्यते ।

पत्त्रोर्णवारवाणादि यच्च तद्देशसम्भवम् ।
तैरेवाकथितं नाम तच्च को वेदितुं क्षमः ॥

तस्मान्न तेषां व्यवहारप्रसिद्धौ दौर्बल्यम् ।

निरुक्तादेश्च सिद्धेऽर्थे तन्निमित्तादिमात्रके ।
व्यापारो न च पूर्वार्धप्रतिपत्तौ स्वरूपतः ॥

---

गवादिपदस्वरूपेति । तत्रार्यप्रसिद्धेर्विद्यमानत्वादिति ।

निरुक्ते न तावल्लोकव्यवहारप्रसिद्धान्येव पदानि तद्गतक्रियानिमित्त-शब्दप्रयोगभाक्त्वेन निरुच्यते । व्याकरणेनापि प्रसिद्धार्थानामेवाविनष्टस्वरूपान्वाख्यानमात्रं क्रियते । तत्र प्रासङ्गिकमेव कियदप्यर्थनिरूपणम् । तानि स्वविषयादन्यत्र दुर्बलानामपि न बाधकानि ।

यस्य चान्विष्यमाणापि प्रसिद्धिर्न भविष्यति ।
कामं प्रदर्शितद्वारा तत्र कल्प्याश्रयिष्यते ॥
विक्षिप्ता बहुरूपा च या सन्देहप्रदायिनी ।
अनन्योपायतामात्रे क्वचिदेव ग्रहीष्यते ॥
न चार्थप्रत्ययानङ्गनिरुक्ताद्यप्यनर्थकम् ।
षडङ्गवेदविज्ञानपूर्वकर्मक्रियाफलात् ॥

यथा महाभारतनिर्वचनान्वाख्याने द्वैपायनेनोक्तम् ।

महत्त्वाद्भारतत्वाच्च महाभारतमुच्यते ।
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ॥

[म० भा० १।१।२०६]

इत्येवं निरुक्तव्याकरणाद्यङ्गानुगृहीतवेदाध्ययनजनितकर्मावबोधपूर्वकानुष्ठानायत्तत्वात् स्वर्गादिसिद्ध्यर्थापूर्वसिद्धेरव्युत्पन्नरूपे च ज्ञातेऽपि निरुक्तावगतधात्वर्थपूर्वकनामार्थज्ञानद्वारवाक्यार्थप्रतिपत्तिपूर्वकानुष्ठानादेवादृष्टसिद्धिरिति म्लेच्छसिद्धपिकाद्यर्थग्रहणेऽपि निरुक्तादीनामर्थवत्ता सिद्धेति ॥१०॥

यथा महाभारतेति । निरुक्तज्ञानमप्यदृष्टायेत्यनेन दर्शितम् । तेन यथा तत्पापं प्रशमयति [1]तथा कर्मानुग्रहीष्यति । यद्वा निर्वचनमात्राच्चेत् सर्वपापक्षयः किं भारताध्ययनेन तदर्थानुष्ठानेन वा । तेन प्रधानफलमेवेदमङ्गस्तुत्यर्थं कीर्तितमिति तुल्यता दृष्टान्तेनेति । एवं निरुक्तेत्यादिनानुष्ठानायत्तत्वादित्यन्तेन वस्तुस्वभावो दर्शितः । अव्युत्पन्नरूप इत्यादिना च निष्पत्तिसमयोऽवधारितः । न च वेदाध्ययनमात्रेणाव्युत्पन्नज्ञानपूर्वकादनुष्ठानात् किन्तु निरुक्तादिज्ञानपूर्वकादिति ॥१०॥

---

१. एवं कस्मान्न गृहीष्यतीति अथवा आ० मा० ।

## कल्पसूत्राधिकरणम् ।

कल्पसूत्राण्युदाहृत्य संप्रत्येतद्विचार्यते ।
किमेतेषां स्वतन्त्राणां प्रामाण्यं वेदवद्भवेत् ॥
किं वा वेदत्वमेवैषां मन्त्रब्राह्मणवन्मतम् ।
वैदिकार्थप्रबन्धाद्धि नैतेषां स्मृतितुल्यता ॥

आह, के पुनः कल्पाः कानि सूत्राणीति । उच्यते ।

सिद्धरूपः प्रयोगो यैः कर्मणामनुगम्यते ।
ते कल्पा लक्षणार्थानि सूत्राणीति प्रचक्षते ॥
कल्पनाद्धि प्रयोगाणां कल्पोऽनुष्ठानसाधनम् ॥
सूत्रं तु सूचनात्तेषां स्वयं कल्प्यप्रयोगकम् ।
कल्पाः पठितसिद्धा हि प्रयोगाणां प्रतिक्रतु ॥
बौधायनीयवाराहमाशकादिप्रबन्धवत् ।
स्वसंज्ञापरिभाषाभिर्यदुत्सर्गापवादनम् ॥
हेतुदृष्टान्तवत्सूत्रं तल्लक्ष्यव्यापि लक्षणम् ।
आश्वलायनकं सूत्रं वैजावापिकृतं तथा ॥
द्राह्यायणीयलाटीयकात्यायनकृतानि च ॥

तत्र सकलप्रत्यक्षवदप्रतिपाद्यक्रतुप्रयोगोपनिबन्धनादन्तर्हितविप्रकीर्णानुमेयप्रायश्रुतिमूलस्मृतिबन्धनेभ्यो महानेव कल्पसूत्राणां विशेषोऽस्तीति न तत्तद्गतन्यायं व्यवस्थाप्य प्रामाण्यानि विज्ञायन्ते ।

**ननु विचारितानि कल्पसूत्राणि स्मृत्यधिकरणे किमेषां पुनर्विचारणात आह—वैदिकार्थप्रबन्धाद्धीति । न विचारितानि तत्र हेतुमुपरिष्टाद् वक्ष्यति[1] । अथ वा कथमेषां स्वातन्त्र्यं स्मृत्यधिकरणप्रतिपादितपारतन्त्र्याणामाशङ्क्यते । अत आह—वैदिकार्थप्रतिबन्धाद्धीति । तिरोहितप्रायवेदार्थनिबन्धनेन स्मृतिप्रणयनं सफलमाश्रितम् प्रत्यक्षवेदनिबन्धनानां तु निष्फलत्वान्न मशकादिभिः प्रणयनसंभवः । तेन नित्यानामेव शाखान्तरवत् प्रामाण्यमाशङ्क्यत इति । न तद्गतन्यायं व्यवस्थाप्येति । प्रत्यक्षसन्निधापिते मूलेऽनुमानसम्भवस्तेन तदीययोः पूर्वपक्षोत्तरपक्षयोरेष्वसंभवान्न**

---

**१. विवरिष्यते आ० मा० ।**

अप्रामाण्यं स्मृतीनां च यदशब्दतयोदितम् ।
पूर्वपक्षे न तद्वक्तुं कल्पसूत्रेषु शक्यते ॥
प्रत्यक्षवेदशब्दत्वात्तदुक्ता नापशब्दता ।
न ह्यत्यन्तानृतं वक्तुं शक्यते पूर्वपक्षिणा ॥

स्मृत्यधिकरणे चाप्रमाणत्वं मूलानुपपत्त्या पूर्वपक्षेऽभिधाय सिद्धान्तेऽनुमितश्रुतिमूलत्वेन प्रामाण्यं स्थापितम् । एतानि च न तत्रोदाहृतानि पूर्वपक्षहेत्वसम्भवात् । न चैषामिह प्रामाण्याप्रतिपादनम् । अतिरिक्तप्रामाण्यापवादप्रतिपादनार्हत्वादधिकरणस्य ।

यद्वा भवतु नामैषां तस्मिन्नपि विचारणा ।
तेषां चात्रापि सर्वेषामिति प्रामाण्यवारणा ॥

यदि धर्मं प्रति स्मृतीनां प्रामाण्यमभ्युपगम्यते । तथा सति,

तासामपि हि वेदत्वे तैर्वा तुल्यप्रमाणता ।
स्वातन्त्र्याच्छक्यते वक्तुं न तु मूलानुमानतः ॥
यद्वा प्रयोगशास्त्रत्वमङ्गानामभिधीयते ।
वेदत्वं वा षडङ्गेऽपि वेदत्वस्मृतिरस्ति हि ॥

'मन्त्रब्राह्मणयोर्वेद इति नामधेयं षडङ्गमेके' इत्यङ्गान्यपि वेदशब्दवाच्यानि स्मर्यन्ते ।

तस्मात्तान्यपि वेदा वा प्रमाणानि स्वतोऽथ वा ।
प्रतिभान्तीति कर्तव्यमन्यथा प्रतिपादनम् ॥
यद्वा शाक्यादिशास्त्राणां स्मृतिशास्त्रत्ववारणात् ।
वेदशाखासमानत्वमाशङ्क्येह निवार्यते ॥

शाक्यादयोऽपि ह्येवं वदन्त्येव । यथा 'उत्पादाद्वा तथागतानामनु-

तदधिकरणविषयत्वमिति । तथा प्रसाध्यमप्यत्रान्यदित्याह—न चैषामिति । संप्रति तत्त्वेनापौरुषेयत्वमाह—यद्वा भवतु नामेति । नन्वपौरुषेयत्वं [1]तर्कविषयो भवतु न वेदशब्दवाच्यत्वम्, [2]प्रयोगगम्यत्वाच्छब्दसम्बन्धस्य । तत्कथमुच्यते — वेदत्वं वेति । तत्राह — षडङ्गेऽपीति । अपौरुषेयत्वयुक्त्यैव स्मृतिमपेक्ष्य वेदत्वं प्रतिजानीमो न तु शब्दार्थसम्बन्धमपि साधयाम इति ।

यथोत्पादाद् वेति । अनुत्पादपक्षे हि स्वतन्त्रागमाश्रयैव धर्मस्थितिरिति ।

१. तद्विषयो आ० मा० ।
२. लोकप्रयोगगम्यत्वात् शब्दार्थसंबन्धस्य आ० मा० ।

त्वादाद्वा स्थितैवेयं धर्मनित्यता' इति ।

ततश्च वेदवन्नित्यास्तेऽपि चेदागमा मताः ।
[1]चोदनालक्षणो धर्मस्तदुक्तोऽपि प्रसज्यते ॥
कामं न प्रविशेद् ग्रामं वारितो दण्डपाणिभिः ।
स्पष्टं महापथेनैव सम्प्रति प्रविविक्षति ॥

एवमेतानि चत्वार्यपि विचारस्थानान्येकमार्गपतितानि कल्पसूत्रविचारेणैव गतप्रायाणि भविष्यन्तीति मन्वानेन तदुपन्यासमात्रमेव क्रियते ।

का गतिः कल्पसूत्राणामित्यस्मिन् संशये सति ।
प्रयोगशास्त्रतां तावत् प्राह स्म त्यक्तसंशयम् ॥
वेदत्वं कल्पसूत्राणां न मोक्तव्यं मनागपि ।
यदि वा वेदतुल्यत्वं स्वतन्त्राणां प्रतीयताम् ॥
वेदेनैवाभ्यनुज्ञाता धर्मे तेषां प्रमाणता ।
वेदत्वमेव वा सिद्धं सम्वादादिप्रमाणकम् ॥

ननु च पौरुषेयत्वादेषामेतदुभयमप्यनुपपन्नम् ।

नैतेषां पौरुषेयत्वं भविष्यति हि वेदवत् ।
माशकादिसमाख्या हि प्रोक्तत्वात्काठकादिवत् ॥

यथैव कठादिप्रोक्ताः शाखाः काठकादिसमाख्ययाभिधीयन्त इत्यकृत्रिमाः स्थापितास्तथैव वेदसमाम्नातमशकादिसमाख्यातग्रन्थनियतापि प्रत्येतव्या । यथा सामसूक्तानामिदमस्यार्षमिदमस्येति सत्यामपि तन्निमित्तायां समाख्यायां न नित्यत्वप्रतिघातः । एवं प्रख्यातर्षिप्रकल्पसूत्रग्रन्थानामपि । तथा हि—

न तावदनृषिः कश्चित्स्मर्यते कल्पसूत्रकृत् ।
कर्तृत्वं यदृषीणां तु तत्सर्वं मन्त्रकृत्समम् ॥

यथा शैशवं भवति शिशुर्वा अङ्गिरसो मन्त्रकृतां मन्त्रकृदासीदित्यत्र

कामं न प्रविशेद् ग्राममिति । यथेष्टं येन केनापि वर्त्मना धर्मे स्वागमप्रामाण्यं न प्रतिपादयेत् । तावत् प्रागुक्तहेतुनिराकृतो मीमांसकः । सम्प्रति प्रकाशं महापथेनैव आगमापौरुषेयत्वेन तत्प्रामाण्यं [1]प्रतिपादयिष्यतीति—वेदसमाम्नातेति । षडङ्गमेक इति वेदत्वेन समाम्नातस्येति ।

---

१. मी० सू० १।१।२

१. प्रतिपिपादयिषतीति आ० म० ।

मन्त्रकृच्छन्दः प्रयोक्तरि प्रयुक्त एवं तस्य कल्पस्य सूत्रस्य वा प्रयोक्तारस्तत्कारित्वेन व्यपदेक्ष्यन्ते। ब्रह्मयज्ञविधाने च 'एवं विद्वान् स्वाध्यायमधीयीत' इत्युक्त्वा तत्प्रपञ्चे 'यदृचोऽधीते यद्यजूंषि यत्सामानि यद् ब्राह्मणानि यदीतिहासपुराणानि यत्कल्पान्' इति यज्जप्यमानत्वेन विधानादार्षत्वमेव विज्ञायते। पुरुषकृतानां जपनिमित्तधर्महेतुत्वेन नित्यविधिविषयत्वासम्भवात्। अरुणपराशरशाखाब्राह्मणस्य च कल्परूपत्वात् सर्वयाज्ञिकैश्च स्वशाखाधीतव्यतिरिक्तकल्पसूत्रकारोपन्यस्तपक्षतुल्यबलत्वाध्यवसानात् कल्पजमन्त्राणां चेतरसमाम्नायाधीतवत्क्रतुविनियोगाश्रयणात् तुल्यत्वम्।

आर्षेयवचनं नित्यपर्यायित्वेन गम्यते।
आर्षेयत्वप्रसिद्धिश्च कल्पसूत्रेष्ववस्थिता॥

लाटद्राह्यायणसूत्रकाराभ्यामपि च दृढकल्पप्रामाण्यापेक्षयेदं माशकमपेक्ष्य 'तत्प्रत्यक्षविहितं चार्षकल्पेन तत्रानुमानं न विद्यते' इति ब्राह्मणविहितादप्यार्षकल्पविहितगरीयस्त्वमङ्गीकृत्योक्तम्। कात्यायनेन च कृताक्षणसूत्रप्रणयनप्रक्रमेऽभिहितं यज्ञविषयब्राह्मणगतस्तोत्रविधिवाक्यशेषे यथा माशकं तत्प्रामाण्यात् करिष्यते न तन्निरपेक्षशुद्धब्राह्मणप्रामाण्यादिति। तथा च प्रायणीयाग्निष्टोमसाम्नि यज्ञायज्ञीयेन सह वैकल्पिकं जराबोधीयमग्निष्टोमसाम

**आर्षत्वमेवेति। आर्षत्वं नित्यपर्यायमिति स्वयं वक्ष्यति। न च वेदरूपवैलक्षण्येनावेदत्वं वाच्यमित्याह — अरुणपराशरेति। लाटद्राह्यायणेति। दृढकल्पप्रामाण्यापेक्षया ब्राह्मण[1]विहितादपि आर्षेयकल्पगरीयस्त्वमङ्गीकृत्य प्रत्यक्षविहितं त्वार्षेयकल्पेन तत्रानुमानं न विद्यत इतीदमुक्तम्[2]। कस्पुनर्विशेषमपेक्ष्येदं सामान्याभिधान मार्षकल्पेनेति। तत्रोक्तं — माशकमपेक्ष्येति। स्तोत्रविधिवाक्यशेष इति। स्तोत्रविधेः स्तोत्रसाधनसामविशेषाकाङ्क्षिणो वाक्यशेषे जराबोधीयेन प्राकृतेन वा यज्ञायज्ञीयेनाग्निष्टोमस्तोत्रं कर्तव्यमित्यस्मिन्निति तदेतद् विवृणोति — तथा चेति। यज्ञायज्ञीयेन वैकल्पिकं[3] जराबोधीयमग्निष्टोमस्तोत्रे विहितमपि स्तोत्रान्तरे आर्भवे तदीयगायत्रतृतीयत्वे न लक्षितं जरा सादिति सूत्रेणेति।**

१. विषयादपि आ० मा०। २. इतीदानीमुक्तम् आ० मा०।
३. °येनैव कल्पितम् आ० मा०।

कार्यमिति पञ्चविंशब्राह्मणेऽभिहितमपि माशङ्कानुवृत्त्या कात्यायनेनार्भवीय-गायत्रतृतीयत्वेन जरासादिति लक्षितम् । आर्भवीयगायत्रीगतगायत्रानन्तरसाम्नो हि तेन समिति संज्ञा कृता । तस्माच्च परत्वेन पदैकदेशप्रयोगेण जराबोधीय-मुक्तं ढेशब्देन च ज्यौतिष्टोमिकाग्निष्टोमसामसंज्ञाभूतेन यज्ञायज्ञीयमेवाग्निष्टोम-सामत्वेन नियतम् । यदि च कल्पाद् ब्राह्मणमतिरिक्तं कात्यायनोऽमंस्यत ततः प्रत्यक्षब्राह्मणदृष्टं विकल्पमेवावक्ष्यत् ।

बहुवेदगतन्यायविवेकज्ञो यदब्रवीत ।
कात्यायनो न तद्वाच्यमन्याय्यमिति मादृशैः ।।
आचार्यवचनानां च प्रामाण्यं श्रूयते श्रुतौ ।
अङ्गानां च प्रणेतार आचार्या ऋषयो मताः ।।
यथा च सर्वशाखानां संवादात्तुल्यकल्पता ।
तथैव कल्पसूत्राणामिति प्रामाण्यतुल्यता ।।

यान्यप्यप्रत्ययितपुरुषवचनानि प्रमाणान्तरसंगतार्थानि भवन्ति तान्यपि सत्यत्वेनावधार्यन्ते किमङ्ग पुनः सत्यवाचां वचनानि ।

सत्यवाचां च वाक्यानि वैदिकैः संगतानि च ।
ज्ञातसत्यानि तान्येवं कोऽन्यथा कल्पयिष्यति ।।

अपि च—

वेदादृतेऽपि कुर्वन्ति कल्पैः कर्माणि याज्ञिकाः ।
न तु कल्पैर्विना केचिन्मन्त्रब्राह्मणमात्रकात् ।।

बहुवेदगतेति । नन्वेवं तदीयस्य सूत्रस्य पौरुषेयत्वात् पारतन्त्र्य प्रसङ्गः । उच्यते, यदेतरेषां स्वातन्त्र्यं सिद्धं तदा विद्यास्थानैकत्वादस्यापि सेत्स्यतीति । न च प्रतिपाद्यहानिः । यदि बहुवेदगतन्यायविवेकज्ञवचनात् सिद्धयति, सिद्धयतितरां [1]तदपौरुषेयादिति ।

आचार्यवचनानां चेति । कथं नित्यानामाचार्यवचनत्वमिति चेत्, उच्यते । पक्षान्तरमिदं सत्यप्यनित्यत्वे प्रमाणान्तरादनवगतमपि प्रामाण्यं वेदात् सिद्धयतीति । तथा वेदसंवादादिति । अथ वाचार्येण समाख्यानादा-चार्यवचनत्वमिति ।

सत्यवाचां चेति । वेदात् सत्यवाक्यत्वावगमादिति ।

१. तदा पौरुषेयवचनादिति आ० मा० ।

तुल्यं च सांप्रदायिकं [ मी० सू० १।२।८ ] स्वाध्यायाध्ययनविधिवचनं प्राग्दर्शितं कल्पग्रहणात् ।

अथ वा संप्रदातॄणामध्येतॄणां च यादृशः ।
मन्त्रब्राह्मणयोर्यत्नः कल्पसूत्रेषु तादृशः ॥

अनुयोगेषु वेदानां घटिकामार्गवृत्तिषु ।
न कल्पसूत्रहीनानां लभ्यते कृत्स्नवेदता ॥

तस्मात्कर्मप्रयोगाणां शास्त्रमेतदतिस्फुटम् ।
वेदो वा वेदतुल्यं वा कल्पसूत्राद्यसंशयम् ॥

एतेन धर्मशास्त्राणामङ्गानां चापि वेदता[1] ।
तत्तुल्यतापि वा वाच्या सर्वेषां सर्वहेतुभिः ॥

धर्मशास्त्रपदं येषु सर्वकालं प्रयुज्यते ।
प्रयोगशास्त्रतां तेषां वेदज्ञः को हरिष्यति ॥

अपि चाङ्गानि वेदाश्च धर्मशास्त्रं च तुल्यवत् ।
विद्यास्थानानि गण्यन्ते सर्वदा वेदवादिभिः ॥

किञ्च

कर्मणां ब्राह्मणोक्तानां यथा मन्त्राः प्रकाशकाः ।
अष्टकाः पार्वणादीनां दृश्यन्ते ते तथैव हि ॥

तथावकीर्णियागादि कृच्छ्रचान्द्रायणादि वा ।
वेदमन्त्रप्रकाश्यं सत्स्वयं कथमवैदिकम् ॥

सिद्धवह्निशिखत्वादि यच्च मन्त्रैरनूद्यते ।
चौलोपनयनप्राप्तं तत् स्यात् कथमवैदिकम् ॥

एवं च वेदमूलत्वं किमेषामनुमीयते ।
सम्भवत्येव वेदत्वे नित्यत्वे चापि तत्समे ॥

वेदं हि कल्पयित्वैभ्यः पुनस्तस्यापि नित्यता ।
वक्तव्यैव वरं तेन सा तेष्वेवावधारिता ॥

अनुयोगेषु वेदानामिति । घटिकायां मन्त्रादिलेख्यानि निक्षिप्याकृष्ट-लेख्यस्थं मन्त्रं [1]पठेति नियुञ्जते । एतन्मार्गवृत्तयश्चापरे [2]नियोगा इति ।

---

१. देवता काशीमुद्रितपाठः ।

१. पठेति घटिकायां नियुंक्ते कारणिकः आ० मा० ।

२. अनुयोगा इति आ० मा० ।

सिद्धानां नित्यतैवैका सुबोधा वेदतापि वा ।
असंशयितवेदार्थविषयत्वात् प्रकल्प्यते ॥

तस्माद्वर्षसहस्रेऽपि यस्य न ज्ञायतेऽवधिः ।
न तत्कृतकतां लब्ध्वा लभते नित्यमूलताम् ॥

यान्येव धर्मशास्त्राणां मूलवाक्यानि मन्यसे ।
तान्येवैतानि पठ्यन्त[1] इत्येतत्कल्पितं वरम् ॥

मन्वादिभिरवश्यं च स्वग्रन्थप्रतिपादने ।
तान्युपन्यसनीयानि शिष्याणां वेदवादिनाम् ॥

तेन तान्येव तैरेभ्यः सम्प्रत्तानीति गम्यते ।
के हि तेषूपलब्धेषु गृह्णीयुः प्रतिकञ्चुकान् ॥

यथा च धर्मशास्त्राणां नाद्यत्वे प्रतिकञ्चुकाः ।
ग्राह्यास्तथा पुराप्यासन्न वेदप्रतिकञ्चुकाः ॥

सम्प्रदायविनाशाच्चेद्भीतेस्तदसमर्पणम् ।
मन्वादिष्वनुमीयेत स्वग्रन्थाकरणं तथा ॥

वेदवाक्यार्पणं येषां खण्डशो नाभिसम्मतम् ।
स्वग्रन्थकरणं तेषां वेदस्थाने कथं भवेत् ॥

वेदादेव च विज्ञातो वेदार्थः साधयेत्फलम् ।
नान्यस्मात्पुरुषग्रन्थान्मन्त्राभासात्स्मृतो यथा ॥

कृता मन्वादिभिर्यद्वन्न मन्त्रप्रतिकञ्चुकाः ।
न ह्येतेन स्मृतं कर्म सिध्यतीत्यवधारणात् ॥

तथैव तैर्न कर्तव्या ब्राह्मणप्रतिकञ्चुकाः ।
नावेदविहितं कर्म फलतीति हि निश्चितम् ॥

न चैर्भिभिन्नदेशस्थवेदवाक्यसमुच्चयः ।
कृत इत्यवगन्तव्यमीदृक् ग्रन्थावधारणात् ॥

ईदृगेवं क्रमश्चायं वेदग्रन्थ इतीदृशी ।
युज्यते हि मतिः कर्तुं न मूलान्तरकल्पना ॥

तेन प्रयोगशास्त्रत्वं तदैवापतितं बलात् ।

---

१. पद्यन्त काशी मुद्रितपाठः ।

धर्मं प्रत्यप्रमाणत्वं यदैवैषां न सम्मतम् ।।
चोदनालक्षणे धर्मे पूर्वमेवावधारिते ।
अवेदस्य प्रमाणत्वं ब्राह्मणस्यापि नेष्यते ।।
तेनैषां धर्मशास्त्राणां न वा धर्मोपयोगिता ।
वेदता वाभ्युपेतव्या गतिर्नास्त्यान्तरालिकी ।।
वदन्ति धर्ममेतानि चोदनां गमयन्ति च ।
अशक्यमीदृशं वक्तुं यावदुक्तप्रमाणकैः ।।
उक्तमर्थं परित्यज्य यदनुक्तं प्रतीयते ।
अनुक्तेन च सोऽप्यर्थ इति किं नोपपद्यते ।।
तस्माद्धर्मप्रयोगस्य साक्षादुक्तस्य तत्स्वयम् ।
प्रमाणं धर्मशास्त्रं स्यान्न वेद[1]व्यवधानतः ।।
शाक्यादिनिर्मिते धर्मशास्त्राभासे निराकृते ।
धर्मप्रयोगशास्त्रत्वं तस्य वेदमिहोच्यते ।।
येनैवाकृतकत्वं हि वेदस्य प्रतिपाद्यते ।
न्यायेन तेन शाक्यादिग्रन्थस्यापि भविष्यति ।।
बोधकत्वात्प्रमाणत्वं स्वतस्तस्यापि लभ्यते ।
न च सन्दिह्यते बुद्धिर्न विपर्यस्यते क्वचित् ।।
अकर्तृकतया नापि कर्तृदोषेण दुष्यति ।
वेदवद् बुद्धवाक्यादिकर्तृस्मरणवर्जनात् ।।
बुद्धवाक्यसमाख्यापि प्रवक्तृत्वनिबन्धना ।
तद्दृष्टत्वनिमित्ता वा काठकाङ्गिरसादिवत् ।।

अवेदस्य प्रमाणत्वमिति । ब्राह्मणमपि यद्यवेदः पौरुषेयो भवति तदा न तस्य प्रामाण्यमिष्यते । नहि तदा पुरुषाभिप्रायसमर्पणो[1]पनीतायाश्चोदनायाः प्रामाण्यं स्यादिति ।

यावदुक्तप्रामाणकैरिति । यावदस्माभिरुपपत्तिजातमनन्तरमुक्तं तत्प्रमाणं येषां तैरिति । उक्तमर्थं परित्यज्येति । [2]धर्मशास्त्रोक्तमर्थमादौ परित्यज्य वेदोऽस्तीत्यनुक्तं तावत् यत् प्रतीयते । यश्चासौ प्रथमं परि-

---

१. व्यवधानवत् काशीमुद्रितपाठः ।
१. °पक्षीणायाश्चो° आ० मा० ।
२. धर्मशा[illegible] प्रतीयते यावत् आ० मा० नास्ति ।

यावदेवोदितं किञ्चिद्वेदप्रामाण्यसिद्धये ।
तत्सर्वं बुद्धवाक्यानामतिदेशेन गम्यते ॥
तेन प्रयोगशास्त्रत्वं यथा वेदस्य सम्मतम् ।
तथैव बुद्धशास्त्रादेर्वक्तुं मीमांसकोऽर्हति ॥ इति ॥११॥

एवं प्राप्ते वदामोऽत्र 'तत्रासन्निय[1]मादिति ।
असन्निबन्धनं ह्येतत्पूर्वोक्तं सर्वमीक्ष्यते ॥
इहैका परमार्थेन बुद्धिरर्थेषु जायते ।
अन्या भ्रान्तिरजातापि त्वन्या जातापि दुष्यति ॥
परेण सह केषांचिद्वाकोवाक्यानि जल्पताम् ।
उक्तयः प्रातिभासिक्यो जायन्ते परवाक्यतः ॥
स्वसंवेद्यं च सिद्धान्तमात्मीयमपि जानताम् ।
छायां तथापि रक्षन्तो जल्पन्ति प्रतिशब्दकैः ॥
यथा मीमांसकत्रस्ताः शाक्यवैशेषिकादयः ।
नित्य एवागमोऽस्माकमित्याहुः शून्यचेतनम् ॥
प्रद्वेषाद्वेदपूर्वत्वमनिच्छन्तः सत्यवादिताम् ॥
भूयसां वेदबाह्यत्वाद् बुद्धादिवचसाममी ।
अहिंसाद्यप्यतत्पूर्वमित्याहुस्तर्कमानिनः ॥
ततश्च पौरुषेयत्वादप्रामाण्यमतीन्द्रिये ।
प्रागुक्तैर्वेदनित्यत्वं वागाभासैर्विमोह्यते ॥

त्यक्तोऽर्थः सोऽपि तेनानुक्तेन वेदेन प्रतीयते । तद्धर्मशास्त्रेभ्य एवार्थनिश्चयाङ्गीकरणे किं नोपपद्यते, येन न क्रियत इति । आगमनित्यत्वाभिधानं बौद्धादीनामसन्निबन्धनं न प्रमाणेन तदाभासेन चानिबद्धं किन्तु वाङ्मात्रमित्युक्तम् ॥११॥

कथं तु प्रमाणाभासतोऽप्यबुद्धिस्वीकृतोऽर्थोऽभिधानविषयतां नीयत इत्यत्राह — इहैकापरमार्थेनेति । अस्ति प्रमाणतदाभासातिरिक्ता तृतीया बुद्धिरर्थाध्यवसायरूपेणाजातोत्पत्त्यवस्थायामेवाप्रमाणमित्यनुमीयमाना पुरुषेण स्वयं कृता, यया विषयीकृतोऽर्थोऽभिधानविषयतां नीयत इति । एवंविधस्याभिधानस्यावसरमाह — परेण सहेति ।

१. मी० सू० १।३।१२ ।

यादृशतादृशमीमांसकैरप्यतीन्द्रियविषयपुरुषवचनप्रामाण्यनिराकरणादे - पौरुषेयत्वाध्यवसाय निराकृतकारणदोषाशङ्कनिरपवादप्रामाण्यसिद्धि प्रति-हन्तुमशक्यां मन्यमाना निरुत्तरीभूता बालानुकरणवाक्यसदृशैः स्ववाक्यै-र्व्यवलिख्यमानहृदयाः सन्तोऽपि प्रक्षीणकुहेतुवचनजालाः कन्यावरणार्थागतमूर्ख-वरगोत्रप्रश्नोत्तरवत् ।

यदेव भवतां गोत्रं तदस्माकमपीतिवत् ।
आहुः स्वागमनित्यत्वं परवाक्यानुकारिणः ॥
अस्मदीयमिदं वाक्यं भवतामिति चोदिताः ।
जल्पन्त्यस्माकमेवैतच्छ्रुत्वा मीमांसकैर्हृतम् ॥
त्यक्तलज्जं ब्रुवाणो हि वाचोयुक्तिमनर्थिकाम् ।
कुर्वन् परातिसन्धानमश्रान्तः कोऽवसीदति ॥
तत्र शाक्यैः प्रसिद्धापि सर्वक्षणिकवादिता ।
त्यज्यते वेदसिद्धान्ताज्जल्पद्भिर्नित्यमागमम् ॥
धर्मस्तेनोपदिष्टोऽयमनित्यं सर्वसंस्कृतम् ।
क्षणिकाः सर्वसंस्कारा अस्थिराणां कुतः क्रिया ॥
बुद्धिबोध्यं त्रयादन्यत् संस्कृते क्षणिकं च तत् ।

**यथा हि परवाक्याज्जन्म तथा वक्ष्यति—यादृश तादृशेत्यादिना ।**

**ननु स्वसिद्धान्तं जानतां किमिति स्वपराप्रसिद्धार्थोक्तिरित्यत्राह — छायां तथापीति । प्रतिज्ञाहान्या पराजयाच्छायाहानिर्मा भूदिति । तदेवमेवं-विधं शाक्यादीनां प्रत्यवस्थानम् । अतः स्वपरप्रसिद्धिबाधितत्वादसाधक-मित्याह — यथामीमांसकादिति । तन्मात्रे चेति पूर्वानभ्युपगतागमनित्यता-भिधानमात्रेऽपि कृते भूयिष्ठां स्वागमप्रामाण्यविषयिणीं सत्यवादिता-मिच्छन्त इति ।**

**प्रश्नोत्तरवदिति । दृष्टान्ते वतिः । तदस्माकमपीति । वदित्युदाहरण इति । सेयमसन्निबन्धनता सिद्धान्तविरोधादेवं विज्ञापयितव्येत्याह—तत्र शाक्यैरिति । क्व पुनरनित्यत्वधर्मकं सर्वं संस्कृतं बोधितमत आह — क्षणिकाः सर्वेति । कर्मपदार्थं निषेधतोक्तं क्षणिकाः सर्वसंस्काराः स्थैर्य-विकलास्तथाविधानां च — कुतः क्रियेति । के पुनः संस्कारशब्दवाच्या ये क्षणिकत्वेनाभिमता इत्यत आह — बुद्धिबोध्यं त्रयादिति । प्रतिसंख्या**

तथा शब्देऽपि बुद्धेर्नियमान्नाभिव्यक्तिर्द्वेधापि दोषादित्येवमादिभिः सर्वदा पदार्थसम्बन्धानित्यत्वप्रतिपादनात्तद्विपरीतमागमनित्यत्वमभ्युपगम्यमानं लोकोपहासास्पदमात्रमेव भवेत् । तथा हि—

यस्तन्तूननुपादाय तुरीमात्रपरिग्रहात् ।
पटं कर्तुं समीहेत स हन्याद् व्योममुष्टिभिः ॥
यावदागमनित्यत्ववेश्मदारूपकल्पिते ।
हेत्वाभासाग्निनिर्दग्धे तस्मिंस्तद्वेश्म दुष्करम् ॥

व्यवहारनित्यताशब्दश्च क्रियानित्यत्वपर्यायः । तद्यस्य शब्दार्थसम्बन्धानामनित्यत्वं तस्य तदाश्रयव्यवहारनित्यत्वं किमाधारं भविष्यतीत्यतिदुःसम्पादम् ।

**प्रतिसंख्या निरोध[धो]व्योमभ्य इति । एवं सर्वपदार्थक्षणिकत्वाभिधानेन शब्देन सोक्तेत्युक्तम् । किञ्च विशेषणशब्देऽपि प्रतिपादितेत्याह — तथा शब्देऽपीति । बुद्धेर्नियमादिति । बुद्धिर्नियता कश्चिदेव शब्द उपलभ्यते । तदेतदुत्पत्तौ घटते नाभिव्यक्तौ । सा हि विषयसंस्कारादिन्द्रियसंस्काराद्वा स्यात् । द्विधापि च समानदेशवृत्तित्वात् संस्कारो ह्यविशेषित[1] इति घटायोन्मीलितं चक्षुष्पटं न हि न पश्यतीति नियमानुपपत्तिदोष इति । क्वचित्पाठोऽवृद्धेर्नियमादिति । तत्र वृद्ध्यभावस्य नियमप्रसङ्गादिति योजनेति । आरम्भ्यानुरूपेषु आरम्भकेषु सत्सु निमित्तकारणवशादारम्भ्यसिद्ध्यभ्युपगमो व्योममुष्टिप्रहारवल्लोकोपहासकर एव भवतीति ।**

**दृष्टान्तेन दर्शयति — यस्तन्तूननुपादायेति । यावदागमनित्यत्वेति । आगमनित्यत्ववेश्मदारु यावदुपकल्पितं तस्मिन् दारुणि हेत्वाभासाग्निभिस्तव हेत्वग्न्यभिमतैर्दग्ध इति । व्यवहारनित्यताशब्दश्चेति । जातितो व्यक्तितो वा नित्येनाश्रयेणोपलक्षितत्वात् क्रियाया नित्यत्वम् । तद्यस्य शब्दार्थसम्बन्धानां जातितो[2]व्यक्तितोऽपि न[3] नित्यत्वं तस्य तदाश्रयस्य व्यवहारस्य नित्यत्वं नाधारतोऽपि निरूपयितुं शक्यम् । उपलक्षणाधारं हि तत् क्रियायामुपचर्यते । न चोपलक्षणं नित्यत्वाधारं लभ्यत इति ।**

---

१. ह्यविशेषेण आ० मा० ।
२. व्यक्तितो पू० मा० इत्यत्र नास्ति ।
३. नेत्यारभ्य व्यवहारस्येति यावत् आ० मा० इत्यत्र नास्ति ।

न च शब्दार्थसंबन्धकूटस्थत्वमनिच्छताम्।
नित्यता व्यवहारस्य निराधारावकल्पते॥

शब्दादिषु विनश्यत्सु व्यवहारः क्व वर्तताम्।
स्थितैषा धर्मतेत्येतदर्थशून्यमतो वचः॥

एषेत्यपि न निर्देष्टुं शक्या क्षणविनाशिनी।
किमुत स्थितया साकं एषेत्यस्यैकवाक्यता॥

तेनानित्यशब्दवादिनामागमनित्यत्वानुपपत्तेरतीन्द्रियविषयस्य च वाक्यस्य प्रयोगशास्त्रत्वाभावान्नासन्नियमात् [मी० सू० १।३।१२] इत्युच्यते।

असाधुशब्दभूयिष्ठाः शाक्यजैनागमादयः।
असन्निबन्धनत्वाच्च शास्त्रत्वं न प्रतीयते[1]॥

मागधदाक्षिणात्यतदपभ्रंशप्रायासाधुशब्दनिबन्धना हि ते। 'मम वि हि भिक्खवे कम्मवच्चइ वसी सव। तथा उक्खित्ते लोडस्मि उक्खेवे अत्थि कारणम्। षडणे णत्थि कारणम्। अत्थुम्भवे कारणं इमे संखडा धम्मा संभवन्ति सकारणा अकारणा विणस्संति। उप्पत्तिमणुकारणमित्येवमादयः'।

ततश्चासत्यशब्देषु कुतस्तेष्वर्थसत्यता।
दृष्टापभ्रष्टरूपेषु कथं वा स्यादनादिता॥

वेदेषु हि तावदेव पदवाक्यसंघातात्मकत्वादिहेत्वाभासैः कृतकत्वभ्रान्तिर्भवति।

या तद्बहिरवस्थानाद्वेदरूपं न दृश्यते।
ऋक्सामादिस्वरूपे तु दृष्टे भ्रान्तिर्निवर्तते॥

आदिमात्रमपि श्रुत्वा वेदानां पौरुषेयता।
न शक्याध्यवसातुं हि मनागपि सचेतनैः॥

दृष्टार्थव्यवहारेषु वाक्यैर्लोकानुसारिभिः।
पदैश्च तद्विधैरेव नराः काव्यानि कुर्वते॥

**न चासौ निराधारोऽवकल्पत इत्याह — न च शब्दार्थसम्बन्ध इति। स्वरूपनिरूपणमेव नित्यानित्यत्वावधारणे प्रधानं कारणम्। तथा हि वेदानामपि नित्यत्वं रूपादेव सिद्धमप्युत्थित[1]प्रतिबोधनाय तु कर्तृस्मरणादि हेत्वन्तराभिधानमित्याह—वेदेषु हि तावदेवेति।**

---

१. प्रलीयते इति काशीमुद्रितपाठः।

१. प्रतिपादनाय आ० मा०।

प्रपाठकचतुःषष्टिनियतस्वरकैः पदैः ।
लोकेष्वप्यश्रुतप्रायैरृग्वेदं कः करिष्यति ॥
अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् ।
होतारं रत्नधातममित्येतन्नृवचः कथम् ॥
किमालोच्य क्व वा दृष्ट्वा वाक्प्रतिच्छन्दमीदृशम् ।
रचयेत्पुरुषो वाक्यं किं चोद्दिश्य प्रयोजनम् ॥
अग्नेः पुरोहितत्वं च क्व दृष्टं येन कीर्त्यते ।
ईळेशब्दप्रयोगश्च क्व दृष्टः स्तोत्रगोचरः ॥
देवत्वं चास्य यज्ञस्य विहितं क्वोपलक्षितम् ।
विधिनैव हि देवत्वं प्रतिकर्मावधार्यते ॥
न जात्या देवतात्वं हि क्वचिदस्ति व्यवस्थितम् ।
होतृत्वमपि यत्तस्य देवताह्वानहेतुकम् ॥
रत्नाधायितमत्वं च तन्नरैर्ज्ञायते कथम् ।
अविज्ञातगुणानां च कल्पते स्तवनं न तु ॥
स्वतन्त्रो वेद एवैतत्केवलो वक्तुमर्हति ।
इषे त्वेत्ययमप्यर्थः पुरुषेणोच्यतां कथम् ॥
शाखाच्छेदोपयोगश्च पुंभिरुत्प्रेक्ष्यतां कुतः ।
एवमूर्जेत्ययं मन्त्रः केन शाखानुमार्जने ॥
वक्तुं शक्यो नियोक्तुं वा बुद्धिपूर्वककारिणाम् ।
वायवः स्थेत्ययं मन्त्रो वत्सापाकरणं प्रति ॥
एकशो विनियोक्तव्य इति कः कथयिष्यति ।

प्रपाठकचतुःषष्टीति । प्रपाठके चतुषष्ट्यां नियतो न लोके दृष्ट इत्यर्थः । नहीदृशः[1] स्वरोः लोके दृष्टपूर्वः तादृशः प्रतिनियतः स्वरो येषां तैः पदैस्तथा लोके । अश्रुतप्रायैरपि गृभ्णामि [2]तत्त्वायामीत्यादि बाहुल्यादिति किमालोच्येति । विशिष्टमर्थं सिद्धरूपमनुष्ठेयं वा परस्मै बोध्यमालोच्य वक्ता वाक्यं रचयति । इदं तु [3]स्वकृतविकल्पात्मकं न रचनां प्रयुङ्क्ते । न चायं ग्रन्थादौ देवतानमस्कारः सर्वेषां परेषामपि वाक्यानामेवंविधत्वादिति ।

---

1. नहीदृश इत्यारभ्य प्रतिनियत इति यावत् पंक्ति पू० मा० इत्यत्र नास्ति । 2. तत्वतोत्पत्त्यादि बाहुल्यादिति आ० मा० ।
3. स्वार्थं विकल्पेति आ० मा० ।

वायुशब्देन बहुवचनान्तेन मातुर्वियोज्यमान एकैको वत्सोऽभिधीयत इति नैतद् बुद्धिपूर्वकारिणा चिन्तितुं शक्यम् ।

सामवेदे यदाग्नायीप्रभृतीनां प्रयुज्यते ।
रूपं तत्रापि पौंस्नत्वे नाभिप्रायोऽस्ति कश्चन ॥

को नाम बुद्धिपूर्वकारी पुरुषोऽर्थाभिधानपराणामृगक्षराणां लोकव्याकरणादिष्वनवगतपूर्वमग्न इत्यस्य पदस्याकारमाकारेण[1] प्लुतेन विकुर्यात् ।

तथा वीतय इत्यस्मिन्नीकारस्यापि विक्रियाम् ।
तशब्दस्य च तो शब्दं येशब्दस्यापि रूपताम् ॥
को मूढो बुद्धिपूर्वो वा नियमात्कल्पयिष्यति ।
तेन वेदस्वतन्त्रत्वं रूपादेवावगम्यते ॥
किञ्चिदेव तु तद्वाक्यं सदृशं लौकिकेन यत् ।
तत्रापि च्छान्दसी मुद्रा दृश्यते सूक्ष्मदर्शिभिः ॥

एवं च यदाध्येतारोऽध्यापयितारः पार्श्वस्था वा वेदपदवाक्यतदर्थरूपाण्यालोचयन्ति तदा स्वसंवेद्यमेवापौरुषेयत्वमध्यवस्यन्ति ।

तावता तु बाह्यतार्किकाणां प्रतीतिभावना नोत्पद्यत इति तत्तत्प्रतिपादनक्षमवेदोत्थापितन्यायोपनिबन्धनान्मीमांसकैः केवलं यश एव पीतम् ।

शाक्यादिग्रन्थेषु पुनर्यदपि किञ्चित्साधुशब्दाभिप्रायेणाविनष्टबुद्ध्या प्रयुक्तं तत्रापि प्रज्ञप्तिविज्ञप्तिपश्यतातिष्ठतादिप्रायप्रयोगात्किञ्चिदेवाविप्लुतं लभ्यते ।

अर्थाभिधानपराणामृगक्षराणामिति । **निर्धारणे षष्ठीयम् अकारादयश्च निर्धार्याः । अनवगतपूर्वमिति । क्रियाविशेषणम् । अनवगतपूर्वं विकुर्यादिति । किञ्चिदेव तु तद्वाक्यमिति । अरुणपराशरशाखाब्राह्मणवाक्यमभिप्रेत्योक्तमिति ।**

**ननु मीमांसकैर्न्यायादपौरुषेयत्वं वेदस्य बोध्यते कथं रूपादेव सिद्धमुच्यते — तत्राह [1]तावतापि बाह्यतार्किकेति । इति करणं हेतौ । [2]तावता तु यस्माद् वाक्यानां कारणात् प्रतीतिभावनोत्पद्यते, तस्मात् मीमांसकैर्यश एव केवलं पीतं न पुनर[3]प्रतीतं किमपि प्रतिपादितमिति ।**

१. ओंकारेण इति काशीमुद्रितपाठः ।
१. तावतां तु वाक्यानामिति आ० मा० ।
२. तावतां तु यस्माद् वाक्यानां करणप्रतिभानं नोपपद्यते आ० मा० ।
३. प्रमीतं आ० मा० ।

किमुत यानि प्रसिद्धापभ्रष्टदेशभाषाभ्योऽप्यपभ्रष्टतराणि भिक्खवे इत्येवमादीनि द्वितीयाबहुवचनस्थाने ह्येकारान्तं प्राकृतं पदं दृष्टं न प्रथमाबहुवचने संबोधनेऽपि। संस्कृतशब्दस्थाने च ककारद्वयसंयोगोऽनुस्वारलोपः, ऋवर्णाकारापत्तिमात्रेणैव प्राकृतापभ्रंशेषु दृष्टं न डकारापत्तिरपि। सोऽयं संस्कृता धर्मा इत्यस्य सर्वकालं स्वयमेव प्रतिषिद्धोऽपि विनाशः कृत इत्यसाधुशब्दनिबन्धनत्वादित्यन्तेन हेतुना वेदत्वाकृतकशास्त्रान्तरशङ्कानिवृत्तिः। यावांश्चाकृतको विनष्टः शब्दराशिस्तस्य व्याकरणमेवैकमुपलक्षणं तदुपलक्षितरूपाणि च।

वेदे यथोपलभ्यन्ते नैवं शाक्यादिभाषिते।
प्रयोगनियमाभावादतोऽप्यस्य न शास्त्रता॥

असन्नियमादिति च व्याकरणोक्तनियमाभावादित्यर्थः।

क्षणिकत्वनिराकृतनित्यसिद्धानित्यत्वात्यन्ताविद्यमानग्रन्थनियमाभ्युपगमाभिप्रायेण वासन्नियमादित्युक्तम्।

असतां वा क्षणभङ्गशून्यवादानात्मकत्वादीनामसद्धेतुभिर्वा प्रतिपादननियमात्तदेककर्तृकधर्मवचनानामप्यप्रामाण्यम्।

कर्तृस्मरणदाढर्याच्च नैषामकृतता मता।
तेनाकृतकगम्येऽर्थे स्वातन्त्र्यान्न प्रमाणता॥

एवं समस्तवेदाङ्गधर्मशास्त्रेष्वपीदृशात्।
कर्तृस्मृतिप्रढिम्नः स्यान्न स्वातन्त्र्येण शास्त्रता॥

अनेन कल्पसूत्राणां प्रत्याख्याता स्वतन्त्रता।
कर्तृस्मृत्या दृढं ज्ञाता तेषामप्यसतां क्रिया॥

येन न्यायेन वेदानां साधितानादिता पुरा।
दृढकर्तृस्मृतेस्तस्य कल्पसूत्रेषु बाधनम्॥

क्षणिकत्वनिराकृतनित्यत्वानित्यत्वेति। क्षणिकत्वनिराकृतेन नित्यत्वेनानित्यत्वं यस्य तस्यात्यन्ताविद्यमानस्य नियमेनाभ्युपगमनाभिप्रायेणेति [1]क्वचित्तु नित्यशब्दो न पठ्यत इति।

---

१. क्वचित्त्वनित्येति पू० मा०।

यथैव हि कल्पसूत्रग्रन्थानितराङ्गस्मृतिनिबन्धनानि चाध्येत्रध्यापयितारः स्मरन्ति तथाश्वलायनबौधायनापस्तम्बकात्यायनप्रभृतीन् ग्रन्थकारत्वेन ।

ततश्च प्रागवस्थायामसतामेव बन्धनात् ।
कुतः प्रयोगशास्त्रत्वं वेदवद्वेदतैव वा ।

न चैषां समाख्यामात्रबलादेव कर्तृत्वमुच्यते । येनाख्याप्रवचनात् [मी० सू० १।१।३०] इत्युत्तरमुच्यते । पुरुषपरम्परयैव हि स्मृतेषु कर्तृषु समाख्याभ्युच्चयहेतुत्वेन ज्ञायते । यथा च कठादिचरणैरनादिभिः प्रोच्यमानानामनादिवेदशाखानामनादिसमाख्यासंभवो नैवं नित्यावस्थितमाशकादिगोत्रचरणप्रवचननिमित्तसमाख्योपपत्तिः । माशकबौधायनापस्तम्बादिशब्दा ह्यादिमदेकद्रव्योपदेशिन इति न तेभ्यः प्रकृतिभूतेभ्योऽनादिग्रन्थविषयसमाख्याव्युत्पादनसंभवः । अतश्च माशकादिसमाख्याप्यविद्यमानग्रन्थनियमनादेव प्रवृत्तेत्यपि हेत्वर्थयोजना । वेदरूपनियमाविद्यमानत्वादिति वात्र हेतुव्याख्या । कामं तु वेदाङ्गानीत्यनध्यायनियमाभावादिति वा योज्यम् । यत्तु भाष्यकारेण स्वराभावादित्यनियमार्थं[1] व्याख्यानं कृतम् ।

तन्मन्त्रेष्वप्यवेदत्वं कल्पाधीतेषु साधयेत् ।
तथा गृह्योपदिष्टेषु च्छान्दोग्यब्राह्मणेषु च ॥

ब्राह्मणानि हि यान्यष्टौ सरहस्यान्यधीयते ।
छन्दोगास्तेषु सर्वेषु न कश्चिन्नियतस्वरः ॥

तेन तेष्वप्यवेदत्वं स्वराभावात्प्रसज्यते ।
तस्मादुक्तस्वसंवेद्यरूपाभावोऽत्र कारणम् ॥

स्वरोऽपि त्वस्ति रूपांशे न त्वसावेव केवलः ॥१२॥

अतश्च वाक्यशेषोऽपि तस्मिन्नेवोपयुज्यते ।

बहवो वाक्यशेषा हि येषां लोकेष्वसम्भवः ॥
अबुद्धिपूर्वतासिद्धिस्तेन वेदस्य तैरपि ।

बृहस्पतिर्वै देवानामुदगायदिन्द्रो वृत्रमहनत्प्रजापतिर्वपामात्मन उदखिदत् । गावो वा एतत् सत्रमासत तासां दशसु मास्सु शृङ्गाण्यजायन्तेत्यादयः कथमिव बुद्धिपूर्वकारिणार्थवादाः प्रणीयेरन् ।

---

१. °दित्यन्तं नियमा० इति काशीमुद्रित पाठः ।

नित्यत्वे सति येषां हि क्लेशेन विधियोजना ।
तान् कृत्वाध्यापयन् कर्ता सुसमत्वं व्यजेज्जडैः ॥

न च तादृशवाक्यशेषमुद्रापि कल्पसूत्रादिग्रन्थेषु काचिदस्ति, यद्-बलेनाकृतकत्वमेषामवसोयेत ।

विधिशून्यतया चैषां विहिताख्यातरूपता ।
गम्यते न त्वपूर्वार्थप्रतिपादनशक्तता ॥

वर्तमानापदेशोऽपि त्वर्थवादप्ररोचितः ।
विधित्वं लभतेऽन्यत्र कल्पसूत्रेषु नास्ति सः ॥

पञ्चमेन लकारेण विधिर्यश्छन्दसि स्मृतः ।
मन्त्रब्राह्मणभिन्नत्वात्सोऽप्येतेषु न युज्यते ॥

यद्यपि षडङ्गमेक इत्यनेन कल्पसूत्राणां वेदत्वं भवेत् ।

तथापि तर्कवत्तेषां छन्दस्त्वं नोपपद्यते ॥
मन्त्रब्राह्मणयोरेव च्छान्दसा विधयः स्थिताः ।

यथैव विधिः ब्राह्मणम् । विधेयो मन्त्रः । तर्को मीमांसेति दर्शनार्थः 'विधिर्विधेयस्तर्कश्च वेदः' इत्येतस्मिन्दर्शने सति समस्तवैदिकतर्कोपसंहारात्मिका मीमांसापि वेदशब्दवाच्या भवति न त्वमन्त्र[1]ब्राह्मणरूपत्वाच्छन्दोनिबन्धनानि कार्याणि लभते तथा कल्पसूत्राण्यपीति विधिपर्यायिप्रयोगशास्त्रत्वाभावः ।

इतिहासपुराणाभ्यां सा त्वनैकान्तिकी स्मृता ।
या त्वेषां ब्रह्मयज्ञेऽपि विधानान्नित्यतोदिता ॥

इतिहासपुराणानि कल्पानिति हि सा श्रुतिः ।
तस्मात् कृत्रिममप्यत्र विद्यास्थानं ग्रहीष्यते ॥

वेदार्थोपसंहारस्य कल्पसूत्रानपेक्षैः कर्तुमशक्यत्वादवश्यं च यावद्वेदं यावत्कर्मप्रयोगं च क्रियमाणैरपि विद्यास्थानाशून्यतार्थं कैरपि कल्पसूत्रैर्भवितव्यम् ।

वेदार्थकल्पनात्कल्पो नित्ययैवाख्ययोच्यते ।
जपे च नित्यकर्तव्ये नित्यमेव विधीयते ॥

---

१. तत्त्वमन्त्र° इति काशीमुद्रित पाठः ।

कर्माभ्यासानुसन्धानं विध्यर्थश्चात्र गम्यते ।
स चार्थो नित्य एवेति नापतेद् ग्रन्थनित्यता ॥
यः पुनर्वेदसम्वाद स तत्पूर्वतयेष्यते ।
तदर्थानुगमाच्चैषां न स्वतन्त्रप्रमाणता ॥
वेदशब्दाभिधेयत्वं नैषामध्येतृषु स्थितम् ।
षडङ्गमेक इत्येतन्न च सिद्धान्तभाषितम् ॥
सम्वादत्वानुवादत्वमेकस्यैकान्तनिश्चितम् ।
ऐकान्तिकविधित्वाच्च ब्राह्मणे तन्न युज्यते ॥
कल्पादावनुवादत्वमापन्नं परिशेषतः ।
न च शाखान्तरन्यायस्तुल्याध्येतृकतावशात् ॥
सर्वशाखाविधित्वं हि सिद्धमध्येतृभेदतः ।
प्रतिशाखं तु ये कल्पास्तदर्थप्रतिपादकाः ॥
समानाध्येतृकत्वात्ते न कदाचिद्विधिक्षमाः ।
विवृण्वन्तश्च दृश्यन्ते हेतुभिर्ब्राह्मणोत्थितैः ॥
कल्पकारास्ततोऽप्येषां नैव ब्राह्मणतुल्यता ।
अन्यार्थैर्ब्राह्मणैश्चान्याञ्ज्ञापयन्त्यर्थनिर्णयान् ॥
तस्मादपि स्वतन्त्रत्वं कल्पानां नोपपद्यते ।
अर्थैकत्वेन केषाञ्चिदक्षराणां च साम्यतः ॥
सादृश्याद् ब्राह्मणभ्रान्तिर्जातैवमपनीयते ।
आचार्यवचसां यच्च प्रमाणत्वं श्रुतौ श्रुतम् ॥
श्रुतिसामान्यमात्रत्वात्तस्याप्यन्यार्थतोदिता ।

कर्माभ्यासानुसन्धानमिति । कर्मणोऽनुष्ठेयस्याभ्यासेनाहरहरभिसन्धानम[1]नुष्ठानस्य प्राशुभावायात्र विध्यर्थो दृष्टार्थत्वादध्ययनविधेः । तेन कर्मप्रयोगमहरहः सन्दधीत सविकल्पकत्वादभिसन्धानस्य येन केनचित् प्रयोगकल्पनात्मकेन शब्देनेति । विधिर्यत् प्रधानः सोऽर्थो नित्य एव, तेन न तद्ग्रन्थनित्यतापि भवतीति ।

तस्याप्यन्यार्थतोदितेति । *भाष्यकारेणा*चिनोत्यस्य बुद्धिमित्याचार्यो

---

१. प्रयोग इति आ० मा० ।

व्याचक्षाणस्य[1] वेदार्थान्वेदांश्च वदतः स्वयम् ॥
शिष्यान्प्रत्याप्तभावात्स्यादाचार्योक्तिप्रमाणता ।

आचार्यशब्दस्यार्थो मन्वादिभिरेवं व्याख्यातः ।

उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः ।
साङ्गं च [सकल्पं] सरहस्यं च तमाचार्यं प्रचक्षते ॥ इति ।
[मनुस्मृतिः २।१४०।]

वेदसंप्रदानकाले च शिष्यास्तद्वचःसु कथं नाम श्रद्दधीरन्नित्येवमर्थमाचार्यवचनं प्रमाणमित्युक्तं न कल्पसूत्रकारवचनविषयम् ।

न च पुंवचनं सर्वं सत्यत्वेनावगम्यते ।
वागिह श्रूयते यस्मात्प्रायादनृतवादिनी ॥

तथान्यत्राप्युक्तम् । 'तस्माद् द्वयं वाचा वदति सत्यं चानृतं च पाप्मनां ह्येषा विद्धेति' ॥१३॥

वेदादेवानृतत्वं च तद्वाचामवगम्यते ।
विसंवादो हि भूयिष्ठस्तन्न्यायेन च दृश्यते ॥
[2]सर्वत्र प्रयुक्तत्वादित्यनेन निदर्श्यते ।
संनिधानाच्च शास्त्रस्य विसंवादः स्फुटः स्फुटः ॥

तत्र यद्वृत्तिकारेणोदाहरणं पार्वणस्थालीपाकविषयगृह्यकारवचन-

**वेदोऽभिमत इति । अयं चास्यार्थ इत्याह—व्याचक्षाणांश्च वेदार्थानिति । स्वोपलम्भमूलप्रमाणदर्पेण येऽन्येभ्यो वेदान् व्याचक्षते वदन्ति वा तान् प्रत्यन्यस्योपलम्भहेतोरसम्भवादाचार्योक्तेः प्रमाणतेति । उचितं चैतद् यदङ्गप्रणेतन् अतिक्रम्याध्यापयिताचार्यो गृह्यत इत्याह — आचार्यशब्दस्यार्थो मन्वादिभिरिति ॥१३॥**

**स्फुटः स्फुट इत्यभ्यासेनातिशयं द्योतयति । गृह्यकारवचनमपि दर्शपूर्णमासविषयमपि यदि भवति तदा गृह्यस्यापि तुल्यन्यायतया विचार्यत्वादुपपन्नमेवोदाहरणमित्याशङ्क्य न तद्दर्शपूर्णमासविषयमिति दृष्टान्तेन प्रतिपादयति — गृह्यकारवचनं ह्येतदिति । स्वकालहोमाकरणविषये गृह्यकारवचनं तावदेतदासायमाहुतिरित्यादि । तच्चाहवनीया-**

---

१. व्याचक्षाणांश्चेति पाठं प्रतीकतया गृह्णात्यजितेति ज्ञेयम् ।
२. मी० सू० १।३।१४ ।

श्रवणाद् दर्शपूर्णमासचरककल्पसूत्रकारवचनाध्यारोपेण दत्तं तदत्यन्ता-ध्यारोपाभिभवाभिप्रायप्रयुक्तमित्यनादृतम् । गृह्यकारवचनं ह्येतदक्षतहोमे तावदासायमाहुतेः प्रातराहुतिर्नात्येति । आप्रातराहुतेः सायमाहुतिरित्यतश्च यथैवैतदग्निहोत्रविषयत्वेन न कल्प्यते तथैवैतदपि आपौर्णमास्या अमावास्या नात्येति । आअमावास्यायाः पौर्णमासीत्येतदपि दर्शपूर्णमासविषयं न कल्पनीय-मिति । तस्मादन्यदुदाहार्यम् ॥१४॥

## होलाकाधिकरणम् ।

देशधर्मानुदाहृत्य संप्रत्येतद्विचार्यते ।
किं व्यवस्थितमूलास्ते किं वैषां सर्वधर्मता ॥
विध्यर्थप्रतिषेधार्थाः क्रियावर्जनचिह्निताः ।
इह सर्वे उदाहार्या विचार्याश्च विभागशः ॥
प्राच्या याननुतिष्ठन्ति वर्जयन्ति च साधवः ।
तेषामेवोपदिष्टास्ते सर्वेषां वेति चिन्त्यते ॥
एवं ये दाक्षिणात्यानां प्रतीच्यानां च केचन ।
उदीच्यानां तथाचारा विचार्याः सर्वे एव ते ॥
आद्यं सूत्रद्वयं यावदिदमप्यत्र चिन्त्यताम् ।
गृह्यगौतमसूत्रादिव्यवस्थासर्वगामिते ॥

पुराणमानवेतिहासव्यतिरिक्तगौतमवसिष्ठशङ्खलिखितहारीतापस्तम्ब - बौधायनादिप्रणीतधर्मशास्त्राणां गृह्यग्रन्थानां च प्रातिशाख्यलक्षणवत् प्रतिचरणं पाठव्यवस्थोपलभ्यते । तद्यथा गौतमीयगोभिलीये छन्दोगैरेव च परिगृहीते ।

ह्यधिकरणाग्निहोत्रविषयं न कल्पत इति सिद्धम् । गृह्यस्योपासनाग्न्य-धिकरणकर्मविषयत्वात् । एवमेतदपीति ॥१४॥

• किं व्यवस्थितमूला इति । व्यवस्थितमूलतयैवासर्वधर्मतायाः सूचित-त्वात् तत्प्रतियोगि[1]सर्वधर्मतोपन्यासः । किं वैषां सर्वधर्मतेति ।

विध्यर्थप्रतिषेधार्था इति । विधेरर्थाः क्रियाचिह्निताः क्रियमाणत्वेनो-पलक्षिताः प्रतिषेधस्यार्थवर्जनचिह्निताः वर्जनीयत्वेनोपलक्षिता इति । पाठत इत्युपलक्षणमाचारतश्चेति द्रष्टव्यम् ।

---

१. स्वधर्मतो° आ० मा० ।

वासिष्ठं बह्वृचैरेव शङ्खलिखितोक्तं च वाजसनेयिभिः । आपस्तम्बीयबौधायनीये तैत्तिरीयैरेव प्रतिपन्ने इत्येवं तत्र तत्र गृह्यव्यवस्थाभ्युपगमादि दर्शयित्वा विचारयितव्यम् । किं तानि तेषामेव प्रमाणान्युत सर्वाणि सर्वेषामिति ।

किं तावत्प्रतिपत्तव्यं व्यवस्थैवेति पाठतः ।
न ह्यन्यत्र स्थिताल्लिङ्गाल्लिङ्ग्यन्यत्रानुमीयते ॥

अनुमीयतेऽनेनेत्यनुमानं लिङ्गमेवोच्यते ।

तच्च व्यवस्थितं दृष्ट्वा लिङ्गी तत्रैव गम्यताम् ।
विधिर्वा प्रतिषेधो वा न हि सोऽन्यत्र लिङ्ग्यते ॥

तत्र ग्रन्थात्मकादाचारात्मकाद्वा लिङ्गाल्लिङ्गिनौ विधिप्रतिषेधावनुमीयमानौ तद्विषयावेवानुमातुं शक्येते नान्यगतौ । कुतः —

अन्यवेश्मस्थिताद्धूमान्न वेश्मान्तरमग्निमत् ।
प्रमीयते न चादृष्टधूमैरिति हि निश्चितम् ॥
यथोपनयनं येषामाधानं च विधीयते ।
तेषामेवाग्निहोत्रादिविधिरप्यवगम्यते ॥
यथा च जातितद्भेदकुलधर्मा व्यवस्थिताः ।
तथैव देशधर्मादिव्यवस्थापि भविष्यति ॥
यदि स्यात्सर्वगामित्वं विधानप्रतिषेधयोः ।
आचारोऽपि तथैव स्याद् व्यवस्थाहेत्वसंभवात् ॥

सर्वविषयशास्त्रप्रणीतो ह्याचारः सर्वदेशगतशक्तिमत्पुरुषैरग्निहोत्रवदेवानुष्ठीयेत ।

यस्तु तं विनियोगेन कुरुते तद् व्यवस्थितम् ।
तेन नूनं श्रुतिः कापि तेषामेवं विधायिका ॥
अन्यथानुपपत्त्या च श्रुतिरत्र प्रतीयते ।
तन्मात्रानुपपत्त्या च सा तत्रैवावधार्यते ॥

यस्मादयं देशाचारोऽयं वा गृह्यादिग्रन्थोऽन्यथा वोपपद्यते यदि श्रुतिमूलकत्वं नास्तीत्यनयोपपत्त्या मूलकल्पना । तस्माद् व्यवस्थितविषयैव साध्यवसातव्या । तथा चोक्तम्, यदि च हेतुरवतिष्ठेत निर्देशादिति [मी० सू० १।२।३० ।]

यद्यन्नकरणं हेतुः शूर्पंहोमे विधीयते ।
तन्मात्रगतमेवासौ दृष्टान्तमपि कल्पयेत् ।।
यदन्नकरणं शूर्पं तेन तेनैव हूयते ।
ततश्चातिप्रसङ्गः स्यान्न दर्विपिठरादिषु ।।
एवं व्यवस्थितान् दृष्ट्वा देशाचारान् समन्ततः ।
तन्मात्रविषया युक्ता तन्मूलश्रुतिकल्पना ।।
[1]अनुमानव्यवस्थानाद्देशादिनियमादतः ।
तत्संयुक्तं प्रमाणं स्याद्यद्वाक्यमनुमीयते ।।१५।।
[2]अपि वा सर्वधर्मः स्यादित्यत्रोत्तरमुच्यते ।
तन्न्यायत्वाद्विधानस्य शक्तमात्राधिकारिणः ।।

इह स्मृतीराचारांश्चोपलभ्य मूलश्रुतिष्वनुमीयमानासु कारणानुविधायिकार्यन्यायेनावश्यमुपलभ्यमानकार्यानुरूपकारणानुमानैर्भवितव्यमिति भावनानामविशेषव्यवच्छिन्नयागदानहोमोपवासादिधात्वर्थविशेषस्वर्गादिफलकारकेति - कर्तव्यताविधयस्तावदनुमातव्याः । एवं वर्जनीयेष्वपि देहेन्द्रियमनोद्वारव्यवहारेषु प्रतिषेध्य क्रियाकारकं नरकाद्यनिष्टफलप्रतिषेधकशब्दानुमानमवश्यंभावि तावता च योग्यत्वमात्रविषयत्वान्न दिग्देशपरिच्छिन्नकर्तृविशेषाधिकारनियतप्रतिपत्तिलाभः । कुतः —

त्रिधैव ज्ञायते कर्ता विशेषेण प्रतिक्रियम् ।
योग्यत्वाप्रतिषिद्धत्वविशेषोपपदान्वयैः ।।

तदिह विहितानुष्ठानयोग्यता तावत्समस्तार्यावर्तनिवासिवर्णाश्रमाणामन्धबधिरजडमूकादिवर्जमविशिष्टा । वर्जनीययोग्यत्वमपि यथोपलभ्यमानं द्वित्रिचतुर्वर्णाश्रममात्रसंबद्धं वा तदभ्यधिकदर्शनानुमितसमस्तम्लेच्छादिविषयं वा विज्ञायते ।

तन्न्यायत्वाद् विधानस्येति । सर्वधर्मत्वप्रतिज्ञया स्वप्रसिद्धिसमर्थोऽपेक्षितो न्यायस्तच्छब्देन परामृश्यते । स न्यायो यस्य विधानस्येति तत्तन्न्यायम् । अथ वा तस्य सर्वधर्मत्वस्य न्यायो यस्मिन् विधान इति व्यधिकरणो बहुव्रीहिः । शक्तमात्राधिकारित्वाच्च तन्न्यायत्वमिति ।

१. मी० सू० १।३।१५　　　　२. मी० सू० १।३।१६

न त्वत्रोपपदं किञ्चिद्यथाचारानुसारि यत् ।
अनुमीयेत देशस्थदृष्टकर्तृविशेषणम् ॥
येऽपि च प्रतिषिध्येरन् देशान्तरनिवासिनः ।
तद्वाच्यपि पदं किञ्चिदनुमातुं न शक्यते ॥

योग्यत्वेनाविशेषप्रवृत्तोऽप्यधिकारः केनचित्कर्तृविशेषणपदेन राजा राजसूयेन वैश्यो वैश्यस्तोमेनेत्यादिवद्विशेष्येत । न चात्र दृश्यमानाचरितृवाचि किञ्चिदेकमनेकं संभावयितुं शक्यम् । कुतः —

सर्वं नामपदं तावद्व्यक्त्याकृतिनिबन्धनम् ।
यद्यदेवानुमीयेत नैकार्थमपि तद्भवेत् ॥

न तावत्प्राच्यत्वदाक्षिणात्यत्वादिजातिः प्रतीच्योदीच्यादिव्यक्तिव्यावृत्ता सर्वप्राच्यादिव्यक्तिष्वनुगता काचिदुपपद्यते यद्वचनमुपपदं होलाकाद्यधिकारं विशिष्यात् । यास्तु मनुष्यत्वब्राह्मणत्वादिजातयस्तेषु विद्यन्ते ताः सर्वदेशवासिव्यक्तिष्वविशिष्टा इति नाचारानुरूपविशेषणसमर्थत्वेन ज्ञायन्ते ।

व्यक्तिवाचि तु यन्नाम तदेकत्रैव वर्तते ।
देवदत्तादिवत्तेन न सिध्येत् कर्त्रनेकता ॥

न ह्यनन्तभेदानां प्राच्यादिपुरुषव्यक्तीनां व्यस्तसमस्तानां संबन्धानुभवासंभवादेकमभिधानमवकल्पते । एतेन गुणक्रियाजातिविशिष्टपुरुषव्यक्तिवचनत्वं प्रत्युक्तम् । न हि काश्चिदपि गुणक्रियाजातिव्यक्तयः प्रतिदेशव्यवस्थितपुरुषव्यक्त्युपलक्षणयोग्याः संभाव्यन्ते । सर्वत्र तत्रापि व्यावृत्त्यविशेषात् ।

व्यक्त्याकृतिविनिर्मुक्तः पदार्थो न च विद्यते ।
यमाश्रित्य प्रवृत्तं स्यादधिकारिविशेषणम् ॥

न त्वत्रोपपदं किञ्चिदिति । यद्यपि [1]योग्यत्वाप्रतिषिद्धत्वविशेषोपपदान्वयैरित्युपपदं[2] प्रतिषिद्धत्वात् पश्चादुक्तम्[3] तथापि पूर्वं निराकृतम् । एतन्निराकरणाधीनत्वाद् येऽपि च प्रतिषिध्येरन्निति । इतरप्रतिषेधनिराकरणस्येति । स्वर्गकामपदमिति [?] । सर्वं नामपदमिति । यौगिकमपीति [?] यौगिकत्वेन द्रव्यवचनत्वात् जातिवचनत्वाभावेऽपि पुंस्त्वाविशेषितमनुष्यजातीयमात्रद्रव्यविषयमिति विवक्षन् जात्यधिकारं स्वर्गकामपदं यथा वक्ष्यति तथास्यापि विधानस्य[4] जातिवचनत्वाभिधानम् । स्वर्गकामो

---

१. योग्यत्व प्र० इति आ० मा० । २. °पदमप्रतिषेध्यत्वात् आ० मा० ।
३. °दुपन्यस्तम् आ० मा० । ४. विधानस्येति पू० मा० इत्यत्र नास्ति ।

एतदेव प्रतिपादयन् *भाष्यकार* आह — शक्तमात्रपुरुषाधिकारप्रवृत्त-विधानविशेषणं येनोपपदेनानुमीयमानेन क्रियते न तस्याकृतिवचनता न्याय्या न व्यक्तिवचनतेति। न ह्येते होलाकाद्याकाराः काञ्चिदाकृतिमनुविधीयन्ते न व्यक्तिं न हि यावत्सु पुरुषेष्वेतेऽवस्थितास्तावतामेकेनापि व्यक्त्देशेनोपसंग्रहः संभवति। केषांचित्तस्याकृतिवचनता न्याय्या न व्यक्तिवचनतेति ग्रन्थस्तेषाम-भिप्रायः। यथैव 'जातिं तु बादरायणोऽविशेषात्' [मी० सू० ६।१।८] इति सूत्रकारः स्वर्गकामपदं यौगिकमप्युद्दिश्यमानपुंस्त्वविशेषणासंभवात्फलार्थि-मात्रमनुष्यजातिविषयोपपत्तेश्च सामर्थ्याक्षिप्तजातिमात्राधिकारं वक्ष्यति।

तथेहापि फलार्थित्वकर्तृशक्त्यावबोधनात्।
देशधर्मेषु सर्वेषु नरजातेरधिक्रिया॥

कश्चित्पुनराख्यातशब्दार्थमुपवर्णयन्निमं ग्रन्थपाठं दूषयित्वापूर्वमेव समर्थ-यमानः सूत्रगतयावच्छ्रुतविधानशब्दजनितभ्रान्तिर्विधिभावनयोश्च भेदमपश्य-न्नुभयस्वरूपनिरूपणपर्यनुयोगत्रासाद् भावार्थाधिकरणसिद्धान्तं विनाशयन्नेवमाह भाव इति वानाख्येयः स्वधर्मेणान्यदतः शब्दज्ञानात्कारकवदिति।

**यजेतेत्यत्र पूर्वः पक्षः लिङ्गस्य संख्यावदेकशब्दोपात्तत्वाद् विवक्षा ततश्च पुंस एवाधिकारः। तदेतत् सूत्रितम् — लिङ्गविशेषनिर्देशात्पुंयुक्त-मैतिशायन इति [मी० सू० ६।१।६]।**

**सिद्धान्तस्तु स्वर्गकामम्[1]पायाकाङ्क्षिणमुद्दिश्य यागो विधीयते। न चोद्दिश्यमानं लिङ्गेन विशेष्टुं शक्यमतोऽविशेषात् [2]स्वर्गकामनरजाते-रधिकारः। तदेतत् सूत्रितम् — जातिन्तु बादरायणोऽविशेषादिति [मी० सू० ६।१।८।]। संख्या त्वाख्यातेनोपादेयकर्तृत्वांशगतोपात्ता सती विवक्षिता न तु स्वर्गकामपदोपादानादिति।** कश्चित् पुनराख्यातशब्दार्थ-मिति। तस्येति पाठं दूषयित्वा पूर्वक्रमेण वा[3] न तस्येति पाठं समर्थयमानः कश्चिद् वैयाकरणः स्वाभिमत आख्यातार्थे *भाष्यं* योजयितुमाख्यातार्थ-मुपवर्णयन्नेवमाह — भाव इत्यनाख्येय[4] इत्यादि। ननूपपदार्थनिरूपकमेतद् *भाष्यम्*, किमत्राख्यातार्थेनेत्यत आह — सूत्रगतेति। विधानशब्देन सौत्रेणाख्यातस्य प्रकृतत्वात्तदेवं रूपेण तच्छब्दपरामृष्टं भ्रान्त्या मन्यते।

---

१. 'मुपायापेक्षिण' आ० मा०। २. स्वर्गकामनाजातेरधिकारः इति आ०मा०।
३. पूर्वक्रमेण वेति पू० मा० इत्यत्र नास्ति।
४. भाव इत्यनाख्ययेत्यादि आ० मा०।

तेन यः कश्चिदाख्यातप्रत्ययार्थतत्त्वं जिज्ञासमानः पृच्छति कः पुनरयं भावो भावना चेति तं प्रत्यनन्यशब्दाख्येयत्वात् केवलप्रत्ययप्रयोगदर्शनाभावाच्च सर्वधात्वर्थसामान्यवचनकरोतिपरलिङाद्युच्चारणमात्रेणैवोत्तरं दास्यते कुर्याच्छब्द इत्यर्थः। सर्वश्चाख्यायमानोऽर्थ आकृतिरूपेण वाख्यायेत व्यक्त्याकृतिगोचरातिक्रान्तिश्च किलाख्यातशब्देनोपायरहितत्वादनाख्येयोऽस्यार्थ इति। तदेव किलानेनापि ग्रन्थेनोक्तं *भाष्यकारेण*। न तस्याकृतिवचनता न्याय्या न व्यक्तिवचनतेति। विधानशब्दो हि सूत्रे पूर्वं प्रकृतस्तमेव तच्छब्देन निर्दिश्य व्यक्त्याकृतिवचनत्वादपनयति।

कुर्यादित्युच्यमानो हि करोमीति प्रपद्यते।
न विधेर्भावना या वा सामान्यव्यक्तिरूपताम् ॥

तदिदमसंबद्धमेवानुपपत्तिकं च श्रुतिसामान्यमात्रेणान्यार्थमेव सच्चतुःशृङ्गादिमन्त्रवद्भाष्यकाराभिप्रेतार्थत्यागेन स्वप्रज्ञाविलसितं प्रकाशयतान्यस्मिन्नेवार्थे योजितम्।

ननु विधिः कारकवदना[1]ख्येयत्वाभिधानं सहते भावना तु सामान्य विशेषवती भावार्थाधिकरणे दर्शिता स्फुटमाख्येया भवति। तत्र किमिति भावस्यानाख्येयतां वदति। तत्राह — विधिभावनयोश्चेति। भाव इत्यनाख्येयमिति। सामान्यविशेषात्मना स्वधर्मेण भाव इति बाह्यं वस्तु शब्दज्ञानादन्यदनाख्येयम्। स हि मन्यते शब्दोत्थापिते प्रवृत्तिनिवृत्त्यनुकूलज्ञाने एव विधि[2]निषेधौ न वाक्ये, मानान्तरासम्भवादिति।

अथ वान्यद्वस्त्वन्तरं भाव इत्याख्यातशब्दोत्थापितमेतच्छब्दज्ञानं पृथक् कृत्य शब्दान्तरेणानाख्येयमिति।

अथ वातः शब्दज्ञानादन्यतोऽनाख्येयमिति। अव्ययत्वात् पञ्चम्यदर्शनमिति [3]सिद्धान्तमनाख्येयतां कृत्वा आख्यातशब्देनैवोत्तरं पृष्टे दातव्यमित्युक्त्वा तामेवोपपादयति — सर्वश्चाख्यायमानोऽर्थ इति। एवमाख्यातशब्दार्थमुपवर्ण्य *भाष्यमप्यत्रैव* योजयति—तदेव किलानेनेति।

चतुःशृङ्गादिमन्त्रवदिति। चत्वारि शृङ्गा इति वैयाकरणैर्व्याकरणानुगतशब्दरूपानुवादी व्याख्यातस्तत्र नामाख्यातोपसर्गनिपाताः शब्द-

१. °ख्येयताभिधानं आ० मा०।
२. °निषेधौ बाह्ये मानान्तरासंवेद्यत्वादिति आ० मा०।
३. सिद्धमनाख्येयतां कृत्वा आ० मा०।

देशाचारसर्वधर्मोपपत्तिविचारणार्थोऽयं ग्रन्थः स यदि पूर्वोक्तया व्याख्ययोपपदनिराकरणविषयत्वेन वर्ण्यते तत् एतत्सूत्रव्याख्यानेन संबध्यते यथोक्तन्यायमार्गेण। यदि तु तत्परित्यागेनाख्यातप्रत्ययार्थानामनाख्येयत्वापत्तिमेव व्यक्त्याकृतिरहितार्थत्वेन वर्णयेत्ततोऽत्यन्तासंबन्धानुपयुज्यमाननिरुपपत्तिकार्थत्वेन हेय एव स्यात्। तथा हि —

तस्मादाख्यातशब्दस्य न व्यक्त्याकृतिवाचिता।
तस्मात्तद्विहितं कर्म सर्वार्थमिति विस्मयः॥

यदि नाम लिङ्गादिप्रत्ययो भावनाया विधेर्वा व्यक्तिमाकृतिं वा वदेत्ततो होलाकादयः प्रतिनियतदेशधर्माणो भवेयुर्यतस्तु व्यक्त्याकृतिविनिर्मुक्तोऽव्यपदेश्योऽर्थस्तस्मात्तद्विहितधात्वर्थविषयः सर्वपुरुषधर्म इत्येवं नीयमानमसंबद्धोदाहरणे ज्येष्ठमेव स्यात्।

अनाख्येयत्वमुक्त्वा च पर्यायैः स्वविकल्पितैः।
अन्वाख्यानं कृतं तच्च पूर्वोक्तेन विरुध्यते॥

विध्युपदेशकर्तव्यताभावनाशब्दानां ह्यत्यन्ताभूतमेव बहुभाषित्वप्रख्यापना परपर्यायत्वमध्यारोप्याचक्षाणेन स्वयमनाख्येयत्वमतीव स्थापितम्। यद्यपि तावदाख्यातप्रत्ययः कर्तृशक्तितदाधारद्रव्यमात्रं वा वदेत्तथापि ब्राह्मणो

भेदा[1]विकारस्तस्य शब्दब्रह्मणः शृङ्गाणीवोच्यन्ते। त्रयः पादा इत्युदात्तानुदात्तस्वरिताः स्वराः। द्वे शीर्षे इति प्रकृतिप्रत्ययौ। सप्तहस्ताः विभक्तयः[2] त्रिधा बद्ध इति नाभ्युरःकण्ठेषु व्याकरणाध्ययनादेवं रूपो मर्त्यानाविवेशेति[3], व्याकरणाध्ययनप्रशंसेति। [4]यदुक्तमव्यपदेश्यार्थत्वस्य हेतोः प्रकृतेन साध्येन सर्वधर्मत्वेनासम्बन्धादसम्बन्धो[5]दाहरणानां ज्येष्ठमेव स्यादिति। तदुपपादयति — यद्यपि तावदिति। यदि हि व्यक्त्याकृतिवचनत्वादसर्वधर्मता भवति तदा तदभावात् सर्वधर्मता स्यात्। कर्तृव्याकृत्यभिधानस्य च कर्तृ[6]विशेषधर्मतायां हेतुता सम्भाव्येत नान्यव्यक्त्याकृत्यभिधानस्य। सापि नास्तीत्यनेनोच्यते। तथा हि यजमानशब्दः कृदन्तः कर्तुर्व्यक्तिमाकृतिं वा वदन्नपि न स्वयं तद्विशेषेऽवतिष्ठते, किन्तु ब्राह्मण-

१. विवेकस्थस्य इति आ० मा०।
२. सप्तहस्ताः विभक्तय इति पू० मा० इत्यत्र नास्ति।
३. मर्त्यानाविशतीति आ० मा०। ४. यदुक्तमनिर्देश्यार्थत्वस्य आ० मा०।
५. °न्धोदाहरणं न ज्येष्ठमेतत् स्यादिति° आ० मा०।
६. विशिष्ट इति आ० मा०।

यजमान इतिवदुपपदाधीनविशेषावस्थानत्वात्तदधीनजात्यादिवृत्तित्वमनुरुध्यमानो न स्वगतव्यक्त्याकृतिवचनत्वविचाराधीनाधिकारित्वनिर्णयः स्यात् किमुत यदा कर्त्रभिधाननिरपेक्षविधिर्भावनादिमात्रवाचित्वमेवावस्थास्यते। यदि चैतावन्मात्रमेव सर्वधर्मत्वकारणं भवेत्ततो राजसूयाश्वमेधवैश्यस्तोमादीनामप्येवमात्मकाख्यातप्रत्ययविधेयत्वाविशेषात् सर्वधर्मत्वप्रसङ्गः। अथ तेषामनिर्देश्यार्थप्रत्ययविहितानामपि राजाद्युपपदवशादसर्वधर्मत्वम्। एवं तत्राप्यसर्वधर्मत्ववादिना तदेवोपन्यसनीयम्। सर्वधर्मत्ववादिना च निराकर्तव्यम्। तच्चाचारानुरूपव्यक्त्याकृतिवचनत्वासंभवात् सामर्थ्यलभ्यमनुष्याकृतिमात्राधिकारप्रतिपत्तेर्वा निराकृतमेव। तद्यथा चोत्तरसूत्राणि **'लिङ्गभावाच्च नित्यस्याख्या हि देशसंयोगात्'** [मी० सू० १।३।१९]। इत्येवमादीन्युपपदोपन्यासप्रत्याख्यानार्थानि संगंस्यन्ते। तस्मात्सर्वाधिकारन्यायत्वाद्विधानस्य व्यवस्थितदेशाचारगृह्यधर्मसूत्रनिबद्धधर्माणामपि सर्वधर्मत्वम् ॥१६॥

यस्तु जातिकुलगोत्रधर्मवद्व्यवस्थितविध्यनुमानमिति।

तत्रैकशब्दवाच्यानां जात्यादीनां व्यवस्थया।
दर्शनाद्विनियोगः स्यात्पञ्चावत्तादिधर्मवत् ॥

तथैव[1] पञ्चावत्तं तु भृगूणां वसिष्ठशुनकात्रिवध्यश्वकाण्वसंकृतिराजन्यानां नाराशंसो द्वितीयः प्रयाजस्तनूनपादन्येषामित्यन्वयतो व्यतिरेकतश्चोपलक्षणसंभवाद्व्यवस्थितविध्यवसानं तथैव प्रतिजातिगोत्रनियतत्रिशिखैकशिखादिकल्पव्यवस्थितविधिविशेषानुमानोपपत्तिरस्तीति दृष्टान्तदार्ष्टान्तिकवैषम्यम् ॥१७॥

व्यक्त्याकृत्यभिधेयेऽर्थे प्रत्याख्याते विशेषणे।
लोहिताक्षादिचिह्नानामधुनान्या निराक्रिया।

जातिव्यक्तिवाच्युपपदाभावेऽपि कर्तृगतसंस्थानवर्णादिगुणविशेषोपलक्षणेन कृष्णकेशाधानवदधिकारनियमः सेत्स्यतीत्याशङ्क्य निराक्रियते —

शब्दोपपदवशेनेति। एवं सदपि कर्तृजातिव्यक्त्यभिधानमसर्वधर्मत्वेन कारणमित्युक्तम्। यदा तु विधिभावनयोस्ते अभिधीयेते तदा दूरनिरस्तमेव कारणत्वमित्याह — किमुतेति ॥१६॥

---

१. यथैवेति काशीमुद्रितपाठः।

[1]लिङ्गाभावाच्च नित्यस्य नास्ति कर्तुर्विशेषणम् ।
नियतेन हि लिङ्गेन नित्यः कर्तोपलक्ष्यते ॥

यच्चिह्नं दक्षिणात्यानां लोहिताक्षादि कल्प्यते ।
अन्येषामपि तद् दृष्टं तदनाचरतामपि ॥

दृष्टमाचरणं चैतत्तच्चिह्नरहितेष्वपि ।
तस्माद्व्यवस्थितैश्चिह्नैर्नाधिकारो विशेष्यते ॥

यस्तु लिङ्गविशेषणं नित्यशब्दं मन्यते तस्योपसर्जनीभूते लिङ्गसापेक्षत्वादसमर्थसमासप्रसङ्गः । ननु लिङ्गशब्दस्य नित्यसापेक्षत्वात्स्वार्थाक्षिप्तसंबन्ध्यन्तरत्वेन सामर्थ्यविघाताभावाद्भवितव्यमेवेह समासेन देवदत्तस्य गुरुकुलमिति यथा ।

नैतत्तुल्यमनेनेष्टमपेक्षान्तरसंगतेः ।
नित्यं नापेक्षते लिङ्गं देवदत्तं यथा गुरुः ॥

गुरुशब्दस्य हि शिष्यापेक्ष एवात्मलाभ इति देवदत्तशब्दोपात्तशिष्यसंबन्धानतिरेकान्तर्णीतस्वार्थत्वान्नाभ्यधिकापेक्षाकृतसामर्थ्यप्रतिबन्धप्रसङ्गः ।

इह लिङ्गस्य लिङ्गत्वं गम्यते लिङ्ग्यपेक्षया ।
न च लिङ्ग्यभिधाय्येतन्नित्यस्येति पदं मतम् ॥

यद्यपि चैष गम्यगमकसंबन्धे सति लिङ्गशब्दः प्रवर्तते तथापि गुरुशिष्यपितापुत्रादिसंबन्धवन्नास्य तदपेक्षप्रवृत्तिनिमित्तसंबन्धिशब्दत्वप्रसिद्धिः ।

लिङ्गी यौगिकशब्दत्वात्सदा लिङ्गमपेक्षते ।
लिङ्गशब्दस्तु धात्वर्थं मुक्त्वा नान्यदपेक्षते ॥

लिङ्ग्यतेऽनेनेति हि क्रियायोगनिमित्तो यद्यपि लिङ्गशब्द इति न संबन्धिशब्दत्वेनोच्यते तथापि तु क्रियागतकारकान्तरापेक्षां न मुञ्चतीति कामं 'लिङ्गिनो लिङ्गदर्शनम्' इत्यादौ भवेदप्यसामर्थ्यपरिहारः । नित्यत्वं पुनर्लब्धस्वार्थलिङ्गापेक्षितं तद्धर्मतया षष्ठ्योपनीयत इति तत्संबन्धापेक्षायामपरि-

इह लिङ्गस्य लिङ्गत्वं गम्यते लिङ्ग्यपेक्षयेति यदुक्तं तदपि साक्षान्नास्तीत्याह — यद्यपि चैष इति । एवं साक्षादलिङ्ग्यपेक्षोऽप्येवं कथञ्चित्तदपेक्षः [1]समासात् प्रागङ्गीक्रियत इत्याह — लिङ्ग्यते-ऽनेनेति । ॥१८॥

---

१. मी० सू० १।३।१८ ।

१. समासायाङ्गीक्रियत इति आ० मा० ।

हार्योऽसामर्थ्यप्रसङ्गः। तस्मान्नित्यस्येति नियतचिह्नोपलक्ष्यकर्तृविशेषणमेवाधिकारविशेषणं वा विशेषणं वा नियतस्य कर्तुर्नित्यस्याधिकारस्य वा न प्रतिपादकं किञ्चिच्चिह्नमस्तीति न तदभिधाय्युपपदविशेषितव्यवस्थितहोलाकादिविधानोपपत्तिः ॥१८॥

इदानीं तु यदाचारमत्यन्तमनुवर्तते।
तत्प्राच्यादिसमाख्याख्यमुपन्यस्तं विशेषणम् ॥

सर्वे हि देशाचाराः प्राच्यदाक्षिणात्यादिसमाख्यातैः पुरुषैः क्रियन्ते समाख्यावर्जितेषु च नोपलभ्यन्ते। तस्मात् समाख्याविशिष्टविध्यनुमानात्तत्संयुक्तप्रमाणपक्ष एव ज्यायानिति। तत्र समाधिः।

[1]आख्या हि देशसंयोगाद्यस्मात्कर्तृषु वर्तते।
आचाराणामतः प्राप्तो विधिर्देशविशेषणः ॥
देशश्च दिग्विशिष्टः स्याद्दिग्रूपं चानवस्थितम्।
न च तद्देशसम्बन्धादनाचारोऽनुवर्तते ॥
निर्गतेष्वपि दृष्टत्वात्तद्गतेष्वप्यदर्शनात्।

समाख्यायास्तावन्न देशादन्यन्निमित्तमस्ति तद्विशिष्टविधिविहिताश्चाचाराः केवलमेव तद्देशसंबन्धमनुवर्तेरन्। उभयथापि तु व्यभिचारान्न देशनिमित्तसमाख्याविशिष्टविधानकल्पना घटते ॥१९॥

अपरस्त्वनयैवोपपत्त्या लब्धात्मीयपक्षोपपत्तिः प्रत्यवतिष्ठमान आह — 'न स्याद्देशान्तरेष्विति चेत्' [मी० सू० १।३।२०] इति।

यदि देशनिमित्तत्वात्समाख्या दूषिता त्वया।
शक्यमन्यनिमित्तत्वं वक्तुमस्या मया पुनः ॥

दिग्रूपं चानवस्थितम् इत्यनिरूपणमुक्त्वा येऽपि निरूढाः प्राच्यादयस्तद्ग्रहणेऽपि दूषणमाह—न च तद्देशसंबन्धादिति ॥१९॥

अपरस्त्वनयैवोपपत्त्येति। ययैव देशसम्बन्धव्यभिचारोपपत्त्या समाख्यानिमित्तत्वमाचाराणां त्वया दूष्यते तयैव समाख्याया अपि देशसम्बन्धनिमित्तत्वं दूषयितुं शक्यते। ततश्चादेशनिमित्ता न देशव्यभिचाराद् व्यभिचरिष्यन्तीति ॥२०॥

---

१. मी० सू० १।३।१९।

सति देशनिमित्तत्वे न स्याद्देशान्तरेष्वियम् ।
तस्मात् किमपि जात्यादि ध्रुवमस्या निबन्धनम् ॥
अस्तु वा निर्निमित्तैव विशेक्ष्यति तथापि तु ।
लब्धाचारनिमित्तानां किं निमित्तान्तरेण नः ॥

तस्मादनिमित्तया समाख्ययैवाचारविशेषसिद्धेर्न व्यभिचारिदेशनिमित्तत्वमस्याः कल्पयितव्यमित्युक्तेऽभिधीयते ॥२०॥

संबन्धैर्बहुभिर्देशसमाख्या हि प्रवर्तते ।
निवासभवजातत्वतदागमनहेतुभिः ॥

'सोऽस्यनिवास,[1]' 'तत्रभवः[2]', 'तत्र जातः[3]' तत आगतः[4]' इत्येवमादिनिमित्तपरित्यागेन न कदाचित्प्राच्यादिसमाख्या वर्तते । न चैषा देशसंयोगं व्यभिचरति । न चैनामाचारोऽनुवर्तते तन्निवासिनामपि केषाञ्चिदनाचरणाच्चिरनिर्णीतपुत्रपौत्रादीनां च देशान्तरेष्वप्याचरणादिति न समाख्यया नियतविधिसिद्धिः ।

यत्तु मथुरामभिप्रस्थितो माथुर इति *भाष्यकारेणोक्तं* तत् '[5]तद्गच्छति पथि दूतयोः' इति वा दूतविषयं कल्पयितव्यमप्रत्ययितोक्तत्वाद्वोपेक्षितव्यम् । सर्वस्मिन्नपि प्रस्थिते तद्धितस्मरणाभावात् ॥२१॥

इदानीं कर्तृविशेषण[6]विशिष्टविध्यनुमानात् प्रतिहतः कर्माङ्गभूतप्राग्देशादिविध्यनुमानसंभवं मन्यमान आह — **कर्मधर्मो वा प्रवणवत्**' [मी० सू० १।३।२२] इति ।

**एकस्मात् पदात् प्रयोगनानात्वदर्शनादिति । वाच्यविषयशिष्टाचारविप्रतिपत्तौ शास्त्रस्थप्रयोगबलीयस्त्वे दर्शिते वाचकविषयशिष्टाचारविप्रतिपत्तावपि किं शास्त्रस्थबलीयस्त्वं नेति सन्देहे पूर्ववन्नात्रशास्त्रस्थबलीयस्त्वमस्तीत्यनेनारभ्यते । तत्र शास्त्रविषयेऽर्थे शास्त्रबलीयस्त्वं स्यात्, न चायं शास्त्रविषयः । अतो व्याकरणमपि निर्मूलत्वान्न तदभियुक्तबलीयस्त्वमापादयतीत्येवं तदाक्षेपः प्रस्तोष्यते ।**

---

१. पा० सू० ४।३।८९ ।　　२. पा० सू० ४।३।५३ ।
३. पा० सू० ४।३।२५ ।　　४. पा० सू० ४।३।७४ ।
५. पा० सू० ४।३।८५ ।　　६. विशेष इति काशीमुद्रितपुस्तकपाठः ।

प्रागुदक्प्रवणो यद्वत्प्राचीनप्रवणोऽपि वा ।
देशो भवति कर्माङ्गं प्राग्देशादिस्तथा भवेत् ।।इति।।२२।।

'तुल्यं तु कर्तृधर्मेण[1]' तच्चिह्नमनवस्थितम् ।
दिक्कृष्णमृत्तिकाप्रायप्रभृतिव्यभिचारतः ।।

प्राग्देशो यो हि केषाञ्चित्सोऽन्येषां दक्षिणापथः ।
तथोदक्प्रत्यगित्येवं नैकरूप्येण गम्यते ।।

मृत्तिकाद्यपि यच्चिह्नं तत्रान्यत्र च तत्समम् ।
होलाकादिविधिस्तस्मान्न तेनापि विशेष्यते ।।

पुरुषापेक्षयाचारस्तस्मिन्नपि न दृश्यते ।
अन्यस्मिन्नपि दृष्टश्च तस्माद्देशोऽप्यकारणमिति ।।२३।।

## व्याकरणाधिकरणम्

एकस्मात् पदात् प्रयोगनानात्वदर्शनादनेकार्थप्रतिभाने सति विकल्पदोषभयादनेकादृष्टशक्तिकल्पनाप्रसङ्गाच्च गौणमुख्यविभागमाश्रित्य व्यवस्थितशास्त्रप्रयोगबलेनाव्यवस्थिते लौकिकप्रयोगबाधाद् व्यवहारादिशब्दानामर्थनिर्णयः प्रतिपादितः । एवं पुनरेकस्मिन् गवादावर्थे गोगाव्यादयो बहवः शब्दाः प्रयुज्यन्ते, तत्र

**अथ वा स्मृतिप्रामाण्यप्रतिपादनमेव व्याकरणविषये मूलासंभवेनाक्षिप्यते। यस्मात् प्रयोगोत्पत्तिरशास्त्रीया तस्मान्न व्याकरणानुगतेष्वेव [1]शब्देषु प्रामाण्यम् व्यवतिष्ठत इत्यप्रामाण्यं तस्येति । [2]तत्राविरोधादेव तावद्गाव्यादीनां गवादिभिर्व्याकरणानुगतैरबाध इति प्रतिपादयितुमेकस्मात् पदात् प्रयोगनानात्वदर्शनादित्यारम्भः।**

**एकस्य हि शब्दस्योच्चारणमेकार्थप्रतिपादनोपक्षीणम् नार्थान्तरप्रतीत्युपयोगि सम्भवति । तेनोभयार्थत्वविरोधे शास्त्रस्थया प्रसिद्धयेतरा बाध्यते। गोगावीशब्दौ त्वेकस्मिन्नर्थे लोके पर्यायेण प्रयुज्येते । तयोरयुगपत् प्रवृत्तयोरेकार्थापहारलक्षणविरोधाभावात् प्रतिशब्दसमवायिवाचक**

---

१. मी० सू० १।३।२३ ।

**१. शब्दप्रयोगो व्यव० आ० मा० ।**

**२. तत्रापि विरोधादेव आ० मा० ।**

वृद्धव्यवहारावगतप्रतिशब्दसमवायिवाचकशक्तिभेदोपपत्तेः शास्त्रस्थसर्वशब्द-प्रयोगाणां च लौकिकशब्दैरविरोधात् पदपूर्वकत्वाच्च वाक्यात्मकशास्त्रव्यापार-सिद्धेर्नपदगतसाध्वसाधुत्वप्रतिपादने व्यापारो भवति, इतरेतराश्रयत्वप्रसङ्गात् । तथा हि —

लोकप्रसिद्धशब्दार्थवशं शास्त्रं प्रवर्तते ।
अतो न लौकिकेष्वस्मात्साध्वसाधुत्वनिर्णयः ॥

वाक्यार्थेषु हि श्रुतिस्मृत्याचारविरोधदर्शनाद्बलाबलमानुपूर्व्येणावधृतमिह तु न विपरीतक्रमत्वात् ।

लोकादेवाधिगन्तव्या शब्दानां साध्वसाधुता ।
वाचकावाचकत्वेन सा च नित्यं व्यवस्थिता ॥
ध्वनिमात्राण्यसाधूनि वर्णा वा केवलात्मनाम् ।
संघातोऽर्थानपेक्षो वा मातृकाद्युपदेशवत् ॥

तेन भेरीशङ्खादिशब्दा गकारककारादयः प्रत्येकं तद्वर्गा वानर्थकत्वा दपशब्दा इति लोकव्यवहारादेवार्थं न साधयन्तीत्यसाधवो गम्यन्ते । गाव्यादयः पुनर्गवादिवदेव साधयन्त्यर्थं तेभ्योऽपि वा शीघ्रतरं प्रसिद्धतरत्वादर्थप्रतीतिमुत्पा दयन्तीति सत्यप्येकविषयानेकशब्दत्वे हस्तकरपाण्यादिशब्दवदर्थसाधनत्वात्साधुत्वे-नावधार्यन्ते ।

ततश्चावाचकत्वेन यद्यसाधुत्वमुच्यते ।
तस्य लोकविरुद्धत्वान्न ग्राह्यत्वं प्रतीयते ॥

**शक्तिभेदोपपत्तिः । न च शास्त्रस्थैरेकेषामुपादानमितरेषां वाचकत्वे विरुध्यते, बहुष्वपि शक्तेष्वन्यतरोपादानादित्याह — शास्त्रस्थसर्वप्रयोगाणां चेति । एवमुपन्यस्य[1] सम्प्रति सत्यपि विरोधे न शास्त्रस्यायं विषयः । अतो न तन्मूलायाः स्मृतेस्तदभियुक्तानां चात्र बलवत्त्वम् । किन्तु लोकप्रमाणक एवायमर्थ इति व्युत्पादयति — पदपूर्वकत्वाच्चेति । तत्र च करपाण्यादि-वदर्थसाधनात् साधुत्वेन ज्ञायन्त[2] इत्यन्ते या प्रतिज्ञा भविष्यति तदपेक्षया शक्तिभेदोपपत्तेरविरोधादिति च पञ्चम्या हेतुं निर्दिश्य पदपूर्वकत्वादित्या-दिना [3]स्वप्राधान्येन हेतुः प्रसाध्यते न[4] भेरीमृदङ्गेत्यनेन । तेन साध्यं प्रति**

---

१. एवमविरोधमुपन्यस्य आ० मा० । २. ज्ञायत आ० मा० ।
३. स्वप्रधानहेतुः आ० मा० । ४. आ० मा० इत्यत्र नेति नास्ति ।

अदृष्टविषया चेत्स्यादेतेषां साध्वसाधुता ।
वेदवाक्यैरनिर्दिष्टा न सास्त्यन्यप्रमाणिका ।।

प्रत्यक्षेण तावदुभयत्राप्यविशेषेण वर्णाः शुद्धाः प्रतीयन्ते । न तद्गते तत्समुदायगते वा साधुत्वासाधुत्वे । न चाननुभूतसंबन्धादनुमीयेते । तन्निराकरणाच्च तत्पूर्वकपुरुषवचननिराक्रियापि सिद्धा । वेदवचनं पुनर्वस्तुस्वरूपतद्गतगुणदोषान्वाख्यानपरं विधिप्रतिषेधानपेक्षं नैव किञ्चित् प्रमाणत्वेन संभवति । साधुत्वासाधुत्वयोरननुष्ठानात्मकत्वाद्विधिप्रतिषेधविषयत्वम् । अभिधाभावनाकरणभूतयोर्विधेयत्वप्रतिषेध्यत्वसंभव इति चेन्न । प्रतिशब्दमनन्तविधिप्रतिषेधवाक्यानुमानकल्पनानुपपत्तेः ।

यो हि प्रतिपदं पाठं साधूनां नाध्यवस्यति ।
विधिवाक्यानि तावन्ति स कथं प्रतिपत्स्यते ।।

अपशब्दाश्च शब्देभ्यो भूयस्त्वेन व्यवस्थिताः ।
न कलञ्जादिवत्तेषां प्रतिषेध्यत्वसंभवः ।।

व्रीह्यादीनि हि कलञ्जादीनि च नियतजातिगुणादिरूपेण परिज्ञायमानपरिमाणत्वाद्विधिप्रतिषेधगोचरीभवन्ति न तु गवादिगाव्यादीनां जातिरूपेण व्यक्तिरूपेण वा विधिप्रतिषेधावुपपद्येते । न तावत्साध्वसाधुत्वे जातिगुणाद्यात्मकसामान्यरूपेण सर्वव्यक्त्यनुगते विज्ञायेते यदालम्बनौ द्वावेव विधिप्रतिषेधावनुमीयेयातां साधुभिर्भाषेत नासाधुभिरिति ।

अविभक्ता हि शब्दत्वजातिः शब्दापशब्दयोः ।
नत्ववान्तरसामान्ये केचिद्वर्गद्वयस्थिते ।।

तेन यद्येकैका व्यक्तिर्विधीयेत प्रतिषेध्येत वा ततो यावत्पदं वाक्यान्यनुमिमानस्त्रैलोक्यपूरणादप्यधिकानि स्मृतिमूलभूतानि वेदवाक्यान्यनुमिमीते । न च तावतां कोटिशतभागोऽप्याम्नातुं शक्यते । न चानाम्नातस्य स्मृतिमूलत्वम् । नित्यानुमेयश्रुतिमूलप्रतिषेधात् । न च वाचकत्वावाचकत्वनिबन्धनौ विधिप्रतिषेधौ संभवतः । सर्वेषां वाचकत्वात् ।

योजनेति । अदृष्टविषया चेत् स्यादिति । द्वेधा चैतत् साधूनां सतामदृष्टसाधनत्वम् अदृष्टसाधनत्वमेव वा साधुत्वमिति । तत्र प्रत्यक्षेण तावदिति । न तावत् साधुत्वासाधुत्वे इति च साधूनां सतामदृष्टसाधनत्वमित्यस्य

वाचकैर्भाषितव्यं हि प्राप्तत्वान्न विधीयते ।
अवाचकनिषेधश्च नाप्राप्तेरवकल्पते ॥

न ह्युदकं पिबेदग्निं न पिबेदिति च विधिप्रतिषेधौ संभवतः । अवश्यं च व्याकरणस्मृतिमूलभूतसाधुविधिश्रुतिरसाधुप्रतिषेधश्रुतिरुभयं वा संयोगपृथक्त्वात्[1] कल्पनीयम् । त्रिष्वपि च पक्षेषु साध्वनुशासनमात्रमेव सौकर्यादाश्रितम् । यदि-ह्यपशब्दप्रतिषेधमूलं व्याकरणं ततस्तेषां बहुत्वादव्यवस्थितरूपत्वाच्च न स्वरूप-मवगन्तुं शक्यत इति 'पञ्च पञ्चनखा भक्ष्या' इति स्मृतिन्यायेनानुगतविपरीत-भाषणप्रतिषेधोऽर्थापत्तिसिद्धः स्मर्यते । साधुविधिपक्षे तु त एव स्मर्तव्याः । उभयपक्षे तु तदनुगमादेवेतरसिद्धेः प्रतिषेधविषयज्ञानोपपत्तिः । स एष व्याकरणस्य पक्षत्रयेऽप्येकानुगमनिबन्धनत्वात् कथञ्चित् संक्षेपोऽवकल्पते । ननु प्रतिशब्दं विधिप्रतिषेधावक्लृप्तिः । अनन्तवाक्यपाठासंभवादिष्टासंभवदर्शनार्थमेव होलाकाधिकरणेऽभिहितम् । न तस्याकृतिवचनता न्याय्या न व्यक्तिवचनतेति । तस्मादसंभवन्मूलत्वादपस्मृतिः ।

अथ प्राप्तश्च योऽर्थः स्यान्न स शास्त्रस्य गोचरः ।
सिद्धः शब्दप्रयोगश्च लोकादेवार्थलक्षणः ॥

निराक्रिया प्रतिशब्दमनन्तवाक्यकल्पनया चादृष्टसाधनत्वमित्यस्य न ह्युदकं पिबेदिति । उदकशब्देन द्रवमात्र[1]मुपलक्ष्यते । न च श्रुतिमकल्प-यित्वा व्याकरणस्य[2] स्वयं प्रयोगनियमहेतुत्वं स्मृतित्वादित्याह—अवश्यं चेति । विधिप्रतिषेधयोरन्योन्यानुवादहेतुत्वेनोभयकल्पनानुपपत्तिमाश-ङ्क्योपपादयति — संयोगपृथक्त्वेनेति । विधेर्विधेयस्येष्टसंयोगः सिद्ध्यति न निषेध्यस्यानिष्टसंयोगः । तेन तदर्थो निषेधः । एवं विधेरप्यपौनरुक्त्य-मिति । ननु विधिरूपस्य व्याकरणस्य कथं निषेधमूलत्वमुभयमूलत्वं वेत्यत आह — त्रिष्वपीति । एवं व्याकरणं प्रमाणीकुर्वता अवश्यं मूलं कल्पनीयम् । तत्तु न शक्य[3]मित्युक्तम् । तदेतन्निगमयति — स एष व्याकरणस्येति ।

---

१. संयोगपृथक्त्वेनेति तृतीयान्तं पदमुद्धरति प्रतीकतयेहाजितेति ज्ञेयम् ।

१. द्रवद्रव्यमुप॰ आ॰ मा॰ । २. व्याकरणस्येति पू॰ मा॰ इत्यत्र नास्ति ।

३. तत्राशक्यम् आ॰ मा॰ ।

अथार्थलक्षणत्वेऽपि शास्त्रेण धर्माय प्रयोगनियमात् प्रयोगोत्पत्तिशास्त्रत्वं स्यादिति । तदनुपपन्नम् । नियमविषयासंभवात् ।

यस्य ह्यनियता प्राप्तिस्तच्छास्त्रेण नियम्यते ।
नित्यप्राप्तप्रयोगस्तु न शब्दो नियमास्पदम् ॥
यस्याप्यत्यन्तमप्राप्तिस्ततोऽन्यो न नियम्यते ।
तव चात्यन्तमप्राप्तिर्गाव्यादेः प्राप्तता मम ॥

तेन पक्षद्वयेऽपि नियमानुपपत्तिः । कीदृशश्चात्र नियमः कल्प्येत । किं साधुभिरेव भाषितव्यमुत साधुभिर्भाषितव्यमेवेति ।

यदि साधुभिरेवेति नासाधोरप्रसङ्गतः ।
नियतं भाषितव्यं चेन्मौने दोषः प्रसज्यते ॥

यदि ह्येकार्थाः साध्वसाधवो विकल्पेन प्राप्नुयुस्ततः साधुनियमावकाशः स्यात् । त्वन्मते तु पुनः —

अत्यन्तावाचकत्वात्तु नैवासाधुः प्रसज्यते ।
यन्नि[1]वृत्तिफलः साधोर्नियमोऽत्रार्थवान् भवेत् ॥

अथ प्रमादाशक्तिकृत[2]प्रसङ्गनिवृत्तिर्नियमं प्रयुञ्जीत । तदसत् ।

न हि शास्त्रशतेनापि प्रमादाशक्तिकारितात् ।
निवर्त्यन्ते प्रयोक्तारः प्रयोगादिति दृश्यते ॥

दृष्टोऽपशब्दानामर्थाभिधाने प्रयोग इति चेत् । उच्यते —

अन्योऽप्यक्षिनिकोचादिः प्रयोगोऽर्थेषु दृश्यते ।
तन्निवृत्तिफलः कश्चिन्नियमो न च दृश्यते ॥

न च नियमानां प्रतिपक्षनिवृत्तिः प्रयोजनम् । परिसंख्याप्रयोजनत्वात् । न चायं परिसंख्याविषयो युज्यते । युगपत्प्राप्त्यभावात् ।

अन्योऽप्यक्षिनिकोचादेरिति । नहि यद्यत् प्रयुज्यते तत्तदनेन निवर्त्यते किन्तु यद्भाषणे प्रयुज्यते न च तत्रापशब्दस्य प्रयोगसम्भवोऽसामर्थ्यात् । तेनास्याक्षिनिकोचादिवदनिवृत्तिः ।

---

१. यस्मिन् वृत्ति इति काशीमुद्रितपाठः ।
२. °दशक्तिभूत काशीमुद्रितपाठः ।

न वा दृष्टार्थतैवास्य प्रयोगस्योपपद्यते ।
न हि दृष्टनिराकाङ्क्षाददृष्टमपि गम्यते ॥

न हि तादृशेष्वदृष्टकल्पनायार्थापत्तिः प्रभवति । परार्थत्वाच्च फलश्रुतेरर्थवादत्वम् । न चासति फले शक्यमपूर्वं कल्पयितुम् ।

न चेदं नियमापूर्वमाश्रितं क्वेति गम्यते ।
शब्दार्थश्रोतृतद्बुद्धिवक्त्रुच्चारणगोचरे ॥

शब्दस्य तावदत्यन्तपरार्थदृष्टार्थत्वान्नापूर्वेण कश्चिदुपकारः । सत्यपि चाभिधानकर्मत्वेनार्थस्य प्राधान्ये दृष्टार्थेषु लोकव्यवहारेषु विनाप्यपूर्वेणाङ्गभावादपूर्वोपकारानुपयोगः । श्रोतुः पुनर्नियमविधिसंस्पर्शानन्तर्गतत्वादेवासंस्कार्यत्वम् । बुद्ध्योश्च क्षणिकत्वान्न कालान्तरावस्थाय्यपूर्वाधारत्वोपपत्तिः ।

वक्ता तु[1] भाषणे सर्वो गुणभूतो विधीयते ।
न तस्य नियमापूर्वसंस्कार्यत्वनिरूपणम् ॥
न प्रधानपदं चात्र विद्यते स्वर्गकामवत् ।
न च षाष्ठ्युक्तसंबन्धात् स्वामित्वेन प्रधानतः[2] ॥
यत्तु दिङ्नियमापूर्वं भोजनादिषु कल्पितम् ।
पुरुषार्थक्रियाद्वारं तदर्थं तत् प्रतीयते ॥

न चेहोच्चारमुच्चारयित्रर्थं येन भोजनादिसमत्वं प्रतिपद्येत । स्वरूपेण पुनर्भङ्गित्वाद् बुद्धिवदेवासंस्कारार्हम् ।

एवं चावेदमूलत्वान्न धर्मनियमार्थता ।
युक्ता शब्दस्मृतेर्वक्तुं न चास्याः शास्त्रता स्वयम् ।

तदुक्तं 'प्रयोगशास्त्रमिति चेत् [मी० सू० १।३।११।] नासन्नियमात्' [मी० सू० १।३।१२।] इति ।

नहि व्याकरणादीनां वेदत्वेन स्वतन्त्रता ।
पुरुषाधीनवृत्तेश्च सापेक्षस्याप्रमाणता ॥

शब्दस्य तावदत्यन्तपरार्थत्वादिति । यद्यप्यस्ति पदार्थस्यापूर्वेण प्रयोजनं तथाप्यन्यस्या तदर्थस्याभावात् केन तस्योपक्रियेति । न च षष्ठ्युक्तिसम्बन्धादिति । स्वामित्वं हि पुरुषस्य कर्मप्रतिकर्मणोऽतदर्थत्वेऽनुपपन्नमिति कर्म तस्योपकारकं स्यादिति ।

ननु गुणभूतेऽपि कर्तरि दिङ्नियमापूर्वोपकार्यत्वं दृष्टमित्याह — यत्तु दिङ्नियमापूर्वमिति । भोजनक्रियां स्वभावतः [1]पुरुषार्थमनूद्य विशेषो विधीयमानः पुरुषार्थो युक्त इति । न तावत् सूत्रकारेणेति । तेन प्रयोजनाभिप्रायो नास्ति सूत्रकारस्येति लक्ष्यते । ततश्च प्रयोजनाभिधायिभि-

---

१. क्व इति तु स्थाने काशीमुद्रितपाठः । २. प्रधानता इति काशीमुद्रितपाठः ।

१. प्राप्तमनूद्य अा० मा० ।

सर्वत्र हि पौरुषेयाद्वचनादेवमयं पुरुषो वेदेति प्रत्ययस्तेन कर्त्रभिप्राय-प्रकाशनमात्रोपयुक्तत्वाद्व्याकरणान्नैव शब्दगतसाध्वसाधुविभागः प्रतीयते ।

न च स्मृत्यन्तरं किञ्चिद्दृष्टं तत्कार्यगोचरम् ।
दृढं श्रुत्यनुमानं स्याद्येनोपनयनादिवत् ॥

प्रायेण मनुगौतमवसिष्ठादिप्रणीताः समानेष्वर्थेषु धर्मसंहिता वर्तन्ते । तेनाविगानात्ताभ्य एव श्रुतयः स्वनुमानाः । न च व्याकरणस्य ताभिः समानार्थत्वम् ।

परस्परेण चाचार्या विगीतवचनाः स्थिताः ।
*सूत्रवार्त्तिकभाष्येषु* किं तत्राध्यवसीयताम् ॥
न तावत् *सूत्रकारेण* किञ्चिदुक्तं प्रयोजनम् ।
कथं चैतावति ग्रन्थे स्यत्प्रयोजनविस्मृतिः ॥

येष्वपि तद्ग्रन्थेषु विस्पष्टान्यादित एवारभ्य प्रयोजनानि ज्ञायन्ते । न चैषां श्रवणग्रहणधारणेषु महान् खेदस्तेष्वपि जिज्ञासूत्साहार्थं पूर्वं प्रयोजनान्येव निवध्यन्ते, 'धर्मं व्याख्यास्यामो, यज्ञं व्याख्यास्याम, इत्येवमादिभिः । इह पुनरत्यन्तकष्टं व्याकरणं प्रणयता *सूत्रकारेण* धर्मार्थकाममोक्षाणां न कस्यचित्-प्रयोजनत्वमाश्रितम् न च सर्वप्रधान वस्तुन्यनादरो युक्तः । सुज्ञातत्वं पुनरीदृशं येनाद्यापि विवदन्ते ।

धर्मश्च फलसंवद्धं कर्म यागादि वर्ण्यते ।
न च व्याकरणे किञ्चित्तादृक्कर्मोपदिश्यते ॥
धर्मत्वं यच्च विज्ञानशास्त्रपूर्वप्रयोगयोः ।
यथेष्टं वर्णितं तच्च न शास्त्रसदृशं मतम् ॥

शास्त्रार्थो हि निरूपितरूपो भवति । इह च ज्ञानधर्मत्वमुपन्यस्याधर्म-प्रसङ्गभीतेन शास्त्रपूर्वप्रयोगेऽभ्युदय इति *वार्त्तिककारे*णोक्तम् । *भाष्यकार* आह — अथ वा पुनरस्तु ज्ञाने धर्म इति । न चैवमनियमेन धर्मत्वावधारणं युक्तम् ।

---

वार्त्तिककारादिभिर्विगीतवचनत्वमिति । तैश्च पूर्वं धर्मस्य प्रयोजनत्वमाश्रितं तदप्ययुक्तमित्याह — धर्मश्च फलसंबद्धमिति । यच्च ज्ञाने धर्मो ज्ञानपूर्वके प्रयोगे चाभ्युदय इति धर्मस्य प्रयोजनत्वमुक्तम् । तदपि दूषयति — धर्मत्वं यच्चेति । अधर्मप्रसङ्गभीतेनेति । साध्वसाधुत्वविवेककृतो व्याकरणात् साधुज्ञानवदसाधुज्ञानमपि भवति । तेन द्वारेणाधर्मायापि व्याकरणं स्यादिति । तदेतदत्तदर्थत्वादिति । अनुनिष्पादिनोऽतदर्थत्वेऽपि तदर्थवत् प्रयोजनान्तरा-काङ्क्षाविरहसाम्यात्तदर्थत्ववाचोयुक्तिः ।

संबद्धयोश्च धर्मत्वं यदैकस्यावधार्यते ।
तदेतरत्तदर्थत्वान्न धर्मत्वेन गम्यते ॥

तदिह यदि तावज्ज्ञानमेव धर्मत्वेनावधारितं ततो लोकप्रसिद्धस्यैव प्रयोगस्य ज्ञानात्तु निष्पादितत्वेन सत्यामप्युपकारनिर्वृत्तौ वाजिनादिवत् प्रयोजकत्वाभावः। शास्त्रपूर्वकप्रयोगपक्षे तु ज्ञानस्य तदङ्गत्वेन निराकाङ्क्षभूतत्वात्। असत्यां प्रयोजनान्तराकाङ्क्षायां यद्यपि काचित्फले श्रुतिर्भवेत्सापि 'द्रव्य संस्कारकर्मसु' [मी० सू० ४।३।१] इत्यनेन न्यायेनार्थवादतया ज्ञायते। न हि समानाध्वनोः परस्मिन् फलवति ज्ञाते पूर्वस्यापि फलवत्ता ज्ञायत इति वर्णितमेतत्। योऽश्वमेधेन यजते य उ चैनमेवं वेद' इति। किञ्च—

आदिमत्त्वाच्च धर्मत्वं नैव ज्ञातप्रयोगयोः ।
न हि व्याकरणापेक्षा वर्तते वैदिकी श्रुतिः ॥

यन्नाम ज्ञानं नित्येन वेदेनैव क्रियते तत्र तत्पूर्वकप्रयोगविधानं फलायोपपद्यते। व्याकरणज्ञानं तु पौरुषेयं ग्रन्थाधीनत्वान्मन्त्रार्थवादगतानित्यसंयोगपरिहारन्यायेनानादिवेदविषयत्वेन नावधार्यते।

न च व्याकरणं नित्यं कथञ्चिदवगम्यते ।
कर्तृस्मृतिद्रढिम्ना हि नित्यपक्षनिराक्रिया ॥

अथापि व्यवहारनित्यतान्यायेन पौरुषेयव्याकरणपरम्परानादिः कल्प्येत तथापि उक्तं तु शब्दपूर्वत्वम् [मी० सू० १।१।२९] इत्यस्य न्यायस्य स्थितत्वात् अनेकपुरुषकृतमपि तद् व्याकरणं वेदालम्बनत्वं न प्रतिपद्यते।

न च व्याकरणत्वाख्या जातिः काचिद्व्यवस्थिता ।
अनित्ये वाक्यसंघाते सा जातिः क्वावतिष्ठताम् ॥

अथ 'लक्ष्यलक्षणे व्याकरणम्' [ *महाभाष्यम्* पस्पशाह्निकम् ] इति सत्यपि लक्षणांशकृत्रिमत्वे लक्ष्यांशेन नित्येन नित्यो विधिरुपपत्स्यत इति। तदनुपपन्नम्। कुतः—

**अथ वा तस्यार्थस्तदर्थं इति वाच्यमर्थशब्दश्चाप्रयोजनेऽपि साध्यमात्र इति। वाजिनादिवत् प्रयोजकत्वाभाव इति। [1]प्रयोजकत्वं हि नाप्रयोजनस्य भवतीति। ततः प्रयोजनान्तरकल्पना स्यादिति।**

अनित्यसंयोगपरिहारन्यायेनेति। **अनित्यसंयोगदोषो येन न्यायेन परिहृतः** परन्तु श्रुतिसामान्यमात्रमिति [मी० सू० १।१।३१]।

---

१. प्रयोजकत्वाङ्गीकरणे निष्प्रयोजनस्य तदनुपपत्तेः ततः इति आ० मा०।

अत्यन्तभिन्नरूपत्वाल्लक्ष्याणां लक्षणादिना ।
नैकमालम्बनं किञ्चिद् विधेरस्तीत्युदाहृतम् ॥

ननु वेद एव व्याकरणनित्यत्वं दृश्यते । यथाह—'तस्मादेषा व्याकृता वागुद्यत' इति । नैतदस्ति ।

व्याकृता संप्रदायेन वाणी नित्यैव वैदिकी ।
अनूदितोच्यमानेयं कर्मस्वाध्यायकालयोः ॥

अव्याकृताया हि लौकिक्या वाचः शिष्याचार्यसंबन्धेन स्वरवर्णमात्राक्रमैरविप्लुतरूपैर्निरूपिताकारैरेव वैदिकी व्याकृतेत्युच्यते । तस्याश्च मन्त्रब्राह्मणात्मिकायाः कर्मसु ज्ञाने प्रयोगे च धर्मोऽस्त्येव । यदपि च एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः शास्त्रान्वितः स्वर्गे लोके कामधुग्भवति' [महाभाष्यं पस्पशाह्निकम्] इति, तदपि स्वाध्यायप्रशंसाशेषभूतमेव । 'अहरहः स्वाध्यायमधीयीत' इत्यत्र 'अप्येकामृचं यजुः साम वा' इत्येतदवश्यकर्तव्यता - नियमार्थमुक्तम् ।

योऽपि मन्त्रं समस्तं हि नाधीयीताप्यशक्तितः ।
तस्य शास्त्रान्वितः शब्द एकोऽपि स्वर्गकामधुक् ॥

शास्त्रान्वित इति च यथास्वाध्यायमनुगत इत्यर्थः । सम्यक्प्रयुक्त इति चोपनयनोपसदनगुरुशुश्रूषादर्भपवित्रपाणित्वादीतिकर्तव्यतोपपन्नत्वाश्रयणेनोक्तम् । यदपि च 'तस्माद् ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्दः' [ महाभाष्यम्, पस्पशाह्निकम् ] इति, तत्संप्रदायागतवैदिकशब्दविनाशप्रतिषेधार्थमेव । वैदिकाच्चापेतत्वाल्लौकिकस्यापशब्दत्वं संभवति सुज्ञानं च । न च लौकिकादप्यपेतोऽपशब्दो नाम कश्चिदस्ति । गाव्यादीनामपि

अथ वा अनित्यसंयोगस्य परिहारेऽनङ्गीकरणे यो न्यायः, सति तस्मिन् वेदस्यानित्यता स्यादिति । उपनयनोपसदनगुरुशुश्रूषेति । यद्यप्यहरहः स्वाध्याये साक्षादेषामसम्भवस्तथापि ग्रहणगतानामेव तत्राप्युपयोगः । तथारीतिगृहीतानां ह्यक्षराणां वेदत्वं वेदानां चाहरहः पाठ इति । बर्बरादिभाषागतस्येति । बर्बरादिभाषागतस्य शब्दस्यापशब्दत्वज्ञानम् । तथा हि म्लेच्छितत्वसमानाधिकरणं तदपशब्दत्वम् 'म्लेच्छो ह वा एष यदपशब्द' इति । तच्च म्लेच्छितत्वं बर्बरादीनां म्लेच्छत्वप्रसिद्धेस्तदपभाषासु लब्धास्पदमिति ।

शब्दानां श्रोत्रग्राह्यत्वेन शब्दशब्दवाच्यत्वशब्दबुद्धिग्राह्यत्वशब्दत्वानुगम-दर्शनात् । अथाप्यवश्यं लौकिकादप्यपेतोऽपशब्द आश्रयणीयः । तथापि 'न म्लेच्छभाषां शिक्षेत' इत्येवमादिस्मृत्यनुसरणेन हिमवद्विन्ध्यान्तरालकृष्ण-मृगसंचरणाद्युपलक्षितधर्माधिकृतार्यावर्तनिवासिव्यतिरिक्तबर्बरादिभाषागतस्य म्लेच्छितत्वसमानाधिकरणापशब्दत्वज्ञानात्तेन भाषणं प्रतिषिध्यते । युक्तं च तस्याशेषतदीयाचरणवत् परिहरणीयत्वं न त्वार्यावर्तनिवासिप्रयुक्तेषु गाव्यादिषु म्लेच्छतिधात्वर्थानुगमः कश्चित् । येन तदनाचारितत्वेनापवृत्तवदपशब्दत्वं निरूप्यते । यदपि च 'आहिताग्निरपशब्दं प्रयुज्य प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपेत' इति । तदप्यनृतवादवैदिकशब्दविनाशम्लेच्छभाषाप्रयोगाश्रयमेव वेदितव्यं न तु व्याकरणानुगतव्यतिरिक्तशब्दप्रयोगविषयम् । तथा हि—

कथं नामेदृशात् कार्यात्सर्वं एवाहिताग्नयः ।
प्रवर्तेरन् कथं चान्यैर्न निन्द्येरन्नशिष्टवत् ॥

प्रायेण हि शिष्टानां धर्माचारप्रणिहितचेतसां कश्चिदेव प्रमादादल्पोऽना-चारो भवति । गाव्यादिशब्दप्रयोगेषु पुनर्न केषाञ्चिदप्यनाचारबुद्धिः । न च कलञ्जादिभक्षणवद्विचिकित्सा गर्हा वा दृश्यते । न चाहिताग्निसहस्रेऽप्येक-स्त्वदभिमतसाधुशब्दैरेव व्यवहरमाणो दृश्यते ।

कल्पसूत्रस्मृतिग्रन्थमीमांसागृह्यकारिणः ।
शिष्टा दृष्टाः प्रयुञ्जाना अपशब्दाननेकशः ॥

'समानमितरच्छ्यनेन' इत्यादितकारान्तप्रथमान्तनपुंसकप्रयोगेषु मशकेन तत्र तत्र प्रयुक्तं, 'समानमितरं ज्योतिष्टोमेन' 'समानमितरं गवा ऐकाहिकेन' इति [1]सूत्रकारेणाप्यभिहितम् । 'अहोने वहिष्पवमानैः सदसि स्तुवीरन्' इति कर्त्रभिप्रायक्रियाफलवर्जितेऽप्यृत्विक्कर्तृके स्तवने 'यजन्ति याजका' इतिवत् परस्मैपदे प्रयोक्तव्ये व्याकरणमनपेक्ष्यात्मेनपदं प्रयुक्तम् । तथाश्वलायनेन 'प्रत्यसित्वा प्रायश्चित्तं जुहुयुः इति' समासेऽपि ल्यप् न प्रयुक्तः । आज्येनाक्षिणी आज्य इत्यसमासेऽपि प्रयुक्तः । तथा शिक्षायां नारदेन 'प्रत्यूषे ब्रह्म चिन्तयेत्' इति गाव्यादिशब्दतुल्य एव प्रयुक्तः । तथा मनुनापि 'ज्ञातारः सन्ति मेत्युक्त्वा' [ मनुस्मृति ८।५८ ] इत्यत्र सन्ति म इत्युक्त्वेति

---

१. छान्दोग्यसूत्रकृदभिप्रेतः ननु जैमिनिः ।

वक्तव्ये व्याकरणमनपेक्ष्यैव संहिता कृता। तथा मीमांसायामपि **गव्यस्य च तदादिषु'** [ मीं० सू० ८।१।१८ ] इति गोर्विकारावयवविषयसाधुप्रयोगयोग्यः शब्दोऽन्यत्रैव गवामयने प्रयुक्तः। तथा **'द्यावोस्तथेति चेत्'** [मीं० सू० ९।३।१८] इति द्यावापृथिव्योरिति वक्तव्ये लक्षणहीनमेव बहु प्रयुक्तम्। तथा गृह्यकारेण मूर्धन्यभिघ्राणमिति वक्तव्ये मूर्धन्यभिजिघ्राणमित्यविषये जिघ्रादेशः प्रयुक्तः। कार्त्स्न्येऽपि व्याकरणस्य निरुक्ते हीनलक्षणाः प्रयोगा बहवो यद्वद् ब्राह्मणो ब्रवणादिति। संवत्सरं शांशयाना[1] इत्येतन्मन्त्रगतमण्डूकविषयब्राह्मणशब्दनिर्वचने क्रियमाणे वचनशीलत्वनिमित्ततां दर्शयता **ब्रुवो वचिरिति** [पा० सू० २।४।५३] वच्यादेशमकृत्वैव ब्रवणादिति प्रयुक्तम्।

अन्तो नास्त्यपशब्दानामितिहासपुराणयोः।
तथोभाभ्यादिरूपाणां[2] हस्तिशिक्षादिकारिणाम्॥

युगपदुभाभ्यां दन्ताभ्यां यः प्रहारः स उभाभ्य इति सर्वैः पालकार्यराजपुत्रादिभिर्व्याकरणानपेक्षमेव प्रयुक्तम्।

वेदेष्वपि प्रयोगास्ते भूयांसोऽध्येतृसंमताः।
सामान्यं छान्दसं वापि येषां नास्त्येव लक्षणम्॥

न हि ते सुप्तिङुपग्रहादिव्यत्ययेन नापि कतिपयाधिकारदृष्टेन **'बहुलं छन्दसि'** [पा० सू० ७।३।९७] इत्यनेन सिध्यन्ति। तद्यथा 'मध्यं आपस्य तिष्ठति नीचीन वारं वरुणः कबन्धम्' इति। न ह्यपामित्यस्य नित्यस्त्रीलिङ्गबहुवचनविषयव्यञ्जनान्तप्रातिपदिकपरषष्ठ्यन्वाख्यानादापस्येत्येतद्रूपं लक्षणानुगतं दृश्यते। नापि द्वारशब्दस्य स्थाने लाटभाषातोऽन्यत्र वारशब्दः संभवति। तेनानारभ्य एवायं विषयव्याप्त्यसंभवात्।

शब्दानुगमरूपोऽर्थो यत्र व्याकरणं कृतम्।
येऽपि व्याकरणस्यैव परे पारे प्रतिष्ठिताः॥
सुतरां तेऽपि गाव्यादितुल्यानेव प्रयुञ्जते।
सूत्रवार्तिकभाष्येषु दृश्यते चापशब्दनम्॥
अश्वारूढाः कथं चाश्वान् विस्मरेयुः सचेतनाः।

---

१. शयाना इति काशीमुद्रितपाठः।

२. तथोभाभ्यो द्विरूपाणामिति काशीमुद्रितपाठः।

सूत्रे तावत् जनिकर्तुः प्रकृतिः [ पा० सू० १।४।३० ] इत्यत्र हि द्वावपशब्दौ जनिशब्देन हि इक्श्तिपौ धातुनिर्देश इत्यनेन लक्षणेनान्वितो धातुरेव निर्दिश्यते । [1]न च जनिकर्तुः प्रकृतिरित्यत्र हि कर्तुः तस्य कर्तुः प्रकृतेरपादान-संज्ञेष्यते । जायमानस्य पुनरर्थस्य जनिशब्दो वाचकतया नैव लक्षणेनानुगतः । तेनायं दरिद्र इवाश्वशब्दो जनिमात्रवाचित्वात्तदर्थं प्रत्यसाधुरेव विज्ञायते । तथा 'तृजकाभ्यां कर्तरि' [पा० सू० २।२।१५] इति प्रतिषिद्धषष्ठीसमासप्रयोगाद् व्याकरणफलपरित्यागः । एवं तत् प्रयोजकः [पा० सू० १।४।५५] इति प्रतिषिद्ध एव समासः । तथा वार्त्तिकेऽपि 'दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात् सिद्धम्' इति । तथा 'आन्यभाव्यं तु कालशब्दव्यवायात्' इति । अत्र क्लेशेन समासं कल्पयित्वा ततः समाससंज्ञया गुणवचनसंज्ञायां बाधितायां 'गुणवचनब्राह्मणादिभ्यः' [पा० सू० ५।१।१२४]इति लक्षणेनासंसृष्ट एव ष्यञ्प्रयुक्तः । भाष्येऽप्यविरविकन्यायेनेति द्वन्द्वगर्भे तत्पुरुषे पूर्वसमासपूर्वपदस्थायाः सुपः 'सुपो धातुप्रातिपदिकयोः' [पा० सू० २।४।७१ ] इति प्रत्यक्षोपदिष्टोऽपि लुङ् न कृतः । तथा 'अन्यथा कृत्वा चोदितमन्यथा कृत्वा परिहारः' इति । अन्यथैवं कथम्' इत्यन्वाख्यातसाधुत्वोऽपि णमुल् न प्रयुक्तः । न चैषां निपातनैः साधुत्वसिद्धिः । कुतः —

येषामनुगमो नास्ति ते सिध्येयुर्निपातनैः ।
अन्यथानुगतानां तु प्रयोगं बाधते स्मृतिः ॥
स्मृत्याचारविरोधे हि स्मृतिरेव बलीयसी ।
प्रत्यक्षप्रतिषेधाच्च जनिकर्त्राद्यसाधुता ॥

प्रत्यक्षस्मृतिविरोधे तु लक्षणरहितस्यापि प्रयोगादेव शिष्टाचारभूतादवयवा-

जायमानस्य पुनरिति । येन जनिश्चासौ कर्ता चेति नीयेत । अथ वा व्यापारव्यतिरेकजनितेयं षष्ठी । यस्य तु प्रकृतेरपादानसंज्ञेष्यते तस्य जायमानस्य यो व्यापारस्तस्य जनिशब्दो न वाचक इति । अत्र क्लेशेन समासं कल्पयित्वेति । यदि भावशब्दो[1] द्रव्यमुक्त्वा गुणे वर्तते तदा गुणवचनो भवति, तदा च पूरणगुणेति [पा० सू० २।२।११] समासप्रतिषेधात् समासानुप पत्तिः । अथ वा गुणवचनत्वापह्नवेन स्वप्रधानीकृत्य समासः क्रियेत तदा गुणवचनत्वे बाधिते [2]समाससंज्ञया वा समासस्य प्रातिपदिकत्वापादनात् कार्यतो बाधिते गुणवचनब्राह्मणादिभ्य [ पा० सू० ५।१।१२४ ] इति ष्यञोऽनुपपत्तिरिति ।

१. न चेत्यादि हीत्यन्तस्य स्थाने न च तस्येति पूनामुद्रितपुस्तकपाठः ।

१. गुणमुक्त्वा द्रव्ये वर्तते आ० मा० ।

२. इत आरभ्य कार्यतो बाधिते इति यावत् पंक्तिः आ० मा० इत्यत्र नास्ति ।

नुगमस्मृतिमनुमाय निपातनात्साधुत्वसिद्धिः । न च लक्षणशब्दानां स्वात्मनि क्रियाविरोधादात्मार्थत्वाभावाद्वा लक्षणानुगतिरनादरणीया ।

प्रदेशान्तरसिद्धेन लक्षणेनानुगम्यते ।
देशान्तरस्थितः शब्दो लक्ष्यभूतोऽन्यशब्दवत् ।।

तथा च 'कुत्वं कस्मान्न भवति' । वृद्धिरादैच् [पा० सू० १।१।१] इति कोऽयं शब्दः' इत्यादिषु लक्षणानुगमादरः सर्वत्राश्रितः । यदि च लक्षणशब्देषु लक्षणं न प्रवर्तेत, ततः सर्वं व्याकरणमपशब्दैरेव निबद्धं स्यात् [महाभाष्यम् १।१।१] । अर्धवैशसदर्शनात्तु प्रमाणत्वहानिः । अथोच्येत यज्ञप्रयोगविषय एव साधुभाषणनियमो न सूत्रकारव्याख्यानादिक्रियास्विति । तदसत् । स्वर्गे लोके कामधुगिति फलवत्त्वोपन्यासात् । सारस्वतीविधावाहिताग्निग्रहणार्थवत्त्वात् । इतरथा ह्याहिताग्निरेव यज्ञेष्वधिक्रियत इति तद्गोचरेऽपशब्दप्रयोगे निष्प्रयोजनमेवाहिताग्निग्रहणं भवेत् । योऽपि च ज्योतिष्टोमप्रकरणे वाजसनेयिनां 'तस्माद् ब्राह्मणो न म्लेच्छेत्' इति प्रतिषेधः कर्माङ्गत्वेन ज्ञायते सोऽपि गुरुसंप्रदायक्रमागतमन्त्रप्रयोगविनाशविषय एव म्लेच्छभाषाप्रतिषेधार्थो वेति पूर्ववदेव नेतव्यः । यदपि च 'केषां शब्दानाम्' इति प्रश्नानन्तरं 'लौकिकानां वैदिकानां च' [महाभाष्यं पस्पशाह्निकम्] इति विवेककथनं तदपि बहूनां तावत् प्रत्यक्षप्रत्यभिज्ञानाल्लोकवेदयोरभेदे सति स्तोकप्रविभागापेक्षं नैवेदमत्यन्तभेदाश्रयसदृशमभिधीयमानं शोभते । न च लौकिकमध्ये गौरश्वः पुरुषो हस्तीत्येवमादयः सर्वे वेदसाधारणा वेदादेव वोद्धृत्य लोकेन प्रयुक्ता उदाहर्तुं न्याय्याः । य एव हि भाषायामित्येव स्मर्यन्ते, न च क्वचिदपि वेदे दृष्टपूर्वा इत्येवं संभावयितुं शक्यन्ते त एवोदाहर्तव्याः । वैदिकोदाहरणेष्वपि च लोकप्रसिद्धा एव

योऽपि ज्योतिष्टोमप्रकरण इति । व्याकरणानुगतविषयोऽपि तावन्नेतरत्रानियमं वारयति, परमार्थेन तु सोऽपि न व्याकरणानुगतविषय इति । यो हि अयमिति [?] । सम्प्रति पूर्वापरविरुद्धार्थेन व्याकरणस्याप्रत्ययित पुरुषप्रणीतत्वं दर्शयति — यदपि केषां शब्दानामिति । छान्दसोदाहरणं च कुतः सिद्ध इति । सिद्धे शब्दार्थसम्बन्धे प्रयोगनियमाय व्याकरणमित्युक्त्वा कुतः सिद्ध इत्युक्त्वा[1] लोकत इत्यभिधाय छान्दसोदाहरणं प्रश्नोत्तरेण व्याहन्यतेति ।

१. इति पृष्ट्वा आ० मा० ।

शमादय उदाहृताः। न च वाक्योदाहरणेन लौकिकेभ्यो भिद्यन्ते। वाक्यानां व्याकरणेनानन्वाख्यानात्। अतश्छान्दसान्येव कानिचित् 'गृभ्णामि' 'दत्वायाथ' इत्येवमादीन्युदाहर्तुं योग्यानि न 'शं नो देवी' इत्येवमादीनि। छान्दसोदाहरणं च कुतः 'सिद्धे' 'लोकत' इत्यनेन प्रत्यासन्नेनैव व्याहन्येत। यदि च लौकिकानामन्वाख्यानं क्रियेत, ततः सुतरां गाव्यादय एवान्वाख्येयास्तेषां व्यवस्थितं लौकिकत्वम् वेदेष्वप्रयोगात्। [1]गवादयः पुनरध्येतृभिर्वेदादेवोद्धृत्योद्धृत्य प्रयुक्ता इति शक्यं वक्तुम्। तथा च मनुनाप्युक्तम्—

वेदशब्देभ्य एवादौ पृथक् संस्था विनिर्ममे इति [मनुस्मृतिः १।२१।]

दृश्यन्ते चाद्यत्वेऽपि श्रोत्रिया लौकिकेऽप्यर्थे विवक्षिते तद्भाषासमानार्थान् सकलमन्त्रानप्युदाहरन्त किमङ्ग पुनः पादान् पदानि वा। न चाश्रितप्रतिपदपाठानां वैदिकानां लक्षणेन कार्यम्। न चैषां गुरुमुखात् साधीयो लक्षणमस्ति 'दृष्टानुविधित्वाच्छन्दसः' इति स्वयमेव लक्षणस्याम्नानाधीनत्वेन मन्द-प्रयोजनत्वमुक्तम्।

यथैव लोकसिद्धत्वात्कृष्यादेर्लक्षणं वृथा।
तथैव वेदसिद्धानां शब्दानां लक्षणं वृथा॥
रक्षाद्यपि यदत्रोक्तमन्वाख्यानप्रयोजनम्।
न तदप्यन्यतः सिद्धेरल्पसिद्धेस्ततोऽपि वा॥

शिष्याचार्यसंबन्धो हि महान् वेदरक्षाहेतुर्व्याकरणानधीयानस्यापि वेदक्रमस्याध्ययनेनैव रक्ष्यमाणत्वात्। तद्विनाशेऽपि च विशिष्टतरदोषप्रसङ्गात्। उक्तं च—

निराकाङ्क्षीभवेल्लक्ष्यं येन तन्नाम लक्षणम्।
शतांशमात्रसिद्धौ तु तेन मन्दं प्रयोजनम्॥
समाम्नायप्रसिद्धेऽस्ति सामवेदेऽस्ति लक्षणम्।
तद्युक्तं कृत्स्नसिद्धित्वात् कर्तव्यार्थेन चार्थवत्॥

सर्वेषां च सनामानि कर्माणि च पृथक् पृथक्।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे इति॥ [मनुस्मृतिः १।२१]

रक्षाद्यपि यदत्रोक्तमिति। रक्षोहागमलघ्वसन्देहाः प्रयोजनमिति मुख्यानि पञ्च प्रयोजनान्यभिधायान्यानि भूयः शब्दानुशासनस्य प्रयोजनानि

---

१. गवादय इति पूनामुद्रितपुस्तके नास्ति।

औच्छिक्ये [औक्थिक्ये] हि सर्वाणि सामपर्वाणि यथाक्रमं लक्षणेनानुगतानि ततश्च समस्तसामरूपसिद्धेर्निराकाङ्क्षत्वं भवति। ब्राह्मणविधिवशेन च, ऋगन्तरसंचारणायां प्रस्तावादिपञ्चधा विभागेन लक्षणोपयोगः। पदानुगममात्रनिवृत्तव्यापारेण तु व्याकरणेन विशिष्टपदरचनात्मकवाक्यसंघातरूपाणामसंभवत्कर्तव्यपदवाक्यानां मन्दमिव रक्षितृत्वं दृश्यते।

लक्षयेद्यः समाम्नायात् पदवाक्यक्रमान् बहून्।
स लक्षयेत्तरामल्पं प्रकृतिप्रत्ययक्रमम्॥

किञ्च—

यदि व्याकरणाद् रक्षां मन्वीरन् वेदवादिनः।
वैयाकरणगेहेषु छिन्द्युस्ते वेदसंशयान्॥
कक्षावलम्बिनं नित्यं को नाम करकं वहन्।
तमनादृत्य शौचार्थमन्यतः कर्तुमर्हति॥
लोके यस्य यदर्थत्वमाप्ता वा यत्र ये मताः।
तेन तेभ्यश्च तद्वस्तु यथावदवगम्यते॥
आयुर्वेदं चिकित्सासु प्रायेण विनियुज्यते।
व्याधितत्त्वौषधज्ञानं वैद्येभ्यश्चोपलभ्यते॥

न तु वेदाध्यायिनां कदाचिदप्यभियुक्ततरसहाध्यायिव्यतिरेकेण वेदवर्णपदवाक्याज्ञानसन्देहविपर्ययव्यावृत्तौ व्याकरणं वैयाकरणा वोपयुज्यन्ते।

त्रयोदशाभिहितानि। तत्र मुख्यान्येवोपन्यस्यति — औक्थिक्ये हीति। औक्थिक्यं सामलक्षणम्। प्रस्तावादि पञ्चेति। प्रस्तावप्रणवोद्गीथहिंकारप्रतिहारोपद्रवनिधनैर्भक्तिभिः सप्तविधं साम भवति। स्तोत्रेषु तु हिङ्कारप्रणवावृत्तेः पञ्चविधं विनियुक्तम्, तदभिप्रायेण पञ्चेत्युक्तम्।

कक्षावलम्बिनं नित्यमिति। एवं षडङ्गवेदाध्यायिनोऽपि त्वन्मते व्याकरणमनादृत्य नान्यदुपाददीरन्। अथ वा

वैयाकरणगेहेषु छिन्द्युस्ते वेदसंशयान्।

न त्वेवं कुर्वन्ति, तत्रायं हेतुः — कक्षावलम्बिनमिति। गुरुमुख एव सति को नाम तदपहाय शास्त्रान्तरमपेक्षेतेति। त्वन्मते तु स्यात्तदपेक्षेत्याह — लोके यस्य यदर्थत्वमिति। कारुणिको दानभोजनादिषु पात्रग्रहणाधिकृत इति।

सहाध्यायिभिरेवातो वेदः कात्स्न्येंन रक्ष्यते ।
स्वराक्षरविनष्टोऽपि द्वेषादन्यैर्नं मृष्यते ॥
तस्मात् प्रीतैरुपाध्यायैर्द्विष्टैः कारुणिकादिभिः ।
न विनाशयितुं वेदो लभ्यते तेन रक्ष्यते ॥

तस्माद्वेदरक्षार्थं तावन्नाध्येयं व्याकरणम् ।

लोके तु सर्वभाषाभिरर्था व्याकरणादृते ।
सिध्यन्ति व्यवहारेण काव्यादिष्वप्यसंशयम् ॥

यदि तु संव्यवहारवाक्येष्वनुपयुज्यमानमपि काव्यनाटकलक्षणप्राकृत-व्याकरणद्विपदीरासकादिलक्षणन्यायेन संस्कृतकाव्योपयोगार्थं व्याकरणमाश्रीयेत, तथापि काव्यप्रयोगनियमोत्पत्त्यशास्त्रत्वाद्यथेष्टभाषाभिः प्रबन्धकरणसंभवा-च्छब्देषु न व्यवस्था स्यादित्युच्यते ।

काव्यशोभास्वपि त्वेतन्नैवातीवोपयुज्यते ।
वैयाकरणदोषाद्धि कष्टाञ्छब्दान् प्रयुञ्जते ॥
न च लक्षणमस्तीति प्रयोक्तव्यमलौकिकम् ।
लोकसिद्धप्रयोगे तु लक्षणं स्यादनर्थकम् ॥

तेन लोकेऽपि न कदाचिद् व्याकरणेन शब्दरक्षा ।

ऊहार्थमपि शब्दानां न व्याकरणमर्थवत् ।
ऊहस्याप्यन्यतः सिद्धेरूह्यानूह्यविभायवत् ॥

तथा च—

मुख्यदृष्टार्थतास्वार्थसमवेतार्थतादिभिः ।
प्रयुक्ताः प्रकृतौ मन्त्रा गताः कार्यातिदेशतः ॥

यदि तु सम्व्यवहारवाक्येष्विति । **काव्यादिष्वप्यसंशयत्वमित्यस्य व्याख्यानमिति ।**

मुख्यदृष्टार्थता स्वार्थेति । एवमूहो भवति यदि मन्त्राः प्रकृतौ मुख्यार्थाः अर्थप्रकाशनेनोपयुज्यन्ते । स्वार्थप्रधानाश्च यदि च समवेतार्थाः अपूर्व-प्रयुक्ताश्च । तथा यदि विकृतावतिदिष्टोपकारपृष्ठभावेन गच्छन्ति यदि च विकृतावन्यत्र द्रव्यदेवतादिप्राकृतकार्यापन्नं भवति [1]तत्र दृष्टार्थता मन्त्राधिकरणे सिद्धा । तस्यामसत्यामुच्चारणाददृष्टस्याविकृतैरेव सिद्धेर्नोह

१. तत्र दृष्टार्थप्रकाशनार्थता मन्त्राधिकरणसिद्धान्तसिद्धाः तस्या° आ० मा० ।

सम्भवः[1]। तथा व्रीह्यादिस्वरूपप्रयुक्तत्वे मन्त्रस्य नीवारादिषु प्रयोजक रूपाभावादप्रयोग एव स्यान्नोहः।

अपूर्वप्रयुक्तत्वे तु प्राकृतापूर्वप्रयुक्तानामतिदेशेन वैकृतापूर्वप्रयुक्तत्वावगमात् तत्साधनेऽर्थान्तरेऽपि प्रयोगसिद्धिः स्यात्। तथा यदि शास्त्रातिदेशः पदार्थातिदेशो वा स्यात्तदा प्रकृताविव विकृतावपि कार्यकल्पनाददृष्टार्थता स्यात्। नोहेन प्राकृतकार्यसम्पादनम्। यदि चार्थान्तरं द्रव्य देवतादि न स्यात्तदापि अविकृतैरेव सिद्धेर्नोहः। यदि च न प्राकृतस्य कार्यं तदापि द्वारान्यत्वादप्रयोग एव मन्त्रस्येति[2]। तत्रापूर्वार्थितायामुपकारातिदेशेऽसमवेता मुख्यार्था स्वार्थानामनूहेऽधिकरणानि लिख्यन्ते।

[3]ज्योतिष्टोमदर्शपूर्णमासादिषु धर्मा विहितास्ते किं यजिप्रयुक्ता उतापूर्वप्रयुक्ता इति सन्देहे यजिप्रकृत्यविधानाद् व्रीहिभिर्यजेत व्रीहीनवहन्तीति च यागे तत्साधने च श्रवणाद् यजिप्रयुक्ता इति प्राप्तम्। तत्राभिधीयते—
यज्ञकर्मप्रधानं तद्धि चोदनाभूतं तस्य द्रव्येषु संस्कारस्तत्प्रयुक्तस्तदर्थत्वात्।
[ मी० सू० ९।१।१ ] नहि यजिप्रयुक्ता धर्मास्तस्य कर्तव्यत्वेनाचोदनात् निर्ज्ञातोपायत्वाच्च। न हि यागः कर्तव्यः, किं तर्हि यागेनापूर्वमतस्तदेवानिर्ज्ञातोपायपरिमाणं कथमिति धर्मानपेक्षमाणं प्रयोजनाकाङ्क्षिणो धर्मान् गृह्णातीति। अपूर्वप्रयुक्ता इति। विकृतौ कृष्णलादिषु अवघातादिप्राकृतकार्यासम्भवे कर्तव्यं न वेति सन्देहेऽतिदेशप्राप्तत्वात् कर्तव्यम्। दृष्टासम्भवे त्वदृष्टार्थं भविष्यतीति प्राप्तेऽभिहितम्। भवेदेवं यदि रूपेण शास्त्राणि पदार्था वा अतिदिश्येरन् विकृतिचोदनाकरणोपकाराकाङ्क्षिणी सादृश्योपस्थितप्रकृतिगतानामुपकारापूर्वपदार्थशास्त्राणां मध्येऽपेक्षाक्रमेण प्रथममुपकारं गृह्णाति तदर्थमपूर्वाणि तदर्थं पदार्थान् तदर्थं शास्त्राणि इति प्रयोजनपुरस्सरं प्राप्नुवतां तदभावेन क्रियोपपत्तिः।

दर्शपूर्णमासयोर्निवापमन्त्रः। 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये त्वा जुष्टं निर्वपामी' ति। तत्र सन्देहः किं

---

1. सन्देहः आ० मा०।
2. मन्त्रस्येत्यनन्तरम् अमुख्यार्था स्वार्था समवेतार्थानामनूहेऽपूर्वार्थितायामुपकारातिदेशे चाधिकरणानि लिख्यन्ते अस्ति साध्यस्कः इति। पु० मा० इत्यत्र नास्ति।
3. इत आरभ्य १८३ पृष्ठस्य १३ तमां पंक्तिं यावत् आ० मा० इत्यत्र नास्ति।

विकारेऽथ निषिद्धोह्यः कार्यापन्नेषु पञ्चधा ।
अर्थान्तरेऽप्यपूर्वार्थद्वारेणोहं व्रजन्ति नः ॥
एतावत्यन्यतो यस्य विना व्याकरणान् मतिः ।
जायेत स कथं तत्र पदं योग्यं न लप्स्यते ॥
वेद एव हि सर्वेषामादर्शः सर्वदा स्थितः ।
शब्दानां तत उद्धृत्य प्रयोगः संभविष्यति ॥
अथ वा योऽपि गाव्यादिर्लोकेनार्थे प्रयुज्यते ।
सोऽप्यर्थद्वारतः प्राप्तप्रयोगः केन वार्यते ॥

सवित्रादिपदानां विकृतावूह उतानूह इति । तत्र प्रयोगापन्नवस्तुप्रकाशने-नार्थवत्त्वान्मन्त्रपदानामग्निप्रकाशनमेषामङ्गं कर्तव्यं मान्त्रवर्णिकं वा सवित्रादीनां देवतात्वमतश्च समवेतार्थत्वादग्निपदवदूहे प्राप्तेऽभिधीयते । अर्थाभिधानसामर्थ्यान्मन्त्रेषु शेषभावः स्यात् । [मी० सू० ३।२।१] तत्राचो-दितमप्राप्तं चोदिताभिधानात् । न लोकसिद्धानां सवित्रादिपदानामग्नि-वचनत्वम् श्रौताग्निविरोधे वा सवित्रादीनां देवतात्वं शक्यमभ्युप-गन्तुम् प्रमाणाभावात् । न च मन्त्रसम्बन्धान्यथानुपपत्तिः प्रमाणम् । चोदिताग्निप्रकाशनेन तदुपपत्तेः । एवञ्चाचोदितार्थं सवित्रादिपदम-प्राप्तोहम् । ननु सवित्राद्यभिधानमनर्थकं स्यात् इत्यत आह—ततश्चावचनं तेषामितरार्थं प्रयुज्येतेति । [मी० सू० ९।१।३७] ततस्तेन कारणेन सवित्रा-दीनेव प्रयोगापन्नान् वक्ष्यामीति न वचनं तेषां सवित्रादिपदानाम् किन्तु नि पस्तुत्यर्थम् प्रयोगः क्रियते । एवञ्च प्रयोगो विकृतावूहं विनैव सम्भवतीत्यसमवेतार्थानां नोह इति ।

[अस्ति साद्यस्कः ?] । तत्रेदमामनन्ति साण्डस्त्रिवत्सः सोमक्रयण इति । अस्ति प्रकृतावेकहायन्या मन्त्र इयं गौस्तया ते क्रीणामि तस्यै शृतं तस्यै शरः तस्यै दधीत्यादि । तत्र सन्देहः किं साण्डे शृतादिशब्दानामूह उतानूह इति । तत्र साण्डे शृतादीनामभावादूहे प्राप्तेऽभिधीयते एकहायन्या-मप्यसंभव एकहायनीत्वादेव । अथावस्थान्तरभाविनां स्तोतुं तस्यामुपचारः, स साण्डेऽपि सम्भवति । साण्डादपि या गौर्जनिष्यते ततः शृतादि भविष्यतीत्यमुख्यार्थानां नोह इति ।

दर्शपूर्णमासयोरस्तीडानिगदस्तत्रेदमामनन्ति उपहूता मनुष्याय इयं

देवतापदानि तावत् । 'विधिशब्दस्य मन्त्रत्वे भावः स्यात्' [मी० सू० १०।४।२३] इत्येतेन न्यायेन सर्वानेव साध्वसाधुत्वसंमतान् पर्यायान् परित्यज्य

यज्ञभवान् ये च यज्ञपतिं वर्द्धानिति । तत्र बहुयजमानके विकारे किं यज्ञपतिशब्द ऊहेन प्रयोक्तव्यो बहुवचनान्तो न वेति सन्देहे यज्ञपतिवृद्धिवचनस्य लिङ्गाद् यज्ञपत्यर्थत्वावगमाद् यज्ञपतिर्वृद्धिवचनेनोत्साह्यते । अतश्च बहुयजमानके प्रयोगे यस्यैव वृद्धिर्नोच्यते स एव तेन संस्कारेण न्यूनः स्यादिति सर्वेषां वृद्धिं वक्तुमूहः कर्तव्य इति प्राप्तेऽभिधीयते । इडाप्रकरणादिडानिगदैकवाक्यत्वात् इडोपह्वानार्थतास्य गम्यते । लिङ्गन्तु सामान्यसम्बन्धमन्तरेण यज्ञपत्यर्थतां बोधयितुमसमर्थ्यन्ते न ये यज्ञपतिं वर्द्धयितुं समर्थास्त उपहूता मनुष्या इत्युपह्वानविशेषकत्वेन यज्ञपतेरुपादानादेकेनापि च तत्सिद्धेः परार्थत्वान्नोहितव्यो यज्ञपतिशब्द इति । कार्यापत्तिः पञ्चधा भवति । क्वचित् प्रत्यक्षदर्शनेन । यथा नैवारश्चरुरिति । तण्डुलप्रकृतित्वेनैव नीवाराश्चरुसाधनत्वं प्रतिपद्यन्ते नान्यथेति प्रत्यक्षज्ञानाद् व्रीहिकार्ये निविशन्ते । क्वचिदभावे विधानेन । यथा षडहेनोपासति विहिते श्रूयते । जुहूषा वा एतर्हि वाग्भवति यर्हि पृष्ठ्यः षडहः सन्तिष्ठते न बहु वदेन्नान्यं पृच्छेन्नान्यस्मै प्रब्रूयात् संस्थिते षडहे मध्वाशये घृतं वेति । षडहकार्यस्योपासनस्य षडहाभावाभिधानेन साधनापेक्षित्वमुपदर्श्य मध्वशनं विदधत् षडहकार्ये विदधातीति गम्यते । क्वचिद् विकारेण । यथा नैर्ऋतश्चरुर्नखावपूतानामित्यत्र संस्कार्यगतेन वितुषीभावलक्षणेन विकारसामान्येनावघातनिर्लुञ्चनयोर्विवक्षितैकरूपत्वमनुमाय तत्सम्पादकत्वाविशेषात् उलूखलमुसलकार्यापत्तिर्नखानामवसीयते । क्वचित् स्वशब्देन । यथा परिधौ पशुं नियुञ्जन्तीति यूपकार्यापत्तिः परिधेः । क्वचित् प्रतिषेधेन । यथा न गिरागिरेति ब्रूयाद् यद्गिरागिरेति ब्रूयादात्मानं तदुद्गातोद्गिरेदैरंकृत्वोद्गेयमिति । अत्रेरापदविध्येकवाक्यतामापन्नो गिरापदप्रतिषेधोऽनुवादो विज्ञायते । अनुवादश्चेरापदेनैकार्थतया गिरापदबाधादुपपद्यत इति गिरापदकार्यापत्तिमिरापदस्य गमयतीति — विधिशब्दस्य मन्त्रत्वे भावः स्यादिति [मी० सू० १०।४।२३] ।

विधिगतप्रयोगानुसरणेनैव तद्वाक्यशेषवाक्यान्तराधिगतार्थाभिधानरूपेण प्रयुज्यन्ते। तेषु ह्यस्त्येव कर्माभिधानार्थमेव प्रयोगोत्पत्तिशास्त्रत्वम्। यानि तु द्रव्यतद्गुणादिपदानि संनिहितार्थपर्युपस्थापितसमस्तरूपाणि प्रयोगवचनगोचरमागच्छन्ति तेष्वसंनिहितार्थपदनिवृत्तिन्यूनसाकाङ्क्षमन्त्रवाक्यनिराकाङ्क्षीकरणाय स्मृतेऽप्यर्थे प्रयुज्यमानेषु **प्रयोगोत्पत्त्यशास्त्रत्वान्न व्यवस्था स्यादि** [मी० सू० १।३।२४] इत्युच्यते। प्रकृतौ हि मन्त्राणां प्रयोगोत्पत्तिः शास्त्रवती, विकृतौ पुनरर्थवशाद्भवन्ती न व्याकरणानुगतेष्वेवावतिष्ठते। व्याकरणस्याप्यसंभाव्यमानमूलशास्त्रस्य कृतकाविधायकेष्ट्युपसंख्यानाद्यावापसूत्रप्रत्याख्यानानवस्थितप्रमाणत्वस्य यथारुचि विकल्पितप्रकृतिप्रत्ययपरिमाणादिदोषग्रस्तस्य निश्चितस्मर्यमाणपाणिन्यादिमतसापेक्षस्य नैवानादियज्ञगतशब्दप्रयोगनियमोत्पत्तिशास्त्रत्वमवकल्पते।

तेनोहे कर्मकर्माङ्गवाक्यार्थज्ञानकौशलैः।
लोकवेदप्रयोगाच्च सिद्धे व्याकरणेन किम्॥

**आग्नेयोऽष्टाकपालो भवतीति श्रूयते। अत्र विचारः, किमग्निवाचिषु निगदेषु यः कश्चिदग्निवाचकः शब्दः प्रयोक्तव्य उताग्निशब्द एवेति। तत्र तद्धितेनाग्निप्रातिपदिकवाच्यस्य देवतात्वमुक्तमिति तच्छब्दवारणायार्थाकृष्टो यः कश्चिच्छब्दः स्यादिति प्राप्तेऽभिधीयते। विधिशब्दस्य** मन्त्रत्वे भावः स्यात्तेन चोदनेति [ मी० सू० १०।४।२३ ]। **देवतात्वं नाम प्राधान्येन हविर्भक्तं हविस्त्यागकाले तदुद्देशः। स च तन्निर्देशकस्य शब्दस्योच्चारणम्। तत्र तद्धितेन देवताविशिष्टं द्रव्यमभिदधता देवताविशेषवच्छब्दविशेषोऽप्यपेक्षितः। तामुभयीमपेक्षां पूरयितुं प्रातिपदिकमात्मनः प्रयोगे प्रमाणं भवति। अथ वा देवतासम्बन्धविधिना श्रुतिसमवायित्वाद्देवतायास्तद्वाचिशब्दोच्चारणमेव विधीयते। तत्र किमभिहितेनार्थेन लक्षिताः शब्दा विधीयन्ताम् उताम्नाताः शब्दा इति। आम्नातशब्दविधानमुचितम्। तद्विधौ च विहितमेवार्थस्य देवतात्वं भवति। यतस्तदेव तस्य देवतात्वम्। अतो विधिशब्दस्यैव मन्त्रकर्मणि प्रकाशने भाव उच्चारणम्[1] स्यादिति।**

तेनोहे कर्मकर्माङ्गेति। **प्रकृतिविकृतिविभागज्ञानं कर्मज्ञानं[2] प्रकृतौ**

---

**१. °णस्यापीति अ० मा०।**

**२. कर्मज्ञानमिति पु० मा० इत्यत्र नास्ति।**

अपि च व्याकरणेनोहकरणमशक्यमेवेति मन्वानैष्टीकाकारैरप्युक्तम्—

अङ्गानि ज्ञातिनामान्युपमा चेन्द्रियाणि च ।
एतानि नोहं गच्छन्ति अध्रिगौ विषमं हि तत् ॥
आगमो यस्तु निर्दिष्टः प्रयोजनविवक्षया ।
कर्मणां नोच्यते तत्र किं वेदाध्ययनं फलम् ॥

सर्वस्य ह्यनुष्ठातव्यस्यागमो मूलत्वेनाख्यायते न प्रयोजनत्वेन ।

अथैतेनैव युक्तं स्यादागमोक्तं प्रयोजनम् ।
तदप्यसदनाम्नानान्निष्कारणतयापि च ॥

निष्कारणषडङ्गवेदाध्ययनोपन्यासेन हि सुतरां व्याकरणस्य निष्प्रयोजनत्वमुक्तम् ।

**द्रव्यदेवतामन्त्राणां विकृतौ च द्रव्यदेवतान्तरस्य प्राकृतानामेव मन्त्राणां ज्ञानम् । अङ्गज्ञानं प्रकृतावपूर्वप्रयुक्तत्वं कार्यातिदेशेन विकृतिगमनं वैकृतानां च प्राकृतकार्यापत्तिः अङ्गानामिति । [1]वाक्यार्थलोकप्रयोगादूह्य विशेषज्ञानमिति — अपि च व्याकरणे नोह करण[2]मिति । यतो व्याकरणादिविषयमूहापवादं मीमांसाविषयमुपदर्शयति पशुविशसनप्रैषरूपोऽध्रिगुशब्दवान् मन्त्रोऽध्रिगुशब्दस्तत्र पठ्यते श्येनमस्य वक्षः कृणुतादित्यादिः । तत्र वक्षःप्रभृतीनामङ्गानामनेकेष्वपि पशुषु तन्त्रेण प्रकाश्यमानेषु पशुभेदादेव[3] भेदसिद्धेर्न बहुवचनोहः क्रियते । प्रतीयते ह्येषां वक्ष इत्युक्ते प्रतिपशुवक्षः । श्येनशब्दस्याप्युपमानस्यैकवचनान्तस्यैवानेकवक्ष उपमितिसामर्थ्यादनूहः । तथा अनु त्वा माता मन्यतामनु पितानु भ्रातेति ज्ञातिनाम्नां पित्रादिशब्दानां पारार्थ्यात् संबन्धिभेदादेव भेदसिद्धेरनूह्यत्वम् । तथा सूर्यमस्य चक्षुर्गमयतादित्य[4]त्राभिधानाद् बहिर्भूतानां [5]संसर्गित्वादैक्यं गतानां चक्षुषामेकवचनान्तेनैवाभिधानोपपत्तेरूहविषयवैषम्यादनूह इति । आगमो यस्तु निर्दिष्ट इति । षडङ्गो वेदोऽध्येय इत्यस्यागमस्य सविषयत्वं**

---

१. वाक्यार्थज्ञानं लोकवेदशब्दप्रयोगादूह्यपदविशेषज्ञानमिति अपि चेत्यादि आ० मा० ।

२. कारणमिति पू० मा० पाठः ।

३. भेदादेवेति पू० मा० पाठः पशुपदं तत्र नास्ति ।

४. त्यत्राधिष्ठानादिति आ० मा० ।

५. संसर्गिद्रव्यत्वादेकतां गतानां आ० मा० ।

आगमो वेदवाक्याच्च नान्यः कश्चन विद्यते ।
कथं चादिमतां सिध्येद्वेदेनानादिना विधिः ॥

तस्मात् 'स्वाध्यायोऽध्येतव्यः' इत्येतत्केवलवेदाध्ययनविधानं शतपथादिषु दृष्टमुपपन्नं च नित्यार्थालम्बनत्वात् । व्याकरणाद्यङ्गाध्ययनविधानं पुनर्न कस्यांचिच्छाखायां श्रूयते । न चादिमदर्थविषयं सदनादित्वाधीनं वेदत्वं प्रमाणत्वं वा लभते ।

न च वेदाङ्गभावोऽपि कश्चिद्व्याकरणं प्रति ।
तादर्थ्यावयवाभावाद् बुद्धादिवचनेष्विव ॥
श्रुतिलिङ्गादिभिस्तावत्तादर्थ्यं नास्य गम्यते ।
अकृत्रिमस्य वा कश्चित्कृत्रिमोऽवयवः कथम् ॥

तस्मादवयवविषयमेवैतदेवं वर्णयितव्यम् ।

षडङ्गो वेद इत्युक्तं श्रुतिलिङ्गाद्यपेक्षया ।
तैः षड्भिः प्रविभक्तः सन् स हि कर्मविबोधनः ॥

ननु बाह्याङ्गानपेक्षत्वे वेदस्वरूपान्तर्गतश्रुत्याद्यपेक्षया विशेषणमनर्थकं प्रसज्यते । तथा हि—

संभवव्यभिचाराभ्यां स्याद्विशेषणसंभवः ।
श्रुत्याद्यव्यभिचारात्तु तैरङ्गैः किं विशेष्यते ॥

उच्यते—

यस्तानि प्रविभक्तानि हेतुरूपफलैः पृथक् ।
ज्ञात्वाधीते स एवास्य विधेरर्थं करोति नः ॥

नाङ्गषट्कम[1]न्तरेणेति अर्थवदिति । यस्तानि [2]प्रविभक्तानीति । [3]यद्यपि वेदपाठेनाक्षराणि अभिधायकानि क्वचिद्विनियोज्यानि समभिव्याहारात्मकवाक्यरूपेण कस्यचित् प्रकरणे क्रमे वा कथमपि समाख्यातानि पठ्यन्ते । तथापि कश्चिद् वेद इत्येवं तानि पठन्ति [ति] कश्चिदेवं प्रभेदानीति । तत्रोत्तरस्य प्रविभक्तो वेदपाठः कर्म न पूर्वस्य । तत्र हेतुर्येन [4]व्यापारभेदेन विनियोजकत्वमेषां भवति रूपं श्रवणं श्रुतिः सामर्थ्यं लिङ्गमित्यादि । फलमङ्गिविशेषं प्रत्यङ्गविशेषस्य विनियोग इति ।

---

१. °मन्तरेण तेन व्याकरणमर्थवदिति आ० मा० ।
२. प्रतिविभक्तानीति आ० मा० ।
३. यद्यपि इत्यतः विनियोज्यानि इति यावत् आ० मा० इत्यत्र नास्ति ।
४. व्यापारेण आ० मा० ।

अधिगन्तव्य इत्येतदध्येय इति चोच्यते ।
तेन श्रुत्यादिमान् वेदो वेदितव्यो विधेरतः ॥
ध्यायतेरेव वा रूपं ध्येय इत्येतदाश्रितम् ।
श्रुत्याद्यर्पितसर्वार्थः स ध्यातव्यः सदा द्विजैः ॥

ततश्च मीमांसाद्वारा वेदार्थानुचिन्तनविधिरेवायमिति ज्ञायते न व्याकरणाध्ययनविधिः ।

वेदे व्याकरणादीनि सन्त्येवाभ्यन्तराणि नः ।
भवेद्वा तदभिप्राया षडङ्गाध्ययनस्मृतिः ॥

'तद्दध्नो दधित्वम्' इत्येवमादीनि हि वैदिकार्थवादान्तर्गतान्येव हि निरुक्तव्याकरणादीनि तैः सह विधायको वेदोऽध्येतव्य इति स्मृत्यर्थो भवेत् ।

प्रातिशाख्यानि वा यानि स्वाध्यायवदधीयते ।
गृह्यमाणतदर्थत्वादङ्गत्वं तेषु वा स्थितम् ॥

यानि हि वेदव्यापारपराण्येव तेषु लिङ्गेन शक्यमङ्गत्वमध्यवसातुम् । ननु कतिपयस्पृष्टवेदवाक्योदाहरणच्छद्ममात्रेषु पाणिनिप्रभृतिप्रणीतेषु प्रातिशाख्यानीव प्रयोगशास्त्राणीति चेत्, न । तेषां पदस्वरूपेष्वेव व्यापारात् । पाणिनीयादिषु हि वेदस्वरूपवर्जितानि पदान्येव संस्कृत्य संस्कृत्योत्सृज्यन्ते । प्रातिशाख्यैः पुनर्वेदसंहिताध्ययनानुगतस्वरसन्धिप्रयतिविवृतिपूर्वाङ्गपराङ्गाद्यनुसरणाद्वेदाङ्गत्वमाविष्कृतम् ।

पूर्वोक्तेनानुसन्धानमागमस्य च नास्ति ते ।
आगमोऽध्ययनप्रायः प्राक् च शब्दानुशासनम् ॥

स्वरसन्धिप्रयतिविवृतीति । उदात्तयोरचोरव्यपेतयोर्मध्ये कालः स्वरसन्धिः । प्रयतिः सर्वानुदात्तपदसंहतिः । विवृतिरसंहिता । पूर्वाङ्गपराङ्गे स्वरितस्योदात्तानुदात्तौ भागाविति । पूर्वोक्तेनानुसन्धानमिति । पूर्वोक्तेन ज्ञानेन धर्मस्तत्पूर्वे वा प्रयोग इत्येतेनागमो नैकवाक्यतयानुसन्धीयते विरुध्यत इत्यर्थः । तथा हि आगमोऽध्ययनप्रधानोऽध्ययनमेव कारणान्तरमनपेक्ष्य सम्पाद्यमिति । प्राक् च ज्ञाने धर्म इत्यादिना शब्दानां व्याकरणेनानुशासनं ज्ञापनं जिज्ञासोर्ज्ञानोत्पत्तिरिति यावत् ।

'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येय' [महाभाष्यं पस्पशाह्निकम्] इति विहिते ज्ञाने धर्मः शास्त्रपूर्वंप्रयोगेऽभ्युदय इति च व्याहताभिधानम्। यदपि च शब्दापशब्दज्ञानलाघवं प्रयोजनत्वेनोपदिष्टं तन्निराकृतप्रयोजनान्तरस्य लाघवमात्रमेवावशिष्यत इति सत्यमेवोक्तम्।

यदि वा गौरवस्यैव लघुत्वमुपचर्यते।
विपर्ययापदेशेन शूरे कातरशब्दवत्॥

लोकप्रसिद्धानामेव शब्दानामत्यन्तविषमधातुगणोणादिसूत्रादिभिरलौकिकसंज्ञापरिभाषानिबद्धप्रक्रियैरनवस्थितस्थापनाक्षेपसिद्धान्तविचारैः क्लेशेनान्तं गत्वा यथावस्थितानुवादमात्रमेव क्रियते। तत्रापि चोदाहरणव्यतिरिक्तेषु कस्यचिदेव लक्षणयोजनसामर्थ्यं दृश्यते। तेनात्यन्तगुरुः सन्नयमुपायस्तुत्यर्थमेव लघुरित्युपचरितः। यदपि केनचिदुक्तम्—

तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते॥ इति।

तद्रूपरसगन्धस्पर्शेष्वपि वक्तव्यमासीत्।

को हि प्रत्यक्षगम्येऽर्थे शास्त्रतत्त्वावधारणम्।
शास्त्रलोकस्वभावज्ञ ईदृशं वक्तुमर्हति॥

अत एव श्लोकस्योत्तरार्धं वक्तव्यम्।

तत्त्वावबोधः शब्दानां नास्ति श्रोत्रेन्द्रियादृते॥ इति।

न ह्यत्र कश्चिद्विप्रतिपद्यते बधिरेष्वेवमदृष्टत्वात्।

असंदेहश्च वेदार्थे यदप्युक्तं प्रयोजनम्।
तदप्यसद् यतो नास्मात्पदवाक्यार्थनिर्णयौ॥

अथ वा ज्ञानानन्तरं शासनं प्रयोगः कारणान्तरमुक्तमिति। लाघवमात्रमवशिष्यत इति। यद्यपि व्याकरणान्न किञ्चिदभिमतं निष्पद्यते तथाप्यधीयते नातिक्लेशेनाध्ययनमाश्रितं स्यादिति। अनवस्थितस्थापनाक्षेपेति। अनवस्थितौ स्थापना चाक्षेपश्च यत्र सोऽनवस्थितस्थापनाक्षेपः स तादृशः सिद्धान्तविचारो येषु तैः सूत्रैः। अनवस्थापरिभाषाणामनित्यत्वेन क्वचिदनाश्रयणादिति। शास्त्रलोकस्वभावज्ञ इति। नैसर्गिको हि लौकिकः प्रत्यक्षादिव्यवहारः सर्वस्य प्रयत्नान्तरापेक्षश्च शास्त्रीय इति। असन्देहश्च वेदार्थे इति। स्थूलपृषतीमनड्वाहीमालभेतेत्यत्र किं स्थूला चासौ पृषती चेति

यतः पदार्थसन्देहास्तावद् बहवो वृद्धव्यवहारादेव निवर्तन्ते। शेषाश्च निगमनिरुक्तकल्पसूत्रतर्काभियुक्तेभ्यः सर्वेषामर्थप्रतिपादनपरत्वात्। व्याकरणेन पुनरतन्त्रीकृत्यार्थं पदस्वरूपमात्रेऽन्वाख्यायमाने दूरादपेतमेवार्थज्ञानम्। तथा हि—

धातुभ्यः कल्पिते नाम्नि क्रियायोगोऽनुगम्यते।
न चाभिधानवेलायां तत्प्रतीतिर्मनागपि॥

'गमेर्डोः' [ उणादिः २३५ ] इत्येतद्व्युत्पत्त्यनुसारी हि गन्तृमात्रमेव गोशब्दवाच्यमध्यवस्येत्। जातिशब्दश्चायं वृद्धव्यवहारेऽवस्थितो यत्र प्रसिद्धस्तत्रान्वाख्यातव्यः। तथा च—

कुशलोदारशब्दादेर्यावत्यनुगमस्थितः।
न तावत्येव शब्दार्थप्रसिद्धिर्व्यवतिष्ठते॥
अश्वकर्णाजकर्णादौ समासानुगमे सति।
अपेतावयवार्थोऽर्थो दृश्यते वृत्तशब्दवत्॥
एवं राजन्यशब्दादेरयतत्वाद्यनादरः।
व्याक्रियाविपरीतोऽपि स्थितो लोकप्रसिद्धितः॥
तथा वेदविरुद्धेऽर्थ दृष्टं शब्दानुशासनम्।
तत्तथा यदि गृह्येत वेदाङ्गत्वं विरुध्यते॥

'कलेर्ढक्' [पा० सू० ४।२।८] 'वामदेवाड्ड्यड्ड्यौ' [पा० सू० ४।२।९] इति कलिवामदेवदृष्टसामाभिधानप्रतिपत्तिर्वैयाकरणस्य भवति। वेदे तु 'ततो वसु वामं समभवत् तस्माद्वामदेव्यम्' 'यदकालयत्तत्कालेयस्य कालेयत्वम्' इत्याद्यर्थव्युत्पत्तिदर्शनं व्याकरणानुसारिणीं प्रतिपत्तिं बाधते। तथा कल्पसूत्रकारैः कृष्णशंवासः कृष्णवलक्षे अजिने इत्येवमादिषु कृष्णदशादिविवरणाश्रयणाद् व्याकरणशतेनाप्यनवगता अर्था वेदार्थवित्परम्पराप्राप्ता वेदवाक्यपौर्वापर्यावगतयूपादिशब्दार्थाश्च व्याख्यायन्ते। यथा चैवमादिषु व्याकरणान-

स्थूलपृषती सादृश्यादनड्वाहीत्युच्यते। अथ वा स्थूलानि पृषन्ति यस्याः सा स्थूलपृषतीति सन्देहे अध्येतृसिद्धस्याद्युदात्तस्य व्याकरणे बहुव्रीहिविषयत्वेनान्वाख्यानाद् बहुव्रीहिनिश्चयेन तदर्थनिश्चय इति। कुशलोदार इति। कुशस्य लातरि कुशलशब्दः उद्गन्तरि चोदारशब्दो व्याकरणानुगमादवसीयते। प्रयोगात्तु क्रियान्तरेऽपि प्रवीणे कुशलशब्दः। आशयोत्कर्ष एवो-

पेक्षाणामेव निःसंशयार्थप्रतिपत्तिस्तथा स्थूलपृषत्यादिशब्दार्थेष्वपि व्याख्यातृपरम्परैव निर्णयक्षमेति न व्याकरणमपेक्षितव्यम् । किञ्च—

वाक्यार्थेषु च सन्देहा जायन्ते ये सहस्रशः ।
नैषां व्याकरणात् कश्चित्पूर्वपक्षोऽपि गम्यते ॥

यदि वेदार्थासन्देहप्रयोजनं व्याकरणं भवेत्ततः किमर्थवादाः स्वतन्त्राः कञ्चिदर्थं प्रतिपादयन्त्यथ विधिशेषभूताः । तथा किमूर्गवरोधनमौदुम्बरत्वस्य फलमुत प्रशंसार्थमुपात्तमिति । तथा हेतुविधिहेत्वर्थवादमन्त्रप्रयोगदृष्टादृष्टार्थत्वादिषु ग्रहैकत्वविवक्षादिषु च सन्देहानपनयेत् । अथैवमादिषु मीमांसासिद्धत्वाद् व्याकरणेऽनुपन्यासस्ततः कल्पसूत्रकारवचनसिद्धकतिपयस्थूलपृषत्याद्यर्थनिर्णयप्रयोजनता सुतरां नाश्रयणीया । अपि च—

लक्षणोत्थेऽपि सन्देहे व्याख्यानादेव निर्णयः ।
वेदशब्देष्वपि व्याख्या नैव दण्डैर्निवार्यते ॥

'व्याख्यानतो विशेषप्रतिपत्तिः [ व्याकरणपरिभाषा १ ] इत्यनयैव परिभाषया नहि सन्देहादलक्षणमितिवन्न हि सन्देहादवेद इत्यपि शक्यं वक्तुम् ।

न चागृहीतशब्दार्थैः कैश्चिद् व्याकरणाश्रयात् ।
व्याख्यातुं शक्यते वेदो यतः स्यात्तेन निश्चयः ॥
यथैवावस्थितो वेदस्तथा व्याख्यापि सर्वदा ।
अतः स्थूलपृषत्यादिव्याख्या व्याकरणादृते ॥
न च लोके प्रयुक्तानां पदानां दृश्यते स्वरः ।
व्यवहाराद्बहिर्भूतात् स्वरान्नातोऽर्थनिश्चयः ॥

वृद्धव्यवहाराधीनं शब्दार्थावधारणम् । तत्र च समासान्तोदात्तत्वपूर्वपदप्रकृतिस्वरत्वादिप्रयोगविभागाभावान्न तत्कृतार्थविशेषव्यवस्था ।

**दारशब्दो न धूमादिषूद्गच्छत्स्वपीति । पूर्वपदप्रकृतिस्वरत्वमिति । अनुदात्तं पदमेकवर्जम् [पा० सू० ६।१।१५८] इति । प्रतिपदमेकैकमुदात्तं समासे त्वेकपद्ये सत्येकस्मिन् निवर्तते । अपरं प्रकृत्यावतिष्ठते । तत्र — बहुव्रीहौ प्रकृत्या पूर्वपदमिति [पा० सू० ६।२।१] । पूर्वपदस्य प्रकृतिस्वरत्वाद् बहुव्रीहेराद्युदात्तत्वमिति । ननु यद्यपि वेदे पदार्थस्य व्युत्पत्तिर्नास्ति सन्दिग्ध-**

यत्र त्वस्ति स्वरज्ञानं वेदवाक्येष्वविश्रुतम् ।
तत्र नैव पदार्थानामवधारणसंभवः ॥
तत्रापि निर्णयो यः स्यादर्थप्रकरणादिभिः ।
तत्र तैरेव सिद्धत्वान्न स्वरस्याभिधा गता ॥
तेनादृष्टार्थ एवायं स्वरपाठोऽवगम्यते ।
सर्वदा ब्रह्मयज्ञाङ्गद्रव्ययज्ञजपेषु च ॥

व्याकरणानुगमोऽपि चास्य यदि नाम कथञ्चित्तदुपयोगार्थ एव भवेन्न तु लौकिकप्रयोगार्थः । अत्यन्ताप्रयुक्तत्वात् ।

न च व्याकरणोक्तेन स्वरेणार्थस्य निर्णयः ।
शब्दानुशासनं ह्येतद् दृष्टं नार्थानुशासनम् ॥

तस्मादसन्देहार्थमपि नाध्येयं व्याकरणम् । न ह्येतदर्थनिश्चयाङ्गभूत-स्वरविशेषप्रयोगोत्पत्तिशास्त्रम् । यान्यपि च 'इमानि भूयः शब्दानुशासनस्य प्रयोजनानि' इत्येवमुपन्यस्तानि तेषामपि कानिचित् प्रयोजनत्वयोग्यान्येव न संभवन्ति, कानिचित् प्रयोजनाभासानि, कानिचिदप्रमाणकानि । अपि च—

**निर्णयस्त्वर्थप्रकरणादिभिरस्ति । तत्र च स्वरविशेषोपेतस्य पदस्य दर्शनात् तत्स्वरभाज एवासावर्थ इति प्रत्येष्यामः । अन्यथा हि द्वयो-रर्थयोः साधारणस्य स्वरूपस्य कथमेकत्रैव वृत्तिरित्याशङ्क्याह — तत्रापि निर्णयो यः स्यादिति । लोकव्यवहारदर्शनादर्थद्वयसाधारणस्यैव शब्दरूप-स्यैकार्थपरे प्रयोगेऽवधारितेऽर्थप्रकरणादिभिर्निर्णीतैकार्थग्रहणोपपत्तौ न लोकानवगतस्वरस्याप्यर्थविशेषप्रतिपादनसामग्रीनिवेशित्वमङ्गीकर्तव्यमिति । न च व्याकरणोक्तेनेति । व्याकरणेनापि नार्थाभिधानाङ्गत्वेनान्वाख्येयः स्वरः स्थितः किन्तु साधुशब्दरूपविशेषणत्वेन । एवम्विधः शब्दः साधुरिति । तत्र हेतुः शब्दानुशासनं ह्येतदिति । [1]यद्विधानं यदर्थमारब्धं तत्रैव तत्प्रमाणं नाधिक इति । कानिचित् प्रयोजनयोग्यान्येवेति । यानि लोक[2]-प्रयोज्यानि न कथञ्चिच्छास्त्रे प्रयुञ्जते तानि न[3] प्रयोजनयोग्यानि । यानि तु लोकतः सिद्धानि व्याकरणप्रयोजनानीव लक्ष्यन्ते परमार्थेन च शास्त्रान्तरा-**

---

१. यद् विद्यास्थानं यमर्थं आ० मा० ।
२. लोकप्रसिद्धानि आ० मा० ।
३. नेति आ० मा० इत्यत्र नास्ति ।

अर्थवत्त्वं न चेज्जातं मुख्यैर्यस्य प्रयोजनैः ।
तस्यानुषङ्गिकेष्वाशा कुशकाशावलम्बिनी ॥

तत्र [1]यस्तावत्तेऽसुरा इत्याद्यसुरपुराकल्पार्थवादप्रक्रमेऽपशब्दप्रतिषेधः प्रयोजनत्वेनोपन्यस्तः, स यथावस्थितस्तथोक्तं प्राक् । दुष्टः शब्दः इत्यत्रापि बहुजनप्रसिद्धशिक्षाकारपठितमन्त्रपदोद्धारेण शब्दपदं प्रक्षिपता स्वपक्षानुरागो दर्शितः । दुष्टमन्त्रप्रयोगे त्विष्यत एव यजमानस्य प्रत्यवायः । 'यद्धोता जहाति वाग्धि तद्यजमानं जहाति' इत्येवमादिभिः सर्वर्त्विक्प्रयोज्यमन्त्रविनाशेषु यजमानगामिदोषदर्शनात् । तथा 'इन्द्रशत्रुर्वर्धस्व' इति मन्त्रप्रयोगविनाशदोष एवोदाहृतः । यत्तु निरुक्ते यदधीतमविज्ञातं निगदेनैव शब्द्यते ।

देव सिद्धानि न व्याकरणं प्रयुञ्जते तानि प्रयोजनाभासानि । यानि तु यथोपन्यस्तरूपाण्येव न भवन्ति तानि अप्रमाणकानि इति । तत्र यस्ताव-त्तेऽसुरा इति । हे अरय हे अरय इति प्रयोक्तव्ये ते असुरा हेलयो हेलय इति वदन्तः पराबभूवुस्तस्मान्न ब्राह्मणेन म्लेच्छितवै म्लेच्छो ह वा एष यदपशब्द इति वक्तव्ये हेलयो हेलय इति इत्यपशब्दप्रयोगात् पराभूता असुरा इति ।

दुष्टः शब्दः स्वरतो वर्णतो वा ।
मिथ्याप्रयुक्तो न तमर्थमाह ॥
स वाग्वज्रो यजमानं हिनस्ति ।
यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥

इन्द्रशत्रुर्वर्द्धस्वेति मन्त्रे यदीन्द्रशत्रुपदमाद्युदात्तं पठ्यते तदेन्द्रः शत्रु-र्यस्येति बहुव्रीह्यर्थस्य यजमानस्य वृद्धिस्वदेत् । यदि त्वन्तोदात्तः पठ्यते तदा स्वरदोषादिन्द्रस्य यजमानशत्रोः कर्मधारयार्थस्य वृद्धि वदन् यजमानं हिनस्ति इति ।

यदधीतमविज्ञातं निगदेनैव पठ्यते[1] ।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥

---

१. अस्मिन् सन्दर्भे महाभाष्याभिहितानि व्याकरणस्यानुषङ्गिकप्रयोजन-प्रतिपादिकान्यनेकानि पदानि समागतानि पस्पशाह्निकस्येत्यवधेयम् ।

१. शब्द्यते आ० मा० ।

इत्युक्तं तदस्माभिः प्रथमसूत्र एवार्थशब्दं व्याचक्षाणैः स्नानस्मृत्यतिक्रमकारणत्वेनोपवर्णितम् । 'अनतिक्रामन्तो वेदमर्थवन्तं सन्तमनर्थकमवकल्पयेम दृष्टा हि तस्यार्थः कर्मावबोधनम्' इति । ततश्चाव्याख्यातेन वेदेनार्थप्रकाशनाकरणात् 'न तज्ज्वलति कर्हि चित्' इति । सत्यमेवैतत् न तु व्याकरणस्य तत्रोपयोगः । कर्मप्रयोगोत्पत्ति प्रत्यशास्त्रत्वात् । शब्दशास्त्रमेतदिति चेत्तेष्वप्यपूर्वोक्तेन निर्मूलत्वेन न व्यवस्था स्यात् । तस्मात् कल्पसूत्रनिरुक्तमीमांसानामेवाधीतमन्त्रब्राह्मणार्थं विज्ञानोपयोगक्षमत्वादेतत्प्रयोजनं युक्तं न तु व्याकरणस्य । यस्तु प्रयुङ्क्ते इत्येतदपि मन्त्रब्राह्मणशब्दस्य सम्यक्प्रयोगप्रयोजनमेव विज्ञायते । यथा समाम्नातादन्यथाकरणाच्च 'दुष्यति चापशब्दैः' इति । स्वाध्यायाध्ययनाध्यापनयजनयाजनगतवेदशब्दविनाशेऽपि 'यदृक्तो यज्ञ आर्तिमियात्' इति । एतद्वचनादवगतदोषानुवादोऽपीत्यवगम्यते । वाग्योगविदिति च बहुलोकव्यवहारदर्शनात् विदितपदपदार्थसम्बन्धः पुमान्, ब्राह्मणवाक्येषु चोद्दिश्यमानोपादीयमानगुणप्रधानादिनिरूपणावधृतवचनव्यक्तिविशेषो मन्त्रेषु चावगतचोदित[1]स्वार्थपरार्थप्रकाशनार्हत्वानर्हत्वविदेव च वाग्योगविदित्युच्यते न वैयाकरणः । वैयाकरणस्यैवंविधप्रयोगोत्पत्त्यशास्त्रत्वात् । यदप्यविद्वांस इति प्रत्यभिवादे नामान्त्यस्वरप्लुतानभिज्ञनिन्दावचनं, तत्प्लुतस्य त्रिमात्रस्य लोकप्रसिद्धत्वाम्मन्वाद्युपदिष्टनामान्त्यप्रयोगसिद्धौ लब्धायां तत् प्रयोगोत्पत्त्यशास्त्रत्वम् । न च तावता मन्वादिभिरनेन चोदाहृतेन श्लोकेन प्रकृतिप्रत्ययादि-

यस्तु प्रयुंक्ते पुरुषो विशेषान्[2] ।
शब्दान् यथावद् व्यवहारकाले ।
सोऽनन्तमाप्नोति [3]फलं परत्र ।
वाग्योगवित् दुष्यति चापशब्दैः ॥
अविद्वांसः प्रत्यभिवादे नाम्नोऽन्ते न[4] प्लुतिं विदुः ।
कामं तेषु तु विप्रोष्य स्त्रीष्विवायमहं वदेत् ॥

तत्प्लुतस्येति । तदित्यव्ययं लुप्तसप्तमीकम् । एवं तद् याज्ञिकोपदेशेति ।

---

१. चोदिताचोदितेति काशीमुद्रितपुस्तकपाठः ।

२. यस्तु प्रयुङ्क्ते कुशलो विशेषे इति प्रचलितपाठः ।

३. जयं इति प्रचलितपाठः ।

४. नाम्नो ये न इति प्रचलितपाठः ।

विभागद्वारेण शब्दापशब्दविवेकज्ञानं तदुपयोगो वाश्रीयते। यच्च 'प्रयाजाः सविभक्तिकाः कर्तव्याः' इति तद्याज्ञिकोपदेशसिद्धत्वाद् ब्राह्मणे च षडहः विभक्तयः 'अग्निर्वृत्राणि जङ्घनत्' 'अग्निं वा वृत्रहन्तमम्' 'अग्निनाग्निः समिध्यते' इत्येवमादिविभक्तविभक्तिप्रयोगदर्शनादन्तरेणापि व्याकरणं वैभक्तिकमात्रालोचनेनापि वा सविभक्तिकप्रयाजप्रयोगसिद्धेरशास्त्रं व्याकरणम् । 'यो वा इमां पदशः स्वरशोऽक्षरशो वाचं विदधाति स आर्त्विजीनो भवति' इति सम्यग्वेदाध्याय्येवमभिधीयते । तथा 'चत्वारि वाक्परिमिता पदानि' इति । यानि तावदोंकारमहाव्याहृत्यादिचतुष्टयबाहुल्यप्रयोजनानुसरणेन नैरुक्तैरप्यक्षरवर्णसाम्यान्निर्ब्रूयादितिवत् प्रपञ्चितानि, न तत्र व्याकरणस्य कश्चिदधिकारः । यत्तु नामाख्यातोपसर्गनिपातचतुष्टयानुगतं वैयाकरणमतमाश्रितं तदपि चतुष्टयस्य लोकसिद्धत्वादेव नातीव व्याकरणापेक्षम् । एतद्विषयत्वे च वर्ण्यमाने 'तुरीयं वाचो मनुष्या वदन्ति' इत्यसंबद्धमेव स्यात् । चतुर्णामपि पदजातानां मनुष्यैरुच्यमानत्वात् । तस्मादयमस्य मन्त्रस्यार्थः पौर्वापर्यसंगतो वर्ण्यते । 'चत्वारि वाक्परिमिता पदानि' इति । यैर्वाक् पद्यते गम्यते तानि चत्वारि प्रत्यक्षानुमानोपमानार्थापत्त्याख्यानि प्रमाणान्यभिधीयन्ते । तत्र यानि प्रतीकविधिप्राकृतवैकृतवाक्यसारूप्यदृष्टानुपपद्यमानादिप्रभवैरनुमानोपमानार्थापत्त्याख्यैस्त्रिभिर्गम्यन्ते, तानि तत्सिद्धत्वादेव नेङ्गयन्ति नोच्चारयन्ति। यस्तु भागस्तैरशक्यः प्रतिपादयितुं तं तुरीयं प्रत्यक्षसमधिगम्यमध्येतारो मनुष्या वदन्ति समामनन्तीत्यर्थः। षट्प्रमाणीमध्याच्च प्रमाणद्वयं वाक्पदत्वादपोद्धृतम् । अभावस्तावदभाव-

यत्तु प्रयाजाः सविभक्तिका इति । अत्र कर्मस्वरूपे विभक्त्यसंभवाद् देवताद्वारेण सविभक्तिकत्वं तत्रापि षष्ठीपर्युदासात् षडित्युक्तम् ।

चत्वारि वाक्परिमिता पदानि ।
तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति ।
तुरीयं वाचो मनुष्या वदन्ति ।।

ऊंकारो, भूर्भुवः स्वरिति महाव्याहृतित्रयमिति वाक्चतुष्टयमिति । अथ वा मृगपक्षिसरीसृपमनुष्याणां वाक्चतुष्टयमिति । अथ वा नामाख्यातोपसर्गनिपातभेदेन वाक्चतुष्टयमिति । चतुष्टयबाहुल्यरूपस्य प्रयोजन-

विषयत्वादेव वाक्पदं न भवति। आगमस्य पुनर्वागात्मकत्वात् पद्यमानवागाश्रितस्य पदत्वाश्रयणमनुपपन्नम् । प्रत्यक्षपक्षनिक्षिप्तत्वात् पृथक्त्वेनानिर्देशः । चत्वारि शृङ्गा इत्यस्य तु विषुवति होतुराज्ये प्रयुक्तस्य योऽर्थः स मन्त्राधिकरणे व्याख्यातः। न चात्र काचिद् व्याकरणापेक्षा । यत्तु चत्वारि पदजातानि शृङ्गाणीत्येवमादिसंख्यासामान्यमात्रेण कर्मविनियोगानपेक्षमर्थान्तरं वर्ण्यते, तद्व्याकरणकृतवाक्कौशलमात्रम् । तादृशं च वैशेषिकादिष्वपि तदभियुक्तैः शक्यं योजयितुमित्यनादरणीयम्। 'उतत्वः पश्यन्' इत्यपि लोकनिरुक्तकल्पसूत्रमीमांसाश्रयोत्पन्नपदार्थवाक्यार्थज्ञानप्रशंसार्थ एव मन्त्रो विज्ञायमानो न व्याकरणमाद्रियते। एवं '[1]सक्तुमिव तितउना' इत्येषोऽप्यविप्लुतस्वाध्यायाध्ययननिर्मलवेदाक्षरार्थज्ञानप्रशंसार्थं पूर्ववदेव वर्णनीयः। 'आहिताग्निरपशब्दं प्रयुज्य' इति, व्याख्यातमेवैतत् । यदपि नामकरणे, घोषवदाद्यन्तरन्तस्थं

स्यानुसरणं नैरुक्तिकैः कृतम् । तच्चाक्षरवर्णसामान्यान्निर्ब्रूयादिति । पदनिर्वचनन्यायमर्थेऽपि तद्विषये सञ्चार्य संख्यामात्र[1]साम्येनेति। नातीव प्रमाणवदिति। प्रत्यक्षपक्षनिक्षेपाद् वेति । नहि शब्देन [2]शब्दान्तरमभिधायापाठान्तं विधीयते। किन्तु रूपेणैरंकृत्वोद्गेयमितिवत् ततश्च प्रत्यक्षमेव भवतीति। उतत्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् ।

उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः।

एकशब्दस्यार्थे त्व शब्दः उतैको व्याकरणानभिज्ञः पश्यन्नपि न पश्यति वाचं शृण्वन्नपि न शृणोति उतो एकस्मै व्याकरणाभिज्ञाय तन्वं वाच्यानि वाग् विवृणोति जायेव पत्ये कामयमानाः सुवासाः। तस्मात्सा वाङ् मह्यमात्मानं विवृणोतु इत्यध्येयं व्याकरणमिति।

सक्तुमिव तितउना पुनन्तो।
यत्र धीरा मनसा वाचमक्रत ॥
अत्रा सखायः सख्यानि जानते।
भद्रैषां लक्ष्मीर्निहिताधिवाचि ॥

---

१. इह महाभाष्यस्य पस्पशाह्निकस्य बहूनि पदानि समागतानि सन्ति ।

१. °सामान्येनेति आ० मा० । संख्यासामान्यमात्रेणेति समुचितं प्रतीकम् ।

२. शब्दान्तरमभिधानोपात्तं विधीयते आ० मा० ।

द्विचतुरादिवर्णकृदन्तपरिग्रहतद्धितवर्जनवचनं, तत्कृत्तद्धितसंज्ञयोर्व्याकरणेऽपि पूर्वप्रसिद्धयोरेवोपादानाद् वर्णपरिमाणस्य च प्रत्यक्षपूर्वकस्मृत्यधीनत्वाद् घोषवत्त्वादीनां च शिक्षाप्रातिशाख्येष्वनुक्रमणात्सर्वैश्च श्रोत्रियैरक्लेशेन नामकरणान्न व्याकरणं नाम प्रयोगोत्पत्तिशास्त्रत्वेनापेक्षणीयम्। 'सुदेवो असि वरुण 'इत्यत्र यद्यपि तावत् सप्त विभक्तय एव सप्त सिन्धव इति व्याख्यायन्ते। तथापि तासां विभक्तिसंज्ञामात्रं व्याकरणेन क्रियते प्रसिद्धमेव वा गृह्यते। यानि तु प्रयोगरूपाणि तानि लोके वेदे च विभागशः प्रत्यक्षाण्येवेति न व्याकरणापेक्षयैवमभिधीयन्ते। यदा पुनः सप्त सिन्धवो नद्य एव यज्ञर्त्विग्यजमानप्रशंसापक्षे वा सप्त होत्रागता वाचः सप्त सामस्वरगतास्तद्भक्तिगता वा परिगृह्यन्ते, तदैतिहासिकयाज्ञिकगोचरापन्नत्वादविषय एव व्याकरणस्य।

संस्कृतानां च शब्दानां साधुत्वे परिकल्पिते।
वक्तव्यः कस्य संस्कारः कथं वा क्रियते पुनः॥

व्याकरणेन शब्देषु संस्क्रियमाणेषु न ज्ञायते किं वस्तु संस्क्रियते को वा संस्कार उत्पत्तिप्राप्तिविकारापूर्वसाधनसामर्थ्याधानानां क्रियत इति।

न तावदस्ति शब्दत्ववर्णत्वव्यक्तिसंस्क्रिया।
सर्वत्रातिप्रसङ्गेन न व्यवस्था हि सिध्यति॥
शब्दत्वे संस्कृते स्याद्धि ध्वनीनामपि साधुता।
वर्णत्वेऽप्येकवर्णानां गाव्यादीनां च तुल्यता॥

एतेन वर्णव्यक्तिसंस्कारः प्रत्युक्तः।

गवादिषु गकारादिर्यः सकृत् संस्कृतः क्वचित्।
गाव्यादिषु स एवेति साधुरेव प्रसज्यते॥

लुगपवाद आकारो[1]विभक्त्यादेशोऽत्रेति। सख्यानि सखिसंव्यवहारप्रयोजनानि वाक्यानीति। घोषवदादीति। वर्गाणां तृतीया ये घोषवन्तस्त आदिस्तथान्तस्था यरलवास्तेऽन्तर्मध्ये यस्य तस्य नाम्नः परिग्रह इति।

सुदेवोऽसि वरुण यस्य ते सप्त सिन्धवः।
अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव॥

काकुदं तालु सूर्मिमिति वक्तव्ये यणादेशश्छान्दस इति।

---

१. विभक्त्यादेशो इति पू० मा० नास्ति।

एवं प्रत्येकसंस्कारे न कस्यचिदसाधुता ।
समुदायस्तु नैवास्ति तेषामयुगपच्छ्रुतेः ॥

येषां तावद्वर्णव्यक्तयः प्रध्वंसिन्य एव तेषां विनष्टानुत्पन्नानां संस्कारायोग्यत्वमेव ।

वर्तमानापि संस्कारक्षणं नैवावतिष्ठते ।
तावदेव विनश्येत्सा यावत् संस्कर्तुमिष्यते ॥
न च तां संस्कृतां भूयः कश्चन द्रक्ष्यति क्वचित् ।
सक्तूनामिव संस्कारो होमेनैष प्रसज्यते ॥

यथैव होमसंस्कृतानां भस्मसाद्भावात् सक्तूनां पुनर्दर्शनविनियोगासम्भवाद् द्वितीयाप्रतिपादितसंस्कार्यत्वपरिग्रहे सक्तवो होमस्तद्भावनाविधिरिति सर्वेषामनर्थकत्वं प्रसज्यत इति संस्कारानाश्रयणं, तथैव क्षणिकशब्दव्यक्तिसंस्कारपक्षे सर्वानर्थकत्वप्रसङ्गः । ततश्च योऽप्ययमनियमोऽभिहितो यद्येव नित्यः शब्दोऽथापि कार्य उभयथापि लक्षणं प्रवर्त्यम् [महाभाष्यम्, पस्पशाह्निकम्] इति । स एवमेव न्यायनिरूपणभयमात्राविष्करणार्थः शिष्यव्यामोहनार्थो वेति न युक्तः परिग्रहीतुम् ।

अदूरविप्रकृष्टे च वस्तुन्यनियमो भवेत् ।
शीतोष्णानियमं ब्रूयात् को नु वह्नेः सचेतनः ॥
उत्पादश्चैव संस्कारः कार्यपक्षे भवेदयम् ।
ततश्च सुतरां प्राप्ता प्रयोगोत्पत्त्यशास्त्रता ॥

व्याकरणप्रक्रियानुगृहीतेन वैयाकरणेनोत्पाद्यमानेषु साधुशब्देषु नित्यवेदमूलत्ववेदाङ्गत्वनिराकरणं स्वयमेवापादितम् ।

अथ व्याकरणोत्पन्नैः शब्दैर्वेदोऽपि निर्मितः ।
ततो व्याकरणस्येव वेदस्याप्यप्रमाणता ॥

नित्यवेदमूलवेदाङ्गत्वनिराकरणमिति । नहि नित्यो वेदोऽनित्यशब्दव्युत्पत्तिविषयः सम्भवति । सामान्यं चोपलक्षणं नास्तीति पूर्वोक्तम् । एवमनित्यशब्दोपयुक्तं व्याकरणं कथं नित्यस्य वेदस्याङ्गमिति । अङ्गत्वमाशङ्कते — अथ व्याकरणोत्पन्नैरिति ।

शब्दश्चोत्पाद्यमानत्वे क्षणान्न स्यात् क्षणान्तरे ।
तादृशस्य च संस्कारो न शक्यो नोपयुज्यते ॥
तस्मादनियमं मुक्त्वा नित्यः संक्रियते यदि ।
विक्रियाख्योऽपि संस्कारस्ततो नैवास्य सम्भवेत् ॥
विना व्याकरणादाप्तिः सिद्धा श्रोत्रसमाश्रया ।
अदृष्टार्थस्तु संस्कारो विध्यभावान्न गम्यते ॥
दृष्टार्थेषु च शब्देषु नादृष्टेन प्रयोजनम् ।
न हीष्टं भोजनार्थानां व्रीहीणां प्रोक्षणात् फलम् ॥
कर्मप्रकरणाम्नाता न च व्याकरणक्रिया ।
येनापूर्वप्रयुक्तानां शब्दानां संस्कृतिर्भवेत् ॥
हन्त्यादिविधिवन्नापि सम्भवी व्याक्रियाविधिः ।
पौरुषेयं कथं वस्तु विदध्याच्छाश्वतो विधिः ॥
तेनानारभ्यवादेऽपि विधिर्नैवास्ति तादृशः ।
अनारभ्य विधित्वे च न कर्मार्थत्वसम्भवः ।
ऐकान्तिकं हि संस्कार्यं यत् क्रतौ स्यात् स्रुवादिवत् ॥
तद्द्वारेण क्रतुप्राप्तिर्न लोकव्यभिचारिणः ।
लोकवेदगतत्वाच्च शब्दानां व्यभिचारिता ॥
अतो न व्याक्रिया गच्छेत्तदुपस्थापितं क्रतुम् ।
आकाशेऽवस्थितः शब्दः संस्कर्तुं शक्यते कथम् ॥
नित्यत्वान्मूर्त्यभावाच्च व्योमाश्रितविभुत्ववत् ।

शब्दश्चोत्पाद्यमानत्व इति । पूर्वोक्तमेवेदमनियमाभिधानं दूषणत्वेन स्फुटीकृतमुत्तरग्रन्थोत्थानायेति । आकाशेऽवस्थितः शब्द इति । आकाशावस्थानं नित्यत्वं मूर्त्यभावश्च त्रयो हेतवः । दृष्टान्तो व्योमविभुत्वम् सर्वत्र । अग्निधर्म इति । प्रतीष्टकमिति[1] । वेतसशाखयावकाभिश्चाग्निं विकर्षतीत्यग्नि धर्मः । प्रतीष्टकमावर्तनीयः सकृद् वा स्थलस्य कर्तव्य इति सन्देहे यस्मादेकेष्टकाकर्षणेऽपरा नाकृष्यते सन्धिश्च दृश्यते तस्मादवयव्यभावादिष्टका एव संहताः संस्कार्याः । प्रतिसंस्कार्यं च संस्कारभेद इति पूर्वः पक्षः ।

---

१. प्रतीष्टकम् आ० मा० इत्यत्र केवलम् ।

वर्णसंस्कारमात्रं च यदि व्याकरणाद् भवेत् ॥
प्रत्याहारेण तत्सिद्धेर्नोत्तरेण प्रयोजनम् ।
समुदायस्त्ववस्तुत्वान्नैव संस्कारमर्हति ॥
प्रत्येकं च भवेद् यद्वदग्निधर्मैः प्रतीष्टकम् ।
न च स्थलवदारम्भो वर्णैः शब्दस्य कस्यचित् ॥
येन तत्संस्कृतिः सिध्येत् स हि पूर्वं निराकृतः ।
स्फोटगोशब्दताङ्गत्वप्रभृतौ पदकल्पना ॥
गकारादिपदव्याख्याद्वारेणैव निराकृता ।
सर्ववर्णसमूहोऽपि न संस्कार्यः कथञ्चन ।
न तस्यार्थप्रयुक्तत्वमस्ति ह्यनभिधानतः ॥
अथ त्रिचतुरा वर्णाः संस्क्रियन्ते पदे पदे ।
संख्यामात्रस्य साधुत्वं तच्च स्यादितरेष्वपि ॥
संस्क्रियेतानुपूर्वी चेच्छब्दधर्मो न सेष्यते ।
ग्रहणोच्चारणस्थत्वात् गव्यादिषु च संभवात् ॥
ग्रहणोच्चारणे एव संस्कार्ये यदि मन्यसे ।
कर्मणः " कर्मसाध्यत्वमुपरिष्टान्निषेत्स्यते ।

वक्ष्यति हि—

कर्तृगुणे तु कर्मासमवायाद्वाक्यभेदः स्यादिति । [मी० सू० ३।१।१६]
ताल्वादिश्रोत्रसंस्कारो न च व्याकरणाद् भवेत् ।
वैद्योपदिष्टसंस्कारसंस्कार्यत्वावधारणात् ॥

सिद्धान्तस्तु प्रत्यक्षत एवाग्न्युपादानात् नासावनुमानेन निराकर्तुं शक्यते । तत्रा[१]ग्न्यधिकरणमिष्टकाभिः संपाद्यते तदर्थाश्च संस्कारास्तस्मात् सकृत् कर्तव्या इति । त्रित्वादिर्विशेषणं वर्णाश्च विशेष्या[२] त्रिचतुरादिशब्दगोचरा तत्र वर्णसंस्कारे निषिद्धे त्रिचतुराद्युपन्यासो विशेषणार्थ एव भवति । तेनाह — संख्यामात्रस्य साधुत्वमिति ।

---

२. स चाग्न्यधिकरणम् आ० मा० ।

१. विशेष्याः अनन्तरं विशेषार्थं एव भवति इति आ० मा० पठति । मध्यपतितं त्रिचतुराद्यारभ्य °द्युपन्यासो इति यावत् पदानि तत्र न सन्ति । विशेषण स्थाने च विशेषपदमस्ति तत्र ।

मनो वा पुरुषो वाथ संस्कारास्पदमिष्यते ।
शब्दानुशासनं शास्त्रमिति व्यर्थं तदा भवेत् ॥
शिष्यानुशासनत्वं हि शास्त्राणामुपपद्यते ।
शब्दस्याननुशास्यत्वाद् व्यर्थं तदनुशासनम् ॥
स्फोटशब्दे च संस्कारः सुतरां नोपपद्यते ।
असन्तौ तत्र हि स्यातां प्रकृतिप्रत्ययावपि ॥
वाक्यस्फोटश्च यैरिष्टः सर्वावयववर्जितः ।
नामाख्यातादि[1] संस्कार्यं तेषां शशविषाणवत् ॥
अपोद्धारेण संस्कारो यद्यत्राभ्युपगम्यते ।
शृङ्गं शशादपोद्धृत्य किं न संस्क्रियते मनाक् ॥
अन्यावयवसारूप्यादपोद्धारो यदीष्यते ।
खरशृङ्गेण सारूप्याच्छशशृङ्गस्य किं न सः ॥
गवयादिषु नाङ्गानां सादृश्यं यन्निदर्शितम् ।
सत्यावयवसामान्यात्तदिहापीष्यते तथा ॥
वाक्याधिकरणे चैतद्विस्तरेण निराकृतम् ।
तेनापोद्धारसंस्कारकल्पनापि न युज्यते ॥
अन्वाचक्षीत शास्त्रं चेच्छब्दानसदपोद्धृतान् ।
एतेनैवाप्रमाणत्वमस्य माहेन्द्रजालवत् ॥

किञ्च व्यर्थमेवेदमित्याह—[1]शिष्यानुशासनत्वं हीति । यद्यपि निरवयवं वाक्यं तथापि तदभिव्यञ्जका ध्वनयः सदृशरूपत्वाद् यदाभासां गौर्गच्छतीति वाक्ये प्रथमं धियमुपजनयन्ति तदाभासामेव गौः पश्यतीति वाक्यान्तरेऽपि । तदुपचरितस्यायमेकस्य [2]वाक्यानुयायिनो नामाख्याता-देरवयवस्यापोद्धारेण संस्कार इत्याशंक्याह—अपोद्धारेण संस्कार इति । नहि भ्रान्तिदर्शितं वस्तु भवति अवस्तु च शशशृङ्गादिवत् नापोद्धार-संस्कारावर्हतीति। यच्च गोर्गवयस्य च समानरूपे भाने य एव गोरवयवः स एवायमित्यपोद्धारस्य दृष्टत्वादत्रापीष्यते, तदप्यवयवाभावादयुक्तमित्याह—अन्यावयवसारूप्यादिति ।

---

°१. नामाख्याता हि इति काशीमुद्रितपुस्तक पाठः ।
१. शिष्टानुशासनत्वं आ० मा० ।
२. वाक्यभेदानुयायिनो आ० मा० ।

अशिष्यत्वादशास्त्रत्वमेवं तावत् पदं प्रति ।
वाक्यानुशासनं नैव कृतं व्याकरणेन च ॥
अर्थेन च प्रयुक्तानां शब्दानां संस्क्रियोदिता ।
वाक्यमेवंविधं चेष्टं न पदान्यर्थवर्जनात् ॥
ब्राह्मणार्थो यथा नास्ति कश्चिद् ब्राह्मणकम्बले ।
देवदत्तादयो वाक्ये तथैव स्युरनर्थकाः ॥

इति बहुप्रपञ्चमुक्त्वा केवलस्य चाप्रयोगादर्थप्रयुक्तत्वं निराकृत्य वाक्यान्वाख्यानार्थमेव व्याकरणमपि व्याख्यानं युक्तमासीत्तदनाश्रयणात्तु सूत्रवार्तिकभाष्यकारवदेव पूर्वापरविरुद्धमभिदधानैष्टीकाकारैरपि सुतरां व्याकरणस्याप्रत्ययितपुरुषप्रणीतत्वं दर्शितम् ।

अतो विगानभूयिष्ठाद्विरुद्धान्मूलवर्जितात् ।
निष्फलाच्च व्यवस्थानं शब्दानां नानुशासनात् ॥

ततश्च —

स्वाध्यायाध्ययनं मुक्त्वा तत्प्रयोगश्च कर्मसु ।
शेषशब्दप्रयोगेषु न व्यवस्थोपयुज्यते ॥

तेन सर्वैर्भाषितव्यं सर्वे साधव इति । अत्रानुमान[1]प्रयोगाः —

गावीगोण्यादयः शब्दाः सर्वे गोत्वस्य वाचकाः ।
वृद्धैस्तत्र प्रयुक्तत्वाद् गौरुस्त्रेत्येवमादिवत् ॥
एवं साधुत्वमेतेषां सर्वेषामर्थसाधनात् ।
श्रौत्रत्वान्नापशब्दत्वं पूर्वदृष्टान्तदर्शनात् ॥
अनादित्वञ्च सर्वेषामवध्यनवधारणात् ।
वक्तुर्वक्तुः पुरो वृत्तेः शक्यं वक्तुं गवादिवत् ॥
साधुभिर्भाषमाणानां नादृष्टफलसम्भवः ।
दृष्टार्थत्वाद्यथा धूमादग्निं देशेऽवगच्छताम् ॥

**अर्थेन च प्रयुक्तानामिति । अनुचितं चेतद् वाक्यानुशासनम् । यतोऽर्थेन च प्रयुक्तानामित्युक्त्वा पश्चादितिशब्देन टीकाकारेणाप्येतदेवोक्तमिति योजना । अथ वा टीकाकारवचनत्वेनैवार्थेन च प्रयुक्तानामित्युपन्यस्यति ॥२४॥**

**अथ वा फलोत्पत्त्या कर्मफलसम्बन्धो भवतीति । एवं सम्बन्ध एव न ज्ञायते — कदेति । प्रत्यक्षमपि चिराभ्यासजनितेति । कीदृशं पुनः प्रत्यक्षगम्यं**

१. काशीमुद्रितपुस्तकं त्वनुमानस्थाने प्रमाणपदं पठति ।

अशास्त्रविहितत्वाच्च वृद्धशब्दाभिधानवत् ।
शास्त्रं नावेदरूपत्वात् प्राकृतव्याक्रियादिवत् ॥
वेदमूलतयाप्यस्य प्रमाणत्वं न कल्पते ।
अवेदविषयार्थत्वान्नाटकादिनिबन्धवत् ॥
शाखाङ्गमपि नैवैतदतादर्थ्यात् कथादिवत् ।
अतादर्थ्यं विनाप्यस्माद्वेदेनार्थावबोधनात् ॥
न च शब्दप्रयोगाङ्गं सिद्धे तस्मिन् प्रवर्त्तनात् ।
यदीदृशमनङ्गं तद् दृष्टं नेत्रानुमानवत् ॥

यथा हि चक्षुरादिग्रहणानपेक्षरूपादिविज्ञानसिद्धौ तज्जनितार्थापत्तिप्रभवं चक्षुराद्यनुमानमुपजातमपि न पूर्वज्ञानस्याङ्गमेवं लोकवेदसिद्धशब्दप्रयोगोत्तरकालप्रणीततया व्याकरणमप्यनङ्गम् ।

तस्मात् पर्यायशब्दत्वाद् गाव्यादेस्तरुवृक्षवत् ।
आचारेण प्रयोज्यत्वं न शास्त्रस्थैर्निवारितम् ॥२४॥

एवं प्राप्तेऽभिधीयते—

अनैकान्तिकता तावदर्थापत्तेरिहोच्यते ।
अन्यथाप्युपपन्नत्वात् प्रयोगार्थावबोधयोः ॥
वाचकत्वादृते यस्तु न कथञ्चित् प्रयुज्यते ।
प्रयोगप्रत्ययायत्ता तत्र वाचकता ध्रुवम् ॥
संशयप्रतिबद्धे च पूर्वपक्षार्थनिर्णये ।
इष्टार्थनिश्चयः शक्यः सुखं सिद्धान्तहेतुना ॥

दृढविपर्ययज्ञानानन्तरं सहसैव च सम्यग्ज्ञानोत्पादातिभाराद्भारैकदेशावतारणार्थं संशयोत्थापनामात्रमेव तावद् युक्तम् । अथ वा—

संसिद्धव्यवहारत्वादनादित्वं यदाश्रितम् ।
अपराधप्रसङ्गेन तत्रैषा संशयक्रिया ॥

यदि ह्येकान्तेन यादृशः परमुखाच्छब्दः श्रूयते तादृगेव सर्वेण सर्वदोच्चार्येत ततो वृद्धव्यवहारपरम्परायां सत्यां गवादिभिरिव न गाव्यादिभिः कश्चिदपि कालः शून्य आसीदित्यध्यवसायादनादित्वमङ्गीक्रियेत । अपराधजस्य शब्दस्य संभवात्तु तदाशङ्कायां सत्यां नैकान्ततः सर्वेषामनादित्वम् । प्रयत्ननिष्पत्तेरिति पूर्वोक्तन्यायावधारितप्रयत्नाभिव्यक्तिरेव हेतुत्वेनोपदिश्यते ।

अपर आह, अप्रयत्ननिष्पत्तेरपराधस्य भागितेति। यो ह्यस्खलित-प्रयत्नः शब्दमभिव्यनक्ति तस्य परम्परागतशब्दोच्चारणमात्रात् सर्वे समान-विधाना भवेयुः। यदा त्वप्रयत्ननिष्पत्तिरपि शब्दे संभाव्यते तदा तत्रापराधज-रूपान्तरापत्तिप्रसङ्गान्न नियोगतः सर्वशब्दानां समानविधानत्वम्। अथ वा शब्दविषयस्य प्रयत्नस्यैव या निष्पत्तिस्तस्यामपराधः सुनिपुणानामप्यविकल-करणानां दृश्यते किमुतानिपुणविगुणकरणानाम्—

यश्च प्रयत्ननिष्पत्तावपराधः कृतास्पदः।
शब्दे स तदभिव्यङ्ग्ये प्रसजन् केन वार्यते॥
अतश्चानपराधेन व्यज्यमानेषु साधुता।
सापराधेष्वसाधुत्वं व्यवस्थैवं च तत्कृता॥

लोकेऽपि च—

अविनष्टे विनष्टे च दृश्येते साध्वसाधुते।
तथा सति च तद्द्वारा सिद्धिः शब्दापशब्दयोः॥
यद्वा सत्यत्वमेवेदं साधुत्वमभिधीयते।
असत्यत्वमसाधुत्वं धर्माधर्मोपयोगवत्॥
धर्माधर्मव्यवस्था हि सत्यानृतनिबन्धना।
विहितप्रतिषिद्धत्वात्तयोश्चेष्टा सशास्त्रता॥
अर्थसत्यं यथा वाच्यं शब्दसत्यं तथैव हि।
शब्दानृतं च हातव्यमर्थानृतवदेव नः॥
एवं सति व्यवस्थाने भक्ष्याभक्ष्यविभागवत्।
[1]प्रयोगोत्पत्त्यशास्त्रत्वादिति हेतोरसिद्धता॥

अथ वा यदुक्तम्—

साधोर्नित्यप्रसक्तत्वादसाधोरप्रसङ्गतः।
न धर्मनियमोऽस्तीति तत्रेदमभिधीयते॥
अपराधस्य भागित्वादुभयं सावकाशकम्।
साधोरनियता प्राप्तिरसाधोश्च प्रयोज्यता॥

यदि हि साधुः प्रयुज्यमानो न कश्चित् कदाचिदपि विनश्येत्ततस्तस्य नित्यप्राप्तत्वान्निवर्त्यापशब्दाप्राप्तेश्च नियमशास्त्रमनर्थकं भवेत्। यदा त्वपराध-

१. मी० सू० १।३।२४

भागित्वे सति द्वयोरप्यनित्यत्वप्राप्तिस्तदा साधुनियमकारिणः शास्त्रस्य न विषयव्याघातः । एक एवायं शब्दः पुरुषाशक्तिप्रमादकारणादिभेदात् तां तां वर्णन्यूनातिरेकक्रमान्यत्वाद्यवस्थामनुपतंस्तेन तेनापभ्रंशरूपेण गृह्यमाणस्तमेवार्थं-प्रतिपादयतीति न पर्यायकल्पनया वाचकशब्दान्तरत्वैकान्तसिद्धिः ।

किञ्च—

देवदत्तादिनामानि निःसन्दिग्धानि यानि च ।
बालैस्तत्तादिरूपेण नाश्यन्ते तैश्च संशयः ।।

तत्तादिशब्दादपि हि बालप्रयुक्तात् तदनुकारिकठोरबुद्धिप्रयुक्ताद्वा देवदत्ताद्यर्थप्रत्ययमुपलभमानः कथमिव प्रयोगप्रत्ययदर्शकाभ्यामेव वाचकत्व-मध्यवस्येत् ।

अपभ्रंशाश्च ये केचिद् रूढा गाव्यादयो जने ।
तेऽपि गाव्यादिरूपेण नाश्यन्ते व्यभिचारिताः ।।

कतिषुचिदेव गाव्यादिषु चिरापभ्रष्टत्वाद् रूढ्याशङ्कया साधुत्वभ्रान्ति-र्भवेत् । ये तु संप्रत्येव जडप्रायज्ञानकरणैरभिनवगाव्यादिरूपेण विनाश्यशब्दाः प्रयुज्यमानाः प्रकृत्यनुसरणद्वारेण वार्थं प्रत्यापयन्त उपलभ्यन्ते । तेष्वपि प्रयोग-प्रत्ययदर्शनमस्तीत्यनैकान्तिकता ।

ततश्च त्वत्प्रयुक्तोऽयं हेतुरप्यपराधभाक् ।
अनैकान्तिकतादोषान्न ह्यसौ साधनक्षमः ।।
अन्यथोच्चार्यमाणश्च शब्दोऽपभ्रश्यते यथा ।
तथा हेतुरनैकान्ताद्धेत्वाभासत्वमृच्छति ।।
तस्माद् दृष्टप्रयोगेऽपि पुनरस्ति विचारणा ।
वाचकोऽयं न वेत्येवं सति वान्येन निर्णयः ।।२५।।

संशयापादनात् परपक्षे जितेऽपि स्वपक्षसिद्धिर्दुर्लभैवेत्येवमर्थमुत्तरसूत्रम्—**अन्यायश्चानेकशब्दत्वमिति** [मी० सू० १।३।२६] । कथं पुनरिदमन्याय्यम् । तदुच्यते—

वाच्यवाचकसामर्थ्यनियमो योऽभिधागतः ।
सम्बन्धस्तदनेकत्वे स्वरूपात् सोऽपि हीयते ।।

**वाच्यवाचकसामर्थ्येति । यदा ह्येकार्थपरं पदोच्चारणं तदानेकार्थं पदं यदैकं बोधयति न च तदेतरदिति यद् बोधकत्वं वृद्धव्यवहारावगतं तन्न**

एकात्मकयोरेव हि वाच्यवाचकयोरन्योन्याक्षेपात् परस्परनियमः संभवत्यन्यतरस्यापि त्वनेकत्वे सति व्यभिचारान्नियमहानिः । किञ्च—

सामर्थ्यं सर्वभावानामर्थापत्त्यावगम्यते ।
एकसामर्थ्यसिद्धेऽर्थे नानेकं तच्च लभ्यते ।।

अत्यन्तादृष्टा हि वाच्यप्रत्ययान्यथानुपपत्तिमात्रप्रमाणिका वाचकशक्तिरेकत्रैव कल्पिता तदनुसार्यपभ्रंशेष्वपि चेदनुगम्यते, को नाम तन्निरपेक्षवाचकशक्त्यन्तरकल्पनां लभेत ।

नाम च व्यवहारार्थमर्थस्याभ्युपगम्यते ।
तेनैकेनैव सिद्धेऽर्थे द्वितीयादि च निष्फलम् ।।

किञ्च—विकल्पस्याष्टदोषत्वं पुरस्तादेव वर्णितम् ।
स चेहानेकशब्दत्वे निश्चयेन प्रसज्यते ।।
नामान्तरे श्रुते चार्थस्तद्भिन्नोऽन्यः प्रतीयते ।
[1]संज्ञा चोत्पत्तिसंयोगादित्यत्रैतद्वदिष्यते ।।
या तु हस्तः करः पाणिरित्यत्रानेकशब्दता ।
अनन्यगतिकत्वेन सा दृढस्मरणेन च ।।
एकशक्त्यनुसारेण यावत्त्वस्ति गतिः क्वचित् ।
उपमानानुमानाभ्यां तावत् सैवानुगम्यते ।।
तस्मात् स्वरूपसम्बन्धशब्दार्थत्वनिरूपणे ।
एकैकनियमादेव गतिः स्यान्नान्यगोचरा ।।

**स्यात् । एवमनेकशब्दत्वेऽप्यर्थस्य यच्छब्दबोध्यत्वमवगतं शब्दान्तरेण बोध्यमानस्य तन्न स्यादिति संबन्धस्य प्रतिपाद्यप्रतिपादकलक्षणस्य स्वरूपहानिरिति । अनन्यगतिकत्वेनेति । न हस्तशब्दे वाचकेऽवधारिते करशब्दात् प्रतीतिरुपपद्यते सादृश्याभावादिति । उपमानानुमानाभ्यामिति । उपमानेन श्रुतं गावीशब्दसादृश्यं गोशब्दस्यावगम्य वाचकाभिव्यक्तेस्तत्सदृशवाचकविवक्षामूलत्वेनानुभूतपूर्वत्वादभिव्यक्तसदृशवाचकगोशब्दविवक्षानुमानम् । ततस्तदर्थस्य च [1]प्रतिपत्तिरिति । तस्मात् स्वरूपेति । गोत्वं प्रत्येकमेव वाचकशब्दरूपम् । तच्च प्रतिशब्दार्थत्वमेकस्यैव । ततश्च संबन्धोऽप्येक एव । भेदे हि वाच्यस्य वाचकस्य वा सोऽप्यनेकः स्यादिति ।।२६।।**

१. मी० सू० २।२।२२ ।  १. प्रतीतिरिति आ० मा० ।

यथा च प्रकृतिसारूप्यद्वारेणापभ्रंशाः प्राकृतीमेव शक्तिमाविर्भावयन्तोऽर्थप्रतिपत्तावुपयोगं गच्छन्ति तथा तदशक्तिश्चानुरूपत्वादित्यत्र [मी० सू० १।३।२८] वर्णयिष्यते।

तेनानेकप्रयोगेऽपि कश्चिदेवार्थसङ्गतः।
तदुपस्थापनेनान्ये बोधकास्तदशक्तिजाः ॥२६॥

तुल्यप्रयोगप्रतिपत्तीनामन्यतरावधारणमशक्यमिति चेदत आह — **तत्र तत्त्वमभियोगविशेषात् स्यादिति** [मी० सू० १।३।२७]। कः पुनरभियोगः, को वा तद्विशेषः, कथं वा तेन वाचकत्वनिरूपणमिति।
तदुच्यते—

लक्षणश्रवणाभ्यासादभियोगः प्रवर्त्तते।
तेन लक्ष्यान्तरज्ञानं तद्विशेषोऽभिधीयते ॥

प्रतिपदपाठो ह्यानन्त्यादत्यन्ताशक्यस्तदभावे च लक्षणानुसरणमेवैकमशेषलक्ष्यनिरूपणक्षमत्वेनावधार्यते।

तस्मान्न लोकवेदाभ्यां कश्चिद् व्याकरणादृते।
वाचकाननपभ्रष्टान्यथावज्ज्ञातुमर्हति ॥
तासामन्त्यपरिज्ञाने पारिशेष्यानिरूपणात्।
अर्थापत्त्यापशब्दानां निश्चयो नोपपद्यते ॥
लक्षणानुगमाद्यास्तु बहिरेव प्रयुञ्जते।
नियतप्रतिपक्षत्वात्तेष्वर्थापत्तिसम्भवः ॥

तेनोभयज्ञानस्यापि व्याकरणमेवोपाय इति तद्गताभियोगविशेषाश्रयणम्।

लक्षणश्रवणाभ्यासादिति। आभिमुख्येन योगोऽभियोगः साधुशब्दज्ञाने प्रवृत्तिः ज्ञानोपाये च प्रवृत्तिर्ज्ञाने प्रवृत्तिः। ज्ञानोपायश्च व्याकरणाख्यं लक्षणमेव नान्यत्। तत्र प्रवृत्तिः श्रवणाभ्यासौ। तेन लक्षणश्रवणाभ्यासेनाभियोगः प्रवर्तते। तौ तस्य प्रवृत्तिर्वर्तमानता इत्यर्थः। अभियोगस्य विशेषोऽतिशयः यदुदाहरणीकृत्य तच्च्श्रुतं तद्व्यतिरिक्तानां लक्ष्याणां तेन लक्षणेन ज्ञानमिति फलेन [1]ज्ञानेन तद्धेतुमभ्यासातिशयं लक्षयतीति।

---

१. ज्ञानेनाभ्यासातिशयं तद्धेतुं लक्षयतीति आ० मा०।

यत्तु प्रयोगोत्पत्तिशास्त्रत्वात् [मी० सू० १।३।२४] इति लक्षणे तन्मूलासम्भवादितराश्रयत्वमुक्तम्, तल्लोकव्यवहारप्रसिद्धप्रतिपादकत्वमात्रेणानिर्णीतपारमार्थिकवाचकत्वैरपि व्याकरणावयवभूतैः पदैः केषाञ्चित्साधुत्वमन्वाख्याय पुनस्तैरप्यन्वाख्यापकशब्दसाधुत्वनिर्णयात् परिहरिष्यते।

यदि वाचकतैवादौ न स्याद् व्याकरणादृते।
न विज्ञायेत वा तत्र भवदेन्योन्यसंश्रयम् ॥
निर्ज्ञाते वाचकत्वेऽपि तदपभ्रंशसंकरात्।
विवेकप्रतिपत्त्यर्थमिष्टा च व्याक्रिया स्मृतिः ॥

तेन संकीर्णासंकीर्णवाचकज्ञानोपायत्वाल्लोकव्याकरणयोर्भिन्नविषयत्वेनापुनरुक्तता, वेदे साधुशब्दमात्रदर्शनादनर्थकं व्याकरणमिति चेत्। न अकृत्स्नविषयत्वात्।

केचिद् व्यवस्थिता एव साधवो लोकवेदयोः।
सर्वशाखागतान् विद्यात् को वा साधारणानपि ॥

यथैव लौकिकप्रतिपदपाठस्याशक्यत्वमेवं वेदेऽपि सर्वशाखागतान् सकृदपि श्रोतुमशक्ति किमुताध्येतुम्।

प्रकृतिप्रत्ययानन्त्याद् यावन्तः पदराशयः।
लक्षणेनानुगम्यन्ते कस्तानध्येतुमर्हति ॥

एतेन पुरुषार्थक्रत्वर्थदृष्टासाधुशब्दप्रयोगज्ञानसाध्यसाधनभावविधिवाक्यगतपदव्याक्रिया तस्याश्च पूर्वप्रसिद्धतन्मूलत्वकल्पनागतेतरेतराश्रयत्वप्रसङ्गः

**लक्षणे तन्मूलासंभवादिति। लोकप्रसिद्धशब्दार्थवशं शास्त्रं प्रवर्तते। अतः प्रयोगोत्पत्तिरशास्त्रीया। यदि तु तन्मूलाङ्गीक्रियते, ततो लक्षणे शास्त्रे पदानां प्रयोगस्य मूलान्तरासद्भावादितरेतराश्रयः स्यादिति। पदपदार्थसंबन्धमूलकं वाक्यात्मकं शास्त्रं तच्छास्त्राच्च पदपदार्थसम्बन्ध इति।**

**एतेन पुरुषार्थक्रत्वर्थेति। अत्र [1]तस्याश्चेति। तच्छब्दाक्षिप्तो यच्छब्दो द्रष्टव्यः। पुरुषार्थक्रत्वर्थदृष्टस्य प्रकृतिप्रत्ययव्याक्रियया साधुशब्दज्ञानस्य तत्पूर्वस्य वा प्रयोगस्य च यः साध्य[2]साधनभावस्तद्विधिवाक्यगता विधेयत्वेनोपात्ता या पदव्याक्रिया तस्या अपि पूर्वप्रसिद्धव्याक्रियामूलत्वकल्पना**

१. तस्यां चेति आ० मा०। २. [2]साधनसंबन्धः आ० मा०।

प्रत्युक्तः। यदि ह्येकान्तेन 'तस्मान्न ब्राह्मणेन म्लेच्छितवै' 'एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः शास्त्रान्वितः स्वर्गे लोके कामधुग्भवति'। 'तस्मादेवाव्याकृता वागुद्यते' इति चैवमादिक्रतुपुरुषगतनियमविधिदर्शनोत्तरकालमेव व्याकरणेन प्रवर्तितव्यमिति पौर्वापर्यव्यवस्था भवेत्तत एवं पर्यनुयोगः प्रसज्येतापि व्याकृतत्वाश्रयो वेदविधिर्वेदविध्याश्रयं च व्याकरणं कथमवकल्पिष्यत इति। यदा तु किञ्चिद्ग्रन्थोपनिबद्धप्रकृतिप्रत्ययादिविभागद्वारप्रक्रियात्मकव्याकरणस्मृतिवर्जितकालाभावादन्वाख्येयान्वाख्यातविधिप्रयोगानन्वाख्यातप्रतिषेधवर्जनषट्कस्याप्यवगम्यमानवेदविधिमूलत्वादनादित्वे सति सर्वेषां वेदवेदियूपाहवनीयाध्वर्युगोदोहनादिस्वरूपतत्कार्यतत्साधनविधीनामिव सर्वदानवगतपूर्वापरविभागसंबन्धेऽत्यन्तादृष्टार्थत्वमेव केवलं शास्त्रप्रत्ययाधीनं, तदा सर्वकालव्याक्रियमाणविद्यमानशब्दनियमविधेर्न किञ्चिदनुपपन्नम्।

यत्तु वाचकत्वावाचकत्वव्यतिरिक्तसाध्वसाधुताभावाद्वाचकावाचकत्वयोश्च लौकिकप्रयोगप्रतिपत्तितद्विपर्ययमात्रशरणत्वाद् गाव्यादिशब्दानामवाचकत्वप्रतिज्ञाने लोकविरोधान्न भेर्यादिशब्दमातृकाक्षरपाठप्रसिद्धन्यूनातिरिक्तविपर्यस्तवर्णपदव्यतिरिक्तप्रसिद्धमध्ये कश्चिदपशब्दो नामास्तीति।

गतस्येतरेतराश्रयत्वस्य प्रसङ्गः प्रत्युक्तः। पूर्वप्रसिद्धो व्याक्रियापदार्थः पदेनोपादातुं शक्यते। तस्य चेत् पदार्थस्य विधितः प्राप्तिः कथं विधिवाक्यगतं पदं तदुपाददात्। ततश्च पदव्याक्रियां सिद्धां पदार्थतां गतामाश्रयति वेदविधिः। वेदविध्याश्रयं च व्याकरणमितीतरेतराश्रयमिति। [1]अन्वाख्यानान्वाख्येयेति। अन्वाख्यानमन्वाख्येयमन्वाख्यातुः पुरुषस्य चान्वाख्याने प्रवर्तको विधिः प्रयोग इति साधुशब्देषु चतुष्टयम्। असाधुषु प्रतिषेधो वर्जनमिति द्वयमेषां षट्कोऽनादिः। यतोऽत्र वैदिको विधिरितरैर[2]न्वितस्वभावो विद्यते तदनादित्वस्य सिद्धत्वादितरेषामपि तदन्वितानामनादित्वम्। व्याक्रियाया अनादित्वेऽपि सति विधिरेवं प्रयोजनवानिति दृष्टान्तेन दर्शयति—सर्वेषां वेदवेदीति। वेद्या हविरासादने विनियोगः स्वरूपविधिः। हविरासादनविधिस्तत्कार्यविधिः। वेदिं खनतीति तत्साधनविधिरिति। प्रसिद्धन्यूनातिरिक्तेति। प्रसिद्धन्यूनातिरिक्तमिति विपर्यस्तवर्णमिति च पदस्य विशेषणे इति।

१. अन्वाख्येयान्वाख्यातेति तन्त्रवार्त्तिकं पठति। व्याख्यायां प्रतीकमिहान्यादृशं किन्तुचितमिहेति धीधनैश्चिन्त्यम्।

२. °रन्वितस्य भावो आ० मा०।

तत्राभिधीयते—

सम्मुग्धवाचके लोके लक्षणाद् वाचकः स्फुटः ।
गम्यते स्मरणं चोक्तमाचाराद्बलवत्तरम् ॥

लोकव्याकरणाभ्यां हि मिश्राभ्यामविप्लुतवाचकसिद्धिरिति तावदेव लोकव्यवहाराद्वाचकत्वज्ञानं जायते, यावद्व्याकरणानुगतत्वं नाभ्युपगम्यते ।

यदा तु तयोर्मार्गभेदेन प्रतिपत्तिस्तदा 'तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात्' [मी० सू० १।३।८] इत्युपन्यस्य 'शास्त्रस्था वा तन्निमित्तत्वात्' [मी० सू० १।३।९] इत्यनेनैवोत्तरेण व्याकरणाख्यशास्त्रगतप्रतिपत्तिबलीयस्त्वं तदभियुक्तपुरुषबलीयस्त्वं वा पूर्वमेव स्थापितम् ।

तर्केणावाचकत्वञ्च[1] वदंल्लोकेन बाध्यते ।
स्मर्यमाणविरोधस्तु ब्राह्मणाब्राह्मणादिवत् ॥

यथैव तुल्यशिरःपाण्याद्याकारेष्वपि सङ्कीर्णलोकदृष्टिग्राह्येषु ब्राह्मणादिषु मातापितृसम्बन्धस्मरणादेव वर्णविवेकावधारणं भवति, तथा साधुशब्दावधारणमपीति लोकविरोधाभावः ।

यथा च तुल्यपाण्यादिरूपत्वाद् वर्णसङ्करम् ।
वदतः स्मृतिबाधः स्यात्तथा वाचकसङ्करम् ॥
आदितश्च स्मृतेः सिद्धः प्रत्यक्षेणापि गम्यते ।
साध्वसाधुविभागोऽयं कुशलैर्वर्णभेदवत् ॥

यो नाम स्मृतिप्रतिपादितोऽर्थः कर्मफलसम्बन्धवदनियतकालत्वान्न ज्ञायते, कदा भविष्यतीति, सोऽत्यन्तं प्रत्यक्षाद्यविषयत्वात् केवलशास्त्रमूलत्वेन स्थाप्यते । यस्य त्वादौ स्मरणजनितविवेके कृते तदनन्तरमेव प्रत्यक्षमपि

[1]तर्केणावाचकत्वं चेति । स्मरणेन हि लोकव्यवहारो विविच्यते । तेन स्मरणसहितस्यैव लोकस्य वाचकत्वनिर्णयकारणत्वात् [2]न स्मरणविरोधिता ।

तर्कस्तु व्यवहारविवेकमकुर्वन् लोकप्रसिद्धवाचकदृष्टान्तेन लोकसिद्धवाचकत्वानां तदभावं बोधयन् दृष्टान्तविषयाङ्गीकृतप्रामाण्येन लोकेनैव बाध्यत इति । कर्मफलसंबन्धवदिति । कर्मफलसम्बन्धे यथा न ज्ञायते फलोत्पादः—कदेति । अथ वा फलोत्पत्त्या कर्मफलसम्बन्धो भवतीति । एवं सम्बन्ध एव न ज्ञायते — कदेति ।

१. तर्केण वाचकत्वं चेति आ० मा० । २. नेति पू० मा० इत्यत्र नास्ति ।

विचाराभ्यासजनितसंस्कारस्य रागाभ्यासजनितषड्जादिविभागविषयमिव साध्वसाधुशब्दरूपगोचरमुपजायते ।

तस्मै तर्केण यो नाम साधयेच्छब्दसंकरम् ।
तस्य प्रत्यक्षबाधोऽपि वर्णसंकरबाधवत् ॥

तेनापशब्दगतवाचकत्वापादनस्यैव समस्तप्रमाणविरोधः शक्यो वक्तुं न स्मर्यमाणशब्दसाधुत्वपक्षस्येति निरन्त्र्यता । तेनादृष्टार्थप्रत्यायननियमप्रतिषेधद्वारं धर्माधर्मसाधनत्वकृतमपि साध्वसाधुत्वज्ञानमुपपत्स्यते, यस्त्वाह साधुत्वं नेन्द्रियाग्राह्यमित्यादि श्लोकम् । तं प्रत्येवं वक्तव्यम् ।

साधुत्वमिन्द्रियग्राह्यं लिङ्गमस्य च विद्यते ।
शास्त्रस्य विषयोऽप्येष प्रयोगोऽप्यस्त्यसंकरः ॥इति ।

ग्रस्तनिरस्ताम्बूकृतादिदोषवर्जितनियमह्रस्वादिकालाभिव्यङ्ग्यपथालक्षितक्रमग्राह्यवर्णानां स्मर्यमाणाविनष्टवाचकरूपविषयश्रोत्रज्ञानेनोदात्तादिवदिन्द्रियग्राह्यत्वम् । तदुत्तरकालप्रवृत्तव्यवहारगतार्थप्रतिपत्तिसहितलक्षणगतप्रकृतिप्रत्ययलोपागमविकारादेशादिलिङ्गमप्यव्यभिचारि विद्यते । शास्त्रस्य च द्विविधस्यापि श्रुतिस्मृतिरूपस्य स्वर्गलोकयज्ञोपकारसिद्धिसाधनभावप्रतिपादनार्थस्यार्थानर्थ-

प्रत्यक्षमपि चिराभ्यासजनितेति । कीदृशं पुनः प्रत्यक्षगम्यं साधुत्वमिति चेत् न तस्य विधा विद्यते बुद्धिलक्षणं तत् यत्साधुबुद्धिविषयस्तत्साधुत्वमिति ।

अथ वा वाचकशक्त्याश्रयोऽनादिकालप्रयोगविषयो यादृशं शब्दरूपं व्याकरणात् स्मृतं [1]तत्साधुशब्दोच्चारणे प्रत्यक्षेणैव विभज्यते । अयमसौ साधुरिति वेदवत् । न ह्यनादित्वं वेदस्य प्रत्यक्षेण गृह्यते । किन्तु यस्य पदसंघातस्यानादित्वं तस्यैव संघातान्तराद् विविक्तरूपं प्रत्यक्षेणावसीयते । तावता च स्मृतेः समूलत्वसिद्धिः । स्मृतिप्रत्यक्षपौर्वापर्यानादित्वात् सदैव स्मृतिः प्रत्यक्षमूला । प्रत्यक्षमपि स्मृत्यपेक्षोत्पत्त्यपि [2]प्रमितावनपेक्षत्वात् प्रमाणम् । अतो नान्धपरम्परातुल्यत्वापत्तिः । ग्रस्तनिरस्तेति । ग्रस्तमविभक्तिकोच्चारणम् निरस्तं विश्लेषितसंयोगम् अम्बूकृतं सनिष्ठीवमिति । तदुत्तरकालप्रवृत्तेति । अनादिकालप्रयोगभाजः साधुशब्दान् स्मृत्यपेक्षेणप्रत्यक्षेणावगम्य तदुत्तरकालं प्रकृत्याद्यनुगमप्रणयनं *पाणिनिना* तदन्वयीकृतम् । अतः प्रकृत्याद्यनुगमप्रणयनस्याव्यभिचारादनादिकालप्रयोगभाक्त्वे शब्द-

१. तत्साध्वसाधुशब्दो° आ० मा० । २. प्रतीतावन आ० मा० ।

कार्यस्वरूपज्ञानार्थस्य चायमेवंविध एवान्योऽपि विषयः। अविनष्टः शब्दैर्भाषमाणस्य स्वर्गयज्ञोपकारी भवतः। याज्ञे च कर्मण्यपशब्दैर्भाषमाणस्यानृतमिव वदतः प्रतिषिद्धाचरणनिमित्तक्रतुवैगुण्यप्रसङ्गः। यथोक्तं 'वाग्योगविद् दुष्यति चापशब्दैः' इति। एतौ द्वावप्यर्थौ न शास्त्रादृतेऽन्येन प्रतिपादयितुं शक्येते इत्यतीव शास्त्रविषयः। द्वाभ्यामेव च विधिप्रतिषेधाभ्यामविनष्टैः शब्दैः स्वर्गयज्ञोपकारकामो भाषेत न विनष्टैरिति न प्रतिशब्दापशब्दमनन्तविधिप्रतिषेधकल्पनप्रसङ्गः। न च विधिप्रतिषेधविषयेणैव शास्त्रेण भवितव्यं न प्रमेयस्वरूपज्ञापनार्थेनेत्येतदीश्वराज्ञासिद्धम्। न हि 'अविनाशी वा अरे अयमात्माऽनुच्छित्तिधर्मा' इत्यादि, 'चतुस्त्रिंशदाश्वीनानि सरस्वत्या विनशनप्लाक्षप्रश्रवणे' इत्येवमादिवाक्यशेषाणां च शास्त्रगतानामर्थतत्त्वप्रतिपादनपरत्वं न लभ्यते। नापि तत्प्रतिपादने शास्त्रशब्दवाच्यत्वबाधः। अथापि विधिप्रतिषेधात्मकेनैव शास्त्रेण भवितव्यमिति काचित्परिभाषा तथाप्येवंविधाः साधुशब्दाः प्रत्येतव्या इतीदृशो विधिः संभवत्येव। यो वाक्यान्तरावगतादृष्टफलार्थी यद्यविनष्टैः शब्दैर्भाषितुमिच्छेत् स चैतानेवंरूपानेतत्क्रममात्रांश्च वर्णानुपाददति नाधिकान्न न्यूनांश्चेति यावद्रूपं विधिप्रतिषेधौ शक्यौ दर्शयितुमिति शास्त्रविषयत्वासिद्धिः निःसंदिग्धवृद्धबालप्रयुक्तदेवदत्ततत्तादिशब्दोपमयापि

स्यास्माकं लिङ्गम्। तच्च व्यवहारगतार्थप्रतिपत्तिविशेषितम् अर्थप्रतिपत्त्यभावे तु नानुगममात्रं लिङ्गं पचन्तीत्यादिषु व्यभिचारात्।

ननु स्वर्गयज्ञोपकारसाधनत्वम् प्रतिपादयतापि शास्त्रेण न साधुशब्दरूपं ज्ञापितम्। अतः कथं तस्य शास्त्रविषयत्वमित्याशङ्क्योक्तमेवं विध एवान्योऽपीति। अन्योऽपि यः शास्त्रविषयत्वेन सिद्धो यागादिः सोऽपि रूपेण प्रत्यक्षगम्य एव श्रेयःसाधनत्वेन शास्त्रावगम्यत्वाच्छास्त्रविषय इत्युच्यते। तत् किमत्र विशेषेण चोद्यते आश्वीनानीति। अश्वशब्दादश्वस्यैकाहगम इति खञ् प्रत्ययः। नापि तत्प्रतिपादनादिति। भूतस्यार्थस्य क्रियोपयोगाच्छास्त्रत्वाविरोधः। विधिप्रतिषेधौ शक्याविति। [1]भूतत्वेन नायं शास्त्रविषय इत्येतत् परिहर्तुं शक्यमित्यर्थः। आनन्त्यदोषात्तु नैतदिष्यत इति। निःसन्दिग्धवृद्धबालेति। कथं [2]प्रमाणान्तरसिद्धो धर्म [3]उपमानप्रमेयत्वेनोच्यते।

---

१. भूतत्वेन शास्त्रस्य नायं विषय आ० मा०।

२. प्रमाणान्तरेणासिद्धो आ० मा०। ३. उपमेयत्वेनोच्यते आ० मा०।

च सर्वशब्दानां विनष्टाविनष्टरूपैरवश्यं भवितव्यमिति शक्यं विज्ञातुम्। एवं व्याकरणानुगतवैदिकशब्दाविनाशसादृश्यादपि तद्विधलौकिकाविनष्टत्वोपमानं दर्शयितव्यम्। तथा लौकिकार्थप्रत्ययोत्थापितवाचकत्वार्थापत्तिलभ्यस्तावदेकः साधुत्वनिश्चयः। ततः संभवत् प्रमादालस्यकरणवैगुण्यनिमित्तापभ्रंशरूपवर्जित-केवलसाध्वन्वाख्यानस्यान्यथानुपपद्यमानत्वादपरयाप्यर्थापत्त्या सिद्धमेव साधुत्वज्ञानम्।

अपभ्रंशेषु साधुत्वं तुल्यार्थत्वाद्यदुच्यते।
लक्षणाभावमार्गेण तस्याभावोऽपि निश्चितः॥ इति।
षण्णामपि प्रमाणानां साध्वसाधुत्वनिर्णये।
व्यापारोऽस्तीति को जल्पेत् साधुत्वं निष्प्रमाणकम्॥
यद्यप्यनभियुक्तानां प्रयोगोऽस्ति ससंकरः।
अभियुक्ता विवेक्ष्यन्ते तथापि ब्राह्मणादिवत्॥
यथा च पद्मरागादीन् काचस्फटिकमिश्रितान्।
परीक्षका विजानन्ति साधुत्वमपरे तथा॥
यथा रत्नपरीक्षायां साध्वसाधुत्वलक्षणम्।
तथा व्याकरणात् सिद्धं साधुशब्दनिरूपणम्॥

पौरुषेयव्याकरणागमपरम्परायामपि च तदनुगतसाधुत्वानन्तरदर्शनात् पूर्वदृष्टविवेकज्ञानमात्रपरत्वाद्वा नान्धपरम्परावचनन्यायप्रसङ्गः। यावानिह दृष्टार्थांशः स वैदिकविधिप्रतिषेधद्वयादेवोपपन्नः। तत्सिद्ध्यर्थाविनष्टशब्द-रूपाज्ञानं वेदशिष्टप्रयोगसम्वादिव्याकरणान्वाख्यानपारम्पर्येण सद्यः

ननु मानान्तरसिद्धधर्मद्वारा सादृश्यमात्रविषयं तदिष्यते। सत्यमत एवोपमया शक्यमवगन्तुमित्युपमानमूलं मानान्तरेणावगमं वदति। अवि-नष्टोपमानं दर्शयितव्यमिति। अत्राप्युपमानमूलं मानान्तरजमेव ज्ञानमुप-मानमित्युक्तम्। यदा हि देवदत्तशब्दतुल्यत्वं गोशब्दस्यावगतं भवति तदा विनष्टाविनष्टरूपयोः तद्वत्संभवतोरन्यायश्चानेकशब्दत्वमिति [मी० सू० १।३।२६।] निर्णयः क्रियते। तथा [1]लौकिकैः शब्दैर्वैदिकान् शब्दान् व्याकरणानुगतत्वेनोपमिमानस्तेनैवानुगतत्वसाधर्म्येणाविनाशसामान्यमनु-

1. वैदिकैः शब्दैः लौकिकान् व्याकरणा° आ० मा०।

फलत्वात् सुलभमिति न पुरुषकृतत्वनिमित्तदोषप्रसङ्गः । यत्तु दृष्टार्थत्वात् स्वसामर्थ्यप्राप्तत्वादेव 'अप्राप्ते शास्त्रमर्थवत्' [मी० सू० ६।२।१८।] इति वाचकभाषणविधानमनुपपन्नमिति तत्राधिकरणेनैवोत्तरं दास्यते 'नियमार्था वा श्रुतिरुच्यते' [मी० सू० ४।२।२३।] इति । यत्त्ववाचकत्वेनाशब्दानामप्रसङ्गाद्व्यावर्त्याभावे नियमानुपपत्तिरिति ।

तत्रोच्यते—

> नियमः परिसंख्या वा न व्यावर्त्याद्विनेष्यते ।
> नित्यतामात्रकारी तु नियमः किं न लभ्यते ।।

सति भाषितव्ये कदाचिदविनष्टेन भाषेत, कदाचित् प्रमादाशक्तिजापभ्रंशेनाप्यक्षिनिकोचनादिना वा शब्दरहितेनैव प्रत्यापयेत् ।

मिनोतीत्यस्ति उपमानमूलत्वम् । षण्णामपि प्रमाणानां साध्वसाधुत्वनिर्णये व्यापारोऽस्तीत्यपि साधुत्वनिर्णयौपयिक[1]व्यापारवत्तामेवोपसंहरिष्यति न साक्षान्निर्णायकत्वमिति । नियमार्था श्रुतिरुच्येतेति । समे दर्शपूर्णमासाभ्यां यजेत पौर्णमास्यां यजेतेति दर्शपूर्णमासयोश्चत्वार ऋत्विज इत्येतैर्वाक्यैरुपात्तानामपि देशादीनामर्थप्राप्तत्वात् अविधानमित्याशङ्क्योक्तं देशादिसामान्ये प्राप्ते तद्विशेषसमादिनियमार्था विधिश्रुतिरिति । नियमः परिसंख्या वेति । यो ह्यत्यन्तप्राप्तेऽर्थेऽन्यनिवृत्तिफलो विधिर्भवता नियम इत्युक्तः, स नियमः परिसंख्या वेत्यस्तु तावदिदं परमार्थेन नासौ नियम इति भावः । स एव व्यावर्त्याद् विना [2]नेष्यते ।

अथ वा यो भवता नियमत्वेनास्माभिः परिसंख्यात्वेनाङ्गीकरणान्नियमः परिसंख्या वेति सन्दिग्धः, स व्यावर्त्याद् विना नेष्यते । यस्तु पक्षे प्राप्तस्य पक्षान्तरे प्राप्तिं करोति नियमस्तस्य न व्यावर्त्येन प्रयोजनमिति । ननु [3]न साधोः पाक्षिकत्वमित्युक्तम् । तथा हि भाषणे साधुर्नियम्यते न च साधुना विना भाषणसम्भवः । अथ भाषणमेव नियम्यते तत्रापि मौने दोषः प्रसज्यत इति दूषणम् । तदेतदाशङ्क्य नियमस्वरूपं कथयति—सति भाषितव्य इति । न भाषणानुवादेन साधुनियमो नापि सर्वदा भाषणविधिः । किन्तु दृष्टार्थत्वाद् विधेरर्थ[4]प्रति-

१. व्यापारसत्तामेव आ० मा० ।
२. नोपपद्यत आ० मा० ।
३. नेति आ० मा० इत्यत्र नास्ति ।
४. °रर्थप्रतिपादनमेव प्रयोजनम् आ० मा० ।

अत्र श्रेयोऽर्थिनोऽवश्यं साधुभाषा नियम्यते।
नियोगेन हि तां कुर्वन्नपूर्वं साधयिष्यति॥

यद्यपि च नियमेऽन्यनिवृत्तिरवश्यं कल्पनीया तथापि साधुशब्दस्मृति-व्यवहितानां कालंरूढरूपभ्रान्तिवाचकत्वगृहीतानां चापशब्दानां सम्भवति प्रयोगप्रसङ्गे साधुनियमेन व्यावृत्तिः।

अथ वा नैवापशब्दानामपृथक्त्वे केचिदेकक्रियाविषयानेकद्रव्यगुणादि-वदभिधायां प्राप्नुवन्ति, ये साधुनियमेन व्यावर्त्येरन्। किन्तु—

साधूनेव प्रयुञ्जाना नाशयेयुरयत्नतः।
भाविनीनशदित्येवं नियमस्तान्नियच्छति॥

तद्यथा—'यो विदग्धः, स नैर्ऋतः' इत्येवमादिदोषनिन्दापूर्वकम्। 'अविदहता श्रपयितव्यः' इति नियम्यते। तथा 'दुष्टः शब्दः स्वरतो वर्णतो—वा' इत्यादिना निन्दितत्वात्, 'तस्माद् ब्राह्मणेन न म्लेच्छितवै नापभाषितवै, म्लेच्छो ह वा एष यदपशब्दः' इति प्रमादादिनिमित्तविनाशेन शब्दकार्यादर्थ-साधनादपेतोऽयं म्लेच्छः, 'म्लेच्छ अव्यक्तायां वाचि' इति स्मरणात्, स न प्रयोक्तव्य इति प्रतिषेधः। 'तस्मादेषा व्याकृता वागुद्यते' इति च विधिरविनष्ट-प्रयोगनियमार्थः।

ननु चाशक्तिजा दोषाः प्रमादजनिताश्च ये।
परिहर्त्तुमशक्यत्वान्निषेधस्याप्यगोचराः॥

उच्यते—

प्रमादमेव मा कार्षीः सामर्थ्याय यतस्व च।
एवमर्थो निषेधोऽयं नाद्रियेतान्यथा ह्यसौ॥
अन्ये सुखमुखारूढा न क्लेशेन विवक्षवः।
शक्ताश्चैवाप्रमत्ताश्च वदेयुरनिवारिताः॥
अशक्तैर्नाशिताश्चान्ये दाक्षिण्याद्यनुवर्तनात्।
जानन्तोऽपि प्रयुञ्जीरन् यदि शास्त्रं न वारयेत्॥
अन्येऽपि प्राकृतालापैरशक्तैर्व्यवहर्तृभिः।
सह व्यवहरन्तस्तानुपेत्यापि प्रयुञ्जते॥
तत् कथं नाम यत् किञ्चित् स्यादपभ्रंशकारणम्।
दूरात् परिहरेयुस्तदिति यत्नो नियम्यते॥

यत्तु दृष्टार्थप्रत्यायननिराकाङ्क्षत्वाददृष्टार्थप्रयोगोत्पत्त्यशास्त्रत्वमिति। तत्रोच्यते—

दृष्टे सत्यपि सर्वत्र नियमादृष्टमिष्यते।
क्रत्वर्थं पुरुषार्थञ्च तत्संयोगपृथक्त्वतः॥

'एकस्य तूभयत्वे संयोगपृथक्त्वम्' [मी० सू० ४।३।५।] कारणम्। तच्चेह प्रकरणानारभ्यवादाभ्यामवगतम्। तत्र—

क्रत्वर्थांशे परार्थत्वादर्थवादः फलश्रुतिः।
पुरुषार्थे तु निर्देशात् फलमात्रेयदर्शनात्॥

क्रत्वर्थं ह्यनिर्ज्ञातोपायत्वात् सर्वादृष्टोपसंग्रहक्षममिति नियमापूर्वमात्मसात्कुर्वत्पुरुषार्थांशे फलश्रुतिमर्थवादीकरोति। पुरुषार्थस्य नियमस्य त्ववश्यकल्पनीयप्रयोजनत्वादर्थप्रतिपत्तेश्चापभ्रंशेऽप्यक्षिनिकोचादिभ्यो वा सुतरां सिद्धत्वादनाकाङ्क्षितनियमापूर्वोपजीवनसामर्थ्यं नास्तीत्यवश्यमर्थवादोपात्तमेव स्वर्गलोके कामधुगाद्येव फलत्वेनाश्रयणीयम्। यत्तु न ज्ञायते क्वेदं नियमापूर्वमाश्रितमिति, तत्राभिधीयते—

क्रत्वर्थं तावदङ्गेषु तदर्थेष्वेव संश्रितम्।
अनङ्गत्वाभिधानार्थं स्यात् क्रत्वर्थं नराश्रितम्॥

'प्रकरणविशेषाद्वा तद्युक्तस्य तत्संस्कारो द्रव्यवत्' [मी० सू० ४।३।१८।] इति हि ज्योतिष्टोमप्रकरणगतब्राह्मणशब्दलक्षिततदपूर्वसाधनयजमानसंस्कारत्वात्साधुभाषणनियमापूर्वस्य। 'याजमानास्तु तत्प्रधानत्वात्कर्मवत्' [मी० सू० ३।८।४।] इत्यनेन न्यायेन फलप्रतिग्रहणयोग्यत्वाधानार्थं तदाश्रितमेव विज्ञायते।

पत्तिप्रयोजनता। प्रयोजनं च यथा सिद्धमुद्दिश्यते। तेनार्थं प्रतिपादयितुं प्रवृत्तः साधुभिर्भाषितेत्यर्थः सञ्जायते। सोऽयमर्थप्रतिपादनसमयस्सति भाषितव्य इत्यनेन लक्षितः। ततश्चार्थप्रतिपत्तिमात्रोपायानामितरेषां निवृत्तिः। अत्र च यद्यपि भाषितेत्यप्युक्ते साधुभिरित्यागच्छति तथा साधुभिरित्युक्ते भाषेतेति। तथाप्यर्थाक्षेपाच्छ्रुतिर्बलीयसीति विशिष्टविधिरेवायम्।

पुरुषार्थवाक्येऽपि सम्यग्ज्ञातसुप्रयुक्तत्वाक्षिप्तज्ञातृप्रयोक्तृपर्युपस्थापनात् क्रिया-फलयोश्च तद्गामित्वात् प्रधानयागाद्यपूर्ववदेव ज्ञातृप्रयोक्त्राश्रितं निष्पद्यते ।

तृतीयोक्तिक्रियागम्यगुणभावेऽपि वर्त्तरि ।
संस्कार्यत्वात् प्रधानत्वं स्यात् प्रयाजाज्यशेषवत् ॥

यथैव 'प्रयाजशेषेण हवींष्यभिघारयति' इति सत्यपि शेषस्य तृतीयानिर्देशे कार्योपयोगित्वात् संस्कार्यत्वावधारणमेवं ब्राह्मणस्यापीत्यदोषः ।

यदि वा ब्राह्मणेनेति तृतीया यागकारिणि ।
कामधुक्शब्दयोगाच्च बहिः प्राधान्यकल्पना ॥
नैव म्लेच्छनकारित्वात्तृतीयेयं प्रतीयते ।
कुर्वता यागमित्येवं ब्राह्मणेनेति योज्यते ॥
यागे यो गुणभावश्च संस्कारे सा प्रधानता ।
न ह्यारादुपकारित्वं संयुक्तस्योपयोगिता ॥

तच्चोपयोगित्वं प्रकरणतृतीयाविभक्तिश्रवणाभ्यामवगतं शेषस्वीकरण-समर्थं भवति । बाह्यपुरुषार्थत्वेऽपि कामधुक्शब्दस्य पुरुषोपभोग्य[1]काम्यमा-नार्थसाधनवचनत्वात् पुरुषप्राधान्यप्रतिपत्तिः । यद्यपि च साधुशब्दोच्चारण-मुच्चारयित्रर्थं क्रत्वर्थं च न भवति, तथापि तद्गतनियमप्रतिषेधयोरेव

**अथ वा साधुभिः प्रतिपादयेदिति वक्तव्ये साधुसम्बन्धादेवानूद्यमानस्य प्रतिपादनस्य भाषणत्वं सिद्धमङ्गीकृत्य तदर्थं धातूच्चारणमिति । क्रिया-फलयोश्चेति । क्रिया कारणं[1] फलं[2] कार्यमपूर्वं ताभ्यां [3]समानाश्रयमुचितम् । अतस्तयोः प्रयोक्तृगामित्वादपूर्वमपि तदाश्रयमिति । तृतीयोक्तिक्रियागम्येति । ब्राह्मणेन न म्लेच्छितवै इति तृतीयोक्त्या सम्यग् ज्ञातः सुष्ठु प्रयुक्त इति । तृतीयया च स्वसिद्ध्यर्थमाक्षेपात् कर्तुर्गुणभावावगतिरिति । यदि वा ब्राह्मणेने-ति । सिद्धकर्तृत्वस्य ब्राह्मणस्यायमुद्देशः । स च प्रकरणाद् यागकर्तुः । सोऽयं तृतीयाश्रुत्यानूदितयागान्वयः पश्चान्म्लेच्छितेनापि कर्तृत्वेनैवान्वीयते । तदेतच्छ्रुति वाक्यगम्यं क्रियाद्वयगतं कर्तृत्वं विवृतं कुर्वता यागमित्येवमिति । तृतीयागम्यं शत्रन्तेन म्लेच्छितृत्वं वाक्यगम्यं न तृतीयया । ततश्च नास्ति म्लेच्छत्वम् प्रतिगुणभावे सा श्रुतिरिति ।**

---

१. कार्यमिति आ० मा० ।
२. फलकारणम् आ० मा० । ३. ताभ्यामेकाश्रयमुचितम् आ० मा० ।

क्रत्वर्थपुरुषार्थत्वे भविष्यतः । न हि यदर्थे कर्मणि यौ नियमप्रतिषेधौ तावेव केवलौ तदर्थौ भवतः । तथा हि—

स्त्र्युपायमांसभक्षादिपुरुषार्थमपि श्रितः ।
प्रतिषेधः क्रतोरङ्गमिष्टः प्रकरणाश्रयात् ॥
क्रत्वर्थात् खादिराच्चेष्टा वीर्यसिद्धिविधानतः ।
भोजनाच्चाप्यतिथ्यर्थादपूर्वं दातृसंश्रितम् ॥

अतश्च परार्थोच्चारणाश्रितावपि नियमप्रतिषेधौ स्वप्रयोजनाकाङ्क्षावेलायां संनिहितपुरुषप्रधानौ विज्ञायेते ।

अतश्च वेदमूलत्वे सत्येवं प्रतिपादिते ।
प्रयोगोत्पत्त्यशास्त्रत्वं यदुक्तं तदसत्कृतम् ॥
यच्चास्य कृत्रिमत्वेन स्वतः शास्त्रत्वबाधनम् ।
तत्प्रसिद्धिविरुद्धं स्यादचन्द्रशशिवाक्यवत् ॥

शास्त्रशब्दो यदि तावद्रूढस्ततश्चतुर्दशसु तावद्विद्यास्थानेषु शास्त्रस्थानामेव प्रसिद्धस्तदन्तर्गतत्वाच्च व्याकरणस्य शास्त्रत्वनिराकरणानुपपत्तिः । अथापि शिष्यतेऽनेनेति शास्त्रत्वमन्वर्थमिष्यते यथापि व्याकरणेन साधुशब्दाः शिष्यन्ते तदनुगमोपाया वा प्रकृतिप्रत्ययादयस्तदभियुक्तशिष्यजनो वेति सर्वथा शास्त्रशब्दप्रवृत्तिरविहता ।

प्रसिद्धमपि शास्त्रत्वं यस्तु तर्केण वारयेत् ।
वेदस्यापि स नित्यत्वाद् व्योमवद्वारयिष्यति ॥

यथैव हि व्याकरणादीनां कृत्रिमकाव्योपनिबन्धसाधर्म्याच्छास्त्रत्वं प्रतिषेद्धुमध्यवसीयते; तथाकाशदिक्कालात्मनां परमाणुदृष्टान्तबलेन नित्यत्वाद्वेदशास्त्रमप्ययत्नेनैव क्रियेत । यो हि नागरिकभाषाभिज्ञतया ग्रामीणैर्मातापितरावपि शुक्लवचनैरभिदधीत, स केनान्येन वार्येत ।

वेदस्यापि स नित्यत्वादिति । साङ्गस्य वेदस्य प्रमाणत्वान्न वेदे कृतादरेणाङ्गेष्वनादरः शक्यते कर्तुम् । स चेद् व्याकरणाख्याङ्गात् प्रामाण्यम् वदेद् वेदस्यापि वदेदेव । वेदप्रामाण्यमङ्गीकृत्य व्याकरणा[1]प्रामाण्यप्रतिपादनमभ्युपगतवेदप्रामाण्यं न्यायबाधितमित्यनेनोच्यते । तदेतद् व्यक्तीकरिष्यति श्रुतिस्मृतिप्रमाणत्वे इत्यनेनेति ।

१. प्रामाण्यप्रतिज्ञानम° आ० मा० ।

परत्राविनयं कुर्वन् पितृभ्यां वार्यते सुतः ।
तयोरेवाविनीतस्य को भवेद्विनिवारकः ॥
तथा बहिरसम्बद्धं वदन् वेदेन वार्यते ।
साङ्गेन तं पुनर्निघ्नन् केनान्येन निवार्यते ॥
क्रुद्धो यो नाम यं हन्ति स तस्याङ्गानि कृन्तति ।
कृत्ताङ्गस्य ततस्तस्य विनाशः कियता भवेत् ॥
तेन त्रयीं द्विषन् पूर्वं वेदाङ्गान्येव लुम्पति ।
ततस्तेनैव मार्गेण मूलान्यन्यस्य कृन्तति ॥
श्रुतिस्मृतिप्रमाणत्वे हेतुपूर्वं निरूपिते ।
अङ्गानामप्रमाणत्वमशास्त्रत्वं च को वदेत् ॥

यत्त्वितरस्मृतीनां प्रायेण सारूप्याद्व्याकरणस्य तद्विलक्षणत्वात्तन्मध्यपातित्वमसम्भाव्यमिति ।

तत्रोच्यते—सर्वधर्मसूत्राणां वर्णाश्रमधर्मोपदेशित्वाद्धर्माणाञ्चैकरूपप्रायत्वात् परस्परसम्वादित्वं युक्तम् । व्याकरणस्य त्वन्य एव साधुशब्दतत्त्वनिर्णयरूपो विषयस्तत्रास्य व्याकरणान्तरेणैव सङ्गतिः स्यान्न धर्मसूत्रैः । स्मृतित्वं त्वङ्गानां धर्मसूत्राणाञ्चाविशिष्टम् ।

अथापि स्मृतिशब्देन नाङ्गानामभिधेयता ।
तथाप्येषां न शास्त्रत्वप्रमाणत्वनिराक्रिया ॥
पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम् ॥

इति हि तुल्यवत्प्रामाण्यस्मरणम्—

अपि वा कर्तृसामान्यादुक्तो न्यायश्च यः स्मृतेः ।
प्रमाणत्वे समानोऽसौ वेदाङ्गेष्वपि गम्यते ॥
प्रमाणषट्कमूलत्वं पूर्वं चैषां प्रदर्शितम् ।
दृष्टादृष्टफलत्वेन तस्मान्नास्त्यप्रमाणता ॥
एकस्य च यदा युक्त्या समूलत्वं निरूपितम् ।
पौरुषेयान्तरग्रन्थमूलतापि तदेष्यते ॥

**ननु नाहं वेदस्याप्रामाण्यं प्रतिपादयितु मुद्यतः[1] किन्तु व्याकरणस्य तत् किं मां वेदो न वारयेदित्यत आह—क्रुद्धो यो नाम यं हन्तीति ।**

१. मुद्युक्त आ० मा० ।

असम्भावितमूलं हि पौरुषेयं यदुच्यते ।
मूले तस्याप्रतिष्ठत्वं रूपे जात्यन्धवाक्यवत् ।।

इह तु समूलत्वादेकान्तरितप्रामाण्यसिद्धिः । यत्तु सूत्रवार्त्तिकभाष्यकाराणामन्योन्यविगीतवचनत्वादप्रमाणत्वमिति । तत्राभिधीयते—

स्मृतीनामप्रमाणत्वे विगानं नैव कारणम् ।
श्रुतीनामपि भूयिष्ठं विगीतत्वं हि दृश्यते ।।
विगीतवाक्यमूलानां यदि स्यादविगीतता ।
तासां ततोऽप्रमाणत्वं भवेन्मूलविपर्ययात् ।।

मूलानुरूप्येण हि स्मृतीनां प्रमाणत्वम् । तदविगानेन—

परस्परविगीतत्वमतस्तासां न दूषणम् ।
विगानाद्धि विकल्पः स्यान्नैकत्राप्यप्रमाणता ।।
धर्मसाधनतांशे च विगानं नैव विद्यते ।
अन्वाख्यानविगानं तु लक्ष्यभेदान्न दुष्यति ।।

पुनरुक्तत्वादिना हि यत्सूत्रप्रत्याख्यानं तस्य च पुनः समाधानम् ।

तस्यावैदिकमूलत्वान्न किञ्चिदपि दुष्यति ।
ये चापीष्ट्युपसंख्याने ते च स्मृत्यन्तराश्रिते ।
न चाधिकोपसंख्यानान्न्यूनस्यास्त्यप्रमाणता ।।

तद्यथा—वाजसनेयिशाखायामाध्वर्यवं चरकशाखासु च बह्वित्येतावता नाल्पविषयमप्रमाणीकुर्वन्ति । तस्मादयमपि न दोषः । यस्तु सूत्रकारस्य प्रयोजनानभिधानोपालम्भः ।

स श्रुतिस्मृतिसिद्धत्वान्नोपालम्भत्वमर्हति ।
ग्रन्थान्ते च स्वसंवेद्यं सुज्ञानं तत्प्रयोजनम् ।।

सत्यवचनं च सर्वश्रुतिस्मृतिषु स्वर्गसाधनत्वेन यागसाधनत्वेन च नियतम् । सत्यं च द्विविधं शब्दसत्यमर्थसत्यं च । तत्र यथैव यथावस्थिताविप्लुतार्थवचनं श्रेयःसाधनमेवं यथावस्थितशब्दसत्यवचनमपि, यथा चार्थ-

असम्भावितमूलं हीति । यदसंभावितमूलं धर्मादिविषयं शास्त्रं पौरुषेयं चोच्यते तस्य [1]मूलाप्रतिष्ठत्वं यत्तु सम्भावितमूलं तस्य पुरुषपरम्परायामपि प्रमाणत्वमिति ।

१. मूले प्रतिष्ठत्वम् आ० मा० ।

सत्यविपर्ययः प्रत्यवायायैवं विनियोगकालप्रयुक्तशब्दानृतवचनमपि । शब्द-साधुत्वज्ञानं च व्याकरणाभियोगविशेषादित्युक्तम् ।

तस्माद्विज्ञायमानत्वान्नोक्तं मूलकृता स्वयम् ।
शास्त्रेण सर्वशब्दानामन्वाख्यानप्रयोजनम् ॥

न च व्याकरणप्रयोजनाभिप्रायं प्रति केचिद् विवदन्ते । स एव त्वभिप्रायः किं न्याय्यो नेत्यर्थान्तरमेतत् ।

धर्माय नियमं चाह वाक्यकारः प्रयोजनम् ।
वेदमूलस्तु तत्रैक एको व्याकरणाश्रयः ॥

नियमद्वयप्रयुक्तं व्याकरणम् । साधुशब्दज्ञानात्तत्पूर्वंप्रयोगाद्वा स्वर्गयज्ञो-पकारसिद्धिरित्येतत्तावद्वेदमूलमनन्यप्रमाणकत्वात् । अतश्चायं तावद्वेदाख्येन शास्त्रेण धर्मनियमः ।

तथा व्याकरणाख्येन साधुरूपं नियम्यते ।
अविशेषेण सिद्धिः स्याद्विना व्याकरणस्मृतेः ॥

तेन वेदावगतसम्यग्ज्ञातसाधुशब्दप्रयोगात्मकधर्माङ्गत्वेन व्याकरणप्रक्रिये-तिकर्तव्यतया नित्यवाचकशब्दरूपज्ञाननियमः क्रियते । यच्च कात्यायनेन ज्ञाने धर्म इति चेत्तथाधर्म इति तन्त्रेण प्रसङ्गेन वापशब्दज्ञानादधर्मत्वा-पत्तिदोषमभिधाय शास्त्रपूर्वंप्रयोगेऽभ्युदय इति निःश्रेयससिद्ध्युपायेऽवधारिते यत्पुनः परावृत्य भाष्यकारेणोक्तम, 'अथ वा पुनरस्तु ज्ञाने धर्म इत्यभ्युपेत्य-

विनियोगकालप्रयुक्तेति । विनियोगकालो वृद्धव्यवहारकालः । तत्र प्रयुक्तस्य शब्दस्या[1]नृतस्यातथाभूतस्य वचनम् । अथ वा विनियोगकालः साधुनियमकालः यज्ञप्रयोगकालस्तत्र प्रयुक्तमनुष्ठितम् शब्दानृतवचन-मुच्चारणमिति । अर्थान्तरमिति । नानेन *वार्त्तिककारादिभिः* प्रयोजना-भिधायिभिर्विगीत[2]त्वं भवतीति । तन्त्रेण प्रसङ्गेन वेति । यदि व्याकरणं साध्वसाधुविवेकज्ञानार्थं तदा तन्त्रेण अथ साधुज्ञानार्थं तदा प्रसङ्गेन ततोऽप-शब्दज्ञानमपीति । अधर्मत्वापत्तिर्व्याकरणजस्यासाधुज्ञानस्य । अत्र यच्च कात्यायनेन यत्पुनः परावृत्येति । यच्छब्दयोः पौनरुक्त्यादेकस्या-नर्थक्यम् प्रतीयते । तत्रैवं योजना । यथा यत् स्नात्वा यदाचम्य यच्छ्रद्धया क्रियते तत्[3]फलवद् भवतीत्येकमेवोपाधिभेदात् पुनः पुनः परामृश्यते तथा यःकात्यायनेनैवमवधारिते यत्स्वयमेव तदेवावधार्य पुनः परावृत्य पुनः पुनः परामर्श इति ।

---

१. °स्यानृतकथारूपस्य आ० मा० । २. विगीतवचनत्वं संभवतीति आ० मा० ।
३. तदेवेति फल° आ० मा० ।

वादमात्रं तत्पूर्वोक्तदोषपरिहारसामर्थ्यप्रदर्शनार्थे कृत्वाचिन्तान्यायेनोक्तम् । परमार्थतस्त्वन्यानर्थक्यप्रसङ्गविज्ञातपारार्थ्यापादितार्थवादत्वात् फलश्रुतिर्न फलप्रतिपत्तिक्षमा विज्ञायते । यथा 'योऽश्वमेधेन यजते य उ चैनमेवं वेद' इति । ज्ञानमात्रादेव ब्रह्महत्यातरणं यदि सिध्येत् को जातुचिद् बहुद्रव्यव्ययायाससाध्यमश्वमेधं कुर्यात् । तद्विधानं चानर्थकमेव स्यात् । एवं शब्दज्ञानाच्चेद्धर्मः सिध्येत् को नामानेकताल्वादिव्यापारायासखेदमनुभवेत् । तस्मात् क्रतुवदेव ज्ञानपूर्वप्रयोगस्यैव फलं कारणे कार्यवदुपचारात्तण्डुले देववर्षणवज्ज्ञाने धर्मवचनमापादिताधर्मपरिहाराभिधानशक्तिमात्रप्रदर्शनार्थमेवोपन्यस्तं न फलवत्त्वप्रतिपादनाय । **'द्रव्यसंस्कारकर्मसु परार्थत्वात्'** [मी० सू० ४।३।१] इत्यनेन न्यायेन ज्ञानस्य पुरुषशब्दसंस्कारत्वेन निराकाङ्क्षस्य फलसंबन्धासंभवात् ।

सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते ।
पराङ्गं चात्मविज्ञानादन्यत्रेत्यवधारणात् ।।

आत्मज्ञानं हि संयोगपृथक्त्वात् क्रत्वर्थपुरुषार्थत्वेन ज्ञायते । तेन विना परलोकफलेषु कर्मसु प्रवृत्तिनिवृत्त्यसंभवात् । तथा 'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' तथा 'मन्तव्यो बोद्धव्यः' 'तथात्मानमुपासीत' इति कामवादलोकवादवचनविशेषैर्जिज्ञासामननसहितात्मज्ञानकेवलावबोधपर्यन्त -

**क्रत्वर्थतामात्मज्ञानस्योपपादयति । तेन विना परलोकफलेष्विति । पुरुषार्थतायां श्रुतिमुपन्यस्यति । तथा य आत्मेति । अपरामप्यु[१]पन्यस्यति—तथा मन्तव्य इति । अपरामपि तथात्मानमपि । अत्र यथापूर्वाभ्यां श्रुतिभ्यामभ्युदयफलस्य ज्ञानस्य विधिरुत्तरया च निःश्रेयसफलस्य तद्दर्शयति—कामवादलोकवादेति । [२]जिज्ञासासहितस्य मन्तव्यो बोद्धव्य इति मननसहितस्य ज्ञानस्योत्तरया च श्रुत्या केवलावबोधपर्यन्तस्य स्पष्टात्मतत्त्वज्ञानस्य यद् विधानं तेनापेक्षितस्य वाक्यान्तरोपात्तस्य द्विविधस्य यः फलस्य सम्बन्धः । सोऽयं ज्ञानविधानापेक्षितफलसंबन्धः । कामवादलोकवादवचनविशेषैरिति । तानि द्विविधस्य फलस्य वचनानि ज्ञान-**

१. उपन्यस्यतीति नास्ति आ० मा० ।
२. जिज्ञासितव्यमित्यधिकमितः पूर्वम् आ० मा० ।

स्पष्टात्मतत्त्वज्ञानविधानापेक्षितवाक्यान्तरोपात्तद्विविधाभ्युदयनिःश्रेयसरूपफल - संबन्धः 'स सर्वांश्च लोकानाप्नोति सर्वांश्च कामानाप्नोति तरति शोकमात्मवित्तथा स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन पितृलोकेन संपन्नो महीयते' इत्यादिना योगजन्याणिमाद्यष्ट-गुणैश्वर्यफलानि वर्णितानि । तथा 'स खल्वेनं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न स पुनरावर्तते' इत्यपुनरावृत्त्यात्मकपरमात्मप्राप्त्य-वस्थाफलवचनम् । अप्रकरणगतत्वेनानैकान्तिकक्रतुसंबन्धासंबन्धाच्चनाञ्जन-खादिरस्रुववाक्यादिफलश्रुतिवदर्थवादत्वम् ।

न च ज्ञानविधानेन कर्मसम्बन्धवारणम् ।

प्रत्याश्रमवर्णनियतानि नित्यनैमित्तिककर्माण्यपि पूर्वकृतदुरितक्षयार्थम-करणनिमित्तानागतप्रत्यवायपरिहारार्थं च कर्त्तव्यानि । न च तेषां भिन्नप्रयो-

विधिनापेक्षितानि त्रीणि कामवादादीनि दर्शयति — सर्वांश्च कामानिति । न चैषां वर्तमानापदेशत्वाद् यदाङ्क्ते भ्रातृव्यमेव तद् वृङ्क्ते यस्य खादिरः स्रुवो भवति स छन्दसामेव रसेनावद्यतीतिवदर्थवादत्वं यतस्तयोः [1]पारार्थ्य-ज्ञानादेवमविज्ञाते पारार्थ्ये रात्रिसत्रवदेवंविधमपि [2]फलत्वेन विपरिणम्य गृह्यते । न चात्र विज्ञानं पारार्थ्यं तत्प्रामाण्यस्य प्रकरणस्य वाक्यस्य वा व्यभिचरितक्रतुसंबन्धद्वारप्रवृत्तस्याभावादित्याह — अप्रकरणगतानै-कान्तिकतेति ।

ननु नित्यानामग्निहोत्रादीनां [3]जन्ममरणपर्यन्तत्वेनाङ्गीकरणात् कथं तद्विरोधिज्ञानैकनिष्ठत्वं विधातुं शक्यमित्याशङ्क्याह—न च ज्ञानविधानेति । नैतज् ज्ञानाभ्यासविधानं सर्वकर्मनिरोधेन यस्माद् ज्ञातुर्दुरितस्य ज्ञानपरि-पाकविरोधिनोऽभावाय ज्ञानाभ्यासेनैव नित्यानि कर्माण्यपेक्षितानि नापेक्षितविरोधेन कस्यचिद् विधिर्भवति । यदैकफलत्वमेकमार्गस्थपुरुष-विषयत्वं च ज्ञानकर्मणोः स्यात्तदा विरोधाद् बाधः सम्भाव्येत तत्परिहाराय वा [4]विकल्पाङ्गाङ्गिभावावाश्रीयेयाताम् । कर्माणि तु विषयेन्द्रियजसुख-लोलुपस्य बहिःसाधनायत्तैश्वर्यकामस्य च विधीयन्ते । ज्ञानं तु तेषु विरक्तस्य मुमुक्षोः सङ्कल्पसिद्धिं चेच्छत इति फलभेदो मार्गभेदश्च । तथा हि गृहस्थेनाहवनीयादिसाधनवता कर्माणि कर्तव्यानि परिव्राजकेन यमनियमादिसाधनवता ज्ञानमभ्यसनीयम् । अतो भिन्नाधिकारिविषय-त्वात् नास्ति समवायविरोध इत्याह—न च तेषां भिन्नप्रयोजनत्वादिति ।

१. परार्थज्ञानादेवम् आ० मा० ।　　२. फलत्वेन परिगृह्येत आ० मा० ।
३. जरामर्यत्वेनेति आ० मा० ।
४. विकल्पोऽङ्गाङ्गिभावो वाश्रीयेत आ० मा० ।

जनत्वाद्भिन्नमार्गत्वाच्च बाधविकल्पपरस्पराङ्गाङ्गिभावाः सम्भवन्ति। शब्दज्ञानस्य त्वेकान्तेन, प्रयोगाङ्गत्वात् पूर्वतरभावित्वाच्च न पृथक् फलसम्बन्धसम्भव इति ज्ञानपूर्वप्रयोगफलवत्त्वमेव निश्चीयते। यत्त्वादिमद् व्याकरणज्ञानतत्पूर्वकप्रयोगफलसम्बन्धोऽनादिर्विधिमूलो नावकल्पत इति। तत्र यूपादिकरणवद् व्याकरणपरम्परानादित्वादनुपालम्भः। 'तस्मादेषा व्याकृता' इति च व्याकरणव्यवहारनित्यत्वमुक्तम्।

न चैषा सम्प्रदायेन व्याकृतेत्यभिधीयते।
तत्र ह्युच्यत इत्येव व्याकृतेति तु निष्फलम्॥

यदपि च मनुना पङ्क्तिपावनमध्ये वेदादेवोपलभ्योक्तम्। 'यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वर'मिति। तेनापि पूर्वपश्चादुक्ताधीतवेदत्वयज्ञमीमांसनव्यतिरिक्तविषयेण सतावश्यमेतदेव व्याकरणज्ञानमाश्रयितव्यमिति तन्नित्यत्वसिद्धिः। २७॥२८॥२९॥

[ आकृतिशक्त्यधिकरणम् ]

इह नामाख्यातोपसर्गनिपातानां मध्यान्नामानि परिगृह्यन्ते। तेषामपि जातिगुणक्रियाद्रव्ययदृच्छासर्वनामशब्दानां मध्याज्जातिशब्दाश्चिन्त्यन्ते। तेषामप्येकं गोशब्दमुदाहृत्य विचार्यते, किं पुनरयमाकृतेर्वाचकोऽथ व्यक्तेरिति,

---

तेनापि पूर्वपश्चादुक्तेति।

[1]मनु — अग्र्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च।
श्रोत्रियान्वयजाश्चैव विज्ञेयाः पङ्क्तिपावनाः॥ ३।१८४।
यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम्।
तावुभौ पुण्यकर्माणौ पंक्तिपावनपावनौ॥

व्याकुरुत इति प्रकृतिप्रत्ययादिद्वारव्याक्रियातिरिक्तविषयं सदेतत् स्वरूपप्रकाशने[2]ऽध्ययनेऽर्थस्वरूपप्रकाशने वा मीमांसने वर्तते। तयोश्चाध्ययनमपूर्वमेव प्रोक्तं मीमांसनं च पश्चादितोदमेव व्याकरणमस्य विषय इति ॥२७॥

इह नामाख्यातोपसर्गनिपातानामिति। वाचकेषु निरूपितेषु तत्प्रसङ्गाद् [3]प्रयोजनवत्त्वाच्च वाच्यनिरूपणमारब्धम्। तत्र गोशब्दो भाष्यकारेणोदाहृतस्तस्य येन सम्बन्धेनावतारस्तत्प्रदर्शनमिदमिदानीं

---

१. इत आरभ्य पावनपावनौ इति यावत् पंक्तिः आ० मा० इत्यत्र नास्ति।
२. अध्ययनेऽर्थस्वरूपप्रकाशने वेति आ० मा० इत्यत्र नास्ति।
३. प्रयोजनवत्त्वाच्चेति पू० मा० इत्यत्र नास्ति।

ततः—

एतत्सान्न्यासिकं कृत्वा वक्ष्यमाणं तु साम्प्रतम् ।
उपायफलसिद्धयर्थमिदं तावद् विचार्यते ॥

किं य एव लौकिकाः शब्दास्त एव वैदिकास्त एव चैषामर्था उतान्य इति । आह—

किं लोकवेदशब्दानामेकत्वप्रतिपादने ।
प्रयोजनं यतः पूर्वं तावत्तत्प्रतिपाद्यते ॥

उच्यते—

फलमस्य विचारस्य वैदिकेषु भविष्यति ।
लोके च निर्णयोपायस्तेनैकत्वाय यत्यते ॥

यदि शब्दार्थानामनन्यत्वं लोकवेदयोर्भवेत्तत एतस्या व्यक्त्याकृत्यभिधान चिन्ताया वृद्धव्यवहारस्थानेकप्रयोगानुसरणद्वारेणाभिधेयानभिधयेत्वनिर्णयः शक्यते कर्तुम् ।

वाचकानामर्थं निरूपयितुं प्रतिपादनसौकर्यात् इतरेषां तुल्यन्यायतया प्रतिपत्तिमङ्गीकृत्य किञ्चिदेकं परिगृह्य विचारः प्रस्तोतव्यः । तत्र वाचकसामर्थ्यं नामादिभिश्चतुर्भिर्विशेषैः प्रविभक्तमिति । तेषामन्यतमे नाम्नि विचारः । ततो नाम्नोऽपि षड्भेदत्वात् तद्विशेषे जातिशब्दे तेषामपि बहुत्वाद् गोब्दस्योपादानं विचारविषयत्वं तु सम्भवतां जातिगुण-क्रियाशब्दानामाख्यातानां च सम्भवति हि एतेष्वेव जातिव्यक्त्योर्वाच्यत्व-सन्देहः । अरुणाधिकरणे तु गुणोपरक्तद्रव्यवचनत्वम् निराकरिष्यति । गुणमात्रवचनस्य गुणजातिव्यक्तिवचनत्वविचारोऽत्रैव । निपातार्थस्तु विकल्पसमुच्चयादिभिर्विकल्प्य समुच्चेतव्यभेदाद् भिन्नः प्रतीयते । न स्वतः उपसर्गाणामपि समाङुदादीनां क्रियोपाधिरर्थः क्रियाभेदाद् भिन्नः प्रतीयते न स्वतः । नाम्नामपि द्रव्यशब्दानां पिङ्गाक्ष्यादीनां [1]यदृच्छा-शब्दानां डित्थादीनां सर्वनाम्नां च व्यक्तिवचनत्वं स्थितम् । अत एतेषामपि-विचार्यत्वमिति । तत एतस्या व्यक्त्याकृत्यभिधानचिन्ताया इति । पञ्चमीयं चिन्तातो निर्णय इति । निर्णयस्तु फलमस्य विचारस्य वैदिकेषु भविष्यती त्युक्तत्वाद् वेदेन विशेषणीयः । वेदेऽभिधेयानभिधेयत्वनिर्णय इति ।

१. यदृच्छाशब्दानामिति पू० मा० इत्यत्र नास्ति ।

प्रयोजनं तु लोकस्य न किञ्चिदपि सिध्यति ।
आकृतिव्यक्तिवाच्यत्वपरमार्थनिरूपणात् ॥

संमूर्छितानेकार्थसंनिधाने हि शब्दः प्रयुक्तः कियत्यप्यर्थजाते प्रत्ययं करोति। तेन चाविविक्ताभिधेयगम्यमानांशेनाऽपि समस्तधर्मोपेतेन कार्यसिद्धौ क्रियमाणायां प्रयुक्तः ।

यद्युच्यमानया कार्यं यदि वा जातिगम्यया ।
समस्तं क्रियते व्यक्त्या को विवेकधियो गुणः ॥

यद्युच्येतेहापि वेदवत् सामान्यविशेषलक्षणबाधसिद्धिरेव प्रयोजनमिति । तदुच्यते—

सर्वं हि दधिदानादि लोके कर्मार्थलक्षणम् ।
तद्वशात्क्रियमाणे तु [1]चिन्त्यते श्रुतिलक्षणे ॥
तेन लोके विचारोऽयं जायते निष्प्रयोजनः ।
स्यात् प्रयोजनवान् वेदे ज्ञानोपायस्तु दुर्लभः ॥
तेन शब्दार्थभिन्नत्वे व्यक्त्याकृतिविचारणा ।
वाच्यावाच्यविवेकाय न कर्तव्या कथञ्चन ॥
अभेदे सति लोकस्थैः कृतः शब्दार्थनिर्णयः ।
तस्मिन्ननुपयुक्तोऽपि फलं वेदेषु दास्यति ॥

तद्वशात् क्रियमाण इति । अत्र चिन्त्यत इति पाठे तच्छब्देन श्रुतिः परामृश्यते। श्रुतिलक्षणे तु कर्मणि श्रुतिवशात् क्रियमाणे शब्दार्थचिन्ता क्रियते। क्वचित्तु न चिन्त्ये श्रुतिलक्षणे इति पाठः, भेदपक्षस्तावत् प्रतिपाद्यत इति। पूर्वोत्तरपक्षयोः फलभेदमवधृत्य शब्दार्थभेदे वेदस्य निर्विषयत्वात् आकृत्यधिकरणमनारम्भ्यम् अभेदे तु सविषयत्वादारभ्यमित्यनारंभाय भेदपक्षस्तावत् पूर्वपक्षवादिना प्रतिपाद्यते। तावच्छब्देन चाभेदपक्षोऽपि सिद्धान्तवादिनाकृत्यधिकरणारम्भाय प्रतिपादयिष्यत इति सूचयता विचारारम्भ एव सूचितः। नानात्वं यद्येभिर्हेतुभिः सेत्स्यति तदा वेदस्य निर्विषयत्वं भविष्यति । ततश्च तद्विशेषनिरूपणायाकृत्यधिकरणमप्यनारभ्यं

१. न चिन्त्ये इति मुद्रितपुस्तकपाठः ।

तेन लौकिकवैदिकशब्दार्थैकत्वे सत्याकृत्यधिकरणमुपपत्तिमत्त्वात् प्रयोजनवत्त्वाच्चारब्धव्यम्। भेदपक्षे त्वनारम्भ्यमित्यवधृत्य भेदपक्षस्तावत् प्रतिपाद्यते। नियतानियतस्वरच्छान्दसप्रकृतिप्रत्ययलोपागमवर्णविकारसदसद्भावकृतरूपभेदादध्यायानध्यायोपनीतानुपनीतत्रैवर्णिकचातुर्वर्ण्यप्रयोज्याप्रयोज्यत्वगुरुशुश्रूषाराधितगुरुसंप्रदाययदृच्छाप्रयुक्तवाक्यतदर्थान्यत्ववद् यदि पदपदार्थान्यत्वं लोकवेदयोस्ततो लौकिकानामेव व्यवहारोपनिपातादर्थवत्ता, वेदे त्वानर्थक्यान्न चोदनालक्षणो धर्मः। स्वरेण रूपभेदं मन्यते। अध्यायानध्यायतया वृत्रहननाद्यर्थयोगेन

भविष्यतीत्यभिप्रायः। तदेतदाह — नियतानियतेति। संप्रति पूर्वपक्षं भाष्यव्याख्यया करोति। तत्र *भाष्यकारेण* रूपभेदो भेदहेतुर्निदर्शितोऽग्निर्वृत्राणि जङ्घनदित्यन्यदिदं रूपं लौकिकादग्निशब्दादिति। तत्र वर्णभेदस्य प्रत्यक्षतः[1]शब्दाधिकरणसिद्धत्वादन्यस्य च न्यूनातिरेकादेरभावात् कथं पदरूपभेदाभिधानमिति व्याचष्टे। स्वरेण रूपभेदं मन्यते इति। वाचकसामग्रीभेदाद्धि पदरूपभेदः। लोके चानपेक्षितस्वरविशेषैरकारादिभिर्ज्वलनप्रतिपादनम्। वेदे तु नियमेन स्वरोपादानादपेक्षितस्वरैः। तत्र यथा गौर्गार इति वर्णान्यत्वात् पदान्यत्वमेवं स्वरातिरेकादपीति। अध्यायानध्यायतयेति। अध्येयानध्येयतयेत्यर्थः। यस्य शूद्रादेर्यस्य चामावास्यादावध्येयता लौकिकस्य शब्दस्य तस्य तत्रानध्येयता वैदिकस्य। सेयं धर्मव्यवस्था भेदमनुमापयति।

अथ वा शब्दानां दृष्टार्थानां नादृष्टार्थेन धर्मेण प्रयोजनम्। अतोऽर्थप्रतिपत्तावेवास्य धर्मस्योपयोगः। [2]ततश्च प्रतिपादनसामग्र्यतिरेकात् पदभेद इति। वृत्रहननाद्यर्थयोगेनेति। कार्यातिरेकेण सामग्रीभेदानुमानम्। अत्र *भाष्यकारेण*र्थान्यत्वप्रतिपादकं वचनमुदाहृतम् — उत्ताना वै देवगवा वहन्ति इति। तच्च यद्युत्तानं वहतां[3] गोशब्दार्थत्वं विदध्यात्ततोऽर्थान्यत्वं ब्रूयात् तत्तूत्तानवहनं सिद्धानां गवां विदधाति। तत् कथमर्थान्यत्वप्रतिपादकत्वेनोदाहरणमत आह — विदग्धवाक्यवदिति। यथा यो विदग्धः स नैर्ऋत इति वचने यद्यपि स्वरसतो नैर्ऋततां विदग्धोद्देशेन विदधाति। तथापि उत्पत्तिशिष्टदेवतावरुद्धे देवतान्तर

1. शब्दाधिकरणे साधितत्वात् आ० मा०।

2. अतश्चेति आ० मा०।

3. वहतामर्थान्तराणां गोशब्दवाच्यता आ० मा०।

चाविदग्धवाक्यवदुत्तानवहनवाक्यभङ्गः। सर्वेषां च वैदिकानामन्यत्वान्न ततोऽपि पौर्वापर्येणार्थावगतिः। ग्राह्यत्वादिधर्मभेदनियतानियतपदवाक्यरचनाद्वारा व्यपदेशरूपभेदाभ्यां सर्वशब्दानामर्थानां लौकिकानां वैदिकानां च भेद इति प्राप्तेऽभिधीयते—

प्रयोगचोदनाभावादेकत्वं तेषु गम्यते।
तस्मात् सिद्धिः फलत्वाच्चेदविभागाद्भविष्यति॥

भेदे सत्यपूर्वात् सर्ववैदिकपदानामनवगतसम्बन्धत्वेनार्थशून्यत्वात् क्रियाकारकसंसर्गात्मकप्रयोगचोदनानामभाव एव स्यात्।

एकत्वे सति सद्भावादिति वा हेतुवर्णना।
अर्थैकत्वं प्रधानत्वाद्वस्त्वभेदोऽथवोच्यते॥

शब्दार्थैकत्वमिति वक्तव्येऽर्थैकत्ववचनं फलादेव शब्दैकत्वोक्तिसिद्धि मत्वैवमुक्तम्। अथ वा वस्तुमात्रपर्यायित्वादुभयसाधारण्याभिप्रायेणैवार्थैकत्वोक्तिः। प्रयोगचोदनाभावप्रसङ्गः परपक्षे स्वपक्षे वा तद्भावसिद्धिर्वेदवादिनैव सह विवादेऽवकल्पते, नान्येनेत्यत आह—प्रयोजनमिदं तत्प्रमाणमभिधीयतामिति।

तदुच्यते, प्रत्यभिज्ञारूपप्रत्ययविभागाज्ज्ञायमानोभयप्रमेयरूपाविभागाद्वा वाक्यतत्समूहमात्रनिबन्धनापन्नपदवर्णविषयत्वव्यपदेशाविभागाद्वा तथोच्चारयितॄणां स्थानकरणप्रयत्नाविभागाद्वा लक्षणविदां वा बहुतरानुगमनाविभागादिति हेत्वर्थविकल्पाः।

विध्यसंभवात् एतद्वचनव्यक्तिभङ्गेन वचनव्यक्त्यन्तरमस्यौदुम्बराधिकरणे दर्शितम्। यो नैर्ऋतः स विदग्धः कर्त्तव्य इति। तथात्र देवगवानामसिद्धत्वेनो[1]द्देश्यत्वासम्भवात् [2]उत्तानवहनवाक्यभङ्गेन गोशब्दवाच्यताविधानमुच्यत इति। ततोऽपि पौर्वापर्येणेति। यदि स्यात्तदा सत्यपि भेदे तद्विषयमेवाधिकरणमारम्भणीयं स्यादिति। नियतानियतेति। नियतानियतैः पदैर्या वाक्यरचना। अथ वा पदैर्वाक्यरचना नियतानियता या तद्द्वारौ लौकिको वैदिक इति व्यपदेशभेदाविति। वाक्यतत्समूहेति। वाक्यतत्समूहमात्रनिबन्धनत्वेनोपपन्नपदवर्णविषयत्वस्य व्यपदेशस्य भिन्नदेशस्य भिन्नस्यापि [3]पदवर्णयोरभेदादिति। नानेन भेदो निषिध्यते किन्तु विशेषविषयः[4] पदवर्णयोर्नासाविति।

---

१. °नोद्देशासंभवात् आ० मा०।

२. उत्तानवहनविधानवचनव्यक्तिभंगेन आ० मा०।

३. वर्णपदयोः आ० मा०। ४. विषयविशेष आ० मा।

प्रत्यक्षप्रत्यभिज्ञानाच्छब्दैकत्वं प्रतिष्ठितम् ।
एकशब्दोत्थितज्ञानग्राह्यत्वाच्चैकवाक्यता ॥
यथा श्रुतगवादीनां यापि वाच्यान्तरे श्रुतिः ।
अर्थैकत्वाविरोधेन गुणमात्रान्यता परा ॥
यथा हि वामना गावो नराश्चिपिटनासिकाः ।
कर्णप्रावरणाश्चान्ये नरार्थत्वाच्च न च्युताः ॥
एवं सत्येव गोत्वादौ धर्मो यदि विलक्षणः ।
नैतावतार्थभेदोऽस्ति विशेषानभिधानतः ॥

न च या एवं देवानां गावस्ता एवावश्यं सर्वत्र वैदिकस्य गोशब्दस्य वाच्या भवन्ति । मनुष्यगवीषु दक्षिणादिसाधनेषु सुतरां प्रयुज्यमानत्वात् ।

एवं हिरण्यपर्णत्वं मेरौ यदि वनस्पतेः ।
देवलोके ततः शब्दः किमर्थान्तरवाच्ययम् ॥
यच्चैतद् घृतमस्माकं देवानां मध्विदं यदि ।
रसवीर्यादिभिस्तत्र न शब्दार्थोऽन्यथा भवेत् ॥
न च सर्वाप्रसिद्धत्वे गम्येतैकोऽपि कश्चन ।
तेनासिद्धैरसिद्धानां नास्त्यन्यत्वनिरूपणम् ॥

अतोऽवश्यमेवैतेषामेव गवादीनां देवसम्बद्धानामुत्तानवहनप्रतिपादनमिति वक्तव्यम् ।

अथ वा भूमिष्ठानामेव सतां केनापि गुणवादेन पृथिवीगोलकत्रैलोक्यभ्रमणादिना वा पुराणोक्तेन दृष्टिवशाद् यथैव वयमुपरि देवान् पश्याम एवमधो

मनुष्यगवीष्विति । स्वस्य सतो दानं विधीयते । न च देवगवा मनुष्यस्य सम्भवन्ति । तस्मान् मनुष्यगवेष्वयं प्रयोग इति । पृथिवीगोलकेति । देवैरुत्तानं वहन्त एते गावो दृश्यन्त इति दृष्टिवशादुत्तान वहनवचनम् । दर्शने प्रमाणं तु पुराणोक्तपृथिवीगोलकत्रैलोक्यभ्रमणम् । अनेनैतत् सिद्धयति नोर्ध्वाधोभावो नियतः किन्तु य एव यस्याधारः तदेव तस्याधो विपरीतमूर्ध्वमिति । अन्यथा हि स्थानस्थे पृथिवीगोलके त्रैलोक्ये चोपर्यधोभावेन भ्राम्यति कदाचिदात्मानमधोमुखं लम्बमानमुपलभेरन् पुरुषाः । एवञ्च यथा पुरुषाः स्वाधारं पृथिवीमधः सूर्यादि चोपरि पश्यन्ति एवं देवा अपि चन्द्रसूर्याद्याधाराश्चन्द्राद्यधः पृथिवीं चोपरि पश्यन्तीत्युत्तानवहनदृष्टिसिद्धिः । तदेतदुक्तम् — यथैव वयमुपरीति ।

द्युपरि वर्तनादयमपि लोको देवैरुपरि दृश्यत इति उत्तानवहनदृष्टिः। तस्माल्लोकवेदयोरभिन्नाः शब्दार्था इति सिद्धे विचार्यते किमाकृतिः शब्दार्थोऽथ व्यक्तिरिति।

द्वौ च पक्षावुपन्यस्तौ भाष्यकारेण यद्यपि।
व्याख्यातारस्तथाप्यत्र कुर्युः पक्षान्तराण्यपि॥
नियोगेन विकल्पेन द्वे वा सह समुच्चिते।
संबन्धः समुदायो वा विशिष्टा वैकयेतरा॥
एते पक्षाः पुनर्योज्या व्यतिकीर्णाः परस्परम्।
लिङ्गकारकसंख्याभिः संहतासंहतात्मभिः॥
पुनर्जात्यादिपक्षाणां तादृश्येवात्र योजना।

प्रथमं तावदष्टपक्ष्येवं दर्शयितव्या। गोशब्दस्यार्थः किमाकृतिरेव, व्यक्तिरेव, उताकृतिर्वा व्यक्तिर्वा, अथाकृतिश्च व्यक्तिश्च, किमुभयोः संबन्ध उत समुदायः, किमाकृतिविशिष्टा व्यक्तिरुत व्यक्तिविशिष्टाकृतिरिति। तथा किमाकृत्यैव विशिष्टः संबन्धः किं व्यक्त्यैव आकृत्या वा व्यक्त्या वा, अथ समुदायेनाप्याकृतिविशिष्टया व्यक्त्या, अथ व्यक्तिविशिष्टयाकृत्या, अथ परस्परविशिष्टाभ्यां द्वाभ्यामिति। तथा किमाकृत्यैव विशिष्टः समुदाय इत्याद्यपि पूर्ववदेव संबन्धविशिष्टसमुदायपक्षमात्रातिरिक्तं योजनीयम्। एवं किमाकृत्यैव विशिष्टः संबन्ध एव, उत व्यक्त्यैव, अथ वाकृत्या वा व्यक्त्या वा, अथ

यदुक्तमेते पक्षाः पुनर्योज्याः व्यतिकीर्णाः परस्परमिति तस्य प्रपञ्चः। तथा किमाकृत्यैव विशिष्टः सम्बन्ध इति। तथा [1]किमाकृत्यैव विशिष्टेन सम्बन्धेन विशिष्टा व्यक्तिरित्यादिग्रन्थस्य तथा किमाकृतिविशिष्टसम्बन्धविशिष्टा व्यक्तिरित्यादिना पौनरुक्त्यं लक्ष्यते तत्रैवं वाच्यम्। पूर्वं विशिष्टेन सम्बधेन विशिष्टा किं जातिरेव न व्यक्तिरुत व्यक्तिरेव न जातिरिति विशेष्यत्वयोग्यता विचारितार्थसिद्धमितरस्य विशेषणत्व[2]मन्यार्थम् तु वाच्यविशेषणस्य सम्बन्धस्य जातिव्यक्त्योः का विशेषणमुचितेति विशेषणत्वयोग्यता विचार्यते परिशेषसिद्धेतरविशेष्यता कीर्त्यते। अयमेवापौनरुक्त्यप्रकारः तथा किं सम्बधेन विशिष्टया जात्यैव विशिष्टा व्यक्तिरित्यस्य [3]तथा सम्बन्धविशिष्टाकृतिविशिष्टा व्यक्तिरित्यनेन सहेति। यदुक्तं लिङ्गकारकसंख्यादिभिरिति तस्य

१. किं जात्यैव आ० मा०। २. °मुपात्तम् आ० मा०।
३. तथा किं संबन्धविशिष्टा व्यक्तिरित्यनेनेति आ० मा०।

समुदायेन किमन्यतरविशिष्टयान्यतरया, अथोभाभ्यामित्येवं समुदायविशेषण-त्वपक्षाः पूर्ववदेव योज्याः ।

एवं किं संबन्धेनैव विशिष्टाकृतिरथ समुदायेनैवाथ विकल्पमानाभ्यामुत समुच्चिताभ्याम् । तथैतद्विशिष्टा किमाकृतिरेवाथ व्यक्तिरेव, अथ विकल्पिते किं समुच्चिते किमिति । तथा किमाकृतिविशिष्टसंबन्धविशिष्टा व्यक्तिरेवाथ व्यक्तिविशिष्टसंबन्धविशिष्टाकृतिरेवाथ विकल्प उत समुच्चयः । एवं समुदायेनापि योज्यम् । तथा संबन्धविशिष्टव्यक्तिविशिष्टाकृतिरेवाथ संबन्ध-विशिष्टाकृतिविशिष्टा व्यक्तिरेवाथ विकल्पोऽथ समुच्चयः । एवं समुदायविशिष्ट-पक्षाः कल्पयितव्याः । तथा किं जात्यैव विशिष्टेन सम्बन्धेन विशिष्टा व्यक्तिः अथ व्यक्त्यैव विशिष्टेन संबन्धेन विशिष्टा जातिरथ विकल्पोऽथ समुच्चयः । एवं समुदायेनापि विशिष्टता योज्या । तथा किं सम्बन्धेनैव विशिष्टया जात्यैव विशिष्टा व्यक्तिरुतैवंविधया व्यक्त्यैव विशिष्टा जातिरथ विकल्पोऽथ समुच्चयः ।

एवं समुदायेनैव विशिष्टयेत्यपि योजयितव्यम् । एवं जातिलिङ्ग-योर्जातिकारकयोर्जातिसंख्ययोश्च प्रत्येकं जातिव्यक्तिपक्षविकल्पितसमुच्चित-पक्षोत्थानं दर्शयित्वा व्यक्तेर्लिङ्गादीनाञ्च दर्शयितव्यम् । तथा लिङ्गसंख्या लिङ्गकारकसंख्या कारकयुगलान्यपि विकल्प्य प्रत्येकद्वित्रिलिङ्गादिसहितैक-जातिव्यक्तिविकल्पास्त्रियोगपञ्चयोगाश्रया दर्शयितव्याः ।

> एवं शब्दस्वरूपस्य पुनर्जात्यादिभिः सह ।
> एकद्वित्रिचतुष्पञ्चषट्कैः सह विकल्पना ॥
> एते चात्यन्तनिष्कृष्टाः पक्षाः यद्यपि न स्थिताः ।
> बुद्ध्या तथापि भिद्यन्ते जातिद्रव्यगुणादिवत् ॥

प्रपञ्चः । एवं जातिलिङ्गयोरिति । द्वित्रिलिङ्गादिसहितेति । उपलक्षणमिदं चतुर्भिरपि साहित्यसंभवात् । पञ्चानां हि योगो लिङ्गकारकसंख्याजाति सहितव्यक्त्यभिधानपक्षे भवति । तथा त्रियोगपञ्चयोगेत्युपलक्षणमेव । त्रिभिः साहित्ये चतुर्णां योगादिति षट्कैरिति । जातिव्यक्तिलिङ्गकारकसंख्याः सम्बन्धसमुदाययोश्च[1] यौगपद्यादेक इति ।

ननु नैते पक्षाः परस्परतो निष्कृष्टा प्राक्सिद्धाः । कथं चासिद्धानां पदविषयत्वविचार इत्याशङ्क्याह — एते चात्यन्तनिष्कृष्टा इति । प्रत्यक्षतो घटपटादिवदत्यन्तं निष्कृष्टास्ते न प्रकाशन्ते यथा त्वन्वयव्यतिरेक-

१. °श्चायौगपद्यादेक इति आ० मा० ।

सर्वत्रेन्द्रियलिङ्गाभ्यां भेदः स्तोकोऽवगम्यते ।
शब्देन तु सुसूक्ष्मोऽपि वस्तुभागो विभज्यते ॥
पदात् प्रभृति चैवं या प्रज्ञा ज्ञातुर्विजृम्भते ।
पुष्पिता सा पदार्थेषु वाक्यार्थेषु फलिष्यति ॥
अत्र चाकृतिरेवेति दृढः पक्षोऽयमेकतः ।
इतरे त्वन्यतः सर्वे व्यक्तिपक्षानुयायिनः ॥
व्यक्तौ निराकृतायाञ्च समस्तानां निराक्रिया ।
सुलभेति न सर्वेऽमी भाष्यकारेण दर्शिताः ॥
न चैतस्मान्न सन्त्येव[1] न चैते निष्प्रयोजनाः ।
विकल्पिता हि जिज्ञासोः प्रज्ञाविकसनक्षमाः ॥
दर्शितेष्वपि सर्वेषु विचारः क्रियते द्वयोः ।
का शब्देनाकृतिव्यक्त्योरुच्यते कानुगम्यते ॥

ततश्च—

विचारमुखसिद्ध्यर्थं स्वरूपं तावदेतयोः ।
प्रश्नपूर्वमुपन्यस्य याथात्म्येन निरूप्यते ॥

ननु प्रथमपाद एवाकृतेर्निरूपणादिदानीं प्रश्नोत्तरे मन्दप्रयोजने ।

उच्यते—

सत्यमेवाकृतिः पूर्वं प्रत्यक्षेण निरूपिता ।
संस्थानाशङ्कया त्वत्र सामान्यात्मा निरूप्यते ॥

द्रव्यगुणकर्मणां सामान्यमात्रमाकृतिरिति ।

द्रव्यादीनां च सामान्यं परापरविभागवत् ।
वस्तुत्वं प्रथमं तत्र द्रव्यत्वाद्यपरं तथा ॥

प्रसूतया बुद्ध्या [1]जातिद्रव्यादयो विभज्यन्ते तथैतेऽपि । जातिव्यक्त्यंशविभक्ते हि वस्तुनि सम्भवत्येकैकांशविषयत्वं शब्दशक्तेः सम्भवन्ति च विभक्तयस्सम्बन्धसमुदायान्यतरविशिष्टा[2]न्यतराभिधानपक्षाः । न चैवं वक्तव्यं प्रत्यक्षगृहीतेऽर्थेऽवगतसम्बन्धं पदं यथा प्रत्यक्षं [3]विषयमुपनयतीति । यतः — सर्वत्रेन्द्रियलिङ्गाभ्यामिति । इन्द्रियं हि द्रव्यतत्समवेतक्रियागुणादितत्समवेतसामान्यग्रहसमर्थम् । अतोऽनेकात्मकद्रव्यसंयोगलब्धप्रवृत्तिर्नैकैकमंशं निष्कृष्य बोधयति । तथानुमानमप्यव्यभिचारि यावत्ता-

१. सत्येवेति काशीमुद्रित पाठः ।

१. जातिव्यक्त्यादयो आ० मा० । २. °न्यतरवाच्यतापक्षाः आ० मा० ।

३. °क्षं धियमुपजनयतीति आ० मा० ।

पुनर्वायुत्वतेजस्त्वजलत्वात्मत्वभिन्नता ।
पृथिवीत्वाद् घटत्वं च तद्व्यक्तिषु समाप्यते ।।
वृक्षत्वात् परतश्चेष्टं शिंशपात्वादि केवलम् ।
शरीरत्वाच्च गोवाजिहस्तिपुंस्त्वादि गम्यते ।।
वाजिकत्वादि चाश्वत्वात् कर्कादिस्तु गुणे मतः ।
हस्तित्वाद्भद्रमद्रादिदिङ्नागकुलजातयः ।।
पुंस्त्वाद् ब्राह्मणकौण्डिन्यकठत्वादि समाप्यते ।
तथा गुणत्वकर्मत्वरूपता जन्मतादि यत् ।।
ततः शुक्लादि तद्व्यक्तिगुणेषु प्रतितिष्ठति ।
कर्मणामपि यागत्वहोमत्वादिविभागतः ।।
अपर्यायस्मृतैरुक्तं धातुभिः प्रविभज्यते ।
पुनर्विधानसंख्याख्या गुणप्रकरणान्तरैः ।।

वदनेकमपि यथावगतमदृष्टं बोधयति । शब्दस्त्वन्यथानुपपत्तिक्लृप्तशक्तिरभिदधदनुपपत्तेः । सूक्ष्मवस्तुविभागविषयशक्तिकल्पनयापि इतरेषां लक्षणासिद्धज्ञानत्वेन परिहारात् । तमपि विभजतीति — पुनर्वायुत्वतेजस्त्वेत्यत्र वायुत्वादीनां द्रव्यत्वमवान्तरसामान्यचिन्तोपलक्षणत्वात्तच्चिन्ता विषयत्वाविशेषेण पृथिवीत्वमनस्त्वयोरपि दर्शितत्वात् पृथिवीत्वावान्तरसामान्यानि प्रपञ्चयति — पृथिवीत्वाद् घटत्वं चेति । एवं द्रव्यत्वावान्तर सामान्यं प्रपञ्च्य गुणत्वकर्मत्वे प्रपञ्चयति — तथा गुणत्वकर्मत्वेति । रूपता गुणत्वावान्तरसामान्यं जन्मता कर्मणः । कर्तुरसिद्धस्यात्मलाभफलव्यापारसामान्यमादिशब्देन रसत्वादीनि । [1]यागत्वादिसिद्धस्य कर्तुरन्यात्मलाभफलव्यापारसामान्यम् । उपात्तस्य प्रपञ्चः कर्मणामपीति । अपर्यायस्मृतैर्यजते [2]ददाति जुहोतीत्यादिभिः यागत्वहोमत्वादिविभागत उक्तमिति शब्दान्तरप्रमेयभेदोपन्यासः । तच्च विभागत उक्तम् यागत्वादि प्रत्येकं विभज्यते पुनः श्रुत्यादिभिरित्याह — विभज्यते पुनर्विधानसंख्येति । भेदाभेदोप न्यासश्च भिन्नेषु सामान्यमभिन्नेषु नेति दर्शयितुम् । अत्र च यदि धात्वर्थः क्रियारूपस्तदा मुख्यमेव यागत्वाद्यभिधानम् । अर्थक्रियाहेतुगुणवचनो

१. यागत्वादि इति पू० मी० इत्यत्र नास्ति ।

२. ददातीति पू० मा० इत्यत्र नास्ति ।

अन्ये तु भेदमाचार्याः कर्मणामेव मन्वते ।
[1]अपि वाव्यतिरेकात्स्याद्देशादेरेकरूपता ॥
रूपशब्दाविभागाच्च वक्ष्यत्येतद्धि जैमिनिः ।
एवं प्रपञ्चितं सर्वमर्थसामान्यमाकृतिः ॥
न संस्थानं कुतो ह्येतदात्मादिगुणकर्मसु ।

सर्वेषु हि पार्थिवेषु गवादिघटादिषु संस्थानं भवेत् । अग्नितोयवाय्वाकाशादीनां तु पार्थिवद्रव्यपरिग्रहवशादाकारानुवृत्तिः कल्प्येत, न स्वातन्त्र्येण । दिक्कालात्ममनसां तु गुणकर्मणां च न कथञ्चिदपि संस्थानं सम्भवति । सामान्यमात्रन्तु सर्वस्वविशेषानुवृत्तिरूपं सम्भाव्यते । तस्मादेतदेवाभिधेयाकृतिलक्षणं नावयवरचनासंस्थानाकृतित्वमवकल्पते ।

संस्थानस्य च नाशित्वात् प्रतिव्यक्ति च भेदतः ।
सामान्यव्यवहारित्वं नाकृतित्वेऽवकल्पते ॥
अथ संस्थानसामान्यमाकृतित्वेन गृह्यते ।
अश्वादिष्वपि तुल्यत्वाद् भवेदाकृतिसङ्करः ॥
न चावान्तरसंस्थानं सर्वगोपिण्डवृत्ति यत् ।
अश्वादिभ्यो निर्धृतञ्च गोशब्दालम्बनं भवेत् ॥

धातुस्तदा यागाद्यवच्छिन्नभावनोपलक्षणं यागादिशब्दैरिति । अपि वाव्यतिरेकात् स्यादिति [मी० सू० ६।३।१२।] षष्ठे व्रीहिप्रकृतिकपुरोडाशसाधने यागे विहिते यदि नीवारप्रकृतिना पुरोडाशेनेज्यते तदा किं स एव यागः स्यान्नेति सन्देहे क्रियमाणमाश्रितत्वाद् द्रव्यान्तरे विभागः स्यादिति [मी० सू० ६।३।११।] पूर्वपक्षं कृत्वोक्तम् — अपि वाव्यतिरेकात् स्यात् रूपशब्दाविभागाच्च गोत्ववदैककर्म्यं स्यादिति [मी० सू० ६।३।१२। ] । आश्रये द्रव्ये भिद्यमानेऽपि आश्रितं [1]कर्माविभक्तं तदेव प्रत्यभिजानीमः । न चास्य रूपं किञ्चिद्भिन्नमुपलभामहे नापि शब्दम् । तस्मात्तदेकं कर्म व्यक्तिभेद इव गोत्वमिति ।

अग्नितोयवाय्वाकाशेति । यद्यप्यग्नितो यवागूनामपरिगृहीतानामप्याकारसद्भावः तथापि नानुवृत्तिस्तस्य । तेनानाकारेष्वप्यग्न्यादिशब्दस्य

१. मी० सू० ६।३।१२। १. कर्माव्यतिरिक्तम् शा० मा० ।

तस्य ह्युपलक्षणमालोच्यमानं न जातेरन्यल्लभ्यते। ततश्च जातिरेव सामान्यमिति न्यायेनापद्यते। तेन प्रथमपादे रुचकस्वस्तिकवर्धमानकोदाहरणात् संस्थानाकृत्यभिधानाशङ्काक्षयाददर्शनवदासीदित्येताभ्यां प्रश्नोत्तराभ्यां व्यावर्त्यते। अतश्च द्रव्यगुणकर्मणां यावत् किञ्चित् प्राग् व्यक्तिभ्यः सामान्यं तत्सर्वमाकृतिरेवेत्यभिप्रेत्य मात्रशब्दः प्रयुक्तः। असाधारणविशेषा व्यक्तिरिति।

केचिदाहुः—असाधारणा विशेषा एव व्यक्तिः। विशेषव्यतिरिक्तव्यक्त्यभावादिति।

तत्तु नैवं विशेषेभ्यो व्यक्तिरन्यैव हीष्यते।
खण्डमुण्डादयः सर्वे विशेषत्वेन संमता॥
ते चान्यत्रापि दृश्यन्ते तथा जात्यन्तरेष्वपि।
शाबलेयादिभेदोऽस्ति तदपत्यान्तरेष्वपि॥

खण्डमुण्डादयस्तावदन्या अपि व्यक्तयो भवन्त्येव गवयमहिषादिव्यक्तयश्च। शाबलेयोऽपि यथैकस्तथान्योऽपि यः शबलापत्यत्वेन गम्यते स सर्वः शाबलेयः। एतच्चोभयवर्णनिमित्तं वा यादृच्छिकं वा नामान्यत्रापि विनियोगवशाद् वर्तत एव तदपत्ये च शाबलेय इत्यसाधारणव्यपदेशानुपपत्तिः। विशेषव्यक्तिशब्दयोर्बहुवचनैकवचनान्तयोः सामानाधिकरण्यप्रयोगवचनभेदाददोषः। तस्मादसाधारणा विशेषा यस्यां सा व्यक्तिरित्येवं व्याख्येयम्। ननु पूर्वोक्तेन न्यायेन खण्डादीनामपि बहुव्यक्तिसाधारण्याद् व्यक्तिव्यतिरिक्तानां चान्येषां केवलैकैकव्यक्तिगतानां विशेषाणामसंभवाद् बहुव्रीहिरप्यनुपपन्नः। उच्यते। नैव विशेषाणां प्रत्येकमसाधारणत्वमाश्रित्य व्यक्तिविशेषणत्वेनोपादानम्। कथं तर्हि साधारणरूपाणामप्येकद्वित्रादिभेदेन क्वचिदुपलब्धानां यदेकत्र पिण्डीकृतानां ग्रहणं तदपेक्षमसाधारणविशेषत्वाभिधानम्।

**वृत्तेर्नाकारवचनत्वं तस्य। एतच्चोभयवर्णनिमित्तं शबलेति।**

बहुवचनैकवचनान्तयोरिति। न च समूहवचनस्य व्यक्तिशब्दस्य सहकारा वनमितिवत् समूहसमूहिनोरभेदोपचारात् सामानाधिकरण्येन वचनभेददोषः परिहर्तव्यः। यत्र हि समूहिभ्यः समूहस्याभेदः प्रतिपाद्यो भवति तत्रैवं स्यात्। अत्र हि व्यक्तिमात्रवाच्यता बुभुत्सायां [1]यद्व्यक्तिशब्देनोपादीयते रूपं तदुद्दिश्य व्यक्तिशब्दो विधेयः।

१. यद् विशेषशब्देन आ० मा०।

प्रविभक्ता हि ये दृष्टा दृश्यन्ते संहताः पुनः ।
पिण्डासाधारणत्वेन तैर्व्यक्तिरुपलक्ष्यते ॥

न चैकस्यां व्यक्तौ ये समुदिता दृष्टास्त एव व्यक्त्यन्तरेऽप्यन्यूनानतिरिक्ता दृश्यन्ते । यं एवादृष्टपूर्वं स्तस्मिन्समुदाये संप्रति दृश्यते स एवासाधारणतामापादयति । अनन्तभेदास्वपि व्यक्तिषु नात्यन्तापूर्वविशेषणोपलक्षणोपादानं किञ्चिदुत्कर्षापकर्षमात्रेण च सर्वत्रासाधाणोपलक्षणलाभात् परसामान्यापेक्षया च सर्वाण्येवावान्तरसामान्यानि विशेषव्यपदेशं प्राप्नुवन्ति । संघातावस्थायां च व्यक्तिविशेषणात्वात्तेषु विशेषशब्दः । एतच्च व्यक्तेर्विशेषाणामन्यत्वमुपरिष्टाद् भाष्यकारोऽपि वक्ष्यत्येव, योऽर्थः सामान्यस्य विशेषाणां चाश्रयः सा व्यक्तिरिति ।

तत्र केचिद् गोत्वादिषु विशेषत्वमङ्गीकृत्य सामान्यवाचिना शब्देनानभिधेयत्वाद् यदेव महासामान्यं सत्तावस्तुभावशब्दाभिधेयं तदेव शब्दस्वरूपव्यवच्छिन्नं वा गोसत्ताख्यमाकृत्यभिधानपक्षे वाच्यमिति मन्यन्ते । यथाहुः—

अस्त्यर्थः सर्वशब्दानामिति प्रत्याय्यलक्षणम् ।
अपूर्वदेवतास्वर्गैः सममाहुर्गवादिषु ॥ इति ।
तत्तु कक्ष्याविभागेन सामान्यानां निरूपणात् ।
अयुक्तं न गवादीनां तत्र वाचकशक्तता ॥

प्रतिनियतार्थविषया हि शब्दानां वाचकशक्तिरर्थापत्त्या गम्यते । तत्रानन्तरावान्तरसामान्यवचनानां द्रव्यगुणकर्मशब्दानामेव तावदसङ्कीर्णार्थत्वात् सत्तार्थत्वमनुपपन्नं किमुत दूरान्तरितार्थगवादिशब्दानाम् ।

सत्तामेते वदन्तश्च न शुद्धां सविशेषणाम् ।
वदन्तीत्यभिधातुं हि शक्यं द्वेधाप्यसम्भवात् ॥

शुद्धवचनत्वे तावत् सर्वेषामेकार्थप्रत्यायनात् पर्यायत्वप्रसङ्गः । पुनरुक्तत्वाच्चास्तिशब्दप्रयोगानुपपत्तिः ।

तत्र समूहिनमुद्दिश्य व्यक्तिशब्दो विधीयमानस्तेषामेव वाचक आपद्यते इति । बहुवचनान्तः स्यादिति । अस्त्यर्थः सर्वशब्दानामिति । अपूर्वदेवतास्वर्गेषु वस्त्वन्तरव्यवच्छिन्नस्य रूपस्य प्रमाणान्तरागोचरत्वादस्ति किञ्चिदित्येवमस्तित्वेऽवधारिते पदं प्रवृत्तम् तावन्मात्रमवलम्बत इति किल [1]सिद्धान्तेऽपूर्वदेवतास्वर्गपदैः समं गवादिपदेषु प्रत्याय्यलक्षणमस्तीत्ययमर्थः सर्वशब्दाना-

१. सिद्धं तैरपूर्वं० आ० मा० ।

गौर्नास्तीति प्रयोगश्च विरोधान्नावकल्पते ।
न हि सत्तैव नास्तीति कथञ्चित् सम्प्रतीयते ।।

देशकालाद्यपेक्षायामपि नैव सत्तायां नास्तित्वमभिधातुं युक्तम् । विभुत्वनित्यत्वाभ्यां सर्वदेशकालव्यापित्वात् ।

रूढिशब्दश्च नैवायं लोकदृष्टया प्रतीयते ।
तेन द्रव्यादिसामान्यं सत्तेत्येतन्न युज्यते ।।

य एव ह्यस्तिशब्देन द्वितीयो भावविकार उच्यते । जायमानविपरिणामाद्यवस्थसर्ववस्तुषु विनश्यत्तापर्यन्तेषु वस्त्वाकृतिप्रतिपत्तिर्दृश्यते । तेन यदि नाम महासामान्यमभिधेयं प्रतिज्ञायते ततो वस्त्वर्थः सर्वशब्दानामिति प्रत्याय्यलक्षणमिति कामं वक्तव्यं नास्त्यर्थ इति । न चावयवार्थपरित्यागेन[1] सच्छब्दसत्ताशब्दौ वर्तेते इति भवच्छब्दवदेवास्तीति सद्भावः सत्तेति न तु वैशेषिकपरिभाषया यतो द्रव्यगुणकर्मसु सदिति प्रतीतिः सा सत्तेति । एवंलक्षणा जातिः प्रतिपत्तव्या ।

मितीदृशमाहुरिति । विभुत्वनित्यताभ्यामिति । सत्तात्माकाशादीनां विभुत्वात् विभुत्वं सत्ताया इति । किं नाम सत्ता युज्यत इत्याशङ्कायामिदमाह — य एव ह्यस्तिशब्देनेति । सैव सत्ता युज्यत इत्याकांक्षासमाप्तिः । अथ वा य एव द्वितीयो [1]भावविकारः स एवास्ति शब्देनोच्यत इति । तच्छब्दो वाच्यो व्यवहितसम्बन्धश्च । हि शब्दो हेतौ, यस्मादेवं तस्मादस्त्यर्थयोगात् प्रवृत्तेन सत्ताशब्देन द्रव्यादिसामान्यमभिधीयत इति न युज्यत इति ।

ननु वैशेषिकैः सदिति यतो द्रव्यगुणकर्मसु [2]सा सत्तेत्येकबुद्धयालम्बनं सामान्यमुपलक्ष्य सा सत्तेति । तत्र सत्ताशब्दः प्रयुक्तस्ततोऽवगच्छामस्तत्सामान्यम् सत्ताशब्दवाच्यमित्याशङ्क्य सत्ताशब्दार्थमुपवर्णयन् दूषयति — न चावयवार्थत्यागेनेति । यस्माल्लोकदृष्टया नावयवार्थपरित्यागेन रूढया सच्छब्द [3]सत्ताशब्दार्थो वर्त्तते तस्माद् यथाभवतीति धात्वर्थकर्तरि भवच्छब्दः । एवमस्तीति सत् सतो भावः सत्ता, भाव इति सम्बन्ध्यपेक्षं सन्निहितेन सता विशेष्यते । यत एवं सत्ताशब्दप्रवृत्तिरतो वैशेषिकप्रयोगो भ्रान्तिप्रसूतो नादर्तव्यः । यद्यपि परिभाषार्थं सूत्रं न भवति तथाप्यर्थान्तरे

---

१. नचावयवार्थं त्यागेनेति प्रतीकमजिता परिगृह्णाति ।

१. भवति विकारः सोऽस्तिशब्देन आ० मा० ।　　२. सत्तेति आ० मा० ।

३. सत्ताशब्दो प्रवर्तते अतो यथेति आ० मा० ।

सेयमव्ययशब्देन वस्तुपर्यायवाचिना ।
भवत्साधारणार्थेन प्रसिद्धिरुपपादिता ॥
अस्तित्वमस्तितेत्येवं दृश्येते प्रत्ययौ यतः ।
स वस्तुवचनः शब्द आख्यातप्रतिरूपकः ॥
अप्रातिपदिकत्वाद्धि नाख्यातात्त्वतलौ स्मृतौ ।
अस्तिक्षीरा समासश्च तेन सद्वाचिनेष्यते ॥

अस्तिक्षीरा गौरिति तिङन्तसमासत्वेनानुपसंख्यानादवश्यंभाविप्रत्ययलक्षणद्वारसुबन्तत्वयोग्याव्ययपदेन सह क्षीराशब्दस्यान्यपदार्थे बहुव्रीहिरभ्युपगन्तव्यः । तत्र चायं सदर्थवचनः सक्षीरा गौरिति प्रत्ययोत्पादात् । ततश्च वस्तुनि सति च प्रयुज्यमानमस्तिशब्दमुपलभ्य तदर्थानुसरणप्रत्यासन्नं सच्छब्दं च देवात्तलिति [पा० सू० ५।४।२७] च स्वार्थिकं देव एव देवतेतिवत्तल-

शब्दप्रवृत्त्युपपादनफलत्वात् परिभाषाभिधानम् । द्रव्यादिवस्तुसामान्ये वस्तुत्वप्रत्यय एव निरूढिवशेन सदित्युपलक्ष्यते । सदिति यतो द्रव्यगुणकर्मसु इति । भ्रान्तिबीजमाह — सेयमव्ययशब्देनेति । वस्त्विति शब्दः पर्यायो यस्य वस्तुत्वस्य [1]तदाश्रयोऽस्तीत्यव्ययः शब्दस्तेन भवत् साधारणार्थेन सच्छब्देन मिलित्वा प्रसिद्धिरियमुपपादिता यथोपपद्यते तद्दर्शयिष्यति । भवत्साधारणार्थत्वं च सच्छब्दस्य धात्वर्थभेदेऽपि धात्वर्थोपरक्तकर्तृप्रतिपादनसाम्येनेति । अस्ति वस्तुवचनोऽस्तिशब्दोऽव्यय इति व्युत्पादयति — अस्तित्वमस्तितेत्येवमिति । सद्वाचिनेष्यत इति । सदर्थवचन इति । सक्षीरेति च [2]वस्तुत्व एव *वार्त्तिककारीयः* सच्छब्दप्रयोगः । कारणमत्र तदुक्तानुगमादरादित्यत्र वक्ष्यत इति । शब्दद्वयेन यथेयं [3]प्रतीतिरुपपद्यते तद्दर्शयति — ततश्च वस्तुनि सतीति । वस्तुनि सत्यस्ति शब्दः प्रयुज्यते, अस्ति शब्दानुसारेण च सच्छब्दः प्रवर्तते । तेनासावस्ति शब्दस्यादूरान्तरार्थः प्रत्यासन्नस्तावेतावीदृशौ शब्दावुपलभ्यान्य एवाव्ययोऽस्ति शब्दोऽन्यवचनोऽन्यस्य चाख्याातार्थस्यार्थमनुसरति सच्छब्द इति । अविज्ञाय तार्किकैः परिकल्पितं यदस्ति शब्दवाच्यं महासामान्यं सैव सच्छब्दवाच्या सत्तेति । तत्प्रत्ययातिरेकेऽप्यभिन्नार्थतामुपपादयितुमुक्तम् —स्वार्थिकं देव एव देवतेतिवत्तलमुपलभ्येति ।

---

१. तद्वाचीत्यव्ययः आ० मा० । २. वस्तुवचने इति आ० मा० ।
३. प्रसिद्धिरुपपाद्यते आ० मा० ।

मिहाप्यस्ति धातुवाच्यार्थविशिष्टकर्तृप्रतीतिमनङ्गीकृत्य शुद्धधात्वर्थमात्रवचनादेव सच्छब्दसत्ताशब्दौ गृहीत्वैवं तार्किकैः कल्पितं सच्छब्दवाच्या सत्ता महासामान्य-मिति। तदुक्तान्तगमनेऽनादराच्च[1] पदवाक्यविद्भिरप्युपेक्षितं प्रसिद्धमिवेमामवस्थां प्राप्तं येन गवादिशब्दवाच्यत्वेनापि संभाव्यते।

न त्वर्थाद् गम्यमानस्य वस्तुत्वस्यापि वाच्यता।
धर्मान्तरत्ववृत्तेस्तु सत्तायाः कुत एव सा॥
वस्तुशब्दो हि रूढित्वाद्व्यक्तिजात्यन्तराश्रितम्।
सामान्यं यद् ब्रवीत्येतद्गम्यतेऽर्थैर्गवादिभिः॥
शुद्धाभिधानपक्षस्य दुष्टत्वात्तैर्विशेषितम्।
महासामान्यमिष्टं चेद्वाच्यं तदपि दुर्लभम्॥

यदेवाकृतिविशिष्टव्यक्त्यभिधानपक्षे व्यक्तिविशिष्टाकृतिपक्षे वा निराकरण-कारणं तदत्रापि सुलभम्। विशेषणस्य पूर्वतराभिधानप्रसङ्गात्।

गोसत्तां चापि गोशब्दो यदि नाम ब्रवीत्ययम्॥
गोजात्या वा विशिष्टां तां वदेद् व्यक्तिभिरेव वा।
तत्र—गोत्वजातिविशिष्टा चेत् सत्तानेनाभिधीयते॥
उक्ताद्विशेषणादेव तत्सिद्धेः सा किमुच्यते।

विशेषणमनभिधाय तद्विशिष्टविशेष्याभिधानसम्भवाद्विशेषणस्य च विशेष्येणात्यन्तसम्बन्धात् पूर्वतराभिहितविशेषणभूतगोत्वसम्बन्धादेव सत्तावगम-सिद्धेर्न तत्राभिधानशक्तिकल्पनायामर्थापत्तिरप्यन्यथाप्युपपद्यमानफलत्वप्रतिहता सती न प्रवर्त्तते। तथा व्यक्तिविशिष्टसत्ताभिधानेऽप्येष एव निराकरणहेतुः। अनित्यसम्बन्धजानानन्तशब्दशक्तिव्यक्त्यभिधानपूर्वकैकसत्ताभिधानकल्पनायाश्च केवलव्यक्त्यभिधानपक्षवदनुपपत्तिः।

यत्तु अपूर्वदेवतास्वर्गैः सममाहुरिति। तत्राभिधीयते—

नैवापूर्वादिशब्दानां सत्ता वाच्येत्यवस्थितम्।
विशेषानेव तेऽप्याहुरर्थापत्त्यादिकल्पितान्॥

नन्वेवमस्तिशब्दानुपात्तकर्तृव्यतिरेकं कृदन्तत्वात् सत् सत्ताशब्दयोः पश्यन् कथं तुल्यार्थतामाहेत्यत आह — इहाप्यस्ति धातुवाच्येति।

---

१. तदुक्तान्तमननानादराच्चेति काशीमुद्रितपाठः

केचिच्छ्रुतार्थापत्त्या केचिद् वाक्यशेषवाक्यान्तरपर्युपस्थापितार्थविशेषवचना एव सन्तोऽत्यन्ताव्यभिचारिस्वार्थद्वारेण सत्तापदार्थो व्यभिचरतीति लक्षणयैव तेभ्यः सत्ताप्रतीतिः ।

कार्यसामर्थ्यमि[1]न्द्रत्वं निर्मिश्रसुखसङ्गतिः ।
सामान्येनाप्यपूर्वादि सत्तातोऽन्यत्तु लभ्यते ॥

सर्वपदार्थानामिव[2] कार्यार्थापत्तिगम्यानि सामर्थ्यानि सन्ति यागादिजनितं च पुंसां फलप्राप्तिसामर्थ्यमपूर्वशब्दवाच्यं यागानुष्ठानात् पूर्वमभूतमनुष्ठानोत्तरकालं चापूर्वं जायत इति यौगिकत्वादेवापूर्वशब्दाभिधानं सर्वत्र लभ्यते । तथा दीव्यन्ति द्योतन्ते वा चन्द्रादित्याग्निग्रहनक्षत्रतारकादिरूपेण वायवश्च सततगत्या स्तूयन्ते सर्वैर्मन्त्रैरिति देवाः सुज्ञानशब्दसंबन्धा विशेषरूपैरेवेति न सत्तागोचरत्वं प्रतिपद्यन्ते । तथा स्वर्गशब्देनापि नक्षत्रदेशो वा वैदिकप्रवादपौराणिकयाज्ञिकदर्शनेनोच्यते । यथा हि वेदे 'ये हि जनाः पुण्यकृतः स्वर्गं लोकं यन्ति तेषामेतानि ज्योतींषि नक्षत्राणि तथा चैष ज्योतिष्मन्तं पुण्यलोकं जयति' इति । यदि

केचिच्छ्रुतार्थापत्त्येति । अत्र पर्युपस्थापितस्यार्थस्य वचना इति समासान्निष्कृष्टस्य संबन्ध इति । कार्यसामर्थ्यमिन्द्रत्वमिति । अपूर्वादिः शब्दस्याभिधेयम् सामान्यात्मनापि[*] कार्यसामर्थ्यमिन्द्रत्वं निर्मिश्रसुखसङ्गतिः सत्तातोऽन्यत्र सत्तां वर्जयित्वा लभ्यते । यद्यपि देवताशब्दस्य सत्तावाचित्वं परेणोदाहृतं तथापि तुल्यन्यायतयेन्द्रादिशब्दानामप्युदाहृतमेवेति । इन्द्रशब्दार्थः सत्ताव्यतिरेकेणैश्वर्यसामान्यं [1]प्रदर्श्यते । सर्वपदार्थानामेवेति । नानेनानन्तरश्लोकव्याख्या क्रियते । किन्तु श्लोकद्वयप्रतिपाद्योऽर्थः प्रपञ्च्यत इति । अनुष्ठानात् पूर्वमिति । पूर्वशब्दस्यार्थावध्यपेक्षामात्रप्रवृत्तस्य विवक्षावशेनानुष्ठानमवधिः । [2]तदवधिः कालान्वयश्च क्रियामन्तर्भाव्य । तत्र क्रियाविशेषानुपादानात् भवतिक्रियान्तर्भवति । सा यदि समासावयवेन नञा संबध्यते तदा पूर्वं न भूतमित्यपूर्वम् अर्थादुत्तरकालता । अथ नञा विशिष्टेन पूर्वशब्देनोत्तर[3]कालतामादाय तेन वस्तु व्यवच्छेत्तुं भवनमन्तर्भाव्यते—तदा पूर्वं जायत इति । यौगिकत्वादिति ।

१. ०मिन्द्रादि मुद्रितपुस्तकपाठः ।
२. सर्वपदार्थानामेवेति प्रतीकमिहाजिता परिगृह्णाति ।

१. प्रतीयते आ० मा० । २. तदवधिरिति पू० मा० इत्यत्र नास्ति ।
३. ०कालमुपादीयते आ० मा० ।

वेतिहासपुराणोपपन्नं मेरुपृष्ठम् । अथ वान्वयव्यतिरेकाभ्यां[1] विभक्तं केवलमेव सुखं यत्संवत्सरादिष्वनुभूयमानं दुःखसाधनशीतोष्णक्षुत्पिपासादिसमस्तद्वन्द्व-रहितार्थापत्तिसिद्धदेशान्तरानुभवनीयं, तच्च यद्यपि तादृशमदृष्टपूर्वं तथापि मिश्रानुभवादेव विवेकेनोद्धृत्य स्वर्गशब्दार्थत्वेन ज्ञायमानं सत्तां गमयतीति न तदभिधानमपेक्ष्यते ।

तेनापूर्वादिशब्दार्थाः सम्यक् सत्यं गवादिभिः ।
स्वशब्दाभिहिताः सन्तः सत्तां लक्षयितुं क्षमाः ।।
अतश्च नैव गोशब्दो गोसत्तामभिधास्यति ।
गोत्वाख्याकृतिवाच्यत्वसन्देहात्तु विचार्यते ।।
कुतः संशय इत्येतत् कार्ययोग्यार्थनिर्णयात् ।

विशेषाभिधायित्वं दर्शयति — अथ वान्वयव्यतिरेकविभक्तमिति । दुःखाभावेऽप्यन्वयाद् दुःखान्वयेऽपि व्यतिरेकात् सुखं दुःखाद् विभक्तं तत् केवलमेव दुःखेनासंभिन्नं स्वर्गशब्देनोच्यत इति पूर्वस्यानुषङ्गः ।

[1]ननु न सुखस्य कैवल्यं सम्भवति । नानादुःखसाधनोपसृष्टत्वाज्जन्तूनामित्याशङ्क्योपपादयति — यत्सम्वत्सरादिष्विति । संवत्सरं च स्वर्गं भुंक्त इत्यत्यन्तसंयोगः शास्त्रमेयो दुःखेनासम्भेदं बोधयन् न सन्निहित-दुःखसाधने देशे शरीरग्रहणमात्मनोऽर्थापत्त्या बोधयति । यत्र तत्सुखमेव केवलमनुभवनीयम् ।

ननु तथाविधं तत्प्रमाणान्तरेणासिद्धं कथं स्वर्गपदेन सम्बन्धग्रहणा-पेक्षिणोच्यते । तेन चानुक्तम् कथं स्वर्गकामवाक्ये साध्यत[2]यावगम्यते येन देशविशेषमाक्षिपेदित्याशङ्कते — तच्च यद्यपि तादृशमिति । परिहरति — तथापि मिश्रानुभवादेवेति । न वयं यागादिसाध्य एव सुखे सम्बन्धग्रहणं वदामः किन्तु लोक एवान्वयव्यतिरेकविभक्ते सुखे गृहीतसम्बन्धः स्वर्गशब्दो वैदिकप्रयोगे संवत्सरादिसंबन्धात् [3]दुःखासंभिन्ने विशिष्टदेशभोग्ये वर्तते इति । कार्ययोग्यार्थनिर्णयादिति । कार्ययोग्योऽर्थो व्यक्तिरूप इति निर्णयात् । अथ वा कार्ययोग्यो यः स शब्दस्यार्थ इति निर्णयादिति ।

---

१. अन्वयव्यतिरेकविभक्तमिति प्रतीकमिहाजिता परिगृह्णाति ।

१. ननु सुखस्यापि आ० मा । २. °यावगम्यते आ० मा० ।

३. दुःखेनासंभिन्ने आ० मा० ।

व्यक्तिमात्रपदार्थत्वं मन्यमानेन चोद्यते ॥
उच्यते कार्ययोगित्वाद् गम्यते व्यक्तिवाच्यता ।
शब्दशक्त्यनुरोधात्तु नाकृतेर्व्यतिरिच्यते ॥
शक्तिकार्यविसंवादादेव शब्दार्थगोचरात् ।
किं सामञ्जसमित्येवं नाविचार्यावधार्यते ॥

किं तावत्प्राप्तम्— प्रयोगचोदनाभावाद् व्यक्तिर्वाच्या न तूभयम् ।
अर्थैकत्वं यतो युक्तमविभागाद् द्वयोर्गतिः ॥
नित्यं यथैव शब्दानामाम्नातानां प्रयोजने ।
अर्थप्रत्यायनार्थत्वात्तद्वशेनावधारणा ॥
एवं सर्वपदार्थानां वाक्यार्थप्रत्ययाङ्गता ।
यथा सिध्येत्तथा कार्यं तेषां रूपनिरूपणात् ॥
आकृतिर्यदि शब्दार्थः कस्य स्युः प्रोक्षणादयः ।
केन चेज्येत न त्याग आकृतेरुपपद्यते ॥
अमूर्ता ह्याकृतिर्नित्या नावघातादिभाजनी ।
तद्विधिः प्रतिषेधो वा तेनास्या नावकल्पते ॥

'व्रीहीनवहन्ति' 'पशुं संज्ञपयति' 'सोममभिषुणोति' 'पावयति' 'सोमेन पशुना व्रीहिभिश्च यजते' इति यावन्त एवमादयो विनाशिमूर्तिमद्विषयाः संस्काराः प्रयोजनसिद्ध्यर्था वा तेषां प्रयोगचोदनाया आकृतावभावाद् व्यक्तौ तु भावात् कार्यप्रधानत्वाच्च पदार्थप्रतीतेर्विध्यधीनत्वाच्च सर्वपुरुषचेष्टानामवश्यं

नित्यं यथैव शब्दानामिति । विशिष्टार्थप्रतीतिरूपे प्रयोजने शब्दानामाम्नातानां पदार्थप्रतीतिमूलत्वात् विशिष्टार्थप्रतीतेः पदार्थप्रतिपादनमवान्तरव्यापारो भवति । [1]तदेतदर्था एव यथा तदन्वयव्यतिरेकानुविधानभेदेन वाक्यप्रयोग एव विभज्यावधार्यन्ते । भिन्नेषु [2]वाक्यार्थेष्वेकस्य पदार्थस्यानुवृत्तिर्यावता शब्दभागेन प्रतिपाद्यस्योपपाद्यते तावदेकं पदमिति । एवं स वाक्यार्थो येनार्थभागेन पदप्रतिपादितेन [3]सम्बध्यते स एव पदार्थ इत्यवधारणीयमिति । यद्यप्याकृतौ प्रयोगचोदनानुपपत्तिः तथापि सा किमिति पदार्थो न भवति यथा प्रमाणं हि वस्त्ववधार्यते न यथा

१. तेन तदर्था यथा आ० मा० । २. 'वाक्येषु एतस्यानुवृत्तिः आ० मा० । ३. संपद्यते आ० मा० ।

विधिविषयत्वयान्यवाक्यार्थपूरणसमर्थपदार्थकल्पनमङ्गीकर्तव्यम् । तथा यदपि 'ब्राह्मणो न हन्तव्यः' 'न कलञ्जं भक्षयितव्यम्' इत्यादिप्रतिषेधविधानं तदपि प्राप्तिपूर्वकत्वेन[1] सापेक्षत्वाद् व्यक्तौ च प्राप्तिसंभवादाकृतेश्चानधिकारादसत्यां प्राप्तावनर्थकमेव स्यात् । तस्माद् येन शब्दार्थेन प्रयोगचोदनानां भावो भवति स एवाभ्युपगन्तुं न्याय्यो न तत्त्वज्ञानमात्रदृष्टसिद्ध्यर्थपदार्थकल्पना युक्तेति । स्यादेतत्, व्यक्तिसंभवत्प्रयोगचोदनासु व्यक्त्यर्थस्ततोऽन्यत्राकृत्यर्थ एव भविष्यतीति । तदसत्, न्यायेन हि स्थितमेकस्य शब्दस्यार्थैक्यमनवस्थितसंबन्धानेकादृष्टवाचकशक्तिकल्पनविकल्पदोषप्रसङ्गात् । संबद्धानां चार्थानामन्यतराभिधानेनैवेतरत्र प्रतिपत्तिसिद्धेः । कथं तर्ह्याकृतिप्रत्यय इति चेदत आह—अविभागादिति । यतस्तु नित्यमेव व्यक्त्याकृत्योरविभागस्तस्माद् व्यक्तिरभिहिता सती शक्नोत्येवाकृतिं गमयितुम् । तदुक्तं तद्भूताधिकरणे, यस्य तु यदस्य योऽर्थोऽभिधेयत्वेनाश्रितस्तस्य तत्परिहारासम्भवादवश्यं तत्रस्थस्यैवार्थान्तरं लाक्षणिकत्वेनाभ्युपगन्तव्यमिति ।

प्रयोजनमत आह — कार्यप्रधानत्वाच्चेति । प्रमाणमेव सम्बन्धग्रहणकाले कार्यप्रधानं प्रयोगचोदनार्थं कार्यं तदौपयिकं [1]पदस्यार्थं प्रतिपादयति — यत इति । कथमेतदेवेति चेदत आह — विध्यधीनत्वात् [सर्व] पुरुषचेष्टानामिति । चेष्टया हि प्रवृत्तिसमर्थं प्रत्ययमनुमाय शब्दस्य तत् सम्बन्धो गृह्यते विशिष्टभावनानुष्ठानप्रत्ययश्च प्रवृत्तिसमर्थः । स च विधिपर्यायात् प्रयोगवाक्यात् । अतः प्रयोगचोदनार्थो [2]पपादकेष्वेवार्थेषु शब्दस्य सम्बन्धग्रहणम् । वैदिकप्रयोगचोदनोदाहरणं लोकस्य तासु संप्रतिपत्तेः । यथा सम्बन्धग्रहणमेव हि तासामर्थं लोकोऽनुजानाति । तेन ताभिः सम्बन्धग्रहणविषयप्रयोगचोदनोपलक्षणमेव क्रियते । अन्यथा तु

स्यात् प्रयोजनवान् वेदे ज्ञानोपायस्तु दुर्लभः ।

इत्येतच्चोद्यमापद्यत इति । न तत्त्वज्ञानमात्रेति । प्रयोगचोदनार्थानुष्ठानासम्भवे हि वेदप्रामाण्यमभ्युपगच्छद्भिः तदर्थंतत्त्वज्ञानमेवादृष्टायेत्यभ्युपगन्तव्यम् । यथा मनो ब्रह्म प्राणो ब्रह्मेति ॥३०॥

---

१. पूर्वकत्वं काशीमुद्रितपाठः ।

१. पदं स्वार्थं आ० मा० । २. °र्थौपयिकार्थेषु आ० मा० ।

अपि चाकृतिपदार्थकस्य व्यक्तिषु साधारणानैकान्तिकत्वान्निर्णयो न स्यात् । व्यक्तिपदार्थकस्य पुनरत्यन्तान्तर्भूताकृतिनिश्चयसिद्धेर्न शब्दव्यापारकल्पनोपपत्तिः । तस्माद् व्यक्तिरेव शब्दार्थो, नाकृतिः । न च विकल्पसमुच्चयसम्बन्धसमुदायान्यतरविशिष्टान्यतराभिधानपक्षाः सम्भवन्त्यविभागादेव सर्वेषामपि ज्ञानसिद्धेः ॥३०॥

अपि चाद्रव्यशब्दत्वाद् व्यक्तेरेवाभिधेयता ।
सामानाधिकरण्यं हि नाकृत्यर्थगुणार्थयोः ॥

गोशब्दादीनामाकृतिवचनत्वे गौः शुक्लः, 'अरुणया पिङ्गाक्ष्यैकहायन्या गवा क्रीणाति' इति, 'षड् गावो देयाः', 'एकां गां दक्षिणां दद्यात्' इत्येवमादिषु प्रयोगेषु सर्वेषां जातिगुणमात्रवचनत्वात् सामानाधिकरण्यं न प्राप्नोति ।

गोत्वस्य न हि संबन्धः शुक्लत्वारुणिमादिभिः ।
येन षठ्यपि तावत् स्यात् कुतस्त्वेकार्थवृत्तिता ॥
न हि गोत्वाकृतिः शुक्ला नारुणा नापि षड्गुणा ।
व्यक्तिस्त्वेवंगुणा तस्माद् व्यक्तेरेवाभिधेयता ॥
मम हि व्यक्तिशब्दत्वात् सिध्यत्येकार्थवृत्तिता ।
तव त्वद्रव्यशब्दत्वाद् भवेद् भेदो गवाश्ववत् ॥

जातिगुणविशिष्टव्यक्तिवचनत्वेन शुद्धव्यक्तिवचनत्वेन वा प्रत्यक्षे भवति सामानाधिकरण्यं, तच्च तत्र द्रव्यम् । एवंविधमपि समानद्रव्यशब्दत्वं त्वत्पक्षे न

अपि चाद्रव्यशब्दत्वादिति । जात्यभिधानपक्षेऽद्रव्यशब्दत्वापत्तेर्व्यक्तेरेवाभिधेयता । यदि नाम द्रव्यशब्दता भूता तथापि को दोष इत्यत आह — सामानाधिकरण्यं हीति । कथं जातिविशिष्टव्यक्तिवचनत्वेन गुणविशिष्ट[1]गुणिवचनेन सामानाधिकरण्यमित्यत्राह — तच्च तत्र द्रव्यमिति । च शब्दो हेतावधारणे वा । यस्माद् विशेषणभेदेऽपि यदेकत्र विशेष्यम् तदेवेतरत्रापीति । भवत्पक्षे त्वेवंविधमपि प्रधानांशभेदकृतमपि सामानाधिकरण्यं नास्तीत्यद्रव्यशब्दत्वादिति नञा प्रधानभूतद्रव्यवाचित्वं निषेधतोच्यत इत्याह—एवं विधमपीति । भाष्यकारेणेदं सूत्रमेवं व्याख्यातम् ।

१. व्यक्तिवचनेन आ० मा० ।

स्यादिति नञा तदभावप्रसङ्गं दर्शयति । यत्तु भाष्यकारो विपरीतार्थेन द्रव्यशब्देनैव तदाश्रयगुणलक्षणया नञश्चासमर्थसमासमङ्गीकृत्य न द्रव्याश्रयवचनः शब्दो भवेत् आकृतिवादिन इत्याह । तदतिक्लिष्टं व्यधिकरणनिर्दिष्टगुणप्रयोगार्हं चेत्युपेक्षितव्यम् । तत्रापि चैवमक्षरार्थमात्रसंभवयोजना । द्रव्याश्रयस्य गुणस्य यः शब्दोऽद्रव्यशब्दः स आकृतेर्निर्गुणत्वादेकवाक्यसंबन्धं गोत्वं शुक्लमित्यादिवन्न प्रतिपद्यते । सामानाधिकरण्यचोद्यं तु स्वपक्षेऽप्यविशेषात्तदानीमप्यनुपपन्नमेवेति पूर्वैव व्याख्या कर्तव्या ॥३०—३१॥

किञ्च नैवेष्टकाभिराकृतिसम्पादनमभ्युपगतं यतः स्वभावात् स्नाय्वाद्या-

न द्रव्याश्रयवचनः शब्दो [1]भवेदाकृतिवादिन एका गौर्देयेति । तत्र द्रव्यशब्देन द्रव्याश्रयस्य गुणस्योपादानं लक्षणया स्यात् । सापि सर्वत्र गुणशब्देन द्रव्यलक्षणायाः प्रसिद्धत्वात् विपरीतप्रयोजनेन द्रव्यशब्देनैव गुणस्येत्यत्यन्तक्लिष्टा । तथा न भवत्यर्थस्य संबद्धस्य द्रव्यशब्देन नञः समासोपादानं क्लिष्टम् । किञ्च यत्र द्रव्यान्निष्कृष्य गुणमुपादत्ते गुणशब्दस्तत्रासौ द्रव्याश्रयवचनस्तत्रैव चेदं चोदनीयम्, नैका देयेति सामानाधिकरण्यप्रयोगे । तस्मादुपेक्षणीयमिदं व्याख्यानमित्याह — यत्तु भाष्यकार इति । *भाष्यार्थ*स्तु क्लिष्टोऽप्य[2]क्षरैरेवंविध उपात्त इत्याह — तत्रापि चैवमिति । उदाहरणं तु क्लेशेनापि दुर्योजमित्याह — सामानाधिकारण्यचोद्यंत्विति । यदा हि गुणशब्दस्य गुणव्यक्तिवचनत्वं स्वपक्षेऽङ्गीकृत्य पूर्वपक्षवादी द्रव्याश्रयवचनस्य सतो गोशब्देनान्वयं निवारयति तदा परपक्षवत् स्वपक्षेऽपि सामानाधिकरण्याभावः । तस्मात् पूर्वैव व्याख्या [3]कर्तव्या । गुणोपलक्षितद्रव्यवचनत्वमेव गुणशब्दस्य पूर्वपक्षवाद्यभिमतम् । तेनोभयोर्जातिगुणशब्दयोर्द्रव्य[4]वचनत्वात् सामानाधिकरण्यम् । सिद्धान्ते त्वद्रव्यशब्दत्वान्नेति ॥३१॥ ।

एवमेतद् *भाष्यं* दूषयित्वा पूर्वपक्ष*भाष्य*शेषं निगदव्याख्यातत्वादुपेक्ष्य दुष्टत्वसामान्येनोपस्थितं दूषणाभिधानप्रस्तावेन सिद्धान्त*भाष्य*मपि दूषयति—किञ्च नैवेष्टकाभिरिति । *भाष्यकारेण* आकृतिस्तु क्रियार्थत्वादिति [मी० सू० १।३।३३।] सूत्रं व्याचक्षाणेनोक्तम्

१. भवेदा इत्यतः तत्र द्रव्यशब्देनेति यावत् आ० मा० इत्यत्र नास्ति ।
२. °प्यपरैरेवंविध पू० मा० । ३. अङ्गीकरणीया आ० मा० ।
४. द्रव्यशब्दस्य आ० मा० ।

रब्धद्रव्यसमवायित्वेनोपालम्भः स्यात् पिष्टपिण्डसिंहवत्तु सादृश्यसम्पत्तिः पक्षद्वयेऽपि चोदनार्थः। सा त्वाकृत्यन्तरविलक्षणश्येनाकृत्या स्यान्न तु व्यक्त्यन्तरविलक्षणश्येनविशेषेणासाधारणेन वा। निर्विकल्पत्वात् सामान्य-विशेषानपेक्षं व्यक्तिमात्रसादृश्यमविधेयम्, सर्वद्रव्येषु तुल्यत्वात्। एकव्यक्ति-परिग्रहाच्च व्यक्त्यन्तरेण सादृश्यं न कार्यं स्यात्। तस्माच्छ्येनचित् क्रिया

श्येनचितं चिन्वीतेति चयनमाकृतौ संभवति न तु श्येनव्यक्तिश्चयनेन सम्पादयितुं शक्यते, तस्मादाकृतिः शब्दार्थ इति। तत्रेदमुच्यते तेनैव सूत्रकारेणेष्टकाभिराकृतिसम्पादनं चोदनार्थत्वेनाभ्युपगतं क्वचित् किञ्चेति-शब्दानन्तरं सूत्रं पठ्यते। तदेवं योजना—आकृतिस्तु क्रियार्थत्वादिति [मी० सू० १।३।३३] अत्र नैवेष्टकाभिराकृतिसम्पादनमभ्युपगतमिति। अनभ्युपगमे कारणमाह — यतः स्वभावादिति। यतोऽभ्युपगमादेवमुपालम्भः स्यात् स कथं सूत्रकारेण क्रियेत। अथ वा किमिति नाभ्युपगतमत आह — यतः स्वभावादिति। यस्मादभ्युपगमे कृते सत्येवमुपालम्भः स्यात् तस्मान्नाभ्यु-पगतम् स्वभावादारब्धं द्रव्यं पारिणामिकमित्यर्थः। तत्र श्येनत्वादि-सामान्यस्य समवायो नावयवसंयोजनाजन्येऽवयविनि। नित्यसापेक्षत्वा-च्चारब्धशब्दस्य समास इति। को नाम चोदनार्थः सूत्रकाराभिमत इत्यत आह — पिष्टपिण्डसिंहवत्त्विति। न चाकृतिपक्षे गौणतापत्तेर्व्यक्तावेवायं प्रयोग इति वक्तव्यम्। व्यक्तिपक्षेऽपि गौणत्वाविशेषादित्युक्तम्—पक्षद्वयेऽपीति। कथं सादृश्यविधावाकृतावयं प्रयोग इत्यवगतिरित्यत आह — सा त्वाकृत्यन्तर विलक्षणेति। श्येनविशेषेणेति। सकलव्यक्तिवैलक्षण्यापादकगुणसमुदायोपेता श्येनव्यक्तिः श्येनविशेषस्तेन सादृश्यं सकलगुणो[1]पादानेन स्यात्। तच्च लेख्यादिभिरप्यशक्यम् किमुतेष्टकादिभिः। नैवासौ श्येनविशेषो निरूपयितुं शक्यः। अनेन यत्सादृश्यं चोदितमिति। असाधारणेन वेति। अपोद्धृत सकलविशेषं धर्मिणः स्वरूपमसाधारणम्। तेन निर्विकल्पेन धर्मसामान्यो-पाधिविकल्प[2]प्रत्यक्षगोचरं सादृश्यमेव न सम्भवति किं विधीयतामिति। अथैवमपि व्यक्तिसादृश्यमेव विधीयते न श्येनसादृश्यमपेक्ष्य। तथा विशेषणसमुदायावच्छिन्नात्मिकां व्यक्ति[3]मनपेक्ष्य व्यक्तिमात्रे यया कयापि यथा सादृश्यं भवति तथा कार्यमिति। तत्राप्याह — सामान्यविशेषानपेक्षेति।

---

१. °णोपपादने आ० मा०।　　२. प्रत्ययगोचरः आ० मा०।

३. °मपेक्ष्य व्यक्तिमात्रेण आ० मा०।

व्यक्तौ शब्दार्थे न सम्भवति। न साधकतम इति। न ह्येवं स्मृतिः श्येनैश्चीयत इति श्येनचित्, कर्मण्यग्न्याख्यायामिति [पा० सू० ३।२।९२] हि सा। श्येनं चयनेन साधये[1]दितीप्सिततमत्वम्। तत्रापि मुख्यासम्भवात् सादृश्यपरिग्रहः, असाधारणे शब्दप्रवृत्त्यसम्भवात्। अव्यपदेश्य-

यदेव किञ्चिद् द्रव्यं भवति तत् केनापि सदृशमिति सिद्धत्वादभिधेयमेव तत्। श्येनशब्दश्चास्मिन् पक्षे न विशेषणमिति दूषणम्। न च श्येनव्यक्त्या यया कयाचिदिति सम्भवति। सादृश्यमात्रं हि चोदितं प्रतियोगिनमाक्षिपत् अविशेषेणाक्षिपेत्। यदा च शास्त्रेण प्रतियोग्युपादीयते तदासौ शास्त्रे प्रवृत्तिवेलायां निरूपयितव्यः। तत्र [1]श्येनजातिमतिक्रम्यात्यन्तभिन्नासु व्यक्तिषु न व्यक्तिमात्रं पश्यामो यया कयाचिदिति चानिरूपणमेवैतत्। तेनायमेव शास्त्रार्थो वक्तव्यः। श्येनमात्रस्य यादृशः सन्निवेशो यादृशेन श्येनाकृत्यभिव्यक्तिर्भवति तादृशं कुर्यादिति। तदेवमाकृतिसादृश्यं विधीयत इति। कीदृशी नाम स्मृतिरित्याह — कर्मण्यग्न्याख्यायामिति [पा० सू० ३।२।९२।]। अनुवर्तते चात्र कर्मणीति। तेन कर्मण्युपपदे कर्मण्येव वाच्ये क्विब् विधीयते। ततश्चयन[2]स्याकर्मोपपदेन [3]क्रियावान् विधीयत इति तयोः सामानाधिकरण्यमिति। चिन्वीतेति तद्भावनाविधानं तेनायमर्थ इत्याह — श्येनं चयनेन भावयेदिति। एवं मुख्याकृतिसंपत्त्य-भिधानमात्रदूषणेन शेषस्य सूत्रव्याख्यान*भाष्य*स्यार्थ उपपादितः। सम्प्रति किं पुनरत्र युक्तमाकृतिः शब्दार्थ इत्यादे*र्भाष्यस्य* संक्षेपेणार्थमाह — असाधारणशब्दप्रवृत्त्यसंभवादिति। व्यापकापेक्षेत्यस्यां प्रतिज्ञायामयं हेतुरसंभवो व्यभिचारात् सोऽनेन *भाष्येणो*क्तः। यदि व्यक्तिः शब्दार्थो भवेद् व्यक्त्यन्तरे न प्रयुज्येतेति। अथैतदुच्यते यत् सामान्यविशेषव्यपदेश्यं न भवति धर्मिणः स्वरूपं तच्छब्दवाच्यमित्येतावदवगमात् सामान्यविशेष — व्यतिरिक्ते व्यक्त्यन्तरेऽपि प्रयोगसिद्धिरिति, तत्राह — अव्यपदेश्यत्वेनेति। सोऽयमस्य *भाष्यस्यार्थो* यदि व्यक्त्यन्तरेष्वपि भवति [4]सर्वविशेषवियुक्ताया-मश्वव्यक्तौ गोशब्दः किमिति न [5]प्रयुज्यत इति। किञ्च कथंचित् प्रयोगतोऽपि

१. भावयेदिति प्रतीकमिहाजिता परिगृह्णाति

१. श्येनाकृतिमतिक्रम्य आ० मा०।

२. °स्य कर्मोप आ० मा०।

३. क्विप्वाच्यभिधीयत इति आ० मा०।

४. सर्वसामान्यवियुक्तेषु पू० मा०।

५. वर्तत इति आ० मा०।

त्वेन च सर्वत्राविशेषात्, सामान्याकारेण च निरूपणे विकल्पात्, व्यापकापेक्षया व्याप्यसामान्यस्य नैवं विशेषव्याप्यापेक्षयेतर[1]त्राकृतिः । तत्र विशेषपक्षे संबन्धानन्वाख्यानव्यभिचारसामान्यबुद्ध्यभावप्रत्यर्थशक्तिकल्पनादयो दोषाः । न च यत्र संशयस्तत्प्रत्याय्यं भवतीति निर्विषयता शब्दस्य । एतेन स्वतन्त्रोभयाभिधानमार्गः प्रत्युक्तः । व्यक्तिविशिष्टाकृतिमार्गोऽपि 'नागृहीतविशेषणा' इति न्यायाद् व्यक्तेः प्रथमग्रहणप्रसङ्गात् संबन्धसमुदाययोरपि स्वरूपप्रत्ययाभावात् सर्वत्र चाविशेषादवश्यं संबन्धिसमुदायिविशेषणताभ्युपगन्तव्या भवति । तत्रापि शक्तित्रयकल्पना । व्यक्त्यंशे चोक्तदोषप्रसङ्गः । न च व्यक्त्याकृत्योर्भिन्नकार्ययोर्गुणप्रधाननानावस्थयोः समुदायोपगमनं युक्तम् । अनत्यन्तभेदाच्च

नियमाभ्युपगमात् समानाश्वव्यक्तौ वर्ततां गोव्यक्तिष्वेवात्यन्ताननु[1]वृत्तासु वाच्यासु शब्दात् सामान्याकारप्रत्यया[2]नुवृत्तिप्रसङ्गः । अस्ति त्वसावित्याह — सामान्याकारेण चेति । प्रत्यक्षेणापि निरूपणादिति । वस्तुसत्तासिद्ध्यर्थमुक्तम् । तेन विकल्पानुरूपवस्त्वभावान्न शब्दस्य व्यक्तिविषयता वक्तव्येत्युक्तम् । अथ वा निरूपणशब्दो विकल्पविशेषणम् । सोऽयमस्य *भाष्यस्यार्थः* सामान्यप्रत्ययश्च न स्यादियमपि गौरियमपि गौरिति । एभिर्हेतुभिर्नानागोव्यक्तिव्यापकस्यैकस्याकारस्य गोशब्दजन्यज्ञानविषयत्वेनापेक्षेत्याह — व्यापकापेक्षेति । [3]ननु व्याप्यानामेव व्यक्तीनां व्यापक[4]मनपेक्ष्य यत्सामान्यं सामान्यविशेषरहितत्वेनोपलक्षिततत्वं [5]तेन सामान्याकारविकल्पसम्भव इत्याह — व्याप्यसामान्यान्नैवेति । उपसंहरति — विशेषव्याप्यापेक्षयेतरदाकृतिरिति । विशेषरूपव्याप्यापेक्षया यदितरद् व्यापकमित्यर्थः । यदितरद् व्यापकं रूपं शब्दविकल्पगोचरः साकृतिरिति । एवं संक्षेपेण *भाष्यार्थ*मुक्त्वा सम्प्रति स्वयं व्यक्त्यभिधानपक्षे दोषान् प्रपञ्चयति — तत्र विशेषपक्ष इति । सम्बन्धानन्वाख्यानमनन्ताभिर्व्यक्तिभिस्तस्य ग्रहीतुमशक्यत्वात् । व्यक्तिभिर्व्यभिचारे यत्रैव ग्रहीतुमिष्यते ततोऽन्यत्रापि प्रयोगात् । किञ्च गामानयेत्युक्ते विशेषनिर्णयमन्यतोऽपेक्षते । तेन व्यक्तेः संशयास्पदत्वेनाप्रतीतत्वात् । यदि सामान्यमपि न पदप्रतिपाद्यं तथा निर्विषयत्वं तस्य स्यादित्याह — न च यत्र संशय इति । व्यक्तिविशिष्टाकृतिरिति । अत्र प्रत्युक्तेत्यनुषक्तव्यम् । नागृहीतविशेषणेति न्यायात् व्यक्तिविशिष्टाकृतिः प्रत्युक्तेति । शक्तित्रयकल्पनेति । नैकस्मिन्नप्यनुक्ते जातिव्यक्त्योः सम्बन्ध इति समुदायो वाभिहितः स्यादिति । विशेषणत्वेनाकृतिं वक्ष्यतीत्यादिना *भाष्येणो*पन्यस्तमाकृति-

---

१. °व्याप्यापेक्षयेतरदाकृतिरिति अजिता प्रतीकमिह परिगृह्णाति ।

१. °ननुभूतासु आ० मा० ।  २. °यानुत्पादप्रसंगः आ० मा० ।

३. तत्र व्याख्यातमेवेति आ० मा० ।  ४. °मपेक्ष्य आ० मा० ।

५. न तेनेति आ० मा० ।

भिन्नधर्मौ संबन्धसमुदायौ न युक्तौ । आकृतिविशिष्टोऽपि व्यक्तिविशेषो नैव प्रतीयते । व्यक्तिविशेषबुद्ध्यभावाद् व्यक्तिमात्रमिति चेन्न । तदानीं तस्याकृतिरे-ऽन्यत्वेनानिरूपणात् । मात्रशब्दो हि सामान्यवाचीत्याकृतिरेवोच्यते । नानाकारेषु च वस्तुषु तद्भेदानुसारित्वाच्छक्तीनामन्वयव्यतिरेकाभ्यां गोत्वा-कारनिबन्धनैव गोशब्दवाच्यत्वशक्तिर्गम्यते तदेकाधारसामान्यान्तरावगति-र्विशेषाकाङ्क्षा वेत्यर्थव्याप्यव्याप्तिभ्याम् । अनत्यन्तव्यतिरेकाच्चाकृतेरमूर्त-त्वाद्याश्रयदोषाप्रसङ्गः । सा हि प्रतीयते निष्कृष्टरूपा, क्रियायोगिनी तु

विशिष्टव्यक्त्यभिधानपक्षमाशङ्क्य दूषयति — आकृतिविशिष्टोऽपि व्यक्ति-विशेष इति । किञ्च यद्युभयात्मकवस्तुप्रतीतिः स्यात्तथाप्यन्वयव्यतिरेकाभ्यां गोत्वांशाधारैव वस्तुनो गोशब्दवाच्यताशक्तिरित्यवगम्यत इत्यत आह नानाकारेषु वस्तुष्विति । तत्तद् विशेषव्यतिरेकेऽपि गोशब्दवाच्यता शक्तिरनु-गच्छति सति सामान्यानुगमे तद्व्यतिरेके तु व्यतिरिच्यते । तेन गोत्वाकारनिबद्धैव सेति । नानाकारेष्वपि चान्वयव्यतिरेकयोरेव प्रमाण्योप-पादनं यदि हि वस्तुभेदानुविधायी शक्तिभेदो न भवेन्न व्यक्तिव्यतिरेकेण शक्त्यनुगमादतच्छक्तित्वावधारणं स्यादिति । यदि शब्देन न[1] व्यक्तिर्न बोधिता कथं तदाश्रयद्रव्यत्वसत्ताद्यवगतिः [2]कथं च तद्विशेषेण शुक्लत्वा-द्याकाङ्क्षेत्याह — तदेकाधारसामान्यान्तरेति । नहि साक्षादन्वय एव प्रतीत्यङ्गम् किन्तु अन्वयमात्रम् । तेन गोत्वरूपस्यार्थस्य एकार्थसमवायिन्या सत्तया व्याप्तेस्तन्निश्चयः शुक्लादीनां चाव्याप्तेः संशये सति अन्यतोऽवधारणा-कांक्षा यद्यवगतिशब्दाद् विभक्तिर्न श्रूयते तदा द्वन्द्वसमासः । [3]समासार्था-सद्भावश्च चशब्दार्थं इति । यदुक्तम्—

अमूर्ता ह्याकृतिर्नित्या नावघातादिभाजनी । इति

तत्परिहरति — अनत्यन्तव्यतिरेकाच्चेति । कथमव्यतिरेको दोषस्याप्रसङ्गे कारणमित्यत आह — सा हि प्रतीयत इति । वस्तुसामाना-धिकरण्याद्ध्याकारबुद्धिवेद्यत्वादिरूपमेकमङ्गीक्रियते । तत्र शब्दः सामान्याकारामेव [4]बुद्धिं जनयतीत्युक्तम् — निष्कृष्टरूपा प्रतीयत इति ।

तत्तत्सामान्याकारबुद्धिवेद्यं वस्तु तस्य क्रियान्वयश्चोद्यते शक्नोति

१. शक्तिर्न आ० भा० ।
२. कथं चेत्यारभ्य यद्यवगतिपदं यावत् पंक्तिः पू० मा० इत्यत्र नास्ति आ० मा० इत्यत्र वर्तते ।
३ समासार्थसंबन्धश्च चशब्दार्थं इति आ० मा० ।
४. धियमुपजनयतीति आ० मा० ।

व्यक्त्युपेता भवत्वेवेति। प्रोक्षणावेक्षणादि तु न कथञ्चिन्न संभवति। विशसनाद्यपि तु व्यक्त्यव्यतिरेकापेक्षया संभवत्येव। तथा हि पश्वादिष्वपनीताङ्गेषु विशेषबुद्ध्यभावात् सामान्यरूपैव विशसनादिविशिष्टा बुद्धिर्दृष्टा। नन्वेवमनित्याकृतिः स्यात्। तेनांशिनेष्टैव। आश्रयान्तराविनाशात्तु सर्वैरप्यविनाशोऽवश्यमेवैष्टव्यः। तेन यत्तावन्मात्रमेव तस्य विनाशोऽनेकदेशस्य तु न कथञ्चिद्विनाशः स्यादित्युभयथा व्यवहारः। अत्यन्तव्यतिरेके तु नैष धर्मविधिविषयो व्यवतिष्ठेत। न च पशुत्वममूर्तत्वात्। तदुपलक्षितं तु यद् द्रव्यं तद् द्रव्यत्वादृते न ताद्रूप्येण गम्यत इत्येकार्थसमवायादव्यापकत्वाच्च द्रव्यं गमयितव्यं, तत्राप्यमूर्तत्वे दोषः। आश्रयोपलक्षणाच्च द्रव्यमात्रप्रसङ्गः। विशेषस्तु पशुत्वस्य वा द्रव्यत्वस्य वाव्यापकत्वादगम्यः। न वाप्रतीतं विधिना संबध्यते। न च यत्र संशय

च तद्व्यापारितुर्यतः क्रियाश्रयविशेषरूपमपि तदेव। व्यक्त्युपेतेति तादात्म्यमेवोक्तमिति। एतच्च व्यक्त्यव्यतिरेकापेक्षया क्रियासंभवप्रतिपादनं विशसनाद्युपपत्तये। प्रोक्षणावेक्षणादि तु जातावेव सम्भवतीत्याह— प्रोक्षणावेक्षणादि त्विति। क्षरणार्थस्य सिञ्चतेरर्थे उक्षतिर्वर्तते। तेन नायं सिच्यमानस्योदकस्य तदाधारस्य च व्रीह्यादेः संयोगमुपादत्ते येनाकृतौ [1]न संभवेत्। किन्तूदकस्योर्ध्वाधोदेशसंयोगविभागौ। व्रीह्याभिमुख्यमात्रेण तु व्रीहीणां कर्मता भावना [2]करणता चासादाकृतेरपि सम्भवतीति। यदुक्तं सामान्यबुद्धिवेद्यस्यास्ति विशसनादि[3]संबन्ध इति, तस्य प्रतीतिसम्वादं दर्शयति— तथा हि पश्वादिष्विति। विभक्तैरङ्गैः पशो[4]र्विशिष्टस्य सामान्यमनुमातुं शक्यते न व्यक्तिर्व्यभिचारात्। अतः सामान्यबुद्धिरेव विशसनादिविशिष्टेति। अत्र *भाष्यकारेण* योऽर्थः सामान्यस्य विशेषाणां चाश्रयः सा व्यक्तिरित्याश्रयाश्रयिसम्बन्धं [5]दर्शयतात्यन्तिको व्यतिरेकोऽङ्गीकृतस्तस्य स्वयमनङ्गीकरणे कारणमाह— अत्यन्तव्यतिरेके त्विति। अगम्य इति। न तावत् सामान्येन लक्षयितुं शक्यत इत्यर्थः। न चैवं शास्त्रार्थो वक्तव्यो योऽस्य सामान्यस्याश्रयः प्रत्येष्यते तमुपाददीतेति। यतो न वाप्रतीतं विधिना सम्बध्यत इति। ननु प्रतीत एवासौ योऽस्य विशेष इत्यत आह— न च यत्र संशय इति। प्रत्येष्यतेऽसौ प्रत्यक्षप्रवृत्तिवेलायाम्।

---

१. नेति आ० मा० इत्यत्र नास्ति।
२. कर्मतेति आ० मा०।
३. संदादेति आ० मा०।
४. विनष्टस्येति आ० मा०
५. वदतेति आ० मा०।

स्तत्प्रतीतम् । न चान्यत्रोक्तो धर्मस्तत्रासंभवादन्यत्र कार्यः । तस्मान्न सामान्यकृतो विशेषेषु युक्तः, विशेषा अपि व्यपदेशात् सामान्यमेवेत्यमूर्तता । असाधारणेन तु नैव व्यवहारस्तस्मादनिरूप्यो धर्मविधिविषयः । सामानाधिकरण्यादि च प्रसिद्धि-विपरीतं लक्षणया कल्प्यम्, भाष्यकारेण तु व्यतिरेकाभ्युपगमेनाश्रयमात्रगति-

सम्प्रति तु शास्त्रप्रवृत्तिवेलायां नासाववधार्यत इति । न चैवं वक्तव्यम् यद्यपि शास्त्रं सामान्य एव पर्यवसितम्, तथापि तत्रासम्भवादनुष्ठानकाले सामान्याश्रये प्रत्यक्षोपनीते विशेषे क्रिया भविष्यतीति । यतो नैवं शास्त्रार्थोऽनुष्ठितः स्यादित्याह — न चान्यत्रोक्त इति । तस्मादभेदपक्ष एव शोभन इत्याह — तस्मात् सामान्यकृत इति । सामान्यप्रयुक्त एव धर्मो यदेव सामान्यरूपं वस्तुविशेषरूपमपि तदेवेत्यनेन कारणेन विशेष प्रयुक्त इति कश्चित् पठति — तस्मान्न सामान्यकृत इति । [1]सामान्यकृतो यः शास्त्रादवगतो धर्मो नासावनुष्ठानकाले तत्रासम्भवाद्विशेषे युक्त इति ।

किञ्च [2]यो मन्यते विशेष एव सामान्योपस्थापिते धर्मश्चोद्यत [3]इति । तेन प्रत्यक्षसमधिगम्यासाधारणस्य शब्दप्रतीत्यविषयत्वाच्छुक्लकृष्णादिविषयो विशेषो वक्तव्यः । स च सामान्यमेवेति तदवस्थामूर्त्ततेत्याह — विशेषा अपि व्यपदेशादिति । स्थितमिति भावः । [4]नन्वेवं विशेषाणामप्यमूर्तत्वे लौकिकस्यापि व्यवहारस्य निर्विषयत्वं स्यादत आह — असाधारणेन त्विति । तच्चासाधारणं शब्दप्रतीत्यविषय इति । स्थितमिति भावः । अन्या व्याख्या । ननु शुक्लादीनतिक्रम्यासाधारणमाकृत्या लक्ष्यताम् । नहि तत्र व्यवहारस्य दोषो मूर्त्तत्वात्तस्येत्यत आह — असाधारणेति । असाधारणे शाब्दस्य व्यवहारस्य न तु नैव दोषः अपि तु दोषा एवाव्यपदेश्यत्वात्तस्येति । कथं तर्हि *भाष्यकारस्य* सामान्याश्रयो व्यक्तिरिति व्यतिरेकाभिधानमत आह — *भाष्यकारेण* त्विति । पदार्थचिन्तकैर्व्यतिरेकमुक्तमङ्गीकृत्यापीदमुपपादयितुं शक्यत इति प्रतिपादयन् व्यतिरेकमुक्तवान् न त्वयं स्वपक्ष इति ।

नन्वाकृतिप्रत्ययो व्यक्तिप्रत्ययस्य निमित्तमित्युपपादयति । न चैतत् सम्भवतीत्यनन्तरमुक्तं तत्कथमुपपादने शक्तिरत आह — आश्रयमात्रेति ।

१. सामान्यप्रयुक्तो आ० मा० । २. यो मन्यते आ० मा० इत्यत्र नास्ति ।
३. इति यो वदति इत्यधिकं आ० मा० ।
४. व्यपदेशादिति स्थितमिति भावः पू० मा० पठति । नन्वेवमित्यारभ्य अन्या-व्याख्येत्यतः प्राक् निर्दिष्टा पंक्तिः पू० मा० गङ्गानाथझासंगृहीतमातृकायां च नास्ति, आ० मा० इत्यत्र चास्ति ।

रुक्ता विशेषरूपा न कदाचिद् व्यक्तिः प्रतीयते। योऽप्याश्रयाश्रयिभावः सोऽप्यौपचारिकः। सामान्याच्च विशेषलक्षणं तत्र नाश्रयितव्यम्। आक्षेपमात्रभावादथ वैतद्विषय एवायं प्रपञ्चः। किं शब्देनाकृत्या वेति।

**यदि निरूपितैकव्यक्तिप्रत्ययं ब्रूयादनुपपन्नं वदेत्। आश्रयमात्रस्य तु प्रतीतिरुक्ता। तच्च व्यापकमेवाकृतेरिति। कस्मात् पुनर्व्यक्तिशब्दो *भाष्यकारीय*आश्रयमात्रे व्याख्यायत अत आह —** विशेषरूपेति।

**अथ वा योऽपि व्यतिक्रममङ्गीकृत्योक्तः, एवं व्याख्यातमाश्रयाश्रयिभावः, सोऽपि तत्त्वतो न तथा किन्त्वभेद एवोपचारात्तथोक्त इत्यन्यथा*भाष्यं* व्याचष्टे—**योऽप्याश्रयाश्रयिभाव इति। **पूर्वव्याख्यात्यागे कारणमाह—**सामान्याच्च विशेषलक्षणमिति। **यदि हि सामान्याद् विशेषस्य लक्षणाश्रयणार्हा भवति तदा व्यतिरेकेऽप्यदूषणम्, न त्वेतदस्ति। तथा हि व्यक्तिविशेषस्तावदप्रतीतेरेव लक्षणानर्हः[1]। न चाश्रयमात्रं किञ्चिदस्ति। यदि हि तदाश्रयत्वमुच्येत, तदाश्रयाश्रयिसम्बन्धः स्यात्। आश्रयभेदानान्त्वाक्षेपादुपप्लवमानानामव्यापकत्वादनिश्चय एव[2]मुपदिश्यते। आश्रयमात्रं प्रतीयते। आश्रयाणां मध्ये केनापि भवितव्य[3]मिति प्रतीयते न तु ज्ञायते कोऽसाविति। तदेतदुक्तमाक्षेपमात्रं भावादिति। न च संशयविषयस्याश्रयस्य विधिसम्बन्ध इत्युक्तम्। तस्माद्विशेषलक्षणा नाश्रयितव्या। कश्चित्पठति —** सामान्याच्च विशेषलक्षणेनाश्रयितव्यमिति। **भेदपक्षे हि सामान्याद् विशेषलक्षणमङ्गीकर्त्तव्यम्। तत्र च लक्षणे यद्वस्तु व्यवहारक्षमं शास्त्रार्थत्वेनाश्रयणीयम्, न तदस्ति। तस्मिन् ज्ञाने निरूपितैका व्यक्तिः प्रमेयत्वेन नास्तीत्यर्थः। [4]आश्रयमात्रं हि तासां न कश्चिन्निश्चयः। तस्मादभेदपक्ष एव शोभन इति। अथवैतद्विषय** एवायमिति। **एतदिति वक्ष्यमाणस्य किं शब्दादाकृत्येत्यस्य निर्देशः —** अयं प्रपञ्च इति। **च प्रक्रान्तस्य विचारस्य। तदेतदात्मप्रत्यक्षं यच्छब्द उच्चरिते व्यक्तिः प्रतीयत इति। किं शब्दाकृतेरिति विभागो न प्रत्यक्ष इत्यनेन सिद्धान्त*भाष्येणं* योऽयं सन्दिग्धोऽर्थो दर्शितः स एवास्य विचारस्य विषयोऽस्त्वित्यधिकरणारम्भमन्यथा दर्शयतीति। तत्र शब्दानन्तर्याज्जातिप्रत्ययव्यक्तिप्रत्ययोऽपि शाब्द**

---

१. लक्षणार्हं आ० मा०। २. °मपदिश्यते आ० मा०।
३. °मिति न प्रतीयते कोऽसाविति आ० मा०।
४. आक्षेपमात्रं हि तासां न कस्याश्चिन्निश्चयः आ० मा०।

अन्वयव्यतिरेकाभ्यां चाकृत्येति निर्णयः । यो हि धूमादग्निमत्त्वं प्रतिपद्यते तस्य तैक्ष्ण्येऽप्याकाङ्क्षा सिद्धा । मानसादपचारादिति । यो हि जाड्यात् सामान्यवाचितां हित्वा कञ्चिदेव विशेषं यत्र संबन्धानुभवस्तं वाच्यं मन्यते तस्य सामान्याप्रतीतेर्न विशेषान्तरापेक्षा भवति । अथ वा यथा शब्दात् स्वतन्त्रामाकृतिं बुध्यते नैवं कदाचिदाकृतिमबुद्ध्वा व्यक्तिमिति । केन तर्हि गोत्वगोशब्दयोर्विशेषः । व्यतिरेकांशस्यैकत्र विवक्षा । गोत्ववाचिनि तु स्फुटं प्रत्ययेन जातिमभिदधानं विभागोपपत्तेः । सामान्यस्य वोपलक्षणत्वान्न भेदपक्षदोषः । भेदानामेव

इति पूर्वपक्षं स्फुटत्वादव्याख्याय सिद्धान्तभाष्योक्तमेव व्याचष्टे — अन्वयव्यतिरेकाभ्यामिति । [1]शब्दव्यतिरेकेऽप्याकृत्यन्वयो विशेषप्रत्ययान्वयं दर्शयति — यो हि धूमादग्निमत्त्वमिति । शब्दानन्तरमाकाङ्क्षारूप एव व्यक्तिप्रत्ययो दृष्टः, सोऽपि रूपेण व्यक्तेरव्यपदेश्यत्वाद् विशेषणोल्लेखेनैवेति विशेषणाकाङ्क्षैव दर्शिता । तैक्ष्ण्याकांक्षेति । यद्यप्याकाङ्क्षापूर्वकस्तैक्ष्ण्यस्य व्यापकत्वा[2]न्नियमोऽप्यस्ति । तथाप्याकाङ्क्षापि तावदस्तीति तस्याः प्रदर्शनमविरुद्धमिति । आकृतिप्रत्ययाभावे तु शब्दान्वयेऽपि न व्यक्तिः [3]प्रतीयत इति वदता *भाष्यकारेणोक्तम्* यस्तूच्चरितेऽपि शब्दे मानसादपचारादित्यादि तदनुभाष्योभयथा व्याचष्टे — यो हि जाड्यादिति । यद्याकृतिमात्रवचित्वं गोशब्दस्य तदा तन्मात्रवाचिनो गोशब्दात् केन हेतुना तस्य विशेषोऽवगम्यत इति पृच्छति — केन तर्हीति । उत्तरं ददाति — व्यतिरेकांशस्येति । सामान्यविशेषयोरव्यतिरेकालिरस्कारेण यथावस्तुनि वर्त्तमानो गोशब्दो [4]विशेषणशब्दैः सामानाधिकरण्यं गच्छति न तथा गोत्वशब्दः । तत्र व्यतिरेकाधिक्यस्य शब्देनोपादानात् अनेन तयोर्विशेष इति । जातिव्यक्त्योरत्यन्तभेदपक्षे तु गोत्वशब्दवद् गोशब्देऽपि निष्कृष्टगोत्ववाचिनि सति व्यक्त्यभिधाननिषेधो दुरुपपादः । तथा हि तदा प्रत्ययेन सुपा जातिमदभिधानं स्फुटम् । न ह्यन्यथा व्यक्तिशब्दैः सामानाधिकरण्यं गोत्वशब्दवद् गोशब्दो गच्छेत् । तदेतदाह — गोत्ववाचिनि त्विति । न चैवं सत्येकखण्डेन शब्देन कथं विशिष्टाभिधानमिति चोद्यमवतरति प्रकृतिप्रत्ययात्मना शब्दविभागस्योपपत्तिरित्युक्तम् — विभागोपपत्तेरिति । अथ वा *भाष्यकारेण*

---

१. शब्दव्यतिरेकेऽपि आकृतिप्रत्ययान्वये विशेष० आ० मा० ।
२. °निश्चयो इति आ० मा० ।
३. प्रतीयत इत्यारभ्य तूच्चरितेऽपीति यावत् आ० मा० इत्यत्र नास्ति ।
४. विशेषशब्दैः आ० मा० ।

चायं प्रत्येकं सर्वेषां वाचकः। यस्तूपादीयमानत्वे संशयः, स संख्याधारविषयः। उद्ध्रियमानेषु निर्णय एव गवादिशब्दग्रहणं सर्वनामाख्यातशब्दानामन्तर्भावार्थम्। प्रयोजनं सामान्यविशेषशब्दयोरेकविषयत्वात् सामान्यविशिष्टस्य विशेषशिष्टेनाबाधः पूर्वपक्षे।

एवं वा—

गौरित्येवंविधाः शब्दाः साधुत्वेन निरूपिताः।
तेषामेवाभिधेयेऽर्थे व्यापारः क्वेति चिन्त्यते ।।
चतुर्विधे पदे चात्र द्विविधस्यार्थनिर्णयः।
क्रियते संशयोत्पत्तेर्नोपसर्गनिपातयोः ।।
तयोरर्थाभिधाने हि व्यापारो नैव विद्यते।
यदर्थद्योतकौ तौ तु वाचकः स विचार्यते ।।
वाचकत्वेऽपि पाश्चात्त्यमनुयात्येवमादिषु।

दण्डशब्दवद् गोशब्दो न विशिष्टाभिधायी। ततो दण्डिशब्दावयवेन दण्डशब्देन विशेषणाभिधानाद् दण्डिशब्दस्य विशिष्टाभिधायित्वम्। न च गोशब्दस्यावयवः कश्चित् प्रत्यायकोऽस्तीत्युक्तम्। तत्र सत्यप्याकृत्यभिधायकेऽवयवे व्यक्तेरेव प्रत्ययादानन्त्यव्यभिचाराभ्याञ्चाभिधानासम्भवादनभिधानसिद्धेः। किं वाचकावयवनिराकरणेनेत्याशङ्क्येदमुच्यते — गोत्ववाचिनि त्विति। गोत्ववाचिनि त्ववयवे सति व्यक्तेः प्रत्ययेन प्रत्यक्षादित्यर्थः। स्फुटञ्जातिमदभिधानं स्यात्। एकखण्डेन हि विशिष्टाभिधानमशक्यम्। अवयवे तु सति शब्दविभागोपपत्तेः स्यादेव तत्। यद्यपि निरूपितैकव्यक्तिप्रत्ययो नास्ति तथापि व्यक्त्यारोपितव्यापारस्तावच्छब्दः प्रतीयते। तत्र दण्डिशब्द[1]वदुपस्थापकान्तराधीनपर्यवसानता व्यापारस्य भविष्यतीत्यभिप्राय इति। सर्वनामाख्यातशब्दानामिति। सर्वेषां नाम्नामित्यर्थः। [2]तत्रापि द्रव्यशब्दानां यौगिकानां यदृच्छाशब्दानां डित्थादीनां च सर्वनामशब्दानाञ्च जातिवचनत्वस्य निश्चितत्वादितरेषु जातिगुणक्रियाशब्देषु सर्वशब्द इति। पाश्चात्त्यमनुयातीति। पश्चाच्छब्दोऽनुशब्दश्चोदाहरणम्:

१. ०वदुपस्थापितप्रकारान्तराधीन आ० मा०।
२. तथापीति आ० मा०।

प्रतीयते विशेषो यः संशयेन स नाप्यते ॥
यदि ह्यर्थद्वये बुद्धिर्निपातोच्चारणाद् भवेत् ।
ततो विचारो जायेत न सामान्यधिया विना ॥
आख्यातस्यापि नन्वत्र न युक्तार्थविचारणा ।
द्वितीयादावियं यस्माद् विस्तरेण करिष्यते ॥
कः पुनर्भाव इत्यादौ विवेकेनार्थनिर्णयः ।
आख्यातस्य कृतस्तेन तच्चिन्ता नोपपद्यते ॥
प्रत्ययार्थस्य भावस्य वाच्यता प्रतिपादिता ।
प्रकृत्यर्थविवेकार्थं विचारः क्रियतेऽधुना ॥
प्रत्ययस्यापि वा तत्र भावार्थत्वे निरूपिते ।
सामान्यं वा विशेषो वा किं वाच्यमिति चिन्त्यते ॥
या चोक्ता भाष्यकारेण यागादेरभिधेयता ।
सिद्धा सेह विवेकार्थं तत्र भावस्य भाषिता ॥
यज्याद्यर्थेऽपि वा वाच्ये किं सामान्यविशेषयोः ।
अभिधेयमिति प्राप्ता चिन्ता कर्त्तुं क्रियापदे ॥
अपूर्वं भावशब्देभ्यो द्रव्यादिभ्यः किमिष्यते ।
एषा तत्र च चिन्तोक्ता शेषा प्रासङ्गिकी कथा ॥
नामाख्यातपदे तेन कस्यार्थस्याभिधायके ।
किमाकृतेरुत व्यक्तेरिति चिन्ता प्रवर्त्तते ॥
प्रयोगस्य प्रतीतेश्च तुल्यत्वाच्छब्दलक्षणे ।
व्यक्तिपक्षाभिधानाच्च संशयः प्रतिभाति नः ॥
कथं लक्षणसम्बन्धश्चिन्तायाः प्रकृतेन वा ।
स्मृतिमूलविचारेण वक्तव्यं त्विदमादितः ॥
इयं प्रासङ्गिकी चिन्ता साधुशब्दे निरूपिते ।
उदाहृतस्य तस्यैव क्रियतेऽर्थविनिश्चयः ॥
वक्तव्यः पूर्वमर्थश्चेच्छब्दरूपनिरूपणात् ।
न हि वाच्यमविज्ञाय साधुत्वमवधार्यते ॥
अनिश्चितेऽपि वाच्यत्वे व्यक्त्याकृत्योर्विवेकतः ।

साधुत्वं शक्यते ज्ञातुं तेन वाच्यमिहोच्यते ॥
वाच्यमात्रे हि साधुत्वमविज्ञाते न लभ्यते ।
न चाकृत्या न च व्यक्त्या विना तज्ञोपपद्यते ॥
अथ प्रोक्तेन मार्गेण सर्वा व्याकरणस्मृतिः ।
प्रमाणमिति सिद्धस्य किञ्चिदत्र विचार्यते ॥
व्यक्तिर्वाच्येति विज्ञानं न सन्मूलमसम्भवात् ।
तेन व्याकरणेऽपीदृग् न प्रमाणं स्मृतिर्मता ॥
स्मृतेस्तेनापवादोऽयं प्रामाण्यस्य क्वचित् कृतः ।
युक्तो लक्षणपादाभ्यां पूर्वया चापि चिन्तया ॥
ननु चाकृतिपक्षेऽपि व्यक्तावेव क्रियाक्रिये ।
शब्दार्थे संभवात्तेन किमर्थैषा विचारणा ॥
यद्यप्येवं न भेदोऽस्ति वेदार्थकरणे नृणाम् ।
दधि विप्रेभ्य इत्यादौ फलं लोके भविष्यति ॥
व्यक्तिपक्षे विकल्पः स्यात्कौण्डिन्ये दधितक्रयोः ।
सामान्यवाक्यदौर्बल्यात्तक्रमेवेतरत्र तु ॥
वेदेऽपि च विशेषोऽस्ति व्रीहिप्रोक्षणचोदके ।
दध्नेत्यादिषु भेदश्च जायते होमचोदके ॥
प्रोक्षणं पूर्वपक्षेऽपि कर्तव्यं लौकिकेष्वपि ।
व्रीहिषु श्रुतिसामर्थ्याद् बाधित्वा संनिधिक्रमम् ॥
प्रकृतेष्वेव सिद्धान्ते श्रुतिसंनिध्यनुग्रहात् ।
तत्रापि कृत्स्नमस्त्येव व्रीहित्वं हि श्रुतीरितम् ॥
एवं होमेऽपि दध्यादौ प्रकृतेऽप्रकृतेऽथ वा ।
प्रकृते श्रुतिवाच्यस्य होमत्वस्यापि संभवात् ॥
सोपपत्तिकमन्यच्च वक्तव्यमनया दिशा ।
कर्तव्या तेन यत्नेन चिन्तेयं सप्रयोजना ॥

उभयत्राश्रयभेदं [1]पुरस्कृत्य न स्वार्थभेदोऽवसीयते । यदाश्रयं सामान्यं स्यादिति । फलं लोक इति । उपक्रममात्रमिदमवेदोपयोगिनो [2]विचारा-प्रयोजकत्वादिति ।

---

१. पृथक्कृत्येति आ० मा० । २. विचारप्रयोजकत्वादिति आ० मा० ।

ननु गौरितिशब्दादौ सर्वमेतदविचारितम् ।
तेन तेन गतार्थत्वात् पुनश्चिन्ता न युज्यते ॥
आकृतेरभिधेयत्वप्रतिज्ञा केवला कृता ।
तत्रेदानीं सहेतुत्वं तस्या एवाभिधीयते ॥
यथा चाकृतिरित्यादौ भाष्यकारेण चोदितम् ।
पुनरस्याः प्रतिज्ञाया हेतुरप्यभिधास्यते ॥
यद्वोक्तस्तत्र सद्भावः शब्दार्थत्वमिहोच्यते ।
या तु शब्दार्थता प्रोक्ता सेह सिद्धा न चिन्तिता ॥
उक्ते वाप्यभिधेयत्वे जातेः सद्भावसिद्धये ।
व्यक्तिर्वाच्या न वेत्येतदगतार्थं विचार्यते ॥
एतच्चिन्ताप्रसिद्ध्यर्थमिदं तावद् विचार्यते ।
शब्दार्थौ लौकिकौ वेदे किमन्याविति संशयः ॥
एकत्वे सति कर्त्तव्यो विचारः शब्दवाच्ययोः ।
भेदे तु संशयाभावान्न चिन्तावसरो यतः ॥
शब्दार्थेन न कार्यं हि व्यवहारेऽर्थलक्षणे ।
लौकिकव्यवहारार्थं तेनेदं न विचार्यते ॥
वेदे तु प्रत्यभिज्ञाने शब्दार्थविषये सति ।
विवेकः शक्यते ज्ञातुं प्रतीतेर्वाच्यगम्ययोः ॥
अलौकिके च शब्दार्थे वाच्यवाचकरूपयोः ।
अज्ञातयोर्न जायेत सन्देहो वाच्यवस्तुनि ॥
तेन प्रतीतशब्दार्थे निर्णयार्थमिदं पुरा ।
एकत्वं विद्यते नेति चिन्त्यं शब्दाभिधेययोः ॥

किमन्याविति संशय इति । संशयेन तद्विषयमुपलक्षयति । तथा हि[1]पूर्वार्द्धेन सङ्गच्छत इति । संशयाभावादिति । [2]प्रतिपत्तौ संशयः । [3]स च पदानाम् । तेन तदा विचारावसर इति । संख्याभावादिति । यद्यपि तद्वर्णविषयं तथापि तुल्यन्याय-तया पदेष्वपि भवतीति । न च वक्तव्यं शब्दभेदमात्रेणाकृत्यधिकरणसिद्धेः । किमर्थो भेदेन विचारितेनेति । यतोऽर्थभेदे च चिन्त्येयमिति । कस्य वाच्यत्वं

१. पूर्वोक्तेन आ० मा० । २. नाप्रतिपत्तौ आ० मा० ।

३. स च यदा नास्त्यसौ न विचारावसर इति आ० मा० ।

[1]संख्याभावादिति ह्येतन्ननु स्पष्टं निरूपितम् ।
शब्दस्य प्रत्यभिज्ञानान्नान्यतोच्चारणान्तरे ॥
अभेदकारणं चात्र प्रत्यभिज्ञानमेव ते ।
अन्यत्तूपचयत्वेन तेन चिन्ता न युज्यते ॥
लौकिकेष्वेव शब्देषु तत्राभेदः प्रसाधितः ।
वैदिकानामभेदार्थं चिन्तनीयमिदं पुनः ॥
व्यपदेशादिभेदाच्च कथं भेदो न जायते ।
तत्रानुक्तमिदं वक्तुं विचारोऽयं प्रवर्तितः ॥
एकत्वेऽपि च शब्दस्य सिद्धे तत्रेह चिन्त्यते ।
किमर्थो भिद्यते नेति तेनाप्यपुनरुक्तता ॥
अर्थभेदे च चिन्तेयं शब्दाभेदे तु सत्यपि ।
घटते कस्य वाच्यत्वं व्यक्त्याकृत्योर्द्वयोरपि ॥
व्यपदेशादिभेदेन शब्दे च प्रत्यभिज्ञया ।
भेदाभेदनिमित्ताभ्यां क्रियते संशयोद्भवः ।
किं प्राप्तमुच्यते भिन्नौ शब्दार्थौ लोकवेदयोः ॥
व्यपदेशस्य भिन्नत्वादाख्याया लक्षणस्य च ।
स्वरोच्चारणभेदाच्च लोपव्यत्ययदर्शनात् ॥
स्वरुयूपादिशब्दैश्च स्पष्टभेदैः सह श्रुतेः ।
अनध्यायादिभेदाच्च शूद्रोच्चारणवर्जनात् ॥
अश्ववालादिशब्दानां स्पष्टार्थान्तरदर्शनात् ।
अग्न्यादीनां च भिन्नत्वं भाष्ये यदभिधीयते ॥
तदयुक्तं क्रियाभेदे कर्तृभेदो हि नेष्यते ।
हन्ति कर्तृत्वमग्नेश्च पदार्थेभ्यः प्रतीयते ॥
अशाब्दं वह्निशब्दस्य तद्वाच्यं कथमुच्यते ।

द्वयोर्व्यक्त्याकृत्योरितीयं चिन्ता शब्दाभेदे सत्यपि यद्यर्थभेदोऽपि भवति तदा घटते न [1]शब्दाभेदमात्रेणेति । क्रियाभेदेऽपि कर्त्तृभेदाभावात् व्यक्तिस्वरूपभेदात्तावन्न पदार्थभेदः । अथ हन्तिकर्त्तृत्वविशिष्टस्य वेद पदार्थत्वात्तदर्थभेदस्तत्राप्याह—हन्तिकर्त्तृत्वमग्नेश्चेति । [2]व्यपदेशादिभेदादेर्न भेदश्चेति । अन्यरूपतालक्षणो भेदः प्रत्यक्षप्रत्यभिज्ञाते वेदशब्देना-

१. मी० सू० १।१।२० ।

१. शब्दभेदमात्रेणेति आ० मा० ।　　२. व्यपदेशादिभेदाच्चेति आ० मा० ।

हननं किं कृतं नेति प्रमाणं चात्र नास्ति नः ॥
असता कथमन्यत्वं कर्मणातः प्रतीयते ।
अपूर्वे वृत्रशब्दार्थे क्रियाशब्देऽप्यलौकिके ॥
हन्तिकर्तरि वह्नित्वं कथमध्यवसीयते ।
स्तुतिमात्रपरत्वाच्च न वह्नित्वं विधीयते ॥
अक्रियत्वाच्च भाष्योक्तैर्वाक्यैरित्यभिधास्यते ।
तेनोक्तस्यैव शब्दस्य त्रिवृदादेर्नवादिषु ॥
वृत्तिरर्थेष्वपूर्वेषु वक्तव्या भेदसिद्धये ।
यच्चान्यदिदमित्याह रूपभेदं क्रिया श्रुतेः ॥
तदसत्यं न शब्दस्य भेदोऽर्थगुणकारितः ।
तेन स्वरादिभेदेन वक्तव्या भिन्नरूपता ॥
पूर्वोक्तेनैव मार्गेण नार्थभेदनिबन्धना ।
तस्माच्छब्दार्थयोर्भेदः स्पष्ट इत्यवधार्यते ॥
तावेव वेदे शब्दार्थौ लोके यावेति भाष्यते ।
वेदस्यैव प्रसज्येत सकलस्याप्रमाणता ॥
अविज्ञातार्थसंयोगात् स्थितप्रामाण्यबाधया ।
प्रयोगस्याग्निहोत्रादेश्चोदनायाश्च जायते ॥
अभावः प्रत्ययार्थस्य विधेरप्रतिपादनात् ।
अर्थान्तरे च शब्दस्य न प्रयोगो विधीयते ॥
वेदेनाशास्त्रहेतुत्वात् सम्बन्धस्येति हि स्थितम् ।
किञ्चाविभक्तरूपत्वं प्रत्यभिज्ञायते स्फुटम् ॥
वैदिकेष्वपि शब्देषु प्रत्यक्षेण पुनः पुनः ।
यद्वा विभागशब्देन शब्दस्योच्चारणे सति ॥
गोत्वबुद्धेः समानत्वान्न भेद इति कीर्त्यते ।
लक्षणस्याविभक्तत्वं शब्दानां वेदमुच्यते ॥
सर्वथा शक्यते भेदो न वक्तुं शब्दवाच्ययोः ।
एकत्वे याज्ञिकानाञ्च प्रसिद्धिरनुगृह्यते ॥
मीमांसा चापि वेदार्थतत्त्वनिर्णयकारणम् ।

व्यपदेशादिभेदैश्च न भेदोऽत्रानुमीयते ॥
प्रत्यक्षप्रत्यभिज्ञाते वेदशब्देऽन्यरूपता ।
व्यपदेशादिभेदश्च स्वरभेदादिकारितः ॥
स्वरादयश्च भिद्यन्ते वेदत्वात् किमिहोच्यते ।
स्वरुयूपादिशब्दानामन्यत्वेनेतरत्र ·च ॥
नान्यत्वं युज्यते बाधात् प्रत्यक्षप्रत्यभिज्ञया ।
वचनाद्धर्मभेदस्तु शूद्रवर्जिततापि वा ॥
धर्मावुच्चारणस्यैतौ न शब्दस्य स्वरश्च यः ।
अश्ववालादिशब्दार्थभेदे वचनकारिते ॥
न च भिन्नत्वमन्येषु प्रज्ञातार्थेषु युज्यते ।
उत्तानानां च केषाञ्चिद्वहतां न विधीयते ॥
गोत्वं तेषामसिद्धत्वात् पदार्थाग्रहणादपि ।
विधेरन्यस्य शेषत्वात् स्तुतिरेषावगम्यते ॥
उत्तानेत्यादिका तेन नातो भेदः प्रतीयते ।
तस्माद्यावेव शब्दार्थौ लोके पूर्वं निरूपितौ ॥
वेदे तावेव विज्ञेयाविति सिद्धं प्रमाणवत् ।
यद्वा चैवं तदा युक्ता चिन्तेयं क्रियतेऽधुना ॥
किमाकृतेः पदार्थत्वं किं व्यक्तेः किं द्वयोरिति ।
बहवः प्रतिभान्त्यत्र पक्षाः प्रतिपदं च ये ॥
ते च सर्वेऽभिधीयन्ते व्यामोहविनिवृत्तये ।
गौरित्युच्चरिते सप्त वस्तूनि प्रतिभान्ति नः ॥
जातिर्व्यक्तिश्च संबन्धः समूहो लिङ्गकारके ।
संख्या च सप्तमी तेषामष्टपक्षी द्वयोर्द्वयोः ॥
किं जातिरेव शब्दार्थो व्यक्तिरेवाथ वोभयम् ।
किं विकल्पोऽथ संबन्धः समुदायो निरूप्यताम् ।
जातिर्व्यक्तिविशिष्टा वा व्यक्तिर्जातिविशेषिता
जातिसंबन्धयोरेवं सामान्यसमुदाययोः ॥
जातिकारकयोश्चैवं संख्यासामान्ययोरपि ।
लिङ्गसामान्ययोरेवमेकैकस्येतरैः सह ॥

नुमीयते । वेदत्वादिति । [1]दृष्टोपयोगितां तस्य दर्शयत्यनेन । अत एवोत्पत्त्यभिधानानवकाश इति ।

१. अदृष्टोपयोगितां आ० मा० ।

अष्टौ पक्षाः नियोक्तव्याः षड्भिः प्रत्येकमुक्तवत् ।
एवमानन्त्यमेतेषां पक्षाणामिह गम्यते ॥
पूर्वपक्षेऽपि चत्वारो भाष्ये चैते प्रदर्शिताः ।
व्यक्तेर्जातिर्विशिष्टाया विपरीतमथापि वा ॥
व्यक्तेरेवाभिधेयत्वं द्वयोर्वा स्वप्रधानयोः ।
उपन्यासेन चैतेषां ज्ञेयाः सर्वे प्रपञ्चिताः ॥
निराकरणयुक्त्या च निषिद्धा इति नोदिताः ।

तेनाद्यौ द्वावेव पक्षौ विचार्येते—किमाकृतिः शब्दार्थो व्यक्तिरिति । भाष्यकारेण च संशयकारणमुक्तम्—सामान्यप्रत्ययाद् व्यक्तौ च क्रियासम्भवादिति । एतदयुक्तम्, व्यक्तेरपि प्रतीयमानत्वात् कथं जातेरेव प्रतीतिरुपन्यस्यते । यदि च व्यक्तिर्न सम्प्रतीयेत, ततः संशय एव न स्यात् किमभिधीयतेऽनेनेति । न च क्रियासम्भवोऽभिधेयत्वे कारणम्, व्यक्त्यन्तराणामपि प्रसङ्गात् । तेन पूर्वोक्तमेव संशयकारणं मन्तव्यम् । प्रयोगप्रतीत्योः साधारणत्वाच्छास्त्रान्तरे व्यक्तिपक्षाभ्युपगमात् संशयः ।

यद्वा शब्दे उच्चारिते सामान्यप्रत्ययाद् व्यक्त्याकृत्योः सामान्यात् तुल्यात् प्रत्ययाद् व्यक्तौ च शब्दादाकृतावालम्भनस्पर्शनश्येनसदृशचयनादिक्रियासम्भवात् सामान्ये व्यक्तौ च प्रत्ययाक्रियासम्भवादिति चोक्तम् । का पुनराकृतिः का व्यक्तिरिति । कथं पुनरयं प्रश्नो यदा गौरित्येतस्य शब्दस्य कोऽर्थ इत्यत्र जातिर्निरूपिता । नैष दोषः । येनैतन्न ज्ञातमसौ पृच्छति का पुनराकृतिः का व्यक्तिरिति । सन्देहाद् वात्र पुनरुभयस्मिन् प्रतीयमाने का व्यक्तिः कियती वा जातिरिति । वैपरीत्येन वा कश्चित् पृच्छति यदा शाबलेयादिपिण्डान्न किञ्चिद-व्यक्तं वस्त्वन्तरं भिन्नमुपलभ्यते, तदा कुतोऽयं विवेको व्यक्तिरियं जातिरियमिति ।

अथ वा व्यवहारार्थं सर्वैव चिन्ता क्रियते जातेश्च पदार्थत्वेऽपि व्यक्तौ क्रियासम्भवान्निष्प्रयोजना चिन्ता, यतस्त्वसौ प्रयत्नेनैतद् विचारयति । तेन नूनं काप्यस्य पिण्डादत्यन्तभिन्नव्यवहारयोग्या जातिरभिप्रेतेत्यभिप्रायः । तत्राह—द्रव्यगुणकर्मणां सामान्यमात्रमाकृतिरिति । यौ तावदज्ञानसंशयवादिनौ तयोः स्वरूपकथनमात्रेणैव निराकरणं वक्तव्यम् । यस्तु विपरीतवादी तस्यैव निराकरणमभिधीयते । यद्यपि जातिर्व्यक्तेरत्यन्तभिन्ना नोपलभ्यते तथापि शबलाकारे

तस्मिन्नुपलभ्यमाने सामान्यबुद्धेरालम्बनं प्रथमपादोक्तेन न्यायेनाकृतिरितरा व्यक्तिः। न चानेन ग्रन्थेन जातेः सद्भावः प्रमाणं वा प्रतिपाद्यते व्यक्तेर्विवेकः केवलः कथ्यते। तेनैवाभिप्रायेण मात्रशब्दप्रयोगोऽन्यथा तस्य गतार्थतैव भवेत्।

यदप्युक्तं नूनं काऽप्यत्यन्तभिन्ना जातिरभिप्रेतेति। तस्याप्युत्तरं द्रव्यगुणकर्मणां सामान्यमात्रमाकृतिरभिप्रेता नात्यन्तव्यतिरिक्तेति। द्रव्यादीनां च सर्वेषां यत्सामान्यं सत्तारूपं तदनेन निर्दिश्यते, तन्निर्देशेनावान्तरसामान्यानामपि निर्देशसिद्धिः। यद्वा सामान्यशब्दस्य प्रत्येकं संबन्धाद् द्रव्यत्वादीनि त्रीणि सामान्यानि निर्दिश्यन्ते सत्तया व्यवहाराभावात्। अथ वा मात्रशब्दप्रयोगाद् द्रव्यादिषु यावन्त्यवान्तरसामान्यानि महासामान्यं च तत्सर्वमभिधीयते। असाधारणविशेषा व्यक्तिरिति बहुव्रीहिः। असाधारणा विशेषा यस्यां व्यक्तौ सेयमसाधारणविशेषा, न त्वसाधारणाश्च ते विशेषाश्चेति सामानाधिकरण्यं संभवति। उपरिष्टाद् विशेषाधारस्य व्यक्तित्वाभिधानात्। स्मृतेश्च। तेन सम्यगभिहितं किमाकृतिर्वा व्यक्तिरिति। किं प्राप्तम्। आलम्भनप्रोक्षणविशसनादिप्रयोगचोदनाया व्यक्तिपक्षे भावादाकृतिपक्षे चाभावात्। 'ब्राह्मणो न हन्तव्यः' 'सुरा न पातव्या' इत्यादिप्रतिषेधचोदनायाश्च व्यक्तिपक्ष एव संभवाद् देवदत्त गामभ्याजेत्येवमादिलौकिकव्यवहारचोदनायाश्चोपपत्तेर्व्यक्तिः शब्दार्थ इति निश्चीयते। संख्याकारकोपपत्तेश्च। यदि हि व्यक्तिः शब्दार्थो भवति ततो वृक्षौ वृक्षाभ्यामिति प्रातिपदिकाभिहितासु व्यक्तिषु प्रत्ययाभिहितद्वित्वादिसंख्याकरणादिकारकं वोभयमुपपद्यते, इतरत्र तु जातेरसंख्येयत्वाद[1]कारकत्वाच्चोभयमप्यनुपपन्नम्। लाक्षणिकव्यक्त्याश्रयणं चापद्येताम्। तथा च सर्ववैदिक वाक्यार्थानां लाक्षणिकत्वं स्यात्। व्यक्तिपक्षे च पुरुषो देवदत्त इति मुख्यशब्दसामानाधिकरण्योपपत्तिः। जातिपक्षे लाक्षणिकद्वारं सामानाधिकरण्यं कल्पयितव्यं भवेत् तेनापि व्यक्तेः पदार्थत्वमवसीयते। 'पशुमालभेत' इति च श्रुतेर्हृदयजिह्वादिभिर्व्यक्त्यवयवैरुपरिष्टाद् व्यवहारो दृश्यते, न जात्या कर्मभिश्च द्रव्यस्यापेक्षितत्वाद व्यक्तिपक्षेऽपेक्षिताभिधानं नेतरत्र, सिद्धस्वरूपायाश्च

१. 'त्वात् कारकत्वाच्चेति काशीमुद्रितपुस्तकपाठः।

व्यक्तेरभिधेयत्वं युक्तं नाप्रसिद्धाया जातेरतो व्यक्तिः शब्दार्थः। किमित्युभयं वाच्यं नाश्रीयते प्रयोग प्रतीतिक्रियोपपत्तेरिति चेत्। न। अनेकशक्तिकल्पना-प्रसङ्गादेकाभिधानेनैव संबन्धादितरत्र प्रतीतेरुपपन्नत्वाद् व्यक्तेरेवाभिधेयत्वम्। सामान्यप्रत्ययः कथमिति चेद् व्यक्तिसंबन्धादुपपत्स्यते। यत्रैव क्रियानुप-पत्तिस्तत्रैवार्थापत्त्या व्यक्तिवचनत्वं युक्तम्, अन्यत्र तु पूर्वप्रतीतेर्जातिवचनत्वमेव न्याय्यमिति चेत्। न। उक्तमार्गेणानेकशक्तिकल्पनादिदोषप्रसङ्गात्। अनवस्थितशब्दार्थसंबन्धापत्तेः संशयापत्तेश्च। व्यक्तिवादिनः कथं निर्निमित्तता व्यक्त्यन्तरे शब्दस्य प्रवृत्तिरिति चेदाकृतिचिह्ननिमित्तत्वाद् व्यक्त्यन्तरे प्रयोगस्याविरोधः। भाष्यकारस्तु कथं सामान्यावगतिरित्युपन्यस्याकृतिश्चिह्नभूता भविष्यतीत्युत्तरं ददाति, तदसंबद्धम्। कथं सामान्यप्रत्ययः कारणे[1] पृष्टे व्यक्त्यन्तरप्रयोगनिमित्तं कथ्यते। तेनाध्याहारेणैतद् व्याख्येयम्। कथं सामान्या-वगतिरिति चेत्। व्यक्तिसंबन्धात्। कथं व्यक्त्यन्तरे प्रयोगः, चिह्नत्वादाकृते-रित्येवम्। यद्वा कथं सामान्यावगतिरिति चेदित्युपन्यस्ते पूर्वपक्षवादी सामान्या-वगतिमपह्नोतुमशक्नुवन्नाकृतिविशिष्टव्यक्त्यभिधानपक्षं परिगृह्णात्याकृति-श्चिह्नभूता विशेषणभूताभिधेया भविष्यति। अतश्च तत्प्रतीतिरचोद्या। तेन केवला विशिष्टा वा व्यक्तिः शब्दार्थः। तथा च 'षड् देया' इत्येवमादिषु षडादिका संख्योपपत्स्यते। अन्यं तद्वर्णमिति च व्यक्त्यन्तरेऽन्यशब्दोपपत्ति-स्तद्धर्मता च भविष्यति। अन्यथा व्यक्त्यन्तरानयनेऽपि जातेरनन्यत्वादगुण-त्वाच्चोभयमनुपपन्नं, तस्माद् व्यक्तिः शब्दार्थ इति प्राप्तेऽभिधीयते। नैतत्। व्यक्तिः शब्दवाच्येति किं त्वाकृतिः पदार्थ इति विज्ञायते। 'श्येनचितं चिन्वीत' इति श्रवणात्। अत्र हि श्येनव्यक्तिं चयनेन कुर्यादाकृतिं वेति वाक्यार्थौ स्याताम्। यावदिष्टकाभिः श्येनव्यक्तेः कर्तुमशक्यत्वात् स्नाय्वादिभिरप्यनिर्वृत्तेरिष्टका-बाधाच्छ्येनव्यक्तेः प्रयोजनकल्पनाच्चिनोतेरमुख्यार्थत्वात्। 'कर्मण्यग्न्या-ख्यायाम् [पा० सू० ३।२।९२।] इति स्मृतिपरित्यागप्रसङ्गाच्च। चयनेन श्येन-व्यक्तिं कुर्यादित्येवं तावन्नोपपद्यते। तथाकृतेरपीष्टकाभिः कर्तुमशक्यत्वाद्दैव-निर्मितत्वात् प्रयोजनकल्पनाच्चिनोतेरयथार्थत्वप्रसङ्गात्स्मृतिबाधाच्चाकृतिं कुर्या-दित्यपि नोपपद्यते। परिशेषाच्छ्येनमिव चिह्नमग्निस्थलं चयनेन निर्वर्तयेदिति

१. कथं सामान्याप्रत्यये कारणं इति काशीमुद्रितपुस्तकपाठः।

वाक्यार्थः । ततश्च यया कयाचिच्छ्येनव्यक्त्या सदृशस्याग्नेश्चेतुमशक्यत्वात् सर्वव्यक्तिसादृश्यासम्भवादतीतानागतव्यक्तिसादृश्यानुपपत्तेश्च श्येनाकृतित्सादृश्यसम्पत्तिसम्भवाच्चाकृतिः शब्दार्थ इति निश्चीयते ।

अथ कस्माच्छ्येनव्यक्तिभिश्चयनचोदनेयं नाश्रीयते 'श्येनचितं चिन्वीत' इति । तत्र भाष्यकारेणोत्तरं दत्तम् । ईप्सिततमो ह्यसौ श्येनशब्देन निर्दिश्यत इति । तदयुक्तम् । नह्यत्र श्येनशब्दः स्वार्थो, न च सकलश्येनचिच्छब्दोत्तरकालं श्रुतत्वान्न द्वितीयायास्तदन्तो, येनेप्सिततमार्थप्रतिपादकः स्यात् । तेन **कर्मण्यग्न्याख्यायां [पा० सू० ३।२।९२] इति** स्मृतेः श्येनशब्दार्थस्य करणत्वं निषेद्धव्यम् । कर्मणि हि कारके चिनोतेः क्विप्प्रत्ययः स्मर्यते । यदि चिनोतिरग्न्याख्या भवति । न च चिनोतेः केवलस्याग्निवचनत्वं सम्भवति । तेन क्विबन्तचिनोतिश्रुतेः श्येनचिच्छब्दस्य सकलस्याग्निवचनत्वं निश्चीयते, न श्येनशब्दस्य पृथगर्थता । तेन न श्येनशब्दार्थः करणतया विज्ञायते । यदि वासौ करणं स्यात्ततो लक्षणाभावात्तृतीयासमासवचनानुपपत्तिर्भवेत् । तृतीया चाश्रुता कल्पनीया । श्रुतकरणत्वेऽष्टकापरित्यागश्च स्यात् । सत्याञ्च गतौ प्रतिषिद्धानेकश्येनव्यक्तिहिंसा जायते । तेन करणत्वानुपपत्तेः श्येनमिव चितमग्निं चिन्वीतेति वाक्यार्थः । अतश्चोक्तेन न्यायेनास्य वाक्यस्याकृतिपक्षे सम्भवादाकृतिः पदार्थ इति । नैतदेवम् । न हि चयनक्रियासम्भवमात्रेणाकृतेरभिधेयत्वं लभ्यते । व्यक्तिपक्षेऽव्यक्तिसालक्षण्यं सम्पादयितुं शक्यमिति । नह्यत्र श्येनशब्दः स्वार्थ इति । तेन यस्य करणत्वं मुख्यं श्येनस्याशङ्कितम्, कथं तस्येप्सितत्वमुच्यते । द्वितीययैव तदुच्येत, अन्यस्याभावात् । न च सा श्येनस्य वदतीत्याह—न च सकलेति । इदञ्च कर्मण्युपपद इत्यस्यानुवृत्तिं क्विप्विधाने [1]विस्मृतवतश्चोद्यमिति । तेन वक्तव्यमिदं यथा स्मृतेः श्येनकरणत्वं निषिध्यत इत्याह—तेन कर्मण्यग्न्याख्यायामिति । [पा० सू० ३।२।९२] । तत्रोत्तरं—कर्मणि कारक इति । न च चिनोतेः केवलस्येति । प्रसिद्धा[2]न्वाख्यानमिदम् । न च चिदित्यग्न्याख्या प्रसिद्धा । तेन चिच्छब्दे क्विबन्तचिनोतिश्रुतेस्तदनुगमनम् । एतच्च कर्मण्युपपद इत्यनुवृत्तौ भवति । तेन तदनु[3]वर्त्तयितव्यम् । उपपद-

१. नियच्छतां स्वान्तमिति आ० मा० ।
२. °ख्यानुगमनमिदम् आ० मा० ।
३. अनुवर्तितव्यम् आ० मा० ।

प्युपालम्भनादिक्रियासम्भवात् । बहुत्वाद्यालम्भनादिवाक्यानां तदन्यथानुपपत्त्या व्यक्तेरेव पदार्थत्वमवसीयते ।

अथाकृतिपक्षेऽपि व्यक्तिलक्षणया तान्युपपत्स्यन्त इत्युच्यते । तदैतदपि शक्यमेव वक्तुम्—'श्येनवाक्ये व्यक्तिराकृतिलक्षणार्थेति । युक्ता चैकत्र लक्षणा नेतरेषु बहुषु । अगत्या वा तृतीयासमासाश्रयणं श्येनवाक्ये करिष्यते । संख्याकारकाद्युपपत्तिश्च व्यक्तिपक्षे । तेन व्यक्तिः शब्दार्थ इति स्थितेऽभिधीयते—जातिरभिधेयेति । कुत :—

पूर्वं सामान्यविज्ञानाच्चित्रबुद्धेरनुद्भवात् ।
गामानयेति वाक्याच्च यथारुचिपरिग्रहात् ।।

गोशब्दोच्चारणे हि पूर्वमेवागृहीतासु व्यक्तिषु सामान्यं प्रतीयते । तदाकारज्ञानोत्पत्तेः पश्चाद् व्यक्तयः प्रतीयन्ते । अतश्चाकृतिप्रत्ययस्य निमित्तान्तराभावाद् व्यक्तिप्रत्यये च पूर्वप्रतीतसामान्यनिमित्तत्वादाकृतिः शब्दार्थ इति विज्ञायते । यदि च व्यक्तयोऽभिधेया भवेयुस्ततस्तासां चित्रखण्डमुण्डादिविशेषस्वरूपग्रहणाद् विचित्रा शब्दोच्चारणे बुद्धिः स्यात् । एकाकारा तूपपद्यते । तेनाप्याकृतिः शब्दार्थं इति निश्चीयते । गामानयेति चोदितेऽर्थप्रकरणाभावे यां काञ्चित्सामान्ययुक्तां व्यक्तिमानयति, न सर्वां, न विशिष्टाम् । यदि च व्यक्तेरभिधेयत्वम्, ततः सर्वासां युगपदभिहितत्वादशेषानयनं स्यात् । या वाभिधेया सैवैकानीयेत, यतस्त्वविशेषेण जातिमात्रयुक्ता नीयते, तेनापि सामान्यस्य पदार्थत्वं विज्ञायते । व्यक्तिपक्षे च सर्वा वा स्वतन्त्रा व्यक्तयोऽभिधीयेरन्, व्यक्तिविशिष्टो वा समुदायः, काचिद्वैका व्यक्तिरिति । तत्र सर्वव्यक्त्यभिधानं तावदयुक्तम् । अनेकवाचकशक्तिकल्पनाप्रसङ्गादनित्यशब्दार्थसम्बन्धापत्तेरशेषव्यक्तिग्रहणाशक्तेश्च सम्बन्धाग्रहणे सति व्यवहारानुपपत्तेः । नित्यवद् गोशब्दस्याष्टशब्दवद् बहुविषयत्वादेकवचनद्विवचनश्रुत्यसम्भवाद् गोशब्दाभिहितासु च सर्वव्यक्तिषु शुक्लगुणाभावे गौः शुक्ल इति सामानाधिकरण्यासम्भवात् । 'पशुना यजेत' इति च पशुशब्दोपात्ताभिः सर्वव्यक्तिभिर्यागस्य कर्तुमशक्यत्वात् ततश्च वेदाप्रामाण्यप्रसक्तिः ।

एवं समुदायपक्षोऽपि न सम्भवति । तत्रापि हि विशेषणत्वेन व्यक्तयोऽभिधातव्याः । ततश्चोक्तदोषप्रसङ्गः । व्यक्तिव्यतिरिक्तसमुदायकल्पना,

तेन च व्यवहाराभावादभिधानानर्थक्यम् । समुदायिविनाशे च तस्याप्यनित्यत्वादनित्यशब्दार्थसम्बन्धप्रसङ्गः । समुदायस्य चैकत्वात् द्विवचनबहुवचनानुपपत्तिः सामानाधिकरण्यासंभवश्च । तेन चामूर्तेन यागाद्यसंभवाद् वेदस्याप्रामाण्यम् । अथैका व्यक्तिरभिधीयत इत्युच्यते तत्रापि संबन्धानित्यत्वं, का सावभिधीयत इत्यज्ञानाद् व्यवहाराणामसंभवः सामान्यप्रत्ययानुपपत्तिर्द्विवचनबहुवचनाभावप्रसङ्गः । प्राक् चाभिधेयव्यक्त्युत्पत्तेरुत्तरकालं च प्रयोगासंभवः । समाने च गोत्वे प्रतीतौ चेयमभिधीयते नेयमिति विशेषकारणं नास्ति । अतः परं भाष्यार्थः । यदि चैका व्यक्तिरभिधेया भवेद् व्यक्त्यन्तरे प्रयोगो न स्यादभिधेयव्यक्तेस्तत्राभावादत्यन्तविलक्षणत्वाच्च, सामान्यविशेषविनिर्मुक्ता हि व्यक्तिरित्युच्यते । न च सामान्यविशेषौ मुक्त्वा व्यक्त्यन्तरेऽन्यदस्ति येन शब्दप्रयोगः स्यात् । ननु च यथैवैका सामान्यविशेषविनिर्मुक्ता तथा द्वितीया । यतश्च यथैवैकस्यां सामान्यविशेषविनिर्मुक्तायां शब्दस्य प्रवृत्तिरेवमविशेषादितरत्रापि भविष्यति । यदि सामान्यरूपं विशेषरूपं वा व्यक्त्यन्तरं स्यात्ततो विलक्षणत्वाच्छब्दो न प्रवर्तते, यदा तु तदप्युभयविनिर्मुक्तं रूपं तदा तुल्यरूपत्वादयुक्ता शब्दस्य प्रवृत्तिरिति । यद्येवं सामान्यविशेषविनिर्मुक्तत्वादेकत्रेतरत्र च शब्दो वर्तते हन्त तर्हि सामान्यविशेषविनिर्मुक्तत्वमेव सामान्यं शब्दस्याभिधेयं स्यादिति सिद्धो नः पक्षः । तस्याकृतिशब्दवाच्यत्वे केवलं भवतः प्रद्वेष इति । पूर्वपक्षवाद्याह नैवं मयोच्यते सामान्यविशेषविनिर्मुक्तत्वाद् व्यक्तौ शब्दो वर्तते व्यक्त्यन्तरे वेति, किं तु सामान्यविशेषव्यतिरेकेणान्यापोहवद्व्यक्तिः कथ्यते । तत्र कथं सामान्यमेव तर्हि वाच्यमित्युच्यते यो ह्यर्थः सामान्यस्य विशेषाणां चाश्रयः सा व्यक्तिर्न सामान्यविशेषौ । ततश्च यथैवैकस्यां सामान्यविशेषव्यतिरिक्तायां व्यक्तौ शब्दस्य वृत्तिस्तथान्यस्यामपि भविष्यति ।

समासश्चायमित्यभिप्रायः । ततश्च श्येनशब्दस्य पृथगर्थता । न चयनवाचिना चिच्छब्देन सह वैयधिकरण्यादित्यर्थः ।

सामानाधिकरण्यासम्भवश्चेति । गौः शुक्ल इत्यस्यासम्भवः सर्व[1] समुदाये शुक्लत्वासम्भवादिति । न चाभिधेयैकदेशयोगाद् वृत्तिरित्याह — अत्यन्तविलक्षणत्वाच्चेति । अन्यापोहवती व्यक्तिरिति । न च दण्डोऽप्युप-

---

१, समुदायेन शुक्लस्य संबन्धाभावादिति आ० मा० ।

सिद्धान्तवाद्याह—यदि तात्त्वसामान्यविशेषविनिर्मुक्तत्वाच्छब्दो वर्तते ततः सामान्यमेव वाच्यम् । अथ समानं निमित्तं नास्ति तदा व्यक्त्यन्तरे वृत्तिर्न प्राप्नोति । तदभावेऽपि चेद्वर्तेत, ततोऽश्वव्यक्तावपि वृत्तिप्रसक्तेरतिप्रसङ्गः स्यादिति । नैवम् सामान्यनिरपेक्षायामेव शब्दप्रवृत्तौ प्रयोगकृतव्यवस्थाश्रयणान्नातिप्रसङ्गो भविष्यति । यद्येवं प्रयोगवशेन शब्दो वर्तेत ततोऽद्य जातायां गवि न दृष्ट इति शब्दो न प्रवर्तेत तेन प्रयोगकृता चेद् व्यवस्था क्वचिदप्रसङ्गो न चेदतिप्रसङ्ग इति । यत्तु भिन्नासु व्यक्तिषु सामान्यप्रत्ययो न प्राप्नोत्ययमपि गौरयमपीति तदिहातिप्रसङ्गापादनेन न संबध्यत इति व्यक्त्यन्तरे प्रयोगो न प्राप्नोतीत्यस्मिन्नवसरे वक्तव्यम् । शक्त्या तर्हि व्यवस्था भविष्यति, यत्र शक्तः शब्दस्तत्र वर्तिष्यते प्रयोक्ष्यते च यत्र तु शक्तिर्नास्ति तत्र प्रयोगप्रवृत्ती न भविष्यतस्ततश्च गोव्यक्तिष्वेव शक्तेः प्रयोगव्यवस्था भविष्यति । नैवमपि व्यवस्था लभ्यते प्राक् प्रयोगाच्छब्दशक्तेरविज्ञानात्प्रयोगप्रतीत्यधीनं हि शब्दशक्तिज्ञानं तत्कथमिवानुत्पन्नं प्रयोगकाले व्यवस्थाकारणत्वेनाश्रयितुं युक्तम् । यद्यपि प्रयोगाच्छक्तिं जानाति तथापि प्रयोक्त्रा कथं ज्ञातं गोव्यक्तावयं शक्तः शब्दो नाश्वव्यक्ताविति, तेनाश्वव्यक्तावपि प्रयोगः प्राप्नोति । जात्या किमिति व्यवस्था नाश्रीयते यत्र गोत्वमुपलक्षणं तत्र शब्दो वर्तिष्यते यत्र तन्नास्ति तत्राश्वव्यक्त्यादौ वृत्तिर्न भविष्यति ततश्च व्यवस्थासिद्धिरिति । सत्यमेवं सिध्यति, किं त्वापन्नो भवानस्मत्पक्षमाकृतिर्वाच्येति । न ह्यनभिधाय गोत्वमुपलक्षणं गोव्यक्तावेव प्रयोगव्यवस्था लभ्यते तच्चेदभिहितं सिद्धमाकृतिशब्दार्थत्वमिति । पूर्वपक्षवादी तु द्वितीयं पूर्वपक्षमुपन्यस्यति सत्यमाकृतिरभिधीयते किं तु गुणत्वेन स्थिता व्यक्तिः प्राधान्येन शब्दार्थः । न चावयोरुभयं नाभिधीयत इति प्रतिज्ञा । कस्यचित् प्राधान्येन किञ्चिदभिधेयतया विवक्षितं किञ्चिद् गुणत्वेन, तदुक्तं व्यक्तिः प्राधान्येनाभिधेयेति । एवं सति प्रयोगव्यवस्थोभयप्रतीतिश्च तथालम्भनादिक्रियोपपत्तिश्च भविष्यति । इतरस्त्वाह—नैवं लभ्यते । जातिश्चेत् पूर्वमभिधेयत्वेनाभ्युपगतात्रैव शब्दस्योपक्षीणशक्तित्वान्न व्यक्तिवचनता लभ्यते । न चाकृतिसंवेदनेनापि व्यक्तिप्रतीतेरन्यथाप्युपपन्नत्वात् सत्यां गत्यावनेकार्थता युज्यतेऽभ्युपगन्तुम् । अर्थापत्त्या च शब्दस्य वाचकशक्तिः कल्प्यते । सा च यदा व्यक्तिप्रतीतेरन्यथाप्युपपन्नत्वात्

क्षीणा तदा वाचकशक्तिकल्पनायां प्रमाणं नास्ति । न च सामान्यविशेषवचनत्वं शब्दस्य दृष्टमक्षादिशब्दानामनेकसामान्यवचनत्वात् । अन्वयव्यतिरेकाभ्याञ्च व्यक्तेरशब्दार्थत्वं निश्चीयते । अनुच्चरितेऽपि शब्दे प्रतीतसामान्यस्य व्यक्तिप्रतीतेः । श्रुतिशब्दस्यापि चागृहीतसामान्यस्य व्यक्तिप्रत्ययाभावात्, तेनाकृतिरेव शब्दार्थ इति ।

साम्प्रतं पक्षान्तरमुपन्यस्यति । अथ व्यक्तिविशिष्टायामाकृतौ किमिति न वर्त्तते । तदेतत् प्रयोगप्रतीतिक्रियासम्भवत्वेन वा पक्षान्तरमुपन्यस्तम् । यद्वा व्यक्तेरेव शब्दार्थत्वं साधयितुमिदमुच्यते । अनेनाभिप्रायेण कदाचित् सिद्धान्तवाद्याकृतेः शब्दार्थत्वमनेनाभ्युपगतमेवालम्भनादिक्रियासम्भवश्च भविष्यतीत्यनेनाभिप्रायेण व्यक्तेरपि गुणत्वेनाभिधानमिच्छति । ततोऽहं पूर्वं तावद्विशेषणे वर्त्तितुमर्हतीति व्यक्तिवचनत्वमेव साधयिष्यामीति । इतरस्तु तदभिप्रायं ज्ञात्वोत्तरं वदति व्यक्त्यन्तरविशिष्टायां प्रयोगो न प्राप्नोतीति । यदि हि व्यक्तिविशिष्टा जातिरभिधीयते, ततो व्यक्त्यभिधानपक्षोक्तदोषप्रसङ्गः, अनेकशक्तिकल्पनादिरूपो व्यक्त्यन्तरे प्रयोगश्च न प्राप्नोति, विशेषणस्यान्यत्वादिति । तेन जातिरेव शब्दार्थः ।

ननु गुणभूता प्रतीयते । अतश्चान्येन प्रधानेनाभिधेयेन भवितव्यमिति । नैवं शब्देन तावत्सैवाभिधीयते । यदि विवक्षावशेनार्थाद् गुणत्वं प्राधान्यं वा भवति, भवतु नाम न तावता शब्दाभिधेयत्वं व्याहन्यते । यदा चासौ शब्देनाभिधीयते, तदा गुणत्वं नैव प्रतीयते । तेनार्थाद् गुणत्वप्रतीतिरदोषः । ननु पूर्वपक्षोक्तैः कारणैर्व्यक्तेरेव शब्दार्थत्वं युक्तम्, व्यक्त्यन्तरप्रयोगो न प्राप्नोतीति चेत्—आकृतिचिह्नभूता भविष्यति । यथानभिधीयमानमपि काकनिलयनं देवदत्तगृहशब्दस्य स्वार्थमभिदधतश्चिह्नभूततां प्रतिपद्यते तद्वदाकृतिश्चिह्नं व्यत्यभिधाने भविष्यति । ***भाष्यकारेण*** तु दण्डिशब्दो दृष्टान्तत्वेनोपात्तो, यथा तेन न नाम किल दण्डोऽभिधीयते । अथ च दण्डविशिष्टः पुरुषः प्रत्याय्यते तद्वदाकृतावपीति । ननु दण्डिशब्दे प्रकृत्या दण्डोऽभिधीयत एव कथमुच्यते न च तावद्दण्डोऽभिधीयत इति । कथं चोपलक्षणत्वेनाकृतावुपन्यस्तायां विशिष्टः प्रत्याय्यत इति विशेषणं दृष्टान्ततयोपन्यस्तमिति । नायं दोषः । विशेष्याभिधायकप्रत्ययाभिप्रायत्वाद्दण्डानभिधानस्य यथा प्रत्ययेन, न च

तावद् दण्डोऽभिधीयते। अथ च तद्विशिष्टः पुरुषः प्रत्याय्यते तथेहापि भविष्यतीत्यभिप्रायः। यत्तूपलक्षणोपन्यासे विशेषणस्य दृष्टान्तता न युक्तेति। तदुपलक्षणस्यापि विशेषकत्वान्न चोद्यम्। यद्वा केनचित्सामान्येन दृष्टान्तता भविष्यत्यनभिधेयत्वेन विशेषकत्वेन चेत्यदुष्टं, ततश्च सम्यगभिहितं यथा दण्डिशब्दे तद्वदत्रापि भविष्यतीति। एवं चाप्रसङ्गातिप्रसङ्गौ न भविष्यत इति। तदेतन्न युज्यते। युक्तं देवदत्तगृहस्य पुरुषस्य च केवलस्याभिधानं विशिष्टप्रतीतावपि काकनिलयनदण्डयोः प्रत्यक्षदण्डशब्दावगतयोर्विशेषणत्वोपपत्तेः, न तु गोत्वस्यासन्निहितस्येहोपलक्षणत्वं युज्यते। अप्रतीतविशेषणं विशेष्याप्रतीतेर्न च दण्डिशब्दवत्तदवयवेन गोत्वाभिधानं प्रतीमो, येन द्वितीयावयवेन व्यक्तेरेवाभिधानं स्यात्। अतश्च यदि तावद्गोत्वमभिधीयते ततस्तदेवोक्तेन न्यायेन वाच्यं भवेत्। अप्रतीतस्य विशेषणत्वासंभवात्। उक्तवदतिप्रसङ्गः शब्दप्रयोगस्य प्राप्नोति। न च यथा दण्डिशब्दः केवले दण्डे न प्रयुज्यत इति विशिष्टवचनोऽवधार्यते तद्वदाकृतौ प्रयोगाभावाद् विशिष्टवचनोऽवधारयितुं शक्यते। श्येनचित्यादावाकृतौ प्रयोगदर्शनादन्वयव्यतिरेकाभ्यां च जातिरेव वाच्येत्यवधार्यते, श्येनचिद्वाक्ये केवलायामाकृतौ प्रयुक्तत्वात्। क्वचिदपि चाकृत्या विना व्यक्तिमात्रे प्रयोगादर्शनादेव येऽपि सम्बन्धसमुदायादयः पूर्वपक्षास्तेऽप्युक्तेन न्यायेन निराकृताः। तेनाकृतिरेव शब्दार्थ इति ॥३३॥

ये 'त्वालम्भनादिचोदनाभावादयो 'न क्रिया स्यात्' [मी० सू० १।३।३४।] इत्येतत् सूत्रानुभाषिताः पूर्वपक्षोक्ताः हेतवस्तेषां सर्वेषामनेन सूत्रेण परिहारोऽभिधीयते—तदर्थत्वात्प्रयोगस्याविभागः [मी०सू०१।३।३५] इति। तदर्थत्वात्—अपूर्वार्थत्वादालम्भनप्रोक्षणाद्यङ्गानामपूर्वसाधने प्रयोगेण भवितव्यं द्रव्यं चापूर्वसाधनं यागेन स्वसिद्ध्यर्थमाक्षिप्तत्वान्नाकृतिरसमर्थत्वात्तदभिधानं तु द्रव्यनियमार्थं

लक्षणमिति वक्तव्यम्। यतः स्वयमेव दण्डविशिष्टः प्रत्याय्यत इत्यभिधानेन विशेषणत्वमस्याङ्गीकृतमिति तद्दर्शयितुं *भाष्याक्षराण्याह*—विशिष्टः प्रत्याय्यत इति। तदुपलक्षणस्यापीति। विशेषणसामान्यमुपलक्षणेऽप्यस्तीति। भवतु विशेषणोपलक्षणयोरत्यन्तभेदस्तथाप्यदोष इत्याह—यद्वा केनचित्सामान्येनेति [?]। न च दृष्टार्थोपपत्तिरित्याह—[1]साधनत्वाप्रतीतेरिति। [2]साधनस्य क्रियानिर्वर्तकत्वेनारादुपकारिता। तेन साधनयोग्यव्यक्तिपरः शब्द इति ॥३३॥

१. साधनत्वप्रतीतेरिति श्री० मा०।
२. °कत्वेन नारादुपकारिता आ० मा०।

प्रतिपत्तव्यम्, न स्वार्थम्, जातेरनपेक्षितत्वाददृष्टार्थत्वप्रसङ्गात् साधनत्वाप्रतीतेश्च। यदपि जातेः प्रातिपदिकाभिहितायाः करणत्वं प्रतीयते तदपि द्रव्यनियामकत्वेनैव न साक्षादयोग्यत्वात्। तेनाकृत्यभिधानस्य द्रव्यनियमार्थत्वाद् द्रव्ये वालम्भन-प्रोक्षणसंख्याकारकसामानाधिकरण्यादिसंभवाददुष्टता। तदाह प्रयोगस्याविभाग इत्याकृतिपक्षेऽप्यालम्भनादिप्रयोगस्य द्रव्यादविभक्ततैवेति। अथ वाकृत्यभिधानस्य द्रव्यनियमार्थत्वादुक्तवत् प्रयोगस्याविभाग इति। यद्वा आकृतिव्यक्त्योरत्यन्त-भेदाभावात्कदाचिद् व्यक्तिरूपेण द्रव्यमभिधीयते। कदाचित्सामान्यरूपेण, यथा विवक्षितं तथा शब्दस्योभयरूपवस्त्वर्थत्वाद् व्यक्त्यभिधानेऽपि न प्रयोगस्य विभागो नानारूपतेति। जातेर्वा व्यक्तितोऽत्यन्तभेदाभावाद् व्यक्तौ कृता धर्मा जातौ कृता एव भवन्तीति न प्रयोगस्य विभागेन प्रयोजनमिति। यद्वा आकृतिव्यक्त्यो-रुभयोर्यागार्थत्वाद्धर्माणां च यत्र क्वचन यागसाधने कृतानां प्रयोजनवत्त्वाद्-द्रव्यादविभक्ततेति। तस्मादाकृतिपक्षेऽप्यालम्भनादिसम्भवादाकृतिरेव शब्दार्थ इति सिद्धम् ॥३५॥

*॥ इति श्रीभट्टकुमारिलस्वामिकृतौ मीमांसावार्त्तिके प्रथमाध्यायस्य तृतीयः पादः ॥*

तदर्थत्वादिति [मी० सू० १।३।३५] अपूर्वार्थत्वादिति व्याख्यातम्। तत्रोत्तरार्द्धं योजयति — आकृतिपक्षेऽपीति। पूर्वार्द्धमप्यन्यथा व्याचष्टे — अथ वेति। व्यक्त्यभिधानेऽपीति। यद्यपि क्रियावद् व्यक्तिरुच्यते तथापि प्रयोगस्य नावश्यं नानावृत्तिर्जात्यात्मिकाया व्यक्तेस्तदात्मानमभिधानात्। प्रयोगस्य विभागो नानेति। जातौ विहितानां धर्म्माणां प्रयोगस्यानुष्ठानस्य विभागो व्यक्तेर्निष्कृष्टायाञ्जातौ वृत्तिस्तेन न प्रयोजनमिति। यद्याकृति-व्यक्त्योरिति। यागसाधनत्वं धर्मसम्बन्धप्रयोजकं नाकृतित्वम्। तच्च व्यक्तावप्यविशिष्टमतस्साधारणं विधानमिति ॥३५॥

इति महामहोपाध्यायपन्नितोषमिश्रविरचिते तन्त्रटीकानिबन्धे जिताख्ये प्रथमाध्यायस्य तृतीयः पादः समाप्तः ॥३॥

॥ अथ प्रथमाध्यायस्य चतुर्थः पादः ॥

## उद्भिदधिकरणम् ।

एवं स्मृतिसहितस्य वेदस्य प्रामाण्ये सिद्धेऽधुना वाक्यार्थव्याख्यानावसरे सति अपरिसमाप्त्यैव प्रमाणलक्षणं केन सम्बन्धेन नामधेयचिन्तायाः प्रस्तावः क्रियते ।

केचित्तावदाहुः—किमुद्भिदादयो गुणस्य प्रमाणमुत क्रियाणामेव नामधेयत्वेनेति । तदयुक्तम्, एवं सति हि समस्तमेव शास्त्रं प्रमाणलक्षणादभिन्नं स्यात् । सर्वत्र ह्येतद्विचार्यते—किमिदं वाक्यमस्यार्थस्य प्रमाणमुतान्यस्येति ।

एवं स्मृतिसहितस्य वेदस्येति । ननु वाक्यशेषसामर्थ्ययोः सन्दिग्धनिर्णयेनैव प्रामाण्यं प्रतिपाद्यते, तत्कथं प्रामाण्यसिद्धिः ? उच्यते, प्रतिपादितप्रामाण्ययोरेव विध्यर्थवादयोः सन्दिग्धनिर्णयेऽपि व्यापारो वक्ष्यते, न तु तेन विना पूर्वावगतप्रामाण्यहानिः । अपि वा नामधेयचिन्तायाः प्राक् प्रामाण्यसिद्ध्यभिधानेन नामधेयचिन्तया प्रामाण्यप्रतिपादनं पर्यवस्यति । प्रागस्थाने[ने]त्येतदपनीयते । प्रकारान्तरेण त्वेतदपर्यवसानवारणं[1] न विवक्ष्यत इति । वाक्यार्थ[2]व्याख्यानावसर इति । इदमपि द्वेधा व्याख्येयम् । रात्रिसत्रादिफलप्रतिपत्ताविव सन्दिग्धनिर्णयेऽपि व्यापारस्य वाक्यार्थनिरूपणेऽन्तर्भावसंभवात् प्रामाण्यमात्रप्रतिपादनेनैव[3] प्रमाणलक्षणे समाप्ते भूत एव वाक्यार्थविचारावसर इति ।

अथ वा नामधेयचिन्तायाः[4] प्रमाणलक्षणानुकर्षणाद् वाक्यार्थविचारानवसर इत्येतदनेन वार्यते[5] न[6] चिन्तान्तरेणेति । एवं तर्हि वाक्यार्थविचार एवायमुपक्रान्तो भवतु । तत्राह — अपरिसमाप्त्यैवेति । प्रत्यर्थमध्यायानां विभक्तत्वात् अध्यायपरिसमाप्तिः कर्तव्या । [7]तदकरणे तु प्रमाणलक्षण एवास्यान्तर्भावोऽभिमतः प्रतीयते । स केन संबन्धेनेति । वाक्यशेषादिविचारेण वा प्रमाणलक्षणानुकर्षणादपरिसमाप्तिस्तस्येति ।

---

१. त्वपर्यवसानस्य निवारणम् आ० मा० ।

२. वाक्यार्थविचारावसर आ० मा० ।

३. एव नास्ति आ० मा० ।

४. चिन्तया आ० मा० ।

५. निवार्यते आ० मा० ।

६. न अधिकम् पठति आ० मा० ।

७. तदकरणात् आ० मा० ।

येऽपि चैते द्वे अपि सूत्रे पूर्वोत्तरपक्षौ परिकल्प्यैकाधिकरणत्वेन व्याचक्षते, तैरप्युक्तं समाम्नायैदमर्थ्यमिति [मी०सू० १।४।१] अनेन सूत्रेण कः सिद्धान्तानभिप्रेतः पूर्वपक्षानुगुणोऽर्थो विधीयत इति वक्तव्यम्। न ह्युक्तैदमर्थ्यान्तर्भाववचनमुद्भिदादीनामनिष्टम्। तस्माद् द्वयोरप्यधिकरणयोरनुमितपूर्वपक्षयोरुत्तरपक्षसूत्रद्वयमेतदिति व्याख्येयम्। तत्र प्रथमं तावदुद्भिदादीनुदाहृत्य सन्देहः क्रियते—किमेते कञ्चिद्धर्मं प्रत्युपयोगं गच्छन्त्युत नेति। किं तावत् प्राप्तम्, 'आम्नायस्य क्रियार्थत्वात्' [मी० सू० १।२।१] इत्यानर्थक्यम्। आह च—

त्र्यंशवेदप्रमाणत्वादुद्भिदादि ततोऽधिकम्।
धर्मायानुपयुक्तं सदानर्थक्यं प्रपद्यते॥

नह्येते विध्यादिष्वन्तर्भवन्ति। साध्यसाधनेतिकर्तव्यानभिधायित्वात् तावच्चोदनाबाह्यत्वं स्तुतिबुद्ध्यभावादर्थवादातिरेकः कर्माङ्गभूतैवंसंज्ञकप्रकाशयितव्यार्थाभावान् मन्त्रकार्यनिवृत्तिः। न चान्यद् वेदप्रयोजनमस्तीत्यप्रमाणमेवंजातीयका इति। अत्राभिधीयते—

एवं नामधेयप्रामाण्यं सिद्धं कृत्वा किं तत्कर्मणो विधायकं[1] गुणस्य वा विधायकमिति विचारस्यासङ्गतिरुक्ता। सूत्रमपि नेदृशेऽर्थे समञ्जसमित्याह — येऽपि चैते द्वे अपीति। किं प्राप्तमाम्नायस्य क्रियार्थत्वादिति। [मी० सू० १।२।१।] नन्वाक्षेपवत् समाधानमपि सामान्येन श्रुतमेव[2] विधिना त्वेकवाक्यत्वादिति [मी० सू० १।२।७।]। सत्यम्। तस्यैवेदमनेकविचारान्तरितस्योपस्थापनं विशेषविचाराय क्रियते।

अथ वा विध्यर्थवादमन्त्रसाधारणं विध्येकवाक्यत्वमुक्तमपि विशेषासंभवेनासंभवद् विध्यन्तर्भावेन स्थिरीक्रियते। किञ्च येषां भिन्नवाक्यता[3]प्रतिभानेनाक्षेपस्तेषामेकवाक्यतापादनेन उत्तरम् भवति[4]। नामधेयैकवाक्यतायास्तु प्रत्यक्षत्वादर्थानुपयोगेन वाक्षेपः। त[5]त्रार्थाभिधानेनैवोत्तरं भवति, नैकवाक्यताभिधानेन। तस्मादिदानीन्तनविध्यन्तर्भावाभिधानेनैवोपयोगसमान्यावगतिरिति।

---

१. °णोऽभिधायकम् आ० मा०। २. कतमेन आ० मा०।
३. °प्रतिज्ञानेना° आ० मा०। ४. भवति नास्ति आ० मा०।
५. तत्रार्थोपयोगाभिधानेनैवोत्तरं आ० मा०।

सर्वस्य त्रिविभागत्वाद् वेदस्योक्तेन हेतुना ।
उद्भिदाद्यप्रमाणत्वमतिरेकान्न सिध्यति ॥

यदा तदर्थत्रयान्यतमार्थमिति स्थितं तदा विचारः किमर्थमिति । न ताव-दर्थवादत्वं वाक्यशेषत्वाभावात् । कथं पुनरयं न वाक्यशेषो यावता 'वायुर्वै क्षेपिष्ठा' इत्यादिवदेकवाक्यतावगम्यते । नैतदस्ति । विधातव्यस्य हि यः शेषः सोऽर्थवादः । अयं तु विध्युद्देशादेव नातिरिच्यत इत्यवाक्यशेषः । तत्संभविनश्च स्तुत्युपयोगित्वं न युज्यत इत्युक्तमौदुम्बराधिकरणे । न चैकपदेन स्तुतिर्दृष्टा । न चेह तां प्रतिपद्यामहे यदप्युद्भेदनं पशूनामनेन क्रियत इत्येवं प्राशस्त्यं कल्प्येत तदपि तृतीयान्तसमुदायाश्रयबलवत्तरकरणत्वप्रसिद्धया बाध्यते । अन्यथा हि प्रातिपदिकप्राधान्याद्वा 'वायर्वै क्षेपिष्ठा' इतिवत् प्रथमैव प्रायोक्ष्यत ।

यदा तदर्थत्रयान्यतमार्थमिति । नात्रैकविचारपर्यवसानं विचारान्तरा-रम्भश्चोच्यते । किन्तु यदैवं सूत्रार्थोऽवधारितोऽन्यतमार्थं[1] ब्रवीतीति तदा कोऽसावन्यतमोऽर्थः सूत्रेऽस्मिन् विवक्षित इति सूत्रार्थनिरूपणाय विचारयाम इति ।

अयं तु विध्युद्देशादेवेति । विशिष्टां भावना[2]मासाद्य विधिः प्रवर्त-मानः स्तुतिमपेक्षते । तेन तत्कालोपनीतस्यैवार्थवादत्वं भवेत् । उद्भिदेति तु विशिष्टभावनाविधानान्तर्गतं न तत्कालापेक्ष[3]स्तुतिप्रयोजनं भवितु-मर्हतीति ।

न चायमपि स्तुतौ शक्त इत्याह—न चैकपदेनेति । नन्वितरेषां रूढिपदानामाकृतिमात्राभिधायित्वान् मा[4] भवतु गुणगुणिभावसंबन्धा-भिधानसामर्थ्यम् । अस्य तु यौगिकत्वात् प्रत्ययांशेन गुणिनमुपादाय प्रकृत्योद्भेदनक्रियायोगं प्रतिपादयतः किमिति न भवतीत्याशङ्कयाह—न चेह तामिति । कथमप्रतिपत्तिरित्याह—यदपीति ।

अन्यो ह्ययमर्थो[5] यौगिकसमाख्यागम्यः पशूद्भेदनस्यायं कर्तेति । अन्यश्च तृतीयाश्रुतिगम्य उद्भिदेति । प्रकृतिप्रत्ययसमुदायार्थेनान्यत्

1. °मार्थतां आ० मा० ।	2. नां प्राप्य आ० मा० ।
3. तत्कालानपेक्ष आ० मा० ।	4. मा नास्ति आ० मा० ।
5. °मन्वयो° आ० मा० ।

न चास्य मन्त्रत्वं, ताद्रूप्येणाप्रतीतेः। अध्येतृस्मरणाभावाच्च । न चैकपद वत् साकाङ्क्षत्वं करणप्रतीत्या वा स्मारकत्वम्। न चैतदभिधेयः कश्चित् प्रयोग समवाय्यर्थो दृश्यते। न चासमवेतप्रकाशने कर्माङ्गत्वम्। मान्त्रवर्णिकद्रव्यकल्प नायामपि गौरवम्। न चास्य सूक्तवाकवद्विनियोजिका श्रुतिरस्ति येन मान्त्र-

कुर्यादिति। नानयोः सह विवक्षासंभव । तत्र श्रौतेन समाख्यागम्यस्य बाध इति। ताद्रूप्येणेति। अस्यन्तत्वान्तादि [?] रूपेण यच्छब्दादिप्रयोगोपहत विधिशक्तित्वेन वेति[1]—न चैकपदत्वादिति। [न चैकपदवदिति ?]

ननु विपरीतमिदं, न विपरीतं, यतः प्रयोजनाकाङ्क्षानेन वार्यते। यथा साध्या[2]नुष्ठेयस्मृत्या संबद्धो भवति। अङ्गोपदेशश्च प्रयोजनमपेक्षते। शब्दानां चार्थसमर्पणेनैवाङ्गभावात् वाक्यमङ्गम्। पदं तु तदेकदेशस्तेना परिपूर्णस्य[3] परिपूरकपदान्तरापेक्षा स्यान्न प्रयोजनाकाङ्क्षेति।

अपि च यद्वस्तु स्वरूपप्रतिपादनप्रधानं तत्स्मरणाय स्यात्। उद्भिदेति तु प्रातिपदिकार्थोऽत्र तृतीयया विनियोगायोपात्तः। तेन नैतावतः [4]स्मारकत्वमित्याह—करणत्वप्रतीत्या वेति। न चेत्यनुषज्यते। यत्र तु क्रियापदोपादानं यथा पूष्णो हस्ताभ्यां निर्वपामीति। तत्र तस्य स्मरणोपयोगात् कारकपदानामपि त[5]द्विशेषकत्वाद् भवेदपि स्मरणो-पयोगितेति भावः। न चास्य सूक्तवाकवदिति। श्रुतिबोधितसकलोपयोगा-न्यथानुपपत्त्या हि मान्त्रवर्णिककल्पना स्यादिति। न चास्य रूपमिति[6]। पूर्वं विनियोजकप्रमाणानुमानबीजं प्रयोजनाकाङ्क्षानिराकृता। न चैक पदत्वादिति। इदानीं सतापि विनियोजकप्रमाणेनायोग्यत्वाद् विनियोक्तुं न शक्यत इत्युच्यते। पदानां संहत्यकारित्वनियमा[7]देकदेशोऽकिञ्चित्करणा-दप्रयोगार्ह इति। न चैवं वक्तव्यम्। अत एवैकदेशविनियोगासंभवात् एकदेशान्तरमाक्षिप्य निराकांक्षीकरिष्यामः। यथा 'इषे त्वे'ति मन्त्रश्छेदने विनियुक्तः। छिनद्मीत्यध्याहृत्य प्रयुज्यत इति। यतः प्रत्यक्षविनियोगा-

१. चेति आ० मा०। २. साध्ययानु० आ० मा०।
३. °पूर्णस्य पदस्येति आ० मा०।
४. स्मारकत्वमित्यत आरभ्य कारकपदानामपीति यावत् आ० मा० इत्यत्र नास्ति।
५. तद्विशेषणत्वात् सेदेऽपि स्मरणो० आ० मा०।
६. न च स्वरूपमिति आ० मा०।
७. °मासंकदेशानामकिञ्चित्करणां प्रयोगार्थत्वमिति आ० मा०।

वर्णिकद्रव्यकल्पना स्यात्। न चास्य रूपं प्रयोगार्हम्। अतश्चाविनियुक्तत्वात्। 'ईषे त्वा'दिवदपि नाध्याहारेण निराकाङ्क्षीकृत्य प्रयोगः। स्फुटं च ब्राह्मणेनैकवाक्यत्वमित्यमन्त्रत्वम्। तस्माद्विध्युद्देशान्तर्गतस्यैवोत्तराधिकरणेन विचार्यते गुणविधिर्नामधेयमिति।' तत्र तावत्—

प्रसिद्धेर्बलवत्त्वेन प्रयोजनवशेन च।
अधिकत्वात् प्रवृत्तेश्च गुणरूपं विधीयते॥

प्रातिपादिकं तावदुद्भेदनसमर्थे द्रव्ये खनित्रादाववयवप्रसिद्ध्या प्रवर्त्तते। न च समुदायोऽर्थान्तरवाची लोके प्रसिद्धः। न च लोकादनवगतोऽर्थो वेदादवगम्यते संबन्धस्य शास्त्राहेतुत्वात्। तृतीयापि च करणवाचिनी, क्रियायाश्च शक्तिमद् द्रव्यं तदाधारा वा शक्तिः करणं, तेनोद्भित्साधनको यागोऽवगम्यते।

न्यथानुपपत्त्या क्रियते। न चास्य विनियोगः प्रत्यक्ष इत्याह—अतश्चाविनियुक्तत्वादिति। अतश्चाध्याहारेणेति संबन्धः। अथ वा अतोऽप्रयोगार्हत्वान्न प्रयोगः। अविनियुक्तत्वाच्चा[1]ध्याहारेण निराकाङ्क्षीकृत्यापि न[2] प्रयोग इति। तस्माद् विध्युद्देशान्तर्गतस्यैवेति।

नन्वेवमपि सैवासङ्गतिः, पूर्वाधिकरणेनैव प्रामाण्यस्य सिद्धत्वात्। उच्यते, न सिद्ध्यति। तथा हि नामधेयस्याप्रवृत्तिविशेषकरत्वादप्रसिद्धेश्च गुणविधौ मत्वर्थलक्षणावाक्यभेदादिदोषात् तृतीयप्रकारासंभवाच्चाविधित्वं पूर्वपक्षेऽभिहितं न तत्र यावदन्यतरस्योपादानं क्रियते तावन्निर्विशेषसामान्यासम्भवादभिहितमपि विधित्वं न प्रतितिष्ठतीति। प्रातिपदिक[3]प्रसिद्धिं गुणे दर्शयित्वा विभक्तिप्रसिद्धिमपि दर्शयति—तृतीयापि चेति। अर्थवत्त्वात्[4] प्रवृत्तिविशेषकरत्वमिति।

ननु नैतानि पदानि व्याख्यायमाने श्लोके विद्यन्ते। सत्यम्, श्लोकपदार्थानां तु पर्यायैरुपात्तानामन्वयं वदन् श्लोकार्थं[5] व्याचष्टे। कथं नामैतेनैव वक्ष्यमाणाधिकरणभाष्यं प्रसिद्धेर्गुणविधेरर्थवत्त्वात् प्रवृत्तिविशेषकरत्वाच्च गुणविधेय इत्येतद् व्याख्यातं स्यादिति।

---

१. च्च नाध्या० आ० मा०। २. नेति नास्ति आ० मा०।
३. प्रतिपादकेति आ० मा०। ४. अथ पश्चादिति आ० मा०।
५. श्लोकमिति आ० मा०।

न च यागस्योद्भित्त्वं करणत्वं वा क्वचित् प्रसिद्धम् । अर्थवत्त्वात्प्रवृत्तिविशेषकरत्वम् । विधायकोद्भित्पदपुरुषाणां प्रवृत्तौ विशेषः । अन्यथा ह्यनुच्चरितसमैव प्रवृत्तिरेषां स्यात् । अथ वा प्रसिद्धत्वाद् गुणविधिरर्थवत्त्वमभिधेयवत्त्वं नामधेयत्वे त्वर्थो न विज्ञायत इति योज्यते । अथ वा भेदेनार्थवत्त्वं हेतुः, उद्भित्पदस्य यजितः फलान्तरत्वात् । ततश्च विधिपुरुषयोः प्रवृत्तिविशेष इति वाच्यम् । ननु नामधेयमपि क्रतुं विशिषदर्थवत् प्रवृत्तिविशेषकरं च स्यात् । नैतदस्ति । कुतः

आकृतेरविधेयत्वाद्धातुना व्यक्तिराश्रिता ।
सा च नाम्नाभिधीयेत जातिश्चेन्नैव नामता ।।

यदा तावद्धातुनैव लक्षणया विधिविषयत्वयोग्यत्वाद् यागविशेषः प्रतिपाद्यते तदा किमपरं तत्र नाम करिष्यति । अथ सामान्यमात्रमभिधीयते ततस्तस्यानिष्टमेवैतन्नामेत्यसंबद्धं सिद्धत्वादेव च विशेषस्य[1] न नामधेयं विधायिष्यत इति

अथ वा तद् *भाष्यं* तत्र पठितमर्थद्वारेण सर्वार्थं पश्यतानीय[1] श्लोकेनोक्तार्थं विवृणोति । गुणविधिपक्षेऽर्थस्योद्भित्पदवाच्यस्य प्रतीतेः प्रवृत्तिविशेषकरत्वेनोपयुक्तमुद्भित्पदमित्येको हेतुः । कस्य प्रवृत्तौ विशेष इत्याह—विधायकोद्भित्पदपुरुषाणामिति । कुतो विशेष इत्याह—अन्यथा ह्यनुच्चरितसमैव प्रवृत्तिरेषां स्यादिति । अनुच्चरितेनोद्भित्पदेन यादृशी प्रवृत्तिर्विधायकपुरुषयोर्धात्वर्थमात्रगता यादृशी वोद्भित्पदस्य असती तादृशी स्यान्नातो विशिष्यते गुणविषयत्वेन सत्त्वेन नेति । एवमर्थवत्त्वादित्युत्तरेणैक हेतुतया व्याख्याय सम्प्रति पूर्वेण व्याचष्टे—अथ वा प्रसिद्धत्वादिति ।

गुणविधेः सतोऽस्याभिधेयत्वम्[2] लोके गुणे प्रसिद्धत्वान्नामधेयाङ्गीकरणे त्वर्थो न ज्ञायते कर्मणि संबन्धग्रहणाभावादिति । सिद्धत्वादेव च विशेषस्येति । अर्थप्रधानोऽयमुपन्यासः यज्यर्थनामार्थयोः सामान्यविशेषयोर्भिन्नपदोपात्तयोर्विधौ वाक्यभेददोषं परिहरता भवताप्येष परिहारो वक्ष्यते । यजिनैव विशेषस्य विहितत्वान्न नामधेयार्थः पृथग् विधीयते[3] ।

---

१. विशेष्यस्य काशीमुद्रितपुस्तकपाठः ।

१. पश्यंस्ततोऽआनीय आ० मा० ।

२. अभिधेयवत्त्वम् पू० मा० ।　　३. विचार्यते आ० मा० ।

वक्ष्यति। यदा च केनापि प्रकारेणोद्भिदादीनां विशेषवचनत्वं तदा तदत्यन्ता-विनाभूतसामान्यवचनत्वेन यजेरनर्थकत्वम्। लाघवं च विधेर्गुणविधौ भविष्यति। यागानुवादात्। यद्येवं गुणाक्षिप्तत्वाद् विधिशक्तेर्न तर्हि कर्म विधीयते तथा चाविहिते[1] कर्मणि कस्य गुणो विधीयत इत्यानर्थक्यमत आह — प्रकृतौ ज्योति-ष्टोम इति। ननु गुणविधिपक्षे ज्योतिष्टोमेनेत्यस्यापि तत्परत्वादविहितमेव कर्म। गत्यभावादिदमेकं कर्मविधानं भविष्यति। तद्व्यावृत्तेः च विधायके च गुणस्य विधातुमशक्यत्वाज्ज्योतिष्टोमपदमेवैकं नामधेयम्। अथ वा तदेकं गुणविशिष्टं कर्मविधानमितराणि कर्मानुवादेन गुणविधानानि। नन्वेवं सति सर्वा एकाहाहीन-सत्रचोदना ज्योतिष्टोमस्यैव गुणविधिद्वारेण प्रकरणादनतिरिक्ता इति कर्मान्तराभावान्न ज्योतिष्टोमः कस्यचित् प्रकृतिरिति तच्छब्देन नाभिधातव्यः। सिद्धान्ताभिप्रायेणाहेति केचित्।

अथ वा प्रक्रियत इति प्रकृतिः, प्रकृतज्योतिष्टोम इत्यर्थः। अथ वा 'अथैष ज्योतिः' इत्येवमादीनां करणविभक्त्याख्यातसंस्पर्शाभावात् गुणविधित्वानुपपत्ते-रेकान्तेन भेदकतया कर्मनामत्वम्। तदपेक्षया च ज्योतिष्टोमः प्रकृतिः। ननूत्पत्तिवाक्यशिष्टेन सोमेन ज्योतिष्टोमेन वावरोधाज्ज्योतिष्टोमे गुणान्तर-

लाघवं च विधेर्गुणविधौ भविष्यतीति। कर्मगुणयोर्विधौ गौरवमाशङ्क्य इद-मुच्यते नामधेयपक्षवद् गुणविधिपक्षे लाघवमिति। याग[1]नामधेयस्य यजिविशेषणत्वे तत्रापि विधेर्व्यापाराद् गौरवं, गुणविधौ तु तन्नेति। गत्यभावादिदमेकमिति। विशेषग्रहणे च कारणं कर्तव्यता। लिङ्गस्येति-कर्तव्य[2]ताजातस्य सन्निधावाम्नानमिति। प्रकृते ज्योतिष्टोम इति। ज्योति-ष्टोमानुवादगुणविधित्वेन हीतरेषामसंबद्ध[3]पदव्यवायाभावात् सर्वत्र ज्योति-ष्टोमः प्रकृतो भवतीति।

सोमेन ज्योतिष्टोमेन वेति। यदि ज्योतिष्टोमपदं नामधेयमङ्गी-क्रियते तदानेन वाक्येन फलोपादानादधिकारप्रयोगव्यापृतेनापेक्षितोत्पत्तिः सोमेन यजेतेत्यनेन क्रियते। अथ न[4] कस्यचिन्नामधेयत्वमभिमतं[5] तदा प्राप्ते

१. तथा च विहिते काशीमुद्रितपुस्तकपाठः।

१. याग इत्यस्य स्थाने अथ वा इति आ० मा०।

२. °तान्वितस्य आ० मा०। ३. °मसंबन्धि पद० आ० मा०।

४. नेति नास्ति आ० मा०। ५. °मभिप्रेतम् आ० मा०।

विधानमयुक्तम् । काम्यत्वादुद्भिदादयो बाधका भविष्यन्ति । नित्ये प्रयोगे च पूर्वगुणस्यार्थवत्ता । अथ वा विशिष्टविहितमपि कर्म स्वरूपमात्रं निष्कृष्य गुणान्तरे विहितं नौत्पत्तिकाद् विशिष्यते । अन्यथा गत्यसंभवाद् विकल्प इति मन्यते ॥ १ ॥

यदुत्पत्तौ प्रथमज्ञानेऽर्थान्तरपूर्वकत्वेनैकान्ततो न प्रसिद्धमुद्भिदादि तद्वैदिकव्यवहारे प्रथमोगनिपातात्सामानाधिकरण्ये ननामधेयं स्यात् । अथ वैवम-पूर्वं कर्म विदधदर्थवद् भविष्यति । अथ वा कस्य नामधेयमिति सन्देहेऽभिधीयते । यस्योत्पत्तावपूर्वं निष्पद्यते यागस्येत्यर्थः । किं कारणम्—

गुणो विधीयमानो हि फले कर्मणि वा भवेत् ।
विशिष्टविधिबुद्ध्या वा सर्वथा च न युज्यते ॥

फलं प्रति तावद्विधीयमाने परपदसंबन्धविधानं व्यवहितकल्पना धातोः पारार्थ्यमौत्पत्तिकसोमबाधोऽनदनीयेन च खनित्रादिनात्यन्ताप्रसिद्धेन याग इति दोषास्तथा यागं प्रति गुणविधौ फलपदानर्थक्यम् । [1]सार्थकाम्यप्राप्तज्योतिष्टोम विशेषणत्वे वाक्यभेदः । प्रत्ययव्यापारविप्रकृष्टता धातुपारार्थ्यानदनीययाग सोमबाधविकल्पाश्चात्यन्तायुक्ताः । तथा विशिष्टविधौ सर्वपारार्थ्यमनेकविधिशक्ति कल्पना मत्वर्थलक्षणा गम्यमानसामानाधिकरण्यत्यागोऽनदनीययागश्चेति दोषाः । तस्मान्न गुणविधिः । तद्दर्शयति—इतरथा श्रुतिरुद्भिदादीन् वक्ष्यति

**कर्मणि [1]संबन्धप्रतिपादनासंभवात् । उत्पादकत्वमपि ज्योतिष्टोमगुण-विधानस्येति[2] । स्वरूपमात्रं निष्कृष्येति । उत्पत्तिशिष्टानुत्पत्तिशिष्टयोः श्रौतत्वाविशेषेऽपि[3] उत्पत्तौ निराकाङ्क्षीकृतो न गुणान्तरं प्रतीच्छती-त्यनुत्पत्तिशिष्टस्य संबन्धबीजाकाङ्क्षा विच्छेदादसंबन्धो यदा तु निष्कृष्य शब्देनोपात्तो भवति तदा शब्दतः प्रवर्तत एवाकाङ्क्षा । ततश्च गुणान्तर-संबन्धसम्भव इति ॥१॥**

**विशिष्टविधौ सर्वपारार्थ्यमिति । विशेष्यविशेषणपदयोर्विशिष्ट-समर्पणोपयोगेन स्वार्थमात्रपर्यवसानाभावादिति ।**

---

१. सार्वकाम्य काशीमुद्रितपुस्तकपाठः ।

१. गुणफलसंबन्ध० आ० मा० ।

२. गुणविधानवाक्यस्य आ० मा० ।  ३. श्रौतत्वविशेषेऽपि आ० मा० ।

तद्वतो लक्षयेत् । वक्ष्यन्ती लक्षयेत् इति वा ग्रन्थः । प्रातिपदिकसामर्थ्यं-मुक्त्वा विभक्तिसंबन्धादप्येतदेवावगम्येत इति दर्शयति—यागेन कुर्यादित्या-दिना । किञ्च—

विधाने चानुवादे च यागः करणमिष्यते ।
तत्समीपे तृतीयान्तस्तद्वाचित्वं न मुञ्चति ॥

यत्करणाभिधायिन्या तृतीयया इत्येवमादिषु कारकाणां विभक्त्यर्थ-त्वाभ्युपगमात् कथं करणवाचिनो हि प्रातिपदिकादित्युच्यते । नैष दोषः । करणाश्रयवाचिनो हीत्यभिप्रायः । अथ वा करणशब्दो यादृशमर्थं ब्रवीति, तादृशस्य प्रातिपदिकं वाचकमेव । कृदन्तेन हि कारकविशिष्टं द्रव्यमेवोच्यते, न विभक्तिवन्निष्कृष्टा शक्तिः । तथा च करणं करणेन करणायेति च कारकान्तर-योगो दृश्यते । अन्यथा हि विभक्त्यभिहितेनैवैकेन कारकेण वशीकारान्न द्रव्यं कारकान्तरयोगं प्रतिपद्येत । शक्तेस्तु शक्त्यन्तरं नास्त्येव । तस्माच्छक्त्युपसर्जन-द्रव्यवचनत्वात् कृदन्तानामुपपन्नं करणशब्दार्थवाचित्वं प्रातिपदिकस्य । तेनैतदुक्तं भवति, यदस्मिन् वाक्ये करणम्, तद्वाचिनः प्रातिपादिकात्तृतीयो-त्पत्तव्यम् । यागश्चात्र फलभावनायाः करणम्, न द्रव्यमिति वक्ष्यति । ततश्च यद्युद्भित्पदं यागवचनमेवं तृतीयान्तं सदेकवाक्यतां यास्यत्यर्थान्तरवचनत्वे त्वसम्बद्धं स्यात् । ननु च—

प्रत्यक्षं द्रव्यवाचित्वमुपन्यस्तं कथं पुनः ।
करणत्वानुमानेन बाध्यते व्रीहिसोमवत् ॥

यथैव 'व्रीहिभिर्यजेत' 'सोमेन यजेत' इत्यादीनां करणभूतयागैकवाक्यत्वे-सति तृतीयान्तत्वं वैयधिकरण्येऽप्यविरुद्धम्, एवमिहापीति । हठ इति । चिरन्तनतडागोदकाच्छादितहरितद्रव्यमुच्यते । यथा तदुत्सार्यमाणमपि स्वच्छन्दतः पुनः पुनरुदकं छादयति एवं योऽन्योऽपि स्वच्छन्दव्यवहारः, स हठ इति प्रसिद्धः । तदुच्यते—

पदमज्ञातसन्दिग्धं प्रसिद्धैरपृथक् श्रुतिः ।
निर्णीयते निरूढं तु न स्वार्थादपनीयते ॥

व्रीह्यादयो ह्यत्यन्तरूढास्ते स्वार्थमपरित्यजन्तः सामानाधिकरण्यं प्रतिपद्यमाना गत्यन्तराभावाद् गुणविधयो विज्ञायन्ते । ते पुनरुद्भिदादयो

यौगिकास्तेषां येनैव प्रकारेण यत्नेन द्रव्यवचनत्वम्, तेनैव कर्मवचनत्वमप्युपपद्यत इति। प्रत्यक्षप्रसिद्धानुदासीनायामनुमानेनाप्यज्ञानसंशयव्युदासकरणं न दुष्यति। सर्वशब्दार्थावधारणे ह्ययमभ्युपायो, यत्प्रसिद्धसामानाधिकरण्यं नाम। प्रधानञ्च करणत्वं यागे लब्धात्मकं शक्नोति प्रातिपदिकमात्मविषयमापादयितुम्। किञ्च—

विभक्त्यर्थानुवादाच्च विधेः स्यान्नाम्नि लाघवम् ।
गुणपक्षे विधेयत्वं संख्याकारकयोरपि ॥

त्वत्पक्षे ह्यवश्यं काचिद्विभक्त्यर्थेऽपि प्रत्ययस्य विधिशक्तिः कल्प्या स्यात्। तस्मादवयवद्वारेणास्ति कर्मण्यपि प्रसिद्धिः। ज्योतिष्टोमादेरपि स्वफलोद्भेदनकारित्वादेतन्नामप्रसङ्ग इति चेत्। न, सामानाधिकरण्यावधारितविषयविशेषस्यावयवान्वाख्यानात्। न चास्य ज्योतिष्टोमादिभिः समभिव्याहारोऽस्ति। अथ वा अर्थापत्तिवशेनैतद्विशेषविषयत्वमेवोद्भेदनं निमित्तम्, न चान्यत्र तदस्तीति व्यवस्था। यथा सास्नादिमद्गतगमनविशेषनिमित्तत्वं गोशब्दस्य। अविधायकत्वादित्यस्य व्याख्या न नामधेयं विधायिष्यत इति। संज्ञासंज्ञिसंबन्धरूपेण 'वृद्धिरादैच्' [पा० सू० १।१।१।] इत्यादिवदविधानं सामाना-

किञ्च यद्यपि प्राक्प्रसिद्धक्रियान्वयेषु खनित्रादिषूद्भित्पदं स्वरसेन गच्छेत् तथापि तृतीयया याग एव व्यवस्थापयितुं शक्यत इत्याह—प्रधानं [च] कारणत्वमिति।

विभक्त्यर्थानुवादाच्चेति। उद्भित् प्रातिपदिकं यज्यर्थे विशेषमादधत् विधिना संबद्ध्यत इति वक्ष्यते[1]। तृतीया तु आख्यातावगत एव कारणत्वैकत्वेऽनुवदति नामपक्षे। गुणपक्षे तु प्रातिपदिकार्थैकत्वविशिष्टं करणत्वमेव विधीयत इति। सामानाधिकरण्यावधारितेति। अनेन[2] पङ्कजादिवत् समुदायशक्तिमप्यङ्गीकरोति। अथ वार्थापत्तिवशेनेति। यदोपसर्गधातुसमुदायः सामान्यवचनोऽप्येतद् यागसमवेतं पशूद्भेदनमुपादत्ते तदैतद् विशिष्टकर्तृवाचिनोऽप्यस्य क्विप् प्रत्ययस्य साधुत्वमिति। यथा-सास्नादिमद्गतगमनेति। अन्वाख्यानस्थं यौगिकत्वं दृष्टान्त इति। तदधीनत्वाद् यागविशेषसिद्धेरिति। यागविशेषोऽत्रैव विधीयते, स च नामधेयाधीन

१. वक्ष्यति आ० मा०। २. समुदायवत् आ० मा०।

धिकरण्यावयवप्रसिद्धिभ्यां तत्सिद्धेः न तु नामधेयार्थो न विधीयते तदधीनत्वाद्यागविशेषसिद्धेः। इह हि यद्यपि संज्ञासंज्ञिसामानाधिकरण्यं नास्ति तथाप्यात्मरूपव्यवच्छिन्नमेवार्थं संज्ञा गमयतीति विशेषणविशेष्यभावान्न भिद्यते। नन्वेवं शब्दस्वरूपाभिधानं प्रसज्येत। प्रत्यक्षावगतस्वरूपविशिष्टार्थाभिधानादप्रसङ्गः। सर्वत्र ह्यगृहीतविशेषणा विशिष्टबुद्धिर्न दृष्टा, न त्वनभिहितविशेषणा। न चैतावता शब्दस्वरूपाक्षेपप्रसङ्गः। तदनुरोधेन विद्यमानार्थांशविशेषोद्धरणादित्युक्तं प्राक्। नाम्नैव चैवमादीनां प्रकृतितो भेदोऽन्यथा हि

प्रतिपत्ति[1]रिति नामधेयप्रमेयविधानमिति। कथं तदधीनतेत्याह—इह हि यद्यपीति। यथा गोत्वशुक्लत्वयोरेकव्यक्त्यधिकरणत्वात् गौः शुक्लत्वेन विशेषितो विशेषरूपेण प्रतीयते। तथा यद्यपि संज्ञा यागत्वैकाधिकरणा न भवति तथापि व्यधिकरणेनैवात्मरूपेण संज्ञाविशेषात्मना संज्ञान्तरविषयाद् विच्छिन्नमर्थं गमयतीति विशेषणफललाभः।

ननु संज्ञया[2] स्वोपलक्षिताभिधेयप्रतिपादनमात्मा[3]नमनभिधायाशक्यमिति स्वरूपाभिधानमापद्यत इति चोदयति—नन्वेवमिति। परिहरति—प्रत्यक्षावगतेति। न च [4]व्यक्तिव्यवच्छेदिका संज्ञेत्येतावत् साधर्म्येण शुक्लादिभिरिव संज्ञया तादात्म्येन संज्ञिनां प्रतिपादनाच्छब्दाध्यासप्रसङ्गः। यतो न तादात्म्येन संज्ञा संज्ञिनं[5]प्रतिपादयतीत्युक्तम् शब्दकल्पना [6]प्रत्यक्षोपपादने। कथं तर्हि व्यवच्छिनत्ति। न ह्यविशेषणो विशेषप्रत्ययः। न च संज्ञया किञ्चिद् विशेषणमुपात्तम्, स्वयं च न विशेषणमिति। तदनु[7]रक्तसंज्ञिप्रत्ययानभ्युपगमात्। तत्रेदमुक्तम्—तदनुरोधेनेति। संज्ञान्तरविषयेभ्योऽन्य एतच्छब्दवाच्ययागभेद इत्येवं विशेषणोल्लेखमन्तरेणैवाक्षिप्तविद्यमानविशेषणः संज्ञाविषयः प्रतीयते। ततोऽवगतव्यतिरेकस्य प्रमाणान्तराद् विशेषणान्वय इति। तदेतन्नामधेयस्य विशेषे प्रामाण्यमुपपादितमङ्गीकृतेन फलेन द्रढयति—नाम्नैव चैवमादीनामिति। यस्मिन् गुणोपदेशः प्रधानतोऽपि संबन्ध ॥२॥

---

१. °धीनसिद्धिरिति आ० मा०।

२. संज्ञाया आ० मा०। ३. °नमभिधायेति आ० मा०।

४. व्यक्ति पदं नास्ति पू० मा०।

५. संज्ञिनमर्थं बोधयतीत्युक्तम् आ० मा०।

६. प्रत्यक्षत्वोपपादेन पू० मा०। ७. तद्बुद्ध्यनुरक्त° आ० मा०।

तदनवच्छिन्नो यजिर्गुणफलाद्यर्थं पुनः श्रुतिः प्रकृतिगामित्वान्नैव कर्म भिन्द्यात्। अथ वा सर्वनामधेयेषु किञ्चिदर्थगतमपि विशेषणमस्तीत्यरुणैकहायन्यादिवदेव विशेषणविशेष्यता। न च यज्युच्चारणमन्तरेणास्य यागविशेषनामत्वमिति न सामान्यस्यानर्थकत्वम्। परस्परसंनिधानेन हि नामापि यागविषयं यागोऽप्येतदवच्छिन्नो न सामान्यमात्रं प्रकृतो वेति लभ्यते। तस्मादुभयोरर्थवता विशिष्टभावनाविधानाच्चोभयोरपि विधानमिति नानुवादत्वम्। एवं च सति न नामत्वं विधित्वमात्रप्रतियोगीति, ये पूर्वपक्षे विध्यन्तर्भावं सिद्धान्ते तु विध्यर्थवादमन्त्रातिरेकं नाम्नां वर्णयन्ति तेषामयुक्तमेव। [1]अशेषव्यवहाराङ्गभावाच्च नाप्रवृत्तिविशेषकरता। नह्यृत्विग्वरणादिष्वनेनाहं यक्ष्य इति लघुराख्यानोपायः स्यात्। दर्शपूर्णमासावारप्स्यमानः 'समे दर्शपूर्णमासाभ्याम्, इति गुणोपबन्धो दर्शपूर्णमासाभ्यां स्वर्गकाम इति च फलोपबन्धोऽन्यथा न स्यात्। तस्मान्नामधेयान्येवंजातीयकानीति सिद्धम् ॥२॥

## [ चित्राज्याधिकरणम् ]

इदानीमयौगिकेषु व्रीह्यादिवल्लोकरूढेषु जातिगुणशब्देषु चिन्ता। न ह्यानुमानिककरणत्वानुरोधेन प्रत्यक्षप्रसिद्ध्यभावः[2] संभवतीति पूर्वाधिकरणेनासिद्धिः। ननु 'आज्यैः स्तुवते' 'पृष्ठैः स्तुवते' 'बहिष्पवमानेन स्तुवते' इत्युत्पत्तिवाक्यत्वादेतान्युदाहर्तव्यानि। तथा हि—

> उत्पत्तौ नामधेयं वा गुणो वाप्यवधारितः।
> व्यवहाराङ्गतां याति सैवोदाहरणक्षमा ॥

सा तु नोदाहृता सूत्रकारेण 'यस्मिन् गुणोपदेश' इति गुणवाक्यस्याश्रितत्वात्। अथ किमर्थं तेनैव तदाश्रितम्। यत्र क्वचन प्रतिपादिते फलाविशेषात्। पूर्वपक्षनिराकरणहेतुर्वा वाक्यभेदस्तत्र संभवतीत्युदाहृतम्। अथ वोत्पत्तिवाक्यस्थस्याज्यादिपदस्य पक्षद्वयेऽपि साकांक्षत्वादेकस्यापि निश्चयहेतुर्नास्तीत्यन्यतः सिद्ध्यपेक्षणादनुदाहरणत्वम्। घृतवाचित्वात्तावन्न स्तोत्रनामत्वं विज्ञायते। यान्याज्यानि तैः स्तुवत इति च श्रूयते। तत्र कान्येव

यान्याज्यानि तैः स्तुवत इति श्रूयते। नानेनाज्यादीनामुद्देशं वदति किन्तु पदपदार्थ[1]प्रसिद्ध्यपेक्षित्वम्। यान्याज्य[2]पदवाच्यत्वेन पूर्वं ज्ञातानीति।

---

१. विशेषव्य° काशीमुद्रितपुस्तकपाठः। २. प्रसिद्धिभाव इति काशीमुद्रितपाठः।

१. पदार्थसंबन्धप्रसिद्धया आ० मा०। २. यान्याज्यादिपद आ० मा०।

निबन्धनत्वादवाक्यभेदाभिप्रायः। पशुकामशब्दोऽपि च स्वर्गकामाधिकरण-पूर्वपक्षन्यायेनार्जनाङ्गत्वादनुवादोऽभिमतो, न यागफलम्। न हि पशुयागः पशुमकामयमानेनानुष्ठातुं शक्यते। यागानुवादो विज्ञातत्वादिति।

सर्वत्राख्यातसम्बद्धे श्रूयमाणे पदान्तरे।
विधिशक्त्युपसंक्रान्ते स्याद्धातोरनुवादता॥

यावद्यावद्विधेयान्तरमुपादीयते तावत्तावत्पूर्वत्रानेकशक्तिकल्पनाभयाद-नुवादत्वाकाङ्क्षा भवति। अगत्या तु तत्रापि विध्यङ्गीकरणम्। अस्ति चात्र स्त्रीत्वचित्रत्वभागग्नीषोमीययाग इत्यनूद्यते—गुणे फलकल्पनायां यजते-रविवक्षेति। किमर्थं गुणविधित्वपक्ष एव सन्निराक्रियते। सिद्धान्तग्रन्थोऽयं प्रमादाल्लिखित इति केचित्।

अपरे त्वाहुः—फलसम्बन्धे किल प्रधानत्वाद् गुणोक्तिविधातः स्यादिति। तदयुक्तम्। सर्वथा नामधेयप्रतिपक्षो गुणविधिः।

स च फलसम्बधेऽप्यनपगतः। तथा च वक्ष्यति—स्थित एतस्मिन्नधिकरणे गुणविधिर्नामधेयमिति। विचार इति। फलसम्बन्धे ह्येकान्तेन यागसामाना-धिकरण्याभावात् गुणविधिरेव स्यादिति। तेनैवं वाच्यम्। इह तु त्रयः पक्षाः प्रतिभान्ति। गुणविधिः फले, यागे वा, नामधेयं वेति। एकैकस्य च द्वयं द्वयं-निराकर्तव्यम्। तत्र पूर्वपक्षस्थ एव दुर्बलतरत्वात्तृतीयं पक्षं निराकरोति। धातुपारार्थ्यप्रसङ्गादिति। अतश्च 'व्रीहिभिर्यजेत' इतिवद्यागे गुणविधानम्।

श्रौतो विधिरर्थाद् विशेषणविध्याक्षेपं करोतीत्येवमावृत्त्यभावादनेकेषा-मप्येकपदोपात्तानां [1]विधानेऽवाक्यभेदाभिप्राय इति।

ननु पदान्तरोपात्तफलसंबन्धविधानात् वाक्यभेदः स्यादत आह—पशुकामशब्दोऽपीति। पशुसाधनको यागः पशूपादानप्रवृत्तेन शक्यते कर्तुम्। पशूपादाने चास्ति यागसिद्ध्यर्थं[2] पशुर्मे स्यादिति कामना सानेनानूद्यते। तदेतत् षष्ठाद्यपूर्वपक्षे स्वर्गः कर्मणो गुणत्वेनोपदिश्यत इति प्रतिपाद्य स्वर्गकामपदमुपपादयन् वक्ष्यतीति। ननूक्तं—

विधाने चानुवादे च यागः करणमिष्यत इति।

न च करणस्य करणान्तरेण सम्बन्धोऽस्ति। तेन चित्रावता

---

१. विधाने वाक्यभेदाभाव इति आ० मा०।
२. यागसिद्ध्यर्थमिति केवलम् आ० मा० इत्यत्र।

करणभूतस्यापि च यागस्योत्पत्तिवाक्यावगतकरणत्वार्थाक्षिप्तसाध्यांशानुवादेन गुणे विधीयमाने न मत्वर्थलक्षणा । गुणवाद्येव वानभिभवसमर्थं यागे गुणविधानमाश्रयति । फले गुणविधिकल्पनायां पूर्वाधिकरणोक्तदोषप्रसङ्गादिति । तथा 'पञ्चदशान्याज्यानि' इत्यत्र 'अस्तिर्भवन्तीपरः' इति सत्तोपकल्पनं प्रयोगवचनाच्च विधिः । ननु च पञ्चदशानि सप्तदशानीति चैवंरूपः शब्दो न संख्यामात्रवाची 'स्तोमेडविधिः पञ्चदशाद्यर्थे' इति स्मरणात् । न हि स्तोम इति स्तोत्रीयसंख्यातोऽन्या विधीयते । नैष दोषः । स्तोत्रसाधनमात्रपरिच्छेदेन स्तुतिमानात्मकस्तोमसिद्धेः सदृशमृक्परिच्छेदे घृतपरिच्छेदे च स्तुतिमान निमित्तस्तोमवाचित्वम् । न चात्र मत्वर्थलक्षणा । कुतः —

श्रूयमाणस्य वाक्यस्य न्यूनाधिकविकल्पने ।
लक्षणा वाक्यभेदादिदोषो नानुमिते ह्यसौ ॥

इह तावदाज्यादीनां श्रुतवाक्यसंयोगाभावादवश्यं प्रकरणाम्नानानुमित-वाक्यसंबन्धपूर्वकः प्रयोगवचनविधिराश्रयितव्यः । तेन मत्वर्थ एव प्रतिपाद्यत इति न लक्षणा । तत्रैतत् स्यात् । द्रव्यत्वादाज्यादीनां कर्तव्यताविशेषात्मके-तिकर्तव्यतार्थिना प्रकरणेन न ग्रहणमिति । सत्तैवात्र क्रियेत्यनुपालम्भः । प्रधानदेशत्वाच्चाङ्गानामाज्यादिभिरवश्यं स्तोत्रसमीपे भवितव्यम् । अतश्च

**यागेनेति सम्बन्धो वक्तव्यस्तत्र च मत्वर्थलक्षणयैव दूषणमत आह—करण-भूतस्यापीति । चोदना धात्वर्थस्याभिमतभावनाकरणत्वे प्रमाणम् । अस्ति च करणनान्तरीयकमर्थलभ्यमनीप्सितकर्मत्वम् । न हि कर्तृव्यापारेणाविषयी-कृतं करणं भवति । तत्र यदा विध्यनुबद्धत्वात्[1] फलावधि व्यापारापेक्षा भवति तदा धात्वर्थस्तिरोहितकर्मत्वात् करणत्वेन प्रकाशते । यथा प्रयोग-वाक्ये । यत्र तूत्पत्तिवाक्ये प्रयोगवाक्याङ्गभावेन कर्मरूपविवक्षा तत्र कर्तृ-व्यापारो धात्वर्थावधिरेव प्रतीयते । अनीप्सितकर्मता चेयमेव । तेनोक्तं प्रयोगचोदनार्थेन करणत्वेनाक्षिप्तस्य तदेकदेशे चोत्पत्तिवाक्येऽवगतस्य साध्यांशस्यानुवादेनेति ।**

**ननु कथं सत्ता क्रिया भवति ? नहि सानुष्ठेया, असन्निहितत्वात्[2] लोकसिद्धत्वात् । अत आह—प्रधानदेशत्वादिति । प्रधानदेशस्थितराज्य[3]स्या-सन्निहितत्वादनुष्ठेया पुरुषस्येति । भवति चासावुपकारिकेत्याह—अतश्च यथैवेति ।**

---

१. विध्यनुबन्धात् आ० मा० । २. 'पदमिदं नास्ति आ० मा० ।
३. °स्यासिद्धत्वादनु° आ० मा० ।

यथैव 'अग्निमुपनिधाय स्तुवते' इत्यत्राग्निः सत्तामात्रेणोपकरोत्येवमिहापीति निर्दोषं, तस्माद् गुणविधानमिति । अत्राभिधीयते 'प्रधानतोऽभिसंबन्ध' इति । अनेकार्थविधानं हि प्रधानकर्मविधाने सत्युपपद्यते । अत्र पुनः कर्मानुवादेन गुणो विधीयते । न च गुणानां परस्परं संबन्धो विद्यते । तत्रैकगुणविधाने गुणान्तरानाक्षेपादर्थापत्त्यभावे श्रौतानेकविधिव्यापारकल्पनायां पुनः पुनरुच्चारणं प्रत्ययस्य कर्तव्यमिति वाक्यभेदः स्यात् । आह च—

अर्थादनेकमप्यर्थं विधापयति भावना ।
विशेषणविधिस्त्वन्यन्न गृह्णाति विशेषणम् ॥

एकपदोपात्तेऽपि चानेकविधिशक्तिकल्पनागौरवमस्त्येव । उत्पत्तिवाक्यशिष्टे गुणान्तराविरोधाच्चाशक्तिः । तथा हि—

उत्पत्तिवाक्यविज्ञातं कर्म सर्वं ह्यनूद्यते ।
न चाश्रितगुणे शक्यं तद्विरोधि गुणान्तरम् ॥

यत्रानूद्यमान एवावश्यं गुणोऽप्यनुवदितव्यस्तत्र नैरपेक्ष्यदर्शनादाकाङ्क्षाधीनसंबन्धगुणान्तरविधानानुपपत्तिः । न च निष्कृष्य क्रियामात्रं गुणविधिः शक्यः कर्तुम् । कुतः—

प्रथमं हि स्ववाक्यस्थैर्गुणैः संबध्यते क्रिया ।
वाक्यान्तरगतैः पश्चान्न शुद्धा सा ह्यवाप्यते ॥

यानि परस्परनिरपेक्षाणि व्रीहियवादिवाक्यवत् प्रवर्तन्ते तेषां तुल्यबलवत्त्वाद् भवति विकल्पः । इह चोत्पत्तिवाक्यमन्यनिरपेक्षं विदध्यान्नोत्पन्नवाक्यम्, अनुत्पन्नेऽनुवादानुपपत्तेः । पशुकामसंबन्धाच्च पदान्तरगतार्थग्रहणनिमित्तोऽपि वाक्यभेदो भिद्यते । यद्यपि च फलं न विधीयते तथापि तत्र[1] कर्मविधेरस्त्येव गौरवम् । अपि च कर्मणः फलगुणौ प्रति युगपद्विध्यनुवाददोषोऽपरः स्यात् । न च पशुकामपदमर्जनाङ्गत्वात् प्राप्तमनूद्यते । कथम्—

पुरुषार्थो हि सर्वेण स्वरसादेव काम्यते ।
तत्साधनतदङ्गेषु प्रवृत्तिः प्रार्थनादृते ॥

न शुद्धा सा ह्यवाप्यत इति । अनुवादेन पूर्वविज्ञानोपस्थापनं क्रियते । तस्य विशिष्टविषयत्वे शुद्धेनापि क्रियाशब्देन विशिष्टमेवोपस्थाप्यतेऽतो विशेषणान्तराकाङ्क्षानुदय इति ।

---

१. तत्र कर्म विधानात् कर्मणि च गुणविधेरस्त्येवेति काशीमुद्रितपुस्तकपाठः ।

न हि साधनभूतं पशुं कश्चित्कामयते। विनैव तु कामेन प्रार्थितान्यथानुपपत्त्या तमुपादत्ते। गौणी वा तस्य काम्यता भवेत्। अतः स्वातन्त्र्येण यन्मुख्यया वृत्त्या काम्यते, तदेव कामशब्दोपसम्बन्धा[1]त्फलं प्रतीमः। विस्तरेण चैतद् 'असाधकं तत्तादर्थ्यात्' [मी० सू० ६।१।२।] इत्यत्र वक्ष्यामः। फलं चाग्नीषोमीयस्य क्रत्वङ्गत्वान्नैतदन्याद् वास्तीत्यनुवादासम्भवः। प्रकरणञ्च बाध्यते प्राजापत्यस्य यागस्य। नामधेयत्वे तु कर्मफलसम्बन्धमात्रकरणान्न कश्चिद् दोषः। 'पञ्चदशान्याज्यानि' इति द्रव्यसंख्ययोरुभयोः स्तोत्रेष्वप्राप्तत्वान्नान्यतरानुवादे नेतरविधानसम्भवः। कर्मान्तरस्थञ्च न प्रतीयते। तदनुवादेन च विधावकर्माङ्गत्वप्रसङ्गः प्रकरणबाधश्च। न च विशिष्टद्रव्यविधिरुपपद्यत इति वक्ष्यते—तत्रैकत्वमयज्ञाङ्गभूतम् इति। न चाक्रियाविशेषणं विधीयते, विधायकस्य नामपदैः साक्षादसम्बन्धात्। न चेह क्रियोपात्ता या विधीयमानार्थादनेकमपि गुणमाक्षिपेत्। न चैषां स्तुतिप्रयोगवचनेन ग्रहणम्, अक्रियात्मकत्वात्।

गौणी वा तस्य काम्यतेति। तत्संपत्तये प्रवृत्तिः काम्यसाधर्म्यम्। विस्तरेण चैतदिति। विस्तरोऽपि सङ्क्षेपेणात्र वाच्यः, स चोक्तमेवेत्युपरम्यत इति। कर्मान्तरस्थं च न प्रतीयत इति। तस्य असन्निधानात्। तदनुवादेन चेति [1]आज्यस्वरूपानुवादेनेति। न च विशिष्टद्रव्यविधिरिति। विशिष्टद्रव्यविधौ हि द्रव्यविशेषणस्याक्रियासंबन्धादनुपादानेऽपि क्रियासाद्गुण्या[2]दुपेक्षणीयत्वम्। तदिदमग्निषोमीयं पशुमालभेतेति श्रुतौ पश्वेकत्वविवक्षासन्देहे पूर्वपक्षे, वक्ष्यति—तत्रैकत्वमयज्ञाङ्गमर्थस्य गुणभूतत्वादिति [मी० सू० ४।१।११।] यस्मात् समानपदोपादानलक्षणया श्रुत्या वाक्यगम्यक्रियार्थत्वबाधेनैवैकत्वं पश्वङ्गं बोधितमतोऽयज्ञाङ्गमिति।

सिद्धान्ते[3] पदश्रुतेरपि बलीयस्याः समानप्रत्ययोपादानश्रुत्या कारकविशेषणीभूतं प्रतीयते। तावतैव द्रव्याङ्गत्वे बाधिते क्रियाविशेषाधिगतिः केवलाद् वाक्यादिति। एवं द्रव्यविशेषणविधिसम्बन्धमङ्गीकृत्य क्रियानङ्गत्वरूपानुपपत्तिरुक्ता। सम्प्रति विध्यसंबन्धमाह— न चाक्रियाविशेषणमिति। तदतिदेशप्राप्तेति बृहद्रथन्तरयोः पृष्ठसाधनत्वेन प्रकृतौ विकल्पेन विहितयोर्विकृतावपि तत्साधनत्वेन वैकल्पिकी सत्ता प्राप्ता। तत्र रथन्तरसत्ता नियम्यते रथन्तरं भवतीति। अथाज्यानुवादेन पञ्चदशताविधेस्तेषाम-

---

१. कामशब्दोपबन्धादिति काशीमुद्रितपुस्तकपाठः।

१. द्रव्यस्वरूपा° आ० मा०। २. °ण्यादपेक्षणीयत्वम् आ० मा०।

३. सिद्धान्तवादी तु आ० मा०।

आह च— नावान्तरक्रियायोगादृते वाक्योपकल्पितात् ।
गुणद्रव्ये कथं भावैर्गृह्णन्ति प्रकृताः क्रियाः ॥

न च भवतिक्रियां प्रत्यङ्गत्वमुपपद्यते । सर्वोऽपि हि लब्धात्मकोऽन्यत्र व्याप्रियते । सत्तायास्तु वस्त्वात्मलाभमात्रापवर्गीन्न साध्यत्वम् । तद्व्यतिरिक्तसाध्यान्तरानपेक्षणाच्चोपकारासम्बन्धान्नेतिकर्त्तव्यतात्वम् ।

यत्तु रथन्तरं भवतीत्येवं चोदितानामपि प्रकरणेन ग्रहणं तदतिदेशप्राप्तावान्तरक्रियासंबन्धविज्ञानात् । न वाज्यादीनां लोके सत्ता न सिद्धा, येनेदानीं भाव्येत । स्तुतिप्रयोगसंनिधिस्थापनभावना करिष्यत इति चेत् । न, अचोदितत्वात् । 'अग्निमुपनिधाय' इति तु स्पष्टं विधानम् । आत्मलाभव्यतिरिक्ता चेयं क्रिया शक्यते कथंभावेन ग्रहीतुं सिद्धान्ते । न च वाक्यस्यार्थवत्त्वान्नान्यथानुपपत्त्या विनियोजकवाक्यकल्पना । यदि तु 'आज्यैः स्तुवते' इत्यनेन विहितानां पञ्चदशत्वविधिरुच्येत ततः पूर्वाधिकरणन्यायेन सैव मत्वर्थलक्षणेति मत्वा वदति । अपि चाज्यानि स्तोत्राणीत्यादिसंसर्गिद्रव्यत्वाच्चाज्यानां साक्षात् पञ्चदशत्वयोगाभावादश्रुतपलादिपरिमाणकल्पनावश्याश्रयितव्या भवेत् । तेनैवं ज्ञायते यद्यप्युत्पत्तौ नामत्वं न ज्ञातं गुणवाक्ये च तस्यानधिकारः,

कर्माङ्गत्वानुपपत्तेः । आज्यानां विनियोजकवाक्यानुमानं तदसंबद्धमित्याह— सिद्धान्ते न च वाक्यस्येति । अत्र *भाष्यमपि* चाज्यानि स्तोत्राणीति लक्षणयैव गुणो विधीयेतेति । तत् पञ्चदशान्याज्यानीति प्रस्तुते वाक्ये स्तोत्राज्यसामानाधिकरण्यानुपादानादनुपपन्नमिवाशङ्क्य व्याचष्टे — यदि त्वाज्यैः स्तुवत इति । अत्र करणभावनासंबन्धहेतुमुद्धृत्याज्यपदस्य धातुसामानाधिकरण्येन समभिव्याहार[1] बीजमाज्यानि स्तोत्राणीत्युपादाय मत्वर्थलक्षणया दूषयति *भाष्यकारः* । संसर्गिद्रव्यत्वाच्चेति । यत्रांशु[2]भिस्त्रिभिः सूत्रं सूत्रैश्च त्रिभिः पट आरभ्यते । तत्रारभ्यारम्भकयोः जातिभेदाद् व्यवतिष्ठते संख्या । नवैव तन्तवः सूत्राणि त्रीण्येव एक एव पट इति । अत्र तु संसर्गे द्रव्यत्वादाज्यैराज्यमेवारभ्यते । ततश्च तदेकमाज्यमवयवापेक्षया तु शतं सहस्रं वेत्यन[3]वधारणम् संख्याया इति ॥३॥

---

१. व्याहारं संबन्धबीजं अ० मा० । २. तन्तुभिः आ० मा० ।
३. वेत्यवधारणं आ० मा० ।

तथाप्येतेद्गुणविधानमेवं सिध्यति । यद्युत्पत्तावाज्यशब्दो नामधेयं नान्यथेति ।

गुणवाक्योपपत्त्यर्थं समभिव्याहृतेन च ।
अन्वाख्यानार्थवादाच्च नामधेयत्वमाश्रितम् ।।

यदाजिमीयुस्तदाज्यानामाज्यत्वमिति । यस्माद् देवाः प्रजापतिवचनादेतेषु स्तोत्रेष्वाजिमधावन्, ततस्तदर्हत्वादेतान्याज्यानीति । तथा 'तासां वायुः पृष्ठे व्यवर्तत' इति, यस्मादपां वायुना पृष्ठे स्पृष्टे रथन्तरादीनि जातानि तस्मात्तानि पृष्ठानीत्यर्थवादाद् विज्ञातम् । तत्प्रकृतित्वाच्च वामदेव्यादिषु पृष्ठशब्दप्रसिद्धिः । द्वावेतावर्थविकस्य वाक्यस्याशक्याविस्यस्यानन्तरमथ कस्मान्न पञ्चदश संख्या-विशिष्टानीत्येवमादि द्रष्टव्यम् । विशिष्टानां वाचकस्याभावादिति प्रधानाख्याता-नुच्चारणाभिप्रायम् । ननु पदद्वयमिति भवतिक्रियासम्बन्धाभिप्रायम् । नैतत्पदद्वयमपि विधायकमिति । प्रधानक्रिया हि विशेषणानि पिण्डीकरोति । सत्तायास्तु प्रत्येकवर्तित्वान्न समुदाये वाक्यपरिसमाप्तिः । अतश्च परस्परसम्ब-न्धाभावः । पञ्चदशानि यानि कानिचिद् भवन्ति, आज्यान्यपि यावन्ति तावन्ति भवन्तीति कल्पना । तस्मान्नोभयं विधायकम् । न चानुवादकम्, स्तोत्रेषु तादृशस्याभावादनर्थकत्वप्रसङ्गाच्च । तस्मादेकानुवादेनेतरविधिर्नामधेयत्वेऽव-कल्पते । विधायकमिति चात्र विधेयार्थोपनयनव्यापारात् पुनः पुनरभिहितम्, न तु नामपदस्य विधिशक्तिरस्ति । पञ्चदशानीति च स्तुतिसाधकतमस्तोत्रीय-कंपरिच्छेदान्मुख्यं स्तुतिमाननिमित्तं स्तोमत्वमिति शब्दसामञ्जस्यं भविष्यति ।।३।।

## [तत्प्रख्याधिकरणम्]

ननु सर्वत्र द्विप्रकारमेव नामपदं सांविज्ञायिकं यौगिकञ्च । उभयमपि चाधिकरणद्वयेन प्रतिपादितम् । किमिदमवशिष्यते, येन पुनर्विचार्यते ।

उच्यते—यौगिकानामेव मत्वर्थलक्षणापरिहारेणात्र चिन्ता । उत्तरा-धिकरणे तु सांविज्ञायिकानां वाक्यभेदासम्भवात् । तत्राग्नये होत्रमस्मिन्निति सिद्धान्तेऽप्यभ्युपगमादन्यसमासार्थानुपलब्धेश्चान्तर्णीतमत्वर्थो बहुव्रीहिस्त्वेदेन गुणं विधत्ते । त एव च प्रसिद्ध्यादयो हेतवः ।

सत्यामपि च सायं होमेऽग्निप्राप्तौ तद्वर्जं प्रातर्होमे होममात्रानुवादाद् वा सर्वदर्विहोमेष्वविहितदेवताकेषु विधास्यति, वाक्यसामर्थ्यात्। तथा घार्यत इत्याघार इति क्षारणसमर्थं द्रव्यमाज्यपयःप्रभृत्यभिधीयते। तच्च द्वितीयानिर्देशात् क्षारणक्रियासंस्कार्यत्वेनाध्यवसीयमानमनुपयुज्यमानसंस्कारानुपपत्तेः प्रयोजनमपेक्षते। धर्ममात्रं चास्य क्षारणं शब्दार्थमात्रापवर्गित्वान्नाशेषक्षारणं करोति। तत् क्षारितैकदेशेन किं कर्त्तव्यमित्यस्त्यपेक्षा। लोकेऽपि च द्रवद्रव्याणां क्वचित् पानादावुपयोक्ष्यमाणानामीषत् क्षारणसंस्कारं कुर्वन्ति। तेनाभिषवयुक्तपूतीकवद्वृक्षप्रयुक्तफलचमसवच्च संस्कार्यं द्रव्यं कर्ममात्राभिलाषि। प्रकरणवशेन दर्शपूर्णमासप्रधानान्युपसर्पति। तत्रापि चाग्नेयादीनां विहितद्रव्यकत्वादुपांशुयाजः केवलः साकाङ्क्ष इति तादर्थ्यं प्रतिपद्यते। आह च—

श्रुतसंस्कारसंबन्धं मुख्यैर्यद्यप्यसंगतम्।
अन्यथा तदयोग्यत्वात्प्रकृतैर्याति संगतिम्॥

अथ वा यत्करोतीति प्रत्ययार्थमात्रं साकाङ्क्षत्वादेवोपांशुयाजभावनामनूद्याघारद्रव्ये वाक्येन विधीयमाने तत्साध्यत्वादेव धात्वर्थः प्राप्तोऽनूद्यते। ध्रौवप्राप्त्यैव वा तस्य क्षरणात्मकत्वे विज्ञाते क्षरणसमर्थमात्रपयःप्रभृतिविधिर्मन्यते। न च धात्वर्थादेव सिद्धेर्नाम्ना प्रयोजनम्। न च संस्कारकर्माणि क्वचिन्नामवन्ति दृश्यन्ते। श्रुत्यैव गुणो विधीयत इति। द्वितीयाश्रुत्यैव संस्कार्यत्वादवश्यं क्वचिदस्य गुणत्वमित्यवगमाभिप्रायम्। अत्रोच्यते—

विधित्सितगुणप्रापि शास्त्रमन्यद्यतस्त्विह।
तस्मात्तत्प्रापणं व्यर्थमिति नामत्वमिष्यते॥

अत्र वदामः— सायं होमे यदि ब्रूयादाघारे च परो विधिम्।
ततः शास्त्रान्तरप्राप्तेर्विधिः स्यान्निष्प्रयोजनः॥

सत्यामपि च सायं होमेऽग्निप्राप्ताविति। गुणोपादानाविशेषेऽप्यस्यानेकगुणोपादानात् सायं प्रातर्युक्तयोर्विशिष्टकर्मविधित्वमस्य च कर्मानुवादेन गुणविधित्वमिति मन्यते। कथमप्रकृते गुणविधिरित्याह—वाक्यसामर्थ्यादिति।

ननु क्षरणस्य द्रव्यक्षेपणात्मकत्वात् कथमुपयुज्यमानसंस्कारत्वं येन प्रयोजनापेक्षा स्यादत आह — धर्ममात्रं चेति।

यदा त्वदेवते होमे देवताविधिरुच्यते ।
द्रव्यं चोपांशुयाजस्य तदा तत्प्रख्यता कथम् ॥

उच्यते—विधिश्चेदग्निहोत्रं स्यात्ततोऽस्य विषयैषिणः ।
निवेशः प्रकृते वा स्याद्युक्तेरप्रकृतेऽपि वा ॥
अग्नेर्होत्रेण संबन्धे कृतेऽन्येन प्रवर्तनात् ।
अग्निहोत्रपदे स्पष्टमनुवादत्वलक्षणम् ॥
अनूद्य चापि धात्वर्थं गुणः सर्वो विधीयते ।
न चानुवादः प्रकृतात् कर्मणोऽन्यत्र लभ्यते ॥
प्रकृतं चेदनूद्यायं गुणो होमे विधीयते ।
तत्र तत्प्रख्यता यत्र न विधिस्तत्परिग्रहात् ॥
न च धात्वनुवादोऽत्र कथं चिदुपपद्यते ।
प्रकृताप्रकृताभावात्तस्मात् कर्म विधीयते ॥
सायमूर्ध्वादिसंयुक्तैर्गुणो वाक्यैर्विधीयते ।
शुद्धं न श्रूयते कर्म प्रकृतं नास्ति तेन तत् ॥
दूरस्थस्यानुवादश्च व्यवधानान्न युज्यते ।
तस्य बुद्धावनारोहात् कौण्डपायिनहोमवत् ॥

विधिश्चेदग्निहोत्रं स्यादिति । न ब्रूमो यत्र पूर्वपक्षवाद्यभिमतो गुणविधिस्तत्रासावन्येन प्राप्त इति । किन्तु यस्य गुणस्योपादानसामर्थ्याद् धात्वर्थादुत्तार्यते विधिरसौ श्रौतधात्वर्थविधावेव शास्त्रान्तरप्राप्तो नाम प्रवृत्तिनिमित्तत्वेनानुवदितुं शक्यते किं श्रुतिपरित्यागेनेति ।

अपि च यत्र गुणविधिरुपपद्यतेऽस्त्येव तत्र प्रत्यक्षं शास्त्रान्तरमित्याह — अनूद्य चापि धात्वर्थमिति । नन्वस्मादेव दोषादप्रकृते विधानं भवतु, अत आह — अन्यत्र न विधिस्तत्परिग्रहादिति । धातुनानुवादभूतेन प्रकृतस्य संभवतः[1] परिग्रहात् । अतीत[2]विषयो हि अनुवादो भवति स प्रथमं प्रतीत्युपस्थापितमेव विषयीकरोति । असंभवे तु तस्यानुवादत्वे निश्चिते अनुवाद्यस्य पूर्वंप्रतीतिमप्युपस्थापयेत् ।

१. संभवतः पू० मा० इत्यत्र नास्ति ।
२. प्रतीतिविषयो हि आ० मा० ।

विधीयतां विशिष्टं चेत् कर्मेत्येवं विकल्प्यते ।
न चेदन्येन शिष्टाः स्युस्तत्प्रख्यं चेति चोत्तरम् ॥
न चतुर्थीसमासस्य लक्षणं चात्र विद्यते ।
न च तेन विना शक्या देवताविधिकल्पना ॥
यः कश्चिदेव सम्बन्धः षष्ठीतत्पुरुषाद् भवेत् ।
अनुवादेऽन्यतः सिद्धे कथ्येताप्यश्वघासवत् ॥
विधातव्यश्च सम्बन्धो भवेत् परपदार्थयोः ।
प्रातर्होमेऽपि तेनैष वह्निनैव विधीयते ॥
एकदेशेऽपि च ज्ञानान्नानुवादोऽपगच्छति ।
आधारस्यापि सम्बन्धः क्लेशेनोपांशुकर्मणा ॥
सामानाधिकरण्यञ्च साध्यांशेनेह कर्मणः ।
विस्पष्टं द्रव्यनामत्वं न चाधारस्य गम्यते ॥४॥

अनुवादनिश्चयश्च विशिष्टविधिभयाद्[1] यदाहवनीये जुहोतीत्यादिषु स्यात् । अत्र तु न विशिष्टविधि[2]क्लेशभयम् । तदिदमुक्तं — विधीयतां विशिष्टं चेदिति ।

एकदेशेऽपि च ज्ञानादिति । तेनैवाभिप्रायेणेदमुच्यते । शक्यते चेदेकदेशेऽप्यनुवदितुं किमिति धात्वर्थाद् विधिरुत्तार्यते, किमिति वा सायं प्रातः संयुक्तयोर्विशिष्टविधित्वमङ्गीक्रियत इति ।

अथ वा यथोपात्तस्यान्यपदार्थोऽपि लक्षणो[3]भूतस्याप्यग्नेरेकदेशस्थित्यापि तावज्ज्ञानान्नानुवादोपगच्छतीति ।

अत्राशङ्क्यते[4]—करणत्वात् सर्वधात्वर्थानां कथं तन्नाम्नो द्वितीयान्तत्वमिति । ननु गुणविधिपक्षेऽपि समानमिदमग्निहोत्रं जुहोतीत्यत्र । तदुच्यते, अस्त्यत्र विशेषः । तत्र हि करणत्वेन विहितस्यापि अर्थाक्षिप्तसाध्यांशानुवादो[5] वाक्यान्तरे गुणविधिपरे शक्यो नामधेयत्वे तु कर्मणा विधेयेन करणावस्थेनैव सामानाधिकरण्यं नापैति । तत्राह — सामानाधिकरण्यं चेति । करणस्यापि धात्वर्थस्य स्वाभाविकं भावनाव्याप्यत्वेनानीप्सितकर्मत्वं नात्यन्तमभिभूतमुत्पत्तिवाक्य इति दर्शितम् चित्राधिकरणे ।

ननु प्रयोगवाक्येऽप्यग्निहोत्रं जुहोतीति कीदृशः प्रयोगः । सत्यमप्रस्तुतत्वात्तु नासावुपपद्यत इति ॥४॥

१. विधितया आ० मा० ।　　२. विशिष्टविधिसंभवः आ० मा० ।
३. अन्यपदार्थोपलक्षणीभूतस्य आ० मा० ।
४. आशङ्क्यते आ० मा० ।　　५. °नुवादे गुणविधिपरे आ० मा० ।

## [ तद्व्यपदेशाधिकरणम् ]

'अथैष ज्योतिः' इत्यादिवर्जमुदाहरणम् । तेषां तृतीयानिर्देशाभावाद् गुणविधित्वानुपपत्तेः । तेऽपि च वाक्यान्तरेषु यदा तृतीयानिर्देशं प्रतिपद्यन्ते, तदा विचार्यन्ते । अथ वा प्रथमानिर्देशेन द्रव्यमपि प्रस्तुत्य पश्चात्तत्साध्योपन्यासः संभवतीत्येतेऽप्युदाहरणमेव । तत्र तैरेव प्रसिद्ध्यादिभिर्गुणविधिः । न चात्र कर्मणि प्रवृत्तिनिमित्तं किञ्चिदस्ति । वत्यर्थोपादानेन कर्मणि प्रवृत्तौ चात्यन्तविप्रकृष्टा गौणता स्यात् । तत्र वरं मत्वर्थलक्षणा । साधनं हि प्रतीतमत्यन्ताविनाभावात् स्वसाध्यां क्रियामक्लेशेन प्रतिपादयति विनैव मतुब्लोपेन । किञ्च—

अथैष ज्योतिरित्यादिवर्जमिति । प्रातिपदिकार्थविवक्षायां प्रथमा भवति । सा तु कर्मणि घटते । न हि तस्य कारकविभक्तिभिर्विनियोगः, किन्तु विधिना । अपि च तस्य स्वरूपमपि ज्ञापयितव्यम् । गुणस्तु ज्ञातरूपः कारकत्वेन तद्विभक्तिभिर्विनियोज्यस्तेन तृतीयानिर्देशाभावात् अगुणविधित्वे कर्मनामधेयत्वम् । अमुमेव पक्षमाश्रित्योद्भिदधिकरणे प्रकृतत्वं ज्योतिष्टोमस्य समर्थितम् । शक्यते वा कथञ्चिदेषामपि विचार्यत्वमत्र वक्तुमित्याह — तेऽपि च वाक्यान्तरेषु यदेति । अथैष ज्योतिरित्यादेर्निर्देशस्याव्यक्तत्वाद् विनियोगवाक्यगतेनैव नि[1]श्चयेन निश्चयमिति मन्यते ।

अथ वात्रैवोभयपक्षप्रतिभानं संभवतीत्याह — अथ वा प्रथमानिर्देशेन द्रव्यमपीति । सिद्धान्त[2]पक्षप्रतिभानं च तद्व्यपदेशात् सर्वत्रास्तीत्यभिप्रायः । अत्यन्तविप्रकृष्टा गौणतेति । अग्निर्माणवक इत्यत्र वाच्यलक्षितगुणसामान्यं प्रवृत्तिनिमित्तत्वेनोपादाय तद्वत्यर्थान्तरे वाच्येनासंबद्धे माणवक[3]प्रवृत्तेर्विप्रकृष्यते शाब्दाद् गौणोऽर्थो लाक्षणिकस्तु वाच्येनैव सम्बन्धादुपस्थाप्यत इति सन्निहितः ।

ननु मत्वर्थलक्षणा गुणवचनेषु मतुब्लोपाद् व्याख्यानात् स्यादिह तु तदभावात् कथं भवेदत आह — साधनं हि प्रतीतमिति । [4]यतो येनापि

१. निर्देशे निश्चय इति मन्यते आ० मा० ।

२. आ० मा० इत्यत्र पक्षेति नास्ति ।

३. माणवके इति आ० मा० ।

४. इतः पूर्वं आधारमातृकायामधोलिखितोऽधिकः पाठः समुपलभ्यते—
'संबन्धाल्लक्षणा स्यात् क्वचिन्निरूढत्वादन्वाख्यानात् अत्र तु समभिव्याहारान्यथानुपपत्त्या विनैव तु मतुप्लोपेन भवति । अस्ति चात्र संबन्धः । तथा हि साधनं हि प्रतीतं क्रियान्वयित्वात् साधनस्य तामुपस्थापयति । नचैवं वक्तव्यं न साधनं तस्य क्रियाविशेषस्य प्राक् प्रतीतमिति ।'

मत्वर्थो वाक्यवेलायामेकवाक्यवशाद् भवेत्।
इवार्थः पदवेलायां गृह्यमाणोऽतिदुर्बलः॥

गुणविधिपक्षे हि स्वार्थापरित्यागेनैव श्येनपदं तद्वत्तमुत्तरकालं लक्षयति। आत्मोच्चारणकाले तु स्वार्थमेव विनियुङ्क्ते। भवतस्तु श्येनार्थानुपयोगादादित एव सादृश्यविवक्षया पदं प्रवृत्तमित्युपगमाच्छ्रुतिबाधप्रसङ्गः। तदुच्यते—

विधेयं स्तूयते वस्तु भिन्नयोपमया सदा।
न हि तेनैव तस्यैव स्तुतिस्तद्वदितीष्यते॥

श्येनादिवाक्येषु हि यथा वै श्येनो निपत्यादत्त एवमयमपीत्युपगमान्न स्तुतिर्दृश्यते। तया च विधीयमानस्य भवितव्यम्। गुणविधाने च श्येनद्रव्यं विधीयत इति तदेव स्तोतव्यम्। न च तस्यात्मनैवोपमानं युक्तम्। अथोच्येतानन्यत्वेन सुतरां स्तुतिर्भवति, अनन्यसंभविचरितत्वात्। तथा—

'रामरावणयोर्युद्धं रामरावणयोरिव' इति।

भवति हि लोके काल्पनिकमवस्थादिगतभेदमाश्रित्यैवमपि स्तुतिः। सम्भवति भेदे न युक्ता। नामधेये तु यागश्येनस्य द्रव्यश्येनोपगमोपपत्तेराञ्जस्यम्। इतरथा हि द्वौ मत्वर्थवत्यर्थौ लक्षयितव्यौ। काल्पनिकश्च भेद

गङ्गाकूलं न प्रतीतपूर्वमसावपि गङ्गायां घोष इत्यत्र लक्षणयान्वय[1]रूपं प्रत्येति। सर्वत्रैव हि वाक्ये सामान्यविषयैव पदशक्तिर[2]र्थान्तरसमभिव्याहारादपूर्वं [प्रति] विशेषगामिनी भवतीति।

मत्वर्थो वाक्यवेलायामिति। श्येनप्रातिपदिकं स्वसम्बन्धिनीं क्रियां यजिनान्वयं गन्तुं बोधयद् यजिनैव क्रियावगतिसिद्धे विशेषणप्रधानमन्वीयते। ततश्च श्रौतस्यैव स्वार्थस्य विनियोजकमिति श्रुत्यबाधः। [3]विनियोगप्रमाणं त्वेकवाक्यता मत्वर्थमन्तर्निवेश्य सम्भवतीति विनियोगस्य विप्रकर्षं कुर्यान्न विनियोज्यस्य। गौणत्वे तु स्वार्थस्य प्रतीतिमात्रोपयुक्तत्वात् लक्षणपरम्परया प्रातिपदिकेन विषयीकृते यागे पश्चाद् विधिना तस्य फले विनियोग इति। श्रुत्यर्थः त्याग इति। इतरथा हि द्वाविति। मत्पक्षे वत्यर्थ एवैको लक्ष्यस्तव तु मत्वर्थो वत्यर्थश्चेति द्वौ लक्ष्यौ सदृशे

---

१. रूपमिति पदं पू० मा० इत्यत्र नास्ति।
२. अर्थान्तरस्थाने पदान्तरेति आ० मा०।
३. विनियोजकप्रमाणम् आ० मा०।

इति गौरवम् । न च यागस्तुत्या तदाश्रितद्रव्यस्तवनमवकल्पते, यागविधेरनिराकृतत्वात् । अविधेयगता हि स्तुतिरन्यत्र सञ्चार्येत । यागस्तु स्वयमेव विधिभागत्रेति, न द्रव्यं स्तूयते विधीयते वा । पुनरपि च यागेन द्रव्यलक्षणाद्विप्रकृष्टता । समभिव्याहाराच्च द्रव्यवदेव यागवचनत्वं मुख्यम् । विधौ च तव लक्षणा ममानुवादे । गुणवचनेभ्यश्च मतुब्लोपः स्मर्यते— न द्रव्यवचनेभ्यः । इवार्थस्तु परशब्दस्य परत्र प्रयोगात्स्वयमेवोपजायते । मत्वर्थलक्षणा च स्वयं कल्पनीया, क्लृप्तस्तु वत्यर्थः । यथा वैश्येन इत्यादिना पूर्वोक्ताश्च धातुपारार्थ्यप्रत्ययविप्रकर्षादयो दोषा वक्तव्याः ॥५॥

मुख्यशब्दो असदृशे गौण इति वक्तव्यम् । सदृश इव सदृश इत्यर्थः । अतश्च वत्यर्थलक्षणा । यथा सदृशावभिन्नगुणा[1]वेवमेकोऽपीति । तस्य सदृशसादृश्यं—काल्पनिकश्च भेद इति । गौणमपि सादृश्यं भेदमनारोप्य वक्तुमशक्यमिति । पुनरपि च यागेनेति । यतो यागः प्रशस्त इत्यभिधानस्य विवक्षितं द्रव्यं प्रशस्तमिति । किञ्च न चावश्यं मम वत्यर्थलक्षणा । यथा लौकिकः समभिव्याहारः श्येनशब्दस्य द्रव्यवचनत्वे प्रमाणम् एवं वैदिको यागवचनत्वे स्यात् । तस्मात् मुख्यं वक्तुं शक्यमित्याह — समभिव्याहाराच्चेति । अस्याभिधानस्यालम्बनमिवार्थमपि प्रवृत्तिनिमित्तीकृत्य[2] तत्रैव यागविशेषे श्येनशब्दस्य संज्ञात्वेन [3]प्रतीतेरपरापि क्रियत्यपि शक्तिरिति भवेदपि विधौ निर्दोषा लक्षणा । यदीयं शुक्लादिष्विव निरूढा मतुब्लोपेनान्वाख्याता स्यान्नत्वेतदस्तीत्याह — गुणवचनेभ्यश्चेति । नन्वाख्यानं मत्वर्थलक्षणायामपि समानमत आह — इवार्थस्त्विति । सामानाधिकरण्यात् पदार्थान्तरविषये प्रयोगेऽवधारिते यथा तत्र वर्तितुं शक्नोति सा वृत्तिः स्वयमेव पदस्यान्वाख्यानमनादृत्यापि ज्ञायते । किञ्च मत्वर्थलक्षणा वेदे नानाश्रिता स्वयमुन्नेतव्या । वत्यर्थस्तु श्येनशब्दस्य प्रवृत्तिनिमित्तत्वेन वेदे[4] दर्शितः । तेन स एव लघुर्वेदानुज्ञातश्चेत्याह — मत्वर्थलक्षणा चेति । नामधेये गुणश्रुतेः स्याद् विधानमिति ॥५॥

---

१. °वेवमेकापीति आ॰ मा॰ । २. निमित्तमङ्गीकृत्य आ॰ मा॰ ।
३. प्रवृत्तेः आ॰ मा॰ । ४. वेदेनैव आ॰ मा॰ ।

## [ वाजपेयाधिकरणम् ]

तन्त्रसम्बन्धेनाख्यातपदस्य धात्वर्थः फलं प्रति करणं गुणञ्च प्रति साध्यो भवन्न विरोत्स्यते। तेनोद्भिदा यागम्, यागेन च पशून् भावयेदिति युगपद्विधिव्यापाराद्विनैव मत्वर्थलक्षणया संबन्धसिद्धिः। तथाज्यादिपदस्य तन्त्रेण स्तोत्रसंख्यादियोगः। तस्मात्सर्वत्र त्वत्परिकल्पिते नामधेये गुणश्रुतेः प्रसिद्ध्यादिभिर्गुणप्रत्ययानपगमात्तद् विधानमेव भवेत्त्वलं नामधेयत्वेनेति यथासंभवं सर्वाधिकरणाक्षेपेणेदमारभ्यते। तत्रेदमपि वाक्यं शुद्धं भविष्यतीति वाजपेयोपन्यासः-सर्वाण्येव त्विहोदाहर्तव्यानि। आह च—

करणेषूपदिष्टेषु यार्थात् साध्यत्वकल्पना।
तस्यां गुणविधानेन नास्ति मत्वर्थलक्षणा ॥६॥

वाजपेये तावदयं विशेषोऽभिधीयते—

वाजपेयं यवागू स्यादौषधद्रव्यता ततः।
द्रव्यसारूप्यसामान्यादैष्टिकत्वं प्रसज्यते ॥७॥
तन्त्रत्वमैकरूप्येण भवेत्तुल्योपकारतः।
उपकारान्यथात्वे तु भवत्यावृत्तिलक्षणम् ॥

तन्त्रसम्बन्धेनेति। धात्वर्थो हि प्रत्ययार्थभावनोपश्लिष्टः कर्मकरणसाधारणेन भावनाविशेषणत्वमात्रेण पदश्रुतेः प्रतीयते। स यथा फलसंबन्धयोग्यत्वादुपात्तेन फलेन संबध्यते तथोपात्तेन गुणेनापि।

विधिरपि तत्र पुरुषं प्रवर्तयेद् यथा[1] वचनाभिमतसाधने पुरुषः प्रवर्तते तथा नासाधने। तेन विध्यभिमतयो[2]रगृह्यमाणविशेषत्वेनोभयसंबन्धार्थतेति। यार्थात् साध्यत्वकल्पनेति। अनेन करणत्वा[3]दविरोधितां साध्यताया दर्शयति। करणत्वोपदेशेऽपि साध्यतान्तर्गतिरस्ति। तामेव [4]तूपादाय शब्दः करणे प्रमाणं भवतीत्यभिमतमन्यथाकरणत्वेनाभिधानिकेन गुणस्य साध्याकाङ्क्षिणो नैकवाक्यता सिद्ध्येदिति ॥६॥

तन्त्रत्वमैकरूप्येणेति। यदा तुल्य उपकार उभयत्र सम्पाद्यो भवति। तदा येन रूपेण गुणत्वादिनैकसंबन्धायोपादेयः पदेनार्थस्तेनैवापरसम्बन्धाया-

---

१. यथा च नानाभिमतसाधने आ० मा०।
२. विध्यभिधानयोरगृह्येति आ० मा०।
३. °त्वानुरोधिनीं साध्यतां दर्शयति आ० मा०।
४. तूपाय आ० मा०।

द्विधा हि तन्त्रं भवति प्रत्येकं वा समुदाये वा वाक्यपरिसमाप्तावाख्यातगुणत्वप्राधान्यापेक्षया । तदिह द्रव्यं त्यागे विधीयते न फलमफलत्वप्रसङ्गात् । उद्दिश्यमानं हि सर्वत्र फलं भवति, तच्चेत् क्रियां प्रत्युपादीयेताङ्गमेवं स्यात् । यागोऽपि फलं प्रत्युपादातुं शक्यते ,न द्रव्यं प्रति तत्संस्कारत्वप्रसङ्गात्तृतीयानिर्देशबाधाच्च । न च यागसंस्कृतस्य द्रव्यस्यान्यत्रोपयोगो विद्यते येनैवमाश्रीयेत । एतेन यागफलयोर्द्रव्यं प्रत्युपादानं प्रत्युक्तम् । न च फले यागद्रव्ययोरुपादानम् । एकेन निराकाङ्क्षीकृते फलेऽन्यस्याविधानात् । यथा वक्ष्यति

पीत्यगृह्यमाणविशेषत्वात् तन्त्रत्वं भवति । यदा तूपकारान्यथात्वमेकस्य प्रयोजनाकाङ्क्षा पूरणीया अपरस्य च साधनाकाङ्क्षा तदा यदि गुणत्वादिनोपादीयते साधनाकाङ्क्षिण एव यथा स्यात् ।

यदि प्रधानत्वादिना साध्याकाङ्क्षिण एवेति नास्ति तन्त्रता पदं ह्याभिधानिकमर्थमुपायीकृत्य विशिष्टवाक्यार्थपरं तत्र यद्यप्यभिधानं धात्वर्थविषयं गुणप्रधानत्वयोः साधारणं गुणत्वादिवाक्यार्थगतं रूपं [1]साधारणमतः पदतात्पर्यभेदः । न चासावेकोच्चारणसाध्य इत्यावृत्तेः हेतुश्छिद्रं वा भवति ।

यच्चाग्निहोत्रमिति साध्यांशेन सामानाधिकरण्यमुक्तम् । तदुपायावस्थयैव द्वितीयैव प्रकाशितमपि साध्यत्वं साधनत्वमेव गमयत्यत एवाप्रयोगवाक्ये तन्न[2] विरुद्ध्यते । यदपि द्वितीयाद्यर्थाक्षिप्तसाध्यांशविषयो गुणसंबन्ध इति वक्ष्यति तदप्युपायावस्था[3]पुरस्कारेणैव । वाक्याभिव्यक्तिस्तु तत्रापि गुणवता यागेनेति तादृश्येव । अन्यथोद्भिदधिकरणपूर्वपक्षे मत्वर्थलक्षणोपादानमसङ्गतं स्यादिति । न च फले यागईप्सितयोरिति । [न च फले यागद्रव्ययोरिति]

ननु सोमेन यजेतेत्यत्रारुणैकहायनीवत् परस्परासङ्गतयोः सोमयागभावनान्वय इत्याघाराग्निहोत्राधिकरणे वक्ष्यते । सत्यमत एवोक्तम् — फल इति । भावना हि फलाश्रिता तत्साधनत्वेन यागं गृह्णाति । यागाश्रिता तत्कारकत्वेन सोमं, तेनाह — एकेन निराकाङ्क्षीकृत इति ।

१. निराकाङ्क्ष्ये इति मुद्रितपुस्तकपाठः ।
१. रूपं न साधारणम् इति आ० मा० ।
२. तन्नेत्यस्य स्थाने तदिति आ० मा० ।
३. °वस्थातिरस्कारेणैव आ० मा० ।

यदैकस्मादपूर्वं तदेतरत्तदर्थम् इति। न च द्रव्योपसर्जनो यागः फले विधीयते, मत्वर्थलक्षणादिप्रसङ्गात्। तत्रैतदेवापतति यागेन फलं यागं च द्रव्येणेति। ततश्च फलेनोपादेयविधेयगुणभूतयागग्रहणाद् गुणेन चोद्देश्यानूद्यप्रधानभूतापेक्षणात्तन्त्रत्वाभावः। एकमार्गाश्रयणेऽन्यतरस्यासंबन्धात्। तत्र युगपदाश्रयणे वाक्यभेदात्। अवश्यं हि यत्रोद्दिश्यमानादिरूपं यत्रं चोपादीयमानाद्यात्मकता तत्र यागस्यैते द्वे वाक्ये कल्पनीये। ननु द्वे एवैते इति तन्त्रपदमभितो दर्शयन् ब्रवीति-चत्वारि पदान्युपलभेमहीति। अतुल्यार्थत्वादतन्त्रत्वाभिप्रायेण। परस्य तु शब्दरूपाभेदात्साधारण्याभिमानः। नैतदस्तीति, कार्यप्राधान्याच्छब्दरूपस्य तद्गतवैरूप्याद् भेदापत्तिः। आह यदिदमुक्तमिति, वैरूप्यं परिहरति। गुणविध्यंशेऽपि ह्यवश्यमाख्यातं विधिरूपमेवाभ्युपगन्तव्यम्। वाजपेयपदस्यानाख्यात[1]गुणत्वेनाविधायकत्वात्। यद्युभयत्र विधिरिति—द्रव्यसंस्कार्यत्वप्रसङ्गमनादृत्याख्यातगुणभावकृतप्रत्येकवाक्यपरिसमाप्तिनिमित्तपरंपरासम्बन्धोपन्यासः। प्रकरणानुरोधात् व्रीहिभिर्यजेत इत्यादिवद् व्यवस्थेति चेत्। न, वाक्येन यागमात्रे विधानादिति तन्त्रसम्बन्धे हि परस्परनिरपेक्षयोर्यागेन सम्बन्धः। एकविशेषितेतरसम्बन्धे वाक्यभेदप्रसङ्गात्। तत्रानिष्पन्ने स्वाराज्ययागप्रकरणे गुणो विधीयमानः शुद्धयजतिसंबन्धाद् सार्वत्रिकोऽपूर्वयागसंबन्धो वा विज्ञायते। दर्शपूर्णमासादि वाक्यैस्तु निष्पादिते प्रकरणे विधीयमाना व्रीह्यादयोऽवतिष्ठन्त इति वैषम्यम्। तेन स्वाराज्यकामैर्यागैकवाक्यता गम्यमाना नोत्सृष्टा भविष्यतीति नामधेयता ॥८॥

**तत्रैकवाक्याभिव्यक्तिरुभयरूपप्रधाना न भवतीति फलाश्रितायां भावनायां वाक्ये व्यज्यमाने गुणत्वेन विधीयमानस्य यागस्य स्वकारकोपादानं तद्विशिष्टयागविधानेन दर्शयितव्यम्। कारकं च मत्वर्थमुपादाय यागं विशिंष्यात् तत्र सैव मत्वर्थलक्षणेत्याह — न च द्रव्योपसर्जनो याग इति।**

**एकविशेषितेतरसंबन्ध इति। वाजपेयस्य स्वाराज्यस्य वा यागविशेषणत्वं प्रसिद्धसंबन्धस्य स्यात्तत्र संबन्धस्याज्ञातवद् विधानात् ज्ञातवच्च विशेषणत्वेनोपादानाद् वाक्यभेद इति ॥८॥**

---

१. स्यानाख्यातत्वेनाभिधायकत्वात् काशीमुद्रितपुस्तकपाठः।

## [ आग्नेयाधिकरणम् ]

एवं सिद्धेषु नामधेयेषु नामधेयकार्येषु चेदानीमपवादः प्रस्तूयते । कस्मात्पुनरिहैव दर्विहोमपदं न विचार्यते, विचारितमेतदपि तत्प्रख्यमित्यनेन । विध्युद्देशगतानां चेहं विचारस्तत्र त्वर्थवादगतानां 'यदेकया जुहुयाद्दर्विहोमं कुर्यात्' इति । सिद्धे वा कर्मनामधेयत्वे तद्विशेषविचारस्तत्र । इह पुनः सामान्यचिन्तेति नोपन्यस्तम् । या तु तत्र गुणविध्याशङ्का साऽधिकरणमध्ये परिचोदनामात्रं सर्वमेवैतत्प्रासङ्गिकम् । अष्टमे च पूर्ववदपूर्वचिन्ताधिकारात् । केन पुनर्विहितानां कर्मणामाग्नेयादीनां नामधेयत्वमाशङ्क्यते । तदुच्यते । अष्टाकपालो भवतीत्या-

विध्युद्देश्यगतानां चेति । विधित्वेन प्रामाण्यमभिधाय तद्विशेषविचारो यतः । यत्तु विचारितमेवेत्युक्तम् तत्तुल्यन्यायतया । यदि नामधेयत्वप्रसिद्धये तत्र दर्विहोमपदमुदाहरिष्यते तदा तद्वदत्रोदाहरणीयता चोद्येत । सिद्धं त्विह नामधेयत्व[1]मङ्गीकृत्य कस्य नामेति विशेषचिन्ता तत्र करिष्यत इत्यत आह — सिद्धे वा कर्मनामधेयत्व इति । ननु नामधेयत्व[2] सामान्यमपि तत्र गुणविधित्वाशङ्कां निराकृत्य करिष्यते । अत आह — या त्विति । किञ्च तुल्यन्यायतया साधितमपि नामधेयत्वं यदि तत्र प्रपञ्च्यते तथापि पौनरुक्त्यम् । यतो दर्विहोमानां पूर्ववदपूर्वतां विचारयितुं दर्विहोमपदेन सर्वेषामुपादानं कुर्वन् नामधेयत्वं प्रसङ्गाद् वक्ष्यति । क्रियते च सामान्यतः सिद्धस्य[3] प्रसङ्गादुदाहरणान्तरे योजनमित्याह — सर्वमेवेति । यद्येकया जुहुयाद्दर्विहोमं कुर्यात् इति श्रुतेर्दर्विहोमशब्दो नामधेयमिति प्रतिज्ञातं दर्विहोमो यज्ञाभिधानं होमसंयोगात् होमपदेनास्य समासपदस्य संयोगात् तत्र होमस्य प्राधान्यादित्यर्थः । पुनर्लौकिकानामेवाष्टकादीनां वैदिकानामपि चेति सन्देहे होमत्वाविशेषात् सर्वेषामित्युक्तम् । पुनर्जुहोति चोदनानामेवोत यजति चोदनानामपीति सन्देहे यजति चोदनेष्वपि द्व्यवदानप्रक्षेपेण होमत्वानुस्यूतेः सर्वेषामित्याशङ्क्य तेषु प्रक्षेपांशस्याङ्गत्वात् प्रधानस्य च देवतोद्देशत्यागपर्यवसायिनो, जुहोत्यर्थत्वाभावात्

---

१. °त्वमाश्रित्य आ० मा० ।

२. ननु नाधेयत्वेति केवलं आ० मा० ।

३. प्रसाधितस्य न्यायस्य आ० मा० ।

दिभिर्द्रव्यमात्रयुक्ताः क्रमवत्यो भावनाः प्रतिपाद्यन्ते। तासां च स्थानक्रमेणाग्न्यादिदैवत्यानि याज्यानुवाक्यायुगलान्याम्नायन्ते । तानि क्रमविनियुक्तानि सन्ति मान्त्रवर्णिकीः कर्माङ्गभूता देवताः कल्पयन्ति। न ह्यन्यथा ते मन्त्राः कर्मोपयोगं गच्छेयुः। क्रियास्वरूपप्रकाशनेन तत्संबन्धिप्रकाशनेन वा मन्त्राः कर्मोपयोगितां गच्छन्ति। न चैतैः क्रिया द्रव्यं चाभिधीयते। यदग्न्याद्यभिधीयते तस्य संबन्धित्वं न ज्ञातं तत्रासंबध्यग्न्यादिप्रकाशनैऽनङ्गत्वप्रसङ्गः। तेनाव-

जुहोत्युत्पत्तीनामेवेत्युक्तम् । ततो गुणविधित्वमस्य चोदितं दर्व्या होमो दर्विहोम इत्यवयवार्थसम्बन्धात्। [1]तत्रोत्तरस्य लौकिकानां स्मृतितो दर्व्याः प्राप्तत्वात् वैदिकानामपि प्रत्यक्षाद् विधेः पात्रान्तराणां [2]प्राप्तेर्दर्विविधानासंभवः।

नचेदमेव स्मृतेर्मूलम्, यतोऽर्थवादत्वेन संभवदुपयोगादनुवादसरूपाद् विधिकल्पनमगतिका गतिः । स्मृतेस्तु [3]विधिकल्पनमेव गतिः। एवं दर्विहोमपद[4]वाच्यत्वेनाव[5]धारितेषु होमेषु चिन्तितं किमपूर्वास्ते उत कुतश्चिद्धर्मग्राहिण इति। तत्राव्यक्तचोदनात्वावान्तरसामान्येन ज्योतिष्टोमविध्यन्तप्राप्तिर्महासामान्यस्यैव यागत्वस्य. दर्विहोमेऽप्य[6]भावान्निराकृता। ततो नारिष्टान् जुहोतीति चोदितानामिष्टयङ्गानां नारिष्टहोमानां विध्यन्तप्राप्तिः । केषुचिद्दर्विहोमेषु तदीयविध्यन्ताभावानुवाददर्शनान्निराकृता अप्रतिष्ठा[7] वै त्र्यम्बका इत्याहुः। नात्रेद्ध्मा बर्हिः सन्नह्यते न सामिधेन्योऽनूच्यन्ते इति हि सिद्धवन्नारिष्ठहोमविध्यन्तभावस्त्र्यम्बकाभिधेयेषु दर्विहोमेषूच्यते। किमिति सह पत्न्या जुहोतीति चोदितानां पत्नीसंयाजानामिद्ध्माद्यङ्गरहितानां विध्यन्तो न स्यादित्याशङ्क्य निष्फलत्वेन दूषितम् । द्रव्यसंस्कारमात्रप्राप्तिरेव तत्र स्यात् । न च पत्नीसंयाजद्रव्यस्याज्यस्य संस्काराद् दर्विहोमद्रव्येषु ओषधीषू[8]पकुर्वन्त्यौषधद्रव्यकयोस्तु पिष्टलेपफलीकरणहोमयोर्विध्यन्तासम्बन्धे

१. तत्रोत्तरस्येत्यस्य स्थाने तत्रोक्तमिति आ० मा० ।

२. प्राप्तेर्न दर्विविधानसंभवः आ० मा० ।

३. विध्यनुमानमेव गतिः आ० मा० ।

४. पदावाच्यत्वेन आ० मा० ।

५. अवधृतेषु आ० मा० ।

६. होमेष्वभावात् आ० मा० ।

७. अप्रतिष्ठिता पू० मा० ।

८. °षूपकुर्वन्तीति औषधद्रव्यकयोस्तु आ० मा० ।

धारिताङ्गत्वमन्त्रानुरोधेनैवं विज्ञायते यानेते वदन्ति ते नूनमग्न्यादयः क्रियाङ्गमिति। ते च मन्त्रेषु प्राधान्याभिधानाद्देवतात्वेन प्रज्ञाता इति तदवैलक्षण्यात् कर्मस्वपि देवता भवन्ति। पुरोडाशादिभिरपि च हविरात्मकत्वाद् योग्यतया यागसाधनत्वेनोपप्लवमानैर्देवतैवाकाङ्क्षितेति, द्रव्यदेवतासंबन्धनिष्पत्तेरनुमितानां यागानां 'तत्प्रख्यं चान्यशास्त्रम्' [मी० सू० १।४।४।] इत्याग्नेयादीनां नामधेयत्वम्। अथ वाष्टाकपालादीनां हविष्ट्वात् 'द्विर्हविषोऽवद्यति' इति ह्यवदाने गृहीते चोदनान्तरेण च तत्संस्कारार्थोपस्तरणाभिघारणग्रहणाच्चतुरवत्ते निष्पन्ने 'चतुरवत्तं जुहोति' इति वचनाद् यावद् द्रव्यं निष्पन्नानां होमानां तथैवाग्न्यादिषु प्राप्तेषु नामधेयत्वम्। एवं चानेकार्थविधिदोषो न भविष्यति। तथा प्राप्तेऽभिधीयते—

न चेदन्येन शिष्टाः स्युर्यागाः शब्देन केनचित्।
ते गुणाश्चोपदिश्येरन् विधिना ह्यविभागतः॥

न तावद् द्रव्यदेवतासंस्कारसंयोगेन यागविधिरुपपद्यते। कथम्?

न द्रव्यस्य स्वरूपेण मन्त्राकाङ्क्षावकल्पते।
न चान्यवाचिना तस्य संबन्धः संप्रतीयते॥

नाष्टाकपालो भवतीत्येतावता कश्चित्पुरुषव्यापारो विधीयते योऽनुष्ठानाय स्मृतिकरणं मन्त्रमपेक्षेत। न च पुरोडाशभवनं पुरुषस्यानुष्ठेयं, प्रतिनियतकर्तृत्वात् क्रियाणाम्। नापि द्रव्यं, स्वरूपेण सिद्धात्मकत्वात् कर्तव्यं येन स्मर्येत। न चाग्निर्मूर्धा इत्यादिभिर्द्रव्यं तद्व्यापारो वाभिधीयते येनाकाङ्क्षयापि संबध्येरन्। अग्न्याद्यभिधायिनां न कश्चित्तैः संबन्धो विद्यते।

न च यागो हविष्ट्वं वा पुरोडाशेऽवधारितम्।
येन स्याद् देवताकाङ्क्षा तन्मन्त्राणां च संगतिः॥

हेतुस्तयोः प्रतिपत्तिकर्मत्वेन दर्विहोमैरसामान्य[1]मौषधधर्माणां तदङ्गत्वे सत्यतिदेशवैफल्यमतोऽपूर्वा दर्विहोमाः प्रसिद्धास्तदवैलक्षण्यादिति। यन्मन्त्रेऽवहितं तत्कर्मणि कल्प्यते। तेन मन्त्रेषु यल्लक्षणा अग्न्यादयस्तदवैलक्षण्यात् कर्मणस्तत्रापि देवता भवन्तीति। प्रतिनियतकर्तृत्वादिति। भवनमसिद्धकर्तृकमेव न सिद्धकर्तृकम्। यथा पुरोडाशसमवेतो व्यापारस्तत्कर्तृक एव नान्यकर्तृकस्तत् प्रयुक्त्या त्वन्यः कर्ता स्यादिति॥६॥

१. 'न्यमनौषधद्रव्याणाम् आ० मा०।

यदि हि प्रथमं यागत्वमवधार्येत ततो देवताकाङ्क्षायां सत्यां देवतावाचिनो मन्त्राः संबध्येरन्, न तु तद् भवतिशब्देनोक्तम् । न च यागसंबन्धात् प्राक् पुरोडाशादीनां हविष्ट्वमवधार्यते । संबन्धिशब्दो ह्ययं न द्रव्यस्वरूपप्रयुक्तः । तदेव हि द्रव्यमयागसंबद्धं पयः प्रभृति न लोके हविःशब्दवाच्यं भवति । एतेन चतुरवत्तचोदनाकल्पितकर्मनामत्वं प्रत्युक्तम् । आघारादिषु तु क्रियात्मकत्वान्मन्त्राकाङ्क्षायां वचनविनियोगवशाच्च भवति मान्त्रवर्णिकदेवताकल्पना । सर्वजघन्यश्चायं देवताविधिः, सर्वज्येष्ठे तद्धितदेवताविधौ संभवति किमित्याश्रीयते । अन्यथानुपपत्तिमूलश्चासौ । न च तद्धिते संभवत्यन्यथानुपपत्तिः । तस्मादनेनैव कृते द्रव्यदेवतासंबन्धेऽर्थवादपुरःसरेण भवतिशब्देन विहिते विशेषार्थं क्रमेण मन्त्राम्नानम् । अगत्या चानेकार्थविधिरङ्गीक्रियते । विधानार्थे तद्धितान्ते शब्द इति विधिप्रयोजनत्वाभिप्रायेण । सर्वं चैतत्तस्मादविभक्तं गम्यते । देवता तावत्प्रातिपदिकेनोक्ता तद्विशिष्टं द्रव्यं तद्धितेन संबन्धोऽपि तत्रैवार्थगृहीतस्तत् सामानाधिकरण्याच्चाशेषात्मीयोपसर्जनयुक्तमष्टाकपालपदं विशेषणत्वेन तत्रैवान्तर्गतम् । द्रव्यस्य चाग्नेयत्वेन भवनमभाव्यमानस्य न सिध्यतीति तदाक्षिप्ता भावनापि तत्रैव । न च यागेन विनाग्नेयत्वं भावयितुं शक्यमिति पुरुषव्यापारविशेषोऽपि यागस्तदन्तर्गतः । ततश्च तद्धितान्तपदोपात्तविधिना सर्वमन्यदर्थादाक्षिप्यमाणं न वाक्यं भिनत्ति । भावनाविधिपूर्वकश्च सर्वत्र धात्वर्थकारकविधिर्भवती श्रूयमाणापि सैव तावद्विशिष्टा विधीयते । ततो विशेषणान्यथानुपपत्त्या सर्वसंसर्गात्मकत्वाच्च तामेव संबन्धशब्देनाभिधत्ते, न त्वव्यापारात्मकत्वाद् द्रव्यदेवतासंबन्धः शक्यते विधातुम् । अविभागादिति अर्थाक्षेपहेतुः । न चेदन्येन' [मी० सू० १।४।५।] इति अन्यथानुपपत्तिशरणाभिधानम् ॥६॥

## [ बर्हिराज्याधिकरणम् । ]

नामधेयप्रस्तावेन द्रव्यनामसु निमित्तं प्रत्यधिकरणत्रयमारभ्यते । तुल्यहेतुत्वात् पुरोडाशोऽप्युदाहृतः । **तत्र शास्त्रस्था वा तन्निमित्तत्वात्** [मी० सू० १।३।६।] इति याज्ञिकानां संस्कृतेषु प्रयोगात् । सार्वत्रिकत्वादविगीतत्वाच्च संस्कारनिमित्तता । तथा हि—

पुरोडाशादिभिर्लोके व्यवहारो न दृश्यते ।
तस्माद्यूप्रादिवद्वेदात्तेषां संस्कारहेतुता ॥

तन्नास्ति । कुतः

एकदेशेऽपि यो दृष्टः शब्दो जातिनिबन्धनः ।
तदत्यागान्न तस्यास्ति निमित्तान्तरकल्पना ॥

य एव लौकिकाः शब्दास्त एव वैदिकास्त एवामीषामर्था इति स्थितत्वाल्लोकप्रसिद्धिप्रतीक्षे वेदे यत्रैकदेशेऽपि जातिनिमित्तता लभ्यते न तत्र पुनर्निमित्तान्तरशक्तिकल्पना संभवति। संस्कृतेष्वपि जातेरनपगमात्तन्निमित्ततातिक्रमो न शक्यो वक्तुम् । अतश्च शास्त्रस्थैरप्यविरोधान्न बाधः । किञ्च

वेदेनापि च संस्कारात् प्रागेव च्छेदनादिकात् ।
तद्विधौ जातिशब्दत्वमाश्रितं लोकसंमतम् ॥

तेन जातिमेते न व्यभिचरन्ति । व्यभिचरन्ति तु संस्कारान् अविहितत्वाल्लोकव्यवहारवेलायां संस्काराणामभावात् ।

न च यूपादितुल्यत्वमन्यथाप्युपपत्तितः ।
लोकादलभ्यमानार्थास्ते ह्यगत्या तथाश्रिताः ॥

यदि हि च्छेदनविधिवेलायां बन्धनविधौ वा कश्चिल्लौकिकोऽर्थो लभ्येत ततः किमेवं व्यवस्थितवचनव्यक्तिविपर्ययेण कल्प्येत यच्छिद्यते स नूनं यूप इति । अस्ति च बर्हिरादेर्गतिस्तस्मादतुल्यता ॥१०॥

## [ प्रोक्षण्यधिकरणम् ]

ननु समुदायप्रसिद्धेः श्रुतिस्थानीयत्वाद् वाक्यस्थानीयावयवप्रसिद्धिर्दुर्बला स्यात् । तथा हि

अक्षरैरेव बुध्यन्ते समुदायप्रसिद्धिषु ।
अर्थभागोपसंहारादितरा विप्रकृष्यते ॥

सत्यमेवमेतत् । अवश्यं त्ववयवानामपि स्वार्थे शक्तिराश्रयणीया । तदनाश्रयणेऽवयवप्रसिद्धत्वाभावात् । तत्र च—

असत्स्ववयवार्थेषु योऽन्यत्रार्थे प्रयुज्यते ।
तत्रानन्यगतित्वेन समुदायः प्रसिध्यति ॥

एकदेशेऽपीति । एकस्मिन्नपि देशे अथ वा लौकिकैकदेशे या जातौ प्रसिद्धिः, न तस्याः सार्वत्रिकेण प्रयोगेण बाधः । नहि यो यत्र शक्तः सोऽवश्यं तत्र सर्वैः प्रयोक्तव्यः । विपरीता तु प्रसिद्धिर्नास्तीत्युक्तम् —तदत्यागादिति ॥१०॥

लब्धात्मिका हि समुदायप्रसिद्धिरवयवप्रसिद्धिं बाधते तस्यास्त्वात्मलाभो यत्र प्रमाणान्तरेण पूर्वानुभूतावयवार्थरहितेऽर्थे शब्दप्रयोगो दृश्यते। यथाश्वकर्णत्वरहिते वृक्षेऽश्वकर्णशब्दस्य। न ह्यत्र पूर्वशक्त्यनुसारेण प्रतीतिरुपपद्यत इत्यर्थापत्त्या शक्त्यन्तरं कल्प्यते। [1]ततश्चोभयसंभवेऽवयवार्थानुसन्धानाद्विक्षिप्ताया अवयवप्रसिद्धेरक्षरश्रवणमात्रलभ्यत्वादियं बलीयसी भवति। अत्र पुनरप्सु प्रकर्षसेचनक्रियाकरणत्वसंभवादवयवशक्तिभिरेव वाक्यवत् प्रयोगोपपत्तेः। शक्त्यन्तरे प्रमाणाभावात्समुदायप्रसिद्ध्यभावः। तथा हि—

भवेतां यदि वृक्षेषु वाजिकर्णौ कथञ्चन।
अदृष्टां समुदायस्य कः शक्तिं जातु कल्पयेत्॥

तस्मान्नाप्सु समुदायप्रसिद्धिरिति द्रवद्रव्यमात्रसाधारणता। ननु संस्कारनिमित्तत्वेऽप्यप्सामानाधिकरण्यकृतत्वादीकारस्य घृतान्निवृत्तिः स्यात्। यदि हि प्रागीकारात् संस्कारनिमित्ततावगम्येत् ततः स्त्रीप्रत्ययोऽयमाश्रयलिङ्गनिमित्त इत्यवधारणादन्यलिङ्गान्निवर्तेत। अयं पुनरन्यप्रयोगः संस्कारेष्वीकारान्त एवानवगतविभागो वेद्यादिवत् प्रयुक्त इत्यन्यादृशस्य वाचकत्वं नावधार्येत, तस्मादीकारान्तः स्यात्। यौगिकत्वे तु प्रागीकाराद्योगो गम्यत इति स्त्रीप्रत्ययोऽयं निमित्ताभावादघृते न प्रयोक्ष्यते, चोदकप्राप्तं तु प्रातिपदिकमात्रं प्रयोक्तव्यम्। न च द्रव्येष्वर्थसमवायाद्विधिशब्दप्रयोगनियमो, यतः प्रोक्षणशब्दबाधेन जातिपक्षवद्घृतमित्येव प्रयोगः स्यात्॥११॥

## [ निर्मन्थ्याधिकरणम् ]

निर्मन्थ्येऽपि पूर्वाधिकरणवज्जातिसंस्कारनिमित्तपक्षावुद्भाव्यानन्तरेण यौगिकत्वं साधनीयम्।

वैद्युताश्माभिघातोत्थसूर्यकान्तादिजन्मनाम्।
निवृत्तौ चरितार्थः सन् निर्मन्थ्योऽभिनवः कथम्॥

'लोके कर्मार्थलक्षणम्' [मी० सू० ११।१।२६।] इत्यशब्दार्थेनापि व्यवहाराद् भवेदचिरनिर्दग्धघृतप्रतीतिः। सर्वघृतानां च नवनीतविकारत्वान् पुनः श्रुतेरचिरनिर्दग्धनवनीतार्थता स्यात्। इह तु शब्दप्रमाणकेऽन्यक्रियाजनित-

*भाष्यकारेण* प्रयोजनमुपन्यस्यतोक्तं यदि संस्कारशब्दः प्रोक्षणीरासादयेति प्रैषो, यदि जातिशब्दो घृतमिति, यदि यौगिकप्रोक्षणमिति, तत्र चोदयति — [1]ननु संस्कारनिमित्तत्वेऽपीति। परिहरति — यदीति॥११॥

---

१. ननु संस्कारेति पु० मा० इत्यत्र नास्ति।

निवृत्तमात्रचरितार्थो निर्मन्थ्यशब्दश्चि[1]रविशेषोपादानासमर्थः कथमचिरनिर्मथित-विषयः कल्प्यते । न ह्यत्राचिरत्वमपि योगेऽन्तर्गतं क्रियायोगमात्रनिमित्तत्वात्, तस्मादसदेतत् । नैष दोषः ।

पाकेनाग्नेरुपात्तत्वाद्विशेषणपरा श्रुतिः ।
तच्च पाकाङ्गभूतत्वात्तद्देशादौ करिष्यते ॥

यथैव लोहितोष्णीषादिविधिषु विशेष्याणां प्राप्तत्वाद्विशेषणपरत्वमेवमिहापि विशेष्यानुवादेन विशेषणभूता क्रियैव पाकाङ्गत्वेन विधीयते । अङ्गानां च प्रधानेनैकदेशकालकर्तृत्वं वक्ष्यते । तेनाचिरनिर्मथितेनादूरनिर्मथितेनानन्यकर्तृनिर्मथितेनेति वक्तव्ये प्रदर्शनार्थमचिरग्रहणम् ॥१२॥

## [ वैश्वदेवाधिकरणम् ]

तद्धितोपात्तत्वान्मत्वर्थस्य न लक्षणा । न चानेकार्थविधिर्येन वाक्यं भिद्येत । न च समस्तेषु कर्मसु तत्प्रख्यानशास्त्रसद्भावः । न च यथाग्निहोत्रे समासोऽनभिव्यक्तस्तथात्र तद्धितः । सर्वत्र ह्येवंरूपा एव देवताविधयो भवन्ति । न च श्येनयागवद्विश्वै[2]र्देवैः कस्यचिद् व्यपदेशः । न च फलपदाश्रवणाद्वाजपेयवद् वैरूप्यं यजेः, शक्यते हि केवलयज्यनुवादेन देवता विधातुमित्यारम्भः । सर्वत्र च नामचिन्तानुसारान्न बर्हिराज्यादिद्विचारेण व्यवधानम् । अथ वा नामधेयान्यपि यौगिकानि निर्मन्थ्यादिष्वप्राप्तार्थत्वाद्विधिफलानि दृष्टानि वैश्वदेवशब्दोऽपि तथाऽस्त्वित्यनन्तरं संबन्धः । तत्र विकल्प इति गुणविधेः फलेन प्रतिज्ञानम् । एवं हि शङ्क्यते । यद्ययं गुणविधिर्न तर्हि कर्म विधीयते । न चापि दूरस्थमनुवदितुं शक्यते । तत्र प्रकृताग्नेयादिकर्मानुवादेनाशक्यं देवताविधानमुत्पत्तिवाक्यशिष्टदेवतान्तरावरोधादत आह विकल्पस्ताभिः सह भविष्यति । न चाद्यापि ***सूत्रकारभाष्यकाराभ्या***मौत्पत्तिकबलीयस्त्वं क्वचिद्दर्शितमिति तुल्यबलत्वं मन्यते । किञ्च—

शब्दप्रवृत्तिनिमित्तगुणविधायकत्वं निर्मन्थशब्दस्य दर्शयितुं यौगिकातिदेशः क्रियते । [1]योऽपि गुणो नियमेनाप्राप्तस्तन्निमित्तशब्दः प्राप्ते गुणिनि गुणविध्यर्थ एव भवतीति दर्शितम् — यथैव लोहितोष्णीषादिविधिष्विति ॥१२॥

---

१. चिराचिरविशेषो काशीमुद्रितपुस्तकपाठः ।
२. देवैः इति स्थाने देव इति काशीमुद्रितपुस्तकपाठः ।
१. यो द्विगुणो आ० मा० ।

न समस्तानुवादस्य किञ्चिदस्ति प्रयोजनम् ।
विश्वेदेवा न च प्राप्ताः प्रत्येकं संहतेषु वा ॥

यदि हि गुणं न विदध्यात्ततः समस्तमेव वाक्यमनर्थकं स्यात् । विश्वेदेवसंबन्धश्च न प्राकृतानां प्रत्येकमस्ति, न समुदाये येनानूद्येत । न चामिक्षायागस्य केवलस्य यजिना ग्रहणम् । न च वैश्वदेवशब्दस्तद्विषयत्वेनेष्यते । तस्मात् सप्तसु यागेषु गुणविधिः । तत्रैतत्स्यात्, एक एव शब्दः सप्तसु विधिरामिक्षायां चानुवाद इति विप्रतिषिध्येत । तन्न,

प्रकृतत्वाविशेषेऽपि यत्र प्राप्तिर्न विद्यते ।
विधेस्तत्रोपसंहारान्न वैरूप्यं भविष्यति ॥१३॥

अत्रोच्यते । नायं प्रकृतेषु गुणविधिरुपपद्यते । कथम् ।

गुणान्तरावरुद्धत्वान्नावकाश्यो गुणोऽपरः ।
विकल्पोऽपि न वैषम्यात्तस्मान्नामैव युज्यते ॥

अग्न्यादयो ह्युत्पत्तिवाक्ये तद्धितश्रुत्याष्टाकपालादीनां देवता, विश्वेदेवा वाक्येन । नन्वत्राप्यष्टाकपालादिसंबन्धाद्वाक्यमेव । न, तद्धितेन द्रव्यविशेषस्य कृते देवतासंबन्धे वाक्येन विशेषणविशेष्यभावमात्रकरणात् । वैश्वदेवशब्देऽपि तथेति चेत् । न, यागलक्षितद्रव्यसंबन्धकल्पनाविप्रकर्षात् । न तावद्वैश्वदेवेनेति प्रकृतमप्रकृतं वा द्रव्यं देवतासंबन्धि श्रूयते । तत्र यजेतेति सामानाधिकरण्यादेवं तावद्विज्ञायते वैश्वदेवेन यागेनेति । ततश्चान्यथा यागसंबन्धानुपपत्त्या तत्साधनं द्रव्यं लक्षणया देवता स्कन्दति । वाक्येन च यागमात्रसंबन्धे सति प्रकरणादिदं

ततस्तत्प्रख्यतयैव नामधेयत्वंवैश्वदेवपदे व्यक्तं व्यञ्जयितु[1]मधिकरणान्तरमारब्धम् — न समस्तानुवादस्येति । समुदायीकरणेऽपि प्रयोगवचनस्थ एव वैश्वदेवशब्दः पर्याप्त इति मन्यते । यथा ह्ययं लिङ्गसमवायेनाष्टसु वर्तते यथा प्राचीनप्रवणे वैश्वदेवेन यजेतेत्यत्रापि कारणाविशेषादिति ॥१३॥

नावकाश्यो गुणो पर इति । न विद्यतेऽवकाशोऽस्येति नकारोऽयं प्रतिषेधवाचक इति । न यागलक्षितद्रव्यसंबन्धेति । संबन्धिशब्दोऽयं देवतेति । संबन्धिशब्दाश्च पुत्रशिष्यादयः क्रियापादितसंबन्धं प्रति सम्बन्धिनमपेक्ष्य प्रवर्तन्ते न कारकवत् क्रियाम् । देवताशब्दोऽपि हविरपेक्ष्य प्रवर्तते सास्य देवतेति [पा० सू० ४।२।२४।] विहितेन तद्धितेन यस्य विश्वेदेवा देवता

1. °मधिकरणारम्भः आ० मा० ।

कल्पनीयं तेनैवाग्नेयादिना यागेन वैश्वदेवेन यजेत नान्येनेति । न त्वग्न्यादि-विधौ काचिल्लक्षणापेक्षा प्रकरणापेक्षा वेति वैषम्यम् । नहि प्रकरणं द्रव्य-स्येति । यदा द्रव्यस्याग्न्यादिसंबन्धो विधीयते न तदा प्रकरणापेक्षेत्यर्थः । अथ वा यद् द्रव्यस्य प्रकरणं न तद्वैश्वदेववाक्येनाश्रितम् । *भाष्ये* तु द्रव्यशब्दो वस्तुवाची । न हि श्रौतस्याग्न्यादिद्रव्यस्य देवताभूतस्य प्रकरणं बाधकं, वैयधि-करण्यं वा द्रव्यस्य यत्संबन्धित्वेन श्रुतमग्न्यादि तस्य प्रकरणं न बाधकमिति । प्रकृतयजिबुद्धेश्च न दूरस्थानुवादेन गुणविधिर्विशिष्टापूर्वकर्मविधानं वा । विप्रकीर्ण-यागैकीकरणाच्च समुदायानुवादोऽर्थवान् । न हि 'वसन्ते वैश्वदेवेन' 'प्राचीन प्रवणे वैश्वदेवेन' इत्यादि विधानं परस्परसहितानामष्टानां हविषां समुदाय-पदादृतेऽवकल्पते । तस्मादेकदेशस्थैरपि विश्वैर्देवैरुपलक्षितानां छत्रिन्यायेन तत्प्रख्यतयैव सर्वेषां नामधेयत्वम् ॥१४॥

वैश्वदेवमुपादाय देवता नोपदिश्यते ।
सह विध्यनुवादौ हि नैकः शब्दः समश्नुते ॥

अथ वा यदुक्तं निर्मन्थ्यादिवन्नामैव सद् गुणमपि विधास्यतीति । तत्रा-भिधीयते । मिथश्च नामगुणविध्यर्थयोरसंबन्धः । निर्मन्थ्यस्तु गुणविधिरिति ॥१५॥

पूर्वेणैकसूत्रमपि संभवति । "मिथः सह प्रदाने क्रियमाणे त्रिंशत्संपत्त्य-भावादनर्थसंबन्धः स्यात् । कुतः ।

हविषो गुणभूतत्वान्न कर्मावृत्तिहेतुता ।
देवतैक्यात्सह त्यागो लाघवाद्धि प्रसज्यते ॥

**तदेव हविरभिधीयते न क्रिया । ततश्च क्रियासामानाधिकरण्यं लक्षण-येति । विप्रकीर्णयागैकीकरणाच्चेति । प्रयोगवचनस्य देशसम्बन्ध[1]व्यापृतस्य कर्मोत्पत्ताविव तत्समुदायोत्पत्तावव्यापारात् । यद्ययं समुदायोपपादकोऽनु-वादो न स्यात्तदैकवचनादेकस्यवै यागस्य देशसम्बन्धः स्यात्, प्रकृतमात्रस्य वा । अपि च देशसम्बन्धेन प्रयोजनवद् वाक्यं किमिति श्रुतिर्जह्याद्, येन वैश्वदेवशब्दोऽवैश्वदेवशब्देषु वर्तेत अनुवादस्य त्वेकविषयस्य वैफल्या-दुपपन्ना[2] तद्वति गणे वृत्तिरिति ॥१४॥**

**अनर्थसम्बन्धः स्यादिति । त्रिंशदाहुतयो हूयन्त इति वाक्यार्थे सम्बन्धाभावः स्यादिति । तेन शतयः सकृद् यागः कर्तुः इत्येतद्*भाष्यमनु-***

1. व्यावृत्तस्येति आ० मा० ।

तेन सकृत्यागः कर्तव्य इति सत्यां सहप्रदानशक्तौ नावृत्तिर्युक्ता। संप्रतिपन्नदेवतात्वाच्च सहप्रदानमविरुद्धं शक्यं कर्तुं ततश्च त्रिंशत्त्वविरोधः। त्रिंशत्पूरणं च केषांचिदेवं नव प्रयाजाः, नवानुयाजाः, द्वावाघारौ, द्वावाज्यभागौ, अष्टौ प्रधानाहुतय इति। अपरेषां तु स्विष्टकृद्वाजिनेज्यासहणादाघारौ न गणितौ। सर्वथा तु प्रधानाहुतिभेददर्शनसिद्धिः ॥१६॥

## [ वैश्वानरेष्ट्यधिकरणम् ]

गुणविधिनामधेयविचारे पर्यवसितेऽधुना केवलगुणविधित्वमेवास्ति न वेति विचार्यते। अथ वाष्टाकपालत्वस्य वैश्वानरसामानाधिकरण्याद् द्वादशत्वान्तर्गतस्तत्प्रख्यत्वेन नामधेयत्वमाशङ्क्य गुणविधिः प्रसिद्ध्यादिभिः प्रकृतयजिबुद्धेस्तत्प्रख्यत्वाभावाच्च समर्थनीयस्तमपि निराकृत्यार्थवादता पूर्वसिद्धैवोपसंहरिष्यते। तत्र पूर्ववत्तां विधानेनार्थवत्त्वमपूर्वाणां नामधेयत्वावधारणात् 'यदुत्पत्तावपूर्वम्' [मी० सू० १।४।२] इति। तस्माद् गुणविधयोऽष्टत्वादय इति केचित्। तदयुक्तम्। न ह्यपूर्वत्वान्नामधेयत्वं सिद्धम्। अपूर्वत्वाद्धि यथैव लौकिकार्थापरिज्ञानान्न गुणविधित्वमेवं वैदिककर्माभिधायित्वं सुतरामप्रसिद्धमिति नामधेयत्वमपि न स्यात्। सत्येव च सर्वत्र लौकिकेऽर्थे समभिव्याहारादिभिर्नामधेयतोक्ता। तस्माद् यथाभाष्यमेव सूत्रार्थः।

पूर्वज्ञातार्थवाचित्वे नामधेयार्थवादने।
अप्राप्तत्वादिहैते स्युर्वैश्वदेवविकल्पवत् ॥

यदि हि वैश्वानरयागेऽष्टत्वादयः कुतश्चित्प्राप्ता भवेयुस्ततः संवादद्वारेण नामधेयत्वमर्थवादता वा स्यान्न तु प्राप्तिरस्ति केवलद्वादशत्व[1]विधानात्। तथा हि —　यद्यप्यर्थात्मनास्त्येव महासंख्यास्ववान्तरा।
अपरिच्छेदकत्वात्तु नासौ कर्मविशेषणम् ॥

न हि सत्तामात्रेण संख्या व्याप्रियते किं तर्हि संख्येयपरिच्छेदेन द्वादश-

भाष्यव्याचष्टे — सत्यां सहेति। प्रयोगवचनावबोधितं सहानुष्ठानमशक्त्यैव त्यज्येत न शक्ताविति ॥१६॥

यद्यप्यर्थात्मनास्त्येवेति। अङ्गीकारवादोऽयमसत्त्वमेवाभिमतम्। तदेव व्युत्पादयति — नहि सत्तामात्रेणेति। व्यापारनिषेधेन सत्त्वमेव निषेधति। नहि संख्यात्स्वप्राधान्येनेदन्तया प्रतीतेः सत्तां लभते किन्तु तद्विशिष्टद्रव्य-

१. द्वादशत्वाद्विधानात् इति काशीमुद्रितपुस्तकपाठः।

त्वेन च कपालेषु परिच्छिद्यमानेषु नाष्टत्वादीनां परिच्छेदकत्वमित्यविद्यमानता । यद्यपि च यथाकथञ्चिदस्तित्वमाश्रीयते तथाप्येतावन्मात्रं भवेदष्टौ भवन्तीति न तु यदष्टाकपाल इति । संस्कृततद्धितो ह्येषः, तद्धितार्थनिमित्तश्च समासस्तौ च सति सामर्थ्ये भवतः । सामर्थ्यं चान्यनिरपेक्षत्वे भवति । सापेक्षाश्च द्वादशत्वेनाष्टत्वादय इति न द्वादशकपालोऽष्टाकपालादिशब्दाभिधानीयकं लभते । तेन स्वरूपसंकीर्तनस्यासत्त्वात् प्ररोचनमसंबद्धतरमापद्येत । न च द्वादशत्वविलक्षणोऽष्टत्वादेः कर्मोपयोगः संभवति, संख्यात्वात् । यद्यपि चाष्टत्वस्तुत्या द्वादशत्वं स्तूयते न त्वष्टाकपालस्तुत्या द्वादशकपालस्य स्तुतिः । विशेषणविशेष्ययोरत्यन्तभेदात् । अपि चास्त्येव द्वादशत्वस्यात्मीया स्तुतिः 'जगत्यैवास्मिन्'

प्रतीतेः । द्रव्यमेव[1] च तस्याः व्यापारः । तच्च न रथन्तरसामवत् सत्तामात्रेणापि तु संख्यान्तरव्यावृत्त्या यागसाधनेषु कपालेषु द्वादशत्वस्य श्रुतिशिष्टत्वात्[2] । नाष्टत्वस्येदृशं विशेषणत्वं संभवतीत्यसत्त्वम् । तदेतदुपसंहृतम् — अविद्यमानतेति । यद्यपि च यथाकथञ्चिदिति । क्वियन्त्यपि निष्कृष्याष्टावेतानीति यद्यपि स्यात् तथापि तेषामितरैः सह द्वादशत्वसम्पत्त्या पुरोडाशसंस्कारार्थं कपालविशेषणत्वादितरापेक्षत्वेनासामर्थ्यान्न समर्थपदाश्रयेण समासेन तद्धितेन वा विशेषणत्वेनोपादानं संभवति । यदि समासवेलायां पुरोडाशसंस्कारकत्वमुपाधिर्न स्यात् तदा निष्कृष्टान्यष्टावेव नाधिकानीति समासः स्यात् । तेनाह — तद्धितार्थनिमित्तश्चेति । तद्धितार्थोत्तरपदसमाहारे चेति [पा० सू० २।१।५१] तद्धितार्थपुरोडाशविशेषणप्रयुक्तोऽयं समासः । यैश्च द्वादशकपालैः तद्धितार्थः पुरोडाशो विशिष्यते तान्यष्टत्वेन चतुष्ट्वापेक्षेण विशेष्यन्त इत्यष्टत्वस्य सापेक्षत्वादसमास इति । विशेषणविशेष्ययोरिति । विशेषणत्वेनाभिमतस्याष्टाकपालस्य स्तुतिर्विशेष्याभिमते द्वादशकपाले संचारणीया । न च तदुपपद्यते तयोरत्यन्तभेदादसंबन्धादित्यर्थः ।

---

१. द्रव्यविशेषणमेवेति आ० मा० ।

२. निविष्टत्वात् श्रुतिशिष्टत्वात् आ० मा० ।

इति। तस्माद् द्वादशत्वेन सह विकल्पमाना गुणविधय एवैतेऽपि। सर्वं चेदं वैकल्पिकानेकसंख्याविशिष्टवैश्वानरविधानादेकमेवोत्पत्तिवाक्यमिति न बलाबले विशेषः। तस्मात् सामर्थ्यमिति च पूर्वंप्रकृतयोग्यापेक्षत्वाद् वैश्वदेवपूर्वपक्षातिदेशः। तदीयं हि सामर्थ्यमस्मिन् समाम्नायेऽस्ति, न च तदुक्तः परिहारः। तस्माद् विधानार्था इति ॥१७॥

प्रकृताप्रकृते यागे तथा द्रव्येऽपि वा गुणः।
द्रव्यं गुणवदेवं च न कथञ्चिद् विधीयते ॥

प्रकृते तावद् द्वादशत्वावरोधान्नाष्टत्वादयो विधीयन्ते। न च दूरस्थे, तदुपादानशब्दाभावात्। न च कर्मान्तरं केवलाष्टत्वादिगुणकं संभवति। द्रव्यदेवतासंयोगप्रत्यक्षयागाश्रवणात्। एतेन पुरोडाशे संख्याविधिस्त्रेधापि प्रयुक्तः। तथाष्टाकपालादि पुरोडाशविधानम्। न हि द्वादशकपालपुरोडाशावरुद्धो यागः पुरोडाशान्तरं गृह्णाति। नाप्यननूदिते कर्मणि स्वशब्देनाप्रकृते पुरोडाशविधानं फलतत्साधनासंबद्धं क्वचिदुपयुज्यते। नाप्यव्यापारात्मकत्वाद् द्रव्यं विधातुं शक्यते। अत एव विश्वजिदादिवदपि नाध्याहारेण फलं कल्प्यते।

वैश्वानरपदं नापि यागायात्रानुषज्यते।
विभक्त्यन्तरयोगित्वान्न चर्तेऽस्मादनर्थकम् ॥

**अथ वाष्टत्वस्तुत्या द्वादशत्वं चेत् स्तूयते स्तुत एवाष्टाकपालस्तुत्या द्वादशकपाल इति। एतत् कथं स्याद् यदि विशेषणस्याष्टत्वस्य विशेष्यस्याष्टाकपालस्याभेदः स्यात्। तथा द्वादशत्वद्वादशकपालयोर्न चैतदस्तीति। सर्वं चेदं वैकल्पिकेति। उपक्रमोपसंहारस्थयोर्विध्यर्थवादयोरेकेष्टिविषयत्वादेकवाक्यत्वं संख्यानां त्वेकवाक्यत्वचोदितानामपि समावेशस्यासंभवाद् विकल्प इति ॥१७॥**

एतेन पुरोडाश इति। न प्रकृते, तस्य द्वादशत्वावरोधात्। नाप्रकृते, तस्याः प्रतीतेः। [1]नापूर्वे पुरोडाशोद्देशेन श्रुत्या संख्याविधौ पुरोडाशविधायकाभावात्। विधीयतां तर्हि विशिष्टं द्रव्यं तदपि न शक्यमित्याह —तथाष्टाकपालादिति। न च स्वतन्त्राष्टाकपालविधानमिति। फलाश्रवणादित्यभिप्रायः। यतश्चाव्यापारात्मकत्वादविधिविषयत्वमतोऽध्याहारो[2]ऽपि फलपदस्य नास्तीत्याह — अत एवेति।

---

1. नापूर्वं पुरोडाशमुपादाय पुरोडाशे आ० मा०।
2. °ध्याहारो विफलवदस्येति आ० मा०।

स्यादेतत् । वैश्वानरपदानुषङ्गादष्टाकपालादिद्रव्यदेवतासंबन्धविधेर्यागान्तरसिद्धिरिति। तन्नास्ति। प्रथमान्तेषु द्वितीयान्ताननुषङ्गात्। न च विभक्तिविपरिणामः । अन्यथाप्युपपद्यमानत्वात् । यदि ह्यनुषङ्गविपरिणामावन्तरेणाष्टत्वादिश्रवणमनर्थकं स्यात्ततः किं वा न क्रियेत, तत्तु स्तुत्यर्थत्वेनोपपन्नतरत्वान्नानर्थकम्। तदा चानुवादत्वाद् विपरिणतविभक्तिसंबन्धेऽप्यदोषः। तस्मान्न पुरोडाशविधानम्। न च द्वादशकपालेऽष्टाकपालादयः पुरोडाशाः स्वात्मभिर्विभक्ता विद्यन्ते। अष्टत्वादिमात्रविशेषदर्शनात्। ते चाष्टत्वादयो न यागे नापि पुरोडाशे विधीयन्त इत्युक्तम्। न चाष्टत्वादीनां द्वादशकपालेनैकवाक्यता तवोपपद्यते। नानाविधेयप्रयोजनवशेनार्थैकत्वाभावात्। न च नानाविधानां विभज्यमानानां साकाङ्क्षत्वं विद्यते । यदि चैकं वाक्यं भवेत्ततः सर्वविशिष्टैकभावनाविधानान्न विकल्पः स्यात्। अष्टत्वादीनां च गुणत्वान्न प्रत्येकं वाक्यपरिसमाप्त्या पृथगनुष्ठानोपपत्तिः। न च संख्यानां समुच्चयः संभवति। संख्यान्तरोपजननेन सर्वाभावप्रसङ्गात्। संख्यान्तरानुपजननसमुच्चयस्तु द्वादशत्वेऽष्टत्वाद्यन्तर्भावात्। तथाभूतानां च द्वादशत्वविधिनैव प्राप्तेरनुवादत्वापत्तिः। तेनैतैर्भिन्नैर्वाक्यैः स्वतन्त्रा विधीयन्त इत्यवश्यं भवताभ्युपगन्तव्यम् । ततश्च द्वादशत्वमुत्पत्तिवाक्यशिष्टमितराणि तु वाक्यान्तरैः प्रकरणापेक्षैर्दुर्बलानि सन्ति न संबध्यन्ते। एवं तावद् वैश्वानरयागो बलवत्तरगुणावरोधान्नाष्टत्वादीन् प्रतीच्छति। अपि चाष्टत्वादयोऽपि नैवातिसोढास्तेऽपि हि पुरोडाशेनैकवाक्यभूतत्वान्नैव वैश्वानरयागस्य प्राप्नुवन्ति । तत्प्रकरणं बाधित्वा न तस्य भविष्यन्ति। तया चातद्गुणाः

यदि चैकं वाक्यं भवेदिति। ननु संख्यानां समुच्चयो न संभवति। सत्यमत एव वक्ष्यति—न संख्यानां समुच्चय इति। विधिना[1] तु प्रत्येकमविषयीकृतानां प्रत्येक[2]मन्यार्थनिवर्तकत्वानवगमाद् विकल्पोऽपि न संभवतीति उच्यते—तेन पक्षान्तरमवलम्बितव्यम्। तत् प्रकरणं बाधित्वेति। प्रकरणं बाधित्वा न यागस्य भविष्यतीति *भाष्ये* सामान्याभिधानमनेन विशिष्यते[3]। प्रकरणशब्देन तस्य वैश्वानरयागस्य प्रकरणमुक्तम्। यागशब्देन स एव याग इति। इदं च द्वादशत्वावरोधादप्रवेशं साधितेऽभ्युच्चयमात्रत्वेनोच्यते इति ॥१८॥

---

१. विधानेन आ० मा०। २. प्रत्येकं० शास्त्रार्थनिवर्तकत्वा० आ० मा०।
३. विशेष्यते आ० मा०।

केवलपुरोडाशसंबन्धे प्रयोगे स्युरनर्थकाः । न हि तं पुरोडाशं प्रत्यर्थ-वत्तास्ति । अथ वा कथमतद्गुणा इत्यत आह—न हि तं यागमन्यावरुद्धं प्रत्यर्थ-वत्तास्तीति । १८॥

अष्टत्वादिविधानत्वाद् व्यर्थेयं तत्प्ररोचना ।१९।
तस्मादवयवद्वारं द्वादशत्वं प्ररोच्यते ॥

यद्विधेयमवधार्यते तदेव स्तोतव्यं द्वादशत्वं चात्र विधेयम् । तस्माद् यथाकथं चित्तदेव स्तोतव्यम् । तत्सामीप्याच्च[1] शक्नुवन्त्यष्टादिशब्दास्तदेकदेशप्रतीतिं कर्तुम् । एकदेशस्तुतिद्वारेण चैकदेशी स्तुतो भवति । तेनैतदुक्तं भवति, ईदृशोऽयं द्वादशकपालो महाभागो यस्मिन् क्रियमाणेऽष्टाकपालादयोऽपि संभाविता भवन्ति । ते चाष्टत्वादयो ब्रह्मवर्चसादिसिद्धिप्रशस्तास्तस्मात् प्रशस्तोऽयमिति । यत्त्वस्त्येव द्वादशत्वस्यान्या स्तुतिरिति । नैष दोषः । कुतः ?

स्तुतेरपरिमाणत्वाद् यावती हि प्रतीयते ।
तां सर्वामैकरूप्येण विध्युद्देशः प्रतीच्छति ॥

सर्वत्र ह्यल्पैर्बहुभिर्वाक्षरैः स्तुतयो दृश्यन्ते, श्रोतृप्रकारानेकत्वाच्च क्वचित् काश्चिदर्थवत्यो भवन्ति । यथैव केषाञ्चिद्विध्युद्देशमात्रेण प्रवृत्तौ सिध्य-न्त्यामन्यार्था स्तुतिराश्रीयते तथैवाल्पस्तुत्युपपन्नेऽपि कार्ये महास्तुत्याश्रयण-मिति ॥२०॥

जनकत्वेन पूतादेरष्टत्वादीनि कारणम् ।
तेषां कारयितृत्वाद्वा पूतादेः कारणाभिधा ॥

यदुक्तं द्वादशत्वावरोधादनर्थकमष्टत्वादिविधानं स्तवनं चेति, तन्नानर्थ-कम् । नित्यं हि द्वादशकपालता । यस्तु गुणफलानि ब्रह्मवर्चसादीनि प्रार्थयते तस्याष्टत्वादीनि द्वादशत्वोपमर्देन निवेक्ष्यन्ते । तथा हि—

[1]तत्सामीप्यादिति । अष्टसु कपालेषु संस्कृतेन पुरोडाशेन तुल्यो द्वादश-कपालैकदेशः स्तोतुमष्टाकपाल इत्युपचरित इति । तां सर्वामैकैकरूप्येणेति । यद्येकां गृहीत्वा [अ]परां गृह्णातीति ब्रूमस्तदेकयैव कृतार्थस्य किम[2]न्य-येति स्यात्, न त्वेतदस्ति । सकलोपपादितैकप्राशस्त्यपरिग्रहादित्युक्तमै-करूप्येणेति ॥२०॥

१. तत्सामान्यादिति आ० मा० ।
२. किमपरयेति आ० मा० ।

पुरुषार्थसमासत्तेः काम्यं नित्यस्य बाधकम् ।
विशेषतश्च सामान्ये पूर्वप्राप्ते प्रवर्तनात् ।।

पुरुषार्थसिद्ध्यर्थो हि सर्वः प्रयास इति तत्प्रत्यासन्नं वस्तु बलीयो भवति। दूरे च द्वादशत्वं पुरुषार्थस्य तत्साधनयागद्रव्यसंस्कारार्थकपालपरिच्छेदात्। अष्टत्वादयस्तु तदाश्रिताः सन्तः साक्षाद् ब्रह्मवर्चसादि साधयन्तीति प्रत्यासत्तेर्बलीयांसो भवन्ति । तस्मादर्थवन्त इति । ननु च—

ब्रह्मवर्चसयोगादि फलत्वेन यदीष्यते ।
स्तुत्यभावाद्विधिः केन वर्तमानापदेशिनाम् ।।

तत्र केचिदाहुः, औदुम्बराधिकरणपूर्वपक्षन्यायेनात्र प्रत्यवस्थानमिति । तन्न युक्तम् । तत्रैव दत्तोत्तरत्वात् । अतोऽयमभिप्रायः । 'पूत एव स तेजस्वी' इत्यादिना फलमुच्यते । 'गायत्र्यैवैतम्' इत्यादिस्तुतेः प्रात्यात्मिको विधिः । 'यदष्टाकपाल' इत्यादिभिः सार्थवादकैः प्रत्येकं विहितानां यथासंख्येन पूत एवेत्यादिभिः फलसंबन्धः क्रियते ।।२१।।

वाक्यानि यावदर्थं स्युर्गुणेभ्यः फलकल्पने ।
एकोपक्रमसंहारादेकं चेदं प्रतीयते ।।

पुत्रे जाते द्वादशकपालमिति यदेवोपक्रान्तं तदेवाष्टत्वादीनामन्ते 'यद् द्वादशकपालो भवति' इति 'यस्मिन् जात एताम्' इति चोपसंह्रियमाणं पश्यामः । तावति च नाष्टत्वादयः पृथग् भवितुं लभन्ते तदेकवाक्यता च न स्तुत्या विनोपपद्यते । अर्थान्तरपरतायामानर्थक्यात् । यदि हि कर्तृसंबन्धीन्येतानि भवेयुस्ततस्तस्य कारणानि प्रयोजकानि स्युः । वैश्वानरसंबन्धीनि त्वेतानि ।

विशेषतश्च सामान्य इति । अनेन सामान्यविशेषलक्षणं ब¹लाबलमुक्तम् । पूर्वप्राप्ते प्रवर्तनादित्यनेन पौर्वापर्यलक्षणमिति । पूत एव स तेजस्वीत्यादिनेति । यदष्टाकपालो भवति गायत्र्यैवैतं ब्रह्मवर्चसेन पुनाति इत्येवं यावद्द्वादशकपालं तेजोऽन्नाद्येन्द्रियः पशवः कीर्तितास्तैः स्तुतिरन्ते च पूत एव तेजस्व्यान्नाद इन्द्रियावी पशुमान् भवतीति यथासंख्येन फलविधय इति।।२१।।

१. बलवत्त्वम् आ० मा० ।

तस्माद् गुणार्थोऽन्यासंभवादिति स्तुत्यर्थो विधीयते। पूत एव स इत्येवमादीनां च तच्छब्दयुक्तानां यस्मिन् जात इत्यनेनापेक्षितत्वान्न पूर्वैः सह फलत्वेन संबन्धः। न चात्रानुपयोगो येन बलादाच्छिद्य नीयेरन्। न चाष्टत्वादिब्रह्मवर्चसादीनामेभिर्विभागेन संबन्धः। यत्र तु विभागो 'गायत्र्यैवैतम्' इत्यादौ तत्र स्तुतित्वमभ्युपगतमेव। अतो या नाम पूत इत्येवमादीनां फलकल्पना सा यागमेव प्रति नाष्टत्वादीन्। प्रथमोपनिपाते तु यागस्यापि स्तुतिरेव। एवं कामकाररहितत्वेन फलविध्वसरूपत्वात्। एतैरेव स्तूयमाने यदष्टाकपाल इत्यादीनामुपपत्त्यर्थता तस्मान्न गुणविधय इति सिद्धम् ॥२२॥

## [ तत्सिद्धिपेटिका ]

तत्सिद्धिः। अर्थवादप्रसङ्गात्तदुपकारिगुणवादविधितल्लक्षणं तत्र नोक्तमिदानीमभिधीयते। ननु च तत्रैव 'रूपात् प्रायात्' [मी० सू० १।२।११।] 'दूरभूयस्त्वात्' [मी० सू० १।२।१२।] इति निमित्तं कथितम्। सत्यं कथितम्, न तु लक्षणत्वेन। कथं तर्हि, इह सिद्धं तत्रोदाहृतार्थवादलक्ष्यविषयव्यवहारार्थं नीतम्।

तस्माद् गुणार्थोऽन्यासंभवादिति। सोपकारो[1]ऽयमनुवादो गुणार्थोप[2]संहारस्य फलविधित्वनिराकरणपुरस्सरस्यार्थो व्याख्यातः। स्तुत्यर्थो विधीयत इति। पूत एव स इत्येवमादीनामिति। यस्मिन् जात एतामिष्टिं निर्वपेत् पूत एव स इतीष्टिफलत्वमेषामुच्यते न ब्रवीति यस्मिन् जातेऽष्टाकपालो भवति स पूत इति। अपि च पूत एव स तेजस्वी अन्नाद इति तच्छब्दाभिहितमेकमेव प्रति सर्वाणि फलानि समुच्चीयन्ते। भवत्पक्षे त्वष्टत्वादीनां वैकल्पिकत्वाद्[3] यस्मिन् जाते अष्टाकपालो भवतीति स पूत एव न तेजस्वी। यस्मिन्नेव कपालः स तेजस्वी न पूत इति स्यात्। न चैवमुपादानं विभागे नास्तीत्याह — न चाष्टत्वादि ब्रह्मवर्चसादीनामिति। प्रथमोपनिपाते त्विति। यद्यर्थवादत्वेनोपयुक्तानां रात्रिसत्रादिवत् फलावगमकत्वमपि स्यान्न वारयाम इति प्रथमशब्देन दर्शितमिति ॥२२॥

अर्थवादप्रसङ्गादिति। [4]अर्थवादत्वस्यैव प्रतिपादनप्रसक्तेन सूत्रकारेण तदुपकारिणो गुणवादनिमित्तलक्षणस्याभिधानं कर्तव्यमपि तत्र न कृतमिदानीं क्रियते। अर्थवादप्रसङ्गादिदानीमभिधीयत इति योज्यम्। सत्यं कथितमिति। येन धर्मेण सर्वोऽपि संग्रहः क्रियते तल्लक्षणं तच्च तत्

१. सोपस्कारोऽय° आ० मा०।
२. °गुणार्थो हि विधीयते इति सूत्रार्थोपसंहारस्य आ० मा०।
३. विकल्प्यत्वात् आ० मा०।
४. अर्थवानपवादस्यैव आ० मा०।

अत्र तु सर्वगौणवृत्तीनां लक्षणमुच्यते। ननु च सहचरणस्थानादीन्यन्यान्यप्य- क्षपादप्रभृतिभिर्गौणनिमित्तान्युक्तानि। लोके च दृश्यते यष्टीः प्रवेशय, मञ्चाः क्रोशन्ति, अश्वसहस्रेणामुको राजा जित इति। तान्युपसंहर्तव्यानि। लिङ्ग- समवायेनैवोपसंहृतानीति केचित्। छत्रिसमवेतेतरप्रत्ययवद्धि यष्टिसहचरितादि- प्रत्ययो भवति। अथवा गौण्या वृत्तेरिह निमित्तमभिधीयते न लक्षणायाः। किं चानयोर्भेदोऽप्यस्ति। बाढमस्ति। कुतः?

अभिधेयाविनाभूते प्रवृत्तिर्लक्षणेष्यते।
लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता॥

तत्र यथैवाकृतिवचनः शब्दस्तत्सहचरितां व्यक्तिं लक्षयति तथैव यष्टि- मञ्चाश्वादयस्तत्संबद्धपुरुषलणार्था भवन्ति। अग्निर्माणवक इति तु नाग्नित्वा- विनाभावेन माणवकः प्रतीयते। किं तर्हि—

वह्नित्वलक्षितादर्थाद्यत्पैङ्गल्यादि गम्यते।
तेन माणवके बुद्धिः सादृश्यादुपजायते॥

सर्वत्र च तत्सिद्धिकरादावियमेव प्रस्तरप्रभृतौ यजमानादिशब्दानां वृत्ति- रिति त उदाहृताः। अत्रापि च सामानाधिकरण्यादेकतरस्य नामधेयत्वं, निमित्ता- भावादनेकशक्तिकल्पनाभयाच्च तदनुपपत्त्या कार्यलक्षणाद्वारं प्रयोजनवत्तरत्वेन गुणविधित्वं, अशक्तेर्वा तदसंभवादर्थवादत्वमिति त्रय एव पक्षाः। तत्र गुणविधि- वादी मन्यते न काचित्प्रस्तरयजमानयोरितरेतरसमभिव्याहारेण स्तुतिः प्रतीयते।

सिद्धादय एव षट्। दूरभूयस्त्वादयस्तु एकोदाहरणनिष्ठविलक्षणम्। किन्तु तत्सिद्धयादीनामेवान्यतमस्य विशेषाः प्रस्तुतोदाहरणविषयत्वेनोक्ताः। अभिधेयाविनाभूत इति। यत्राभिधेयं तत्सम्बन्धिप्रतिपत्तये प्रतिपाद्यते लक्ष- णया। तत्रापरित्यक्ता[1]भिधेयसम्बन्धेन वाक्यार्थो रच्यते अभिधेयप्रत्यया- नन्तरभावितत्संबन्धि प्रत्ययविशेषरूपेणैव तत्र लाक्षणिकोऽर्थो विवक्षितः। गौणे तु लक्षितस्य गुणस्य [2]तत् सम्बन्धावधीरणेन सामान्यरूपं [3]प्रतिपत्ति- निमित्तत्वेनोपादाय तद्वति धर्म्यन्तरे प्रवर्तते शब्दः। तदिदं प्रपञ्चयति— वह्नित्वलक्षितादर्थादिति। सादृश्यात् पैङ्गल्ययोगादित्यर्थः। लक्षितलक्षणाया- मभिधेयसम्बन्धिनैकरूपेण स्वसम्बन्ध्युपस्थापनं क्रियते। [4] यत्वभिधेयसम्बन्धे साधारणेन सर्वसाधारणगुणरूपस्य प्रवृत्तिनिमित्तत्वेन शुक्लादिवदुपादानं

१. °क्ताभिधेयेनाभिधेयसंबन्धेन आ० मा०।
२. तत्संबन्धिरूपावधीरणेन आ० मा०।
३. प्रवृत्तिनिमित्तत्वेन आ० मा०।
४. यत्वेतदभिधेयसंबन्धरूपाव धीरणेन आ० मा०।

न च स्तोतुर्मपि परशब्दः परत्र वर्तते । न च प्रवृत्तिनिमित्तमस्ति । न च प्रकृतस्य प्रयोजनमन्यत् कार्यलक्षणातः । तस्मात् 'यो होता सोऽध्वर्युः' इत्यादिवदन्यतरः कार्यलक्षणार्थः । तत्रापि **मुख्यं वा पूर्वचोदनात्** [मी० सू० १२।२।२३।] इति यजमानशब्दः स्वार्थवृत्तः प्रस्तरशब्दः स्रुग्धारणादिकार्यलक्षणार्थ इति गुण विधिः । अत्रोच्यते—

> न तावत्कार्ययोगित्वमेकस्याप्युपपद्यते ।
> विरोधाद् यजमानस्य प्रस्तरादेरचोदना ॥

एककपालवत् 'सूक्तवाकेन प्रस्तरं प्रहरति' इति यजमाने प्रह्रियमाणे सर्वतन्त्रविलोपप्रसङ्गः । तस्मादेकवाक्यगतोत्तरसादनसर्वहोमविधिस्तुत्यर्थः संवादः । कथं पुनः परशब्दस्य परत्र सामानाधिकरण्यम् । किमाकारा वा स्तुतिरिति । यजमानो हि सर्वाभ्यर्हितस्तदंशत्वाद् बर्हिष उपरि प्रस्तरः सादयितव्यः । स्वर्गत्वेन[1] संस्तुते चाहवनीये सकलो यजमान आरोपितो भवत्येककपालेनाखण्डितेनेति स्तुतिः । गुणाच्च शब्दवृत्तिः । कथमगुणवचन इति वाचकत्वमभ्युपेतं मन्वानस्य प्रश्नः । सिद्धान्तस्तु, अजहत्स्वार्थाः सर्वाः शब्दप्रवृत्तयः पूर्वशक्त्यनुसारसंभवे शक्त्यन्तरकल्पने प्रमाणाभावात् । संभविष्यति चात्र सिंहत्वावगतव्यक्त्युपस्थापितप्रसह्यकारित्वाद्यनेकधर्मप्रत्ययाद् देवदत्तप्रत्यय इति पूर्वैव शक्तिर्निमित्तमिति, न संशयहेतुत्वेन व्यवहारोच्छेदकारणं प्रसिद्धहानाप्रसिद्धकल्पनमाश्रयणीयम् । अन्येषां तु दर्शनं सर्व एव हि सिंहादिशब्दा जातिगुणक्रियासमुदायवाचिनः समस्तार्थासंभवे देवदत्तादिषु कतिपयगुणक्रियायोगादुपचर्यन्त इति । तत्राभिधीयते—

> समुदायार्थवाचित्वे नैकदेशे भवेद्गतिः ।
> शतशब्दान्न पञ्चाशन्मुख्यरूपेण गम्यते ॥

भवति तु जातिमात्रे दृष्टे सर्वक्रियागुणप्रत्ययस्तमयेऽपि प्रयोगः । प्रत्ययश्च मुख्यात्मनैव न देवदत्तादिष्विव सिंहशब्दादुपचरितः । सामान्यवाचिता चाकृत्यधिकरणसिद्धा बाध्यते । क्रियागुणानां चानन्त्यान्न शक्यः प्रतिव्यक्तिसंबन्धोऽनुभवितुम् ।

**शब्देन लक्षणा भिद्यत इति । न च प्रवृत्तिनिमित्तमस्तीति । अ[1]तोऽनेनैव प्रवृत्तेन तस्य सद्भावो बोधनीयस्ततश्च गुणविधित्वमापद्यते । तदेतदाह — न च प्रवृत्तस्येति ।**

---

१. स्वर्णत्वेन इति काशीमुद्रितपुस्तकपाठः ।

६. प्राक् सिद्धं नास्तीति इतः प्रागधिकं पठति आ० मा० ।

एकस्यामिव च व्यक्तौ बाल्यादिषु गुणक्रियाः ।
अन्याश्चान्याश्च शक्यन्ते नाभिधातुमसंगतेः ॥

न चासामान्यात् सामान्यं शक्यते कल्पयितुं जात्यन्तरेऽपि क्वचित् कासाञ्चित् सद्भावात् ।

तत्र सिंहत्वमेवासां व्यवच्छेदकरं भवेत् ।
तच्चानभिहितं नैवमुक्तं चेन्नान्यवाचिता ॥

न ह्यनभिहितं सिंहत्वं गुणक्रियाणां व्यवच्छेदकरं भवति, अप्रतीतेः । अभिहितं चेत्तु प्रत्ययादेवाशेषगुणक्रियावगमादभिधानशक्त्यवसाय इति समुदायवाचिनामेकदेशेषु न गौणत्वसंभवः । कश्चित्पुनराह समारोपिततद्भावो गौण इति । तस्यैतन्मतम् । न कथञ्चन परशब्दस्तया जात्या स्वनिबन्धनभूतया विनात्यन्तानभिधेयक्रियागुणमात्रद्वारेणान्यत्र वर्तितुमर्हति । न च सिंहशब्देनाप्रवर्तमानेन सिंहो देवदत्त इति सामानाधिकरण्यप्रयोगो घटते । कथं तर्हि—

अर्थेष्वर्थान्तरात्मानमध्यारोप्योपपादितम् ।
वाच्यमासाद्य शब्दानां स्वयमेव प्रवर्तनम् ॥

सिंहादिसदृशक्रियागुणदर्शनेन हि देवदत्तादयः सामस्त्यपरिकल्पनया सारूप्यमापद्यन्ते । ततश्च स्वार्थ एव शब्दः प्रयुज्यते । न चैतावता मुख्यप्रसङ्गोऽर्थस्य, अध्यारोपितत्वात् । यत्र तु स एवार्थो न समारोप्यते तत्र मुख्य इत्यदोषः । तत्रेदमुच्यते, नैतत्कल्पनाया अशक्यत्वात् । तथा हि—

असंकीर्णस्वभावं सद्वस्तु वस्त्वन्तरात्मना ।
आरोप्यतेऽभिधानार्थं कथं नु भ्रान्तिवर्जितैः ॥

यद्वा तावद् भ्रान्त्या मृगतृष्णायां तोयमध्यारोप्य शब्दं प्रयुङ्क्ते, तदोभयोर्मुख्यार्थाध्यवसानरूपेण तोयप्रतीतेर्भ्रान्तिमुख्यत्वम् । अथापि वक्ता विवेकी सन्नितरवचनार्थं प्रयुङ्क्ते, श्रोता च न विविङ्क्ते, तदाप्येकस्य विवेकेनाध्यारोपाभावादितरस्यान्त्याध्यवसानान्नैकमपि प्रति गौणत्वोपपत्तिः । यदा तु द्वावप्यभ्रान्तौ तदोभयोः सादृश्यादिनिमित्तान्तर्णीतवत्यर्थाध्यवसानादारोपाभावः । तथा हि—

द्वावपि प्रतिपद्येते सिंहपुंसोर्विविक्तताम् ।
नाध्यारोपयितुं शक्तिस्तेनैकस्यापि विद्यते ॥

सादृश्यादिनिमित्तान्तर्णीतेरिति । **सादृश्यं निमित्तं गुणयोगो वा यतः सादृश्यादिशब्द इति ।**

यथैव ह्यसदृशानामर्थानां तिक्तमधुरादीनां न कथञ्चिदपि प्रतीत्यभावात् परस्पराध्यारोपणमेवं सदृशानामपि विवेकज्ञानं नोपपद्यते । न ह्यर्थाध्यवसाना-दन्यादृशं नाम ज्ञानं व्यवहाराङ्गं भवतीति । किञ्च—

शब्द एव यदा तावदनिमित्तो न वर्तते ।
बुद्धिर्दुर्ललिता तत्र भवेत् निर्विषया कथम् ॥

न चार्थरहिता बुद्धिरात्माकारमात्रमनुभवन्ती जायत इत्युक्तं शून्यवादे । अपि च—

पूर्वानुभूत एवार्थः स्मर्यते प्रथमं पदात् ।
तेन मुख्ये प्रतीतेऽर्थे क्वाध्यारोपो भविष्यति ॥

सर्वथा तावदयं गौणमुख्यविभागः श्रोतॄणामर्थविशेषावधारणे व्याप्रियते । ते च पदवेलायामनध्यारोपितस्वार्थवृत्त्येव सिंहादिपदमध्यवसाय देवदत्तादिपद सामानाधिकरण्यान्यथानुपपत्त्या गौणतां कल्पयन्ति । तत्र चैषां स्वयमनारोप्यैव सिंहत्वं तत्सादृश्यादिप्रतीतिर्भवति । सा च किं शब्दादथार्थादित्यन्विच्छतामन्वय व्यतिरेकाभ्यामाकृत्यधिकरणन्यायेनार्थादिति निश्चयो जायते । कथम्—

न ह्यर्थाध्यवसायादन्यादृशमिति । नामज्ञानं व्यवहाराङ्गमिति । न व्यवहाराद्यवच्छिनत्ति किन्तु सर्वज्ञानव्यापिरूपमर्थाध्यव-सायात्मकतायां हेतुत्वेन कीर्तयति । व्यवहाराङ्गं हि सर्वं ज्ञानमर्थेन च व्यवहारो न ज्ञानरूपेण । तदेतद[1]नर्थाध्यवसायरूपत्वेन ज्ञानस्य घटत इति । शब्द एव यदा तावदिति । शब्दो हि पुरुषेणार्थविषये प्रयुज्यत इत्य-स्यस्य पुरुषाधीनत्वम् । बुद्धिस्तु स्वकारणाधीनोपादानपुरुषव्यापारमनु विधत्त इति दुर्ललितेत्युक्तम् ।

सर्वथा तावदयमिति । यदि वक्तारं प्रत्येव विभागः स्यात् ततः पूर्वमध्यारोपस्ततः शब्दप्रयोग इति भवेदपि श्रोता तु शब्दोपायार्थप्रत्ययः कथं शब्दात् प्रागर्थमध्यारोपेणोपपादयेत । तेनानारोपितं च कथं शब्दो बोधयेत् । तेनासौ शब्दानुसारी सिंहमेव प्रतिपद्यते । ततो देवदत्तसामाना-धिकरण्यमुपलभ्य पदार्थपूर्वकत्वाद् वाक्यार्थस्य पूर्वावगतेन मुख्येनैव सिंहेन गुणलक्षणया सामानाधिकरण्यं प्रतिपद्यते । तदिदमुक्तम् — तत्र चैषां स्वय-मनध्यारोप्येति । तत्रैतद् विचार्यं स्यात् । यथा सिंहत्वजातिमति शब्दप्रयोगा-

---

१. तदेतदर्थाध्यवसायेति आ० मा० ।

सिंहशब्दे ह्यनुक्तेऽपि सिंहार्थात् सदृशे मतिः ।
जायते न त्वबुद्धेऽर्थे सिंहशब्दे श्रुतेऽपि नः ।।

यदा च श्रोतॄणां स्वयमध्यारोपाभावस्तदा वक्तर्यपि नैवैषामेवं कल्पना भवति । यथा नूनमनेन सिंहत्वमध्यारोपितमिति कथं तर्हि सिंहत्वाविनाभूतानेकक्रियागुणसमुदायोऽनेन विवक्षितः, यत्नगौरवभयान्न स्वैरभिधानैर्ब्रवीति । न चास्य समस्तस्य किञ्चिदेकं वाचकं पदमस्ति तेनाविनाभावितया कथं नु सिंहत्वात्तत्प्रतीतिर्भवेदिति तत्तावदभिधीयते । यतः स्थितया शब्दशक्त्या पुंसां व्यवहारो न तद्वशेन शक्त्यन्तरोपजन इति । किञ्च—

यद्यध्यासेन वक्तॄणां गौणी वृत्तिः प्रकल्पते ।
वेदे सा न कथञ्चित् स्यादध्यारोपयितुर्विना ।।

तस्माद् गुणप्रवृत्तिप्रयोजनो गौण इत्येव लक्षणं न्याय्यं नान्यथा । नन्वेवं सति खपुष्पादीनां स्वार्थाविनाभूतगुणाभावाद्गौणप्रयोगाभावप्रसङ्गः, सांख्यादिकल्पितप्रधानादिनिषेधे च बौद्धादेर्विनाध्यारोपेण प्रयोगासंभवोऽनभ्युपगते हि प्रतिषेधानर्थक्यमभ्युपगते तद्विरोधः स्यादध्यारोपितनिषेधे त्वदोष इति । अत्राभिधीयते । तवैवायं दोषः, कुतः—

अध्यस्यते खपुष्पत्वमसत् कथमवस्तुनि ।
प्रज्ञातगुणसत्ताकमध्यारोप्येत वा न वा ।।

यत्तावत्खपुष्पस्थानीय आत्मा, खपुष्पं भवत् सिद्धान्त इत्यादिप्रयोगः । तत्र कतरत्खपुष्पमंस्यत् । त्वया सिंहत्ववदवधारितं यदध्यारोप्येत तेन खपुष्पस्वरूपमेव तावदध्यारोपात्मकमभ्युपगन्तव्यम्, न चैतस्य लोके गौणत्वप्रतीतिर्मुख्यार्था-

ज्जातिर्वाच्या तथा तत्सादृश्यवति प्रयोगात् तत्सादृश्यमपि किमिति न वाच्यं भवति । तत्र च यदाकृत्यधिकरणे व्यक्तेरवाच्यत्वे कारणमुक्तमन्तरेणापि शब्दमाकृतिप्रत्ययां व्यक्तिमवबुध्यते । श्रुतेऽपि शब्दे जात्यनवगमेनेति तदेव वाच्यमित्याह — सा च किं शब्दादथार्थादिति । अध्यस्यते खपुष्पत्वमिति । रूपं किञ्चिद्रू[1]पाया तद्रूपे तत्कल्पनमध्यारोपः । खपुष्पादेस्तु निरुपाख्यत्वात् किमत्राध्यारोप्यतामिति । तत्रारोपसिद्धये खपुष्पसंज्ञयैव उपाख्यायोपात्तं खपुष्पस्वरूपमध्यारोपात्मकमङ्गीकर्तव्यं भवतीत्याह— तेन खपुष्पस्वरूपमिति । अङ्गीकृते च तस्मिन् तस्यैवाध्यारोपात्मकस्य गौणत्वेनाध्यारोपो गौणलक्षणमित्याह — न चैतस्य लोक इति । अप्रतीतिमेव समर्थयते — मुख्यार्थान्तराभावादिति । मुख्यपूर्वको हि जघन्योऽर्थो लोके

१. किञ्चिद्रूपादायातद्रूपे आ० मा० ।

न्तराभावात्। प्रथमप्रतीतत्वाद्धि खपुष्पादिस्वरूपं न मुख्यत्वादपैति। कथमसतो मुख्यत्वमिति चेत्, तुल्यमिदं गौणत्वेऽपि। यत्र त्वध्यारोप्यते स गौणः, न योऽध्यारोप्यते खपुष्पं वारोप्यमाणं विषयान्तराभावात्स्वयमेवाध्यारोप्यते वा तत्रैतत् स्यात्। विद्यमानघटादिरूपं तत्राध्यारोप्यते न गौणत्वमिति। तदयुक्तं खपुष्पादौ सद्रूपप्रत्ययानुत्पादात्। अवश्यं हि यादृक्संबन्धकालेऽर्थोऽनुभूतस्तादृगुत्तरकालं ग्रहीतव्यम्। न च शशविषाणाद्यर्थः सद्रूपेणानुभूतपूर्वः, न चार्थान्तरसद्रूपग्रहणेन खपुष्पादेः संबन्धो गृह्यते। ययोस्तदवयवयोरर्थसंबन्धोऽनुभूतस्तयोर्नैव गौणत्वं मुख्यात्मनावबोधात्। कथं तर्हि शशविषाणं नास्तीत्युच्यते यदि तत्सद्रूपेण न प्रतीतपूर्वं सद्रूपप्रतीतस्य वा कथमत्यन्तप्रतिषेधोपपत्तिः।

**गौणः प्रतीयते इति। कथमसत इति। यत्र किञ्चित् तन्मुखमिव भवतीति व्याहतमित्यर्थः। तुल्यमिदमिति। व्याहतत्वं तुल्यम्। तद् दर्शयति — यत्र हि अध्यारोप्यत इति।**

**अथ वा मुख्यवद् गौणमपि यत्र किञ्चित् तत् कथं स्यात्। उभयपक्षसाधारणत्वादचोद्यमिति। यदुक्तं खपुष्पस्वरूपं न मुख्यत्वादपैतीति। तदुपपादयति। यत्र ह्य[त्व] ध्यारोप्यत इति। यत्रारोप्यते स तेनारोपितेन रूपेण गौणः प्रसिद्ध इति। एवं स्वपक्षे खपुष्पमध्यारोपयितुं स्वयमेवारोपात्मकमङ्गीकर्तव्यम्। तच्चारोपस्य गौणलक्षणत्वे व्यभिचारस्थानमित्युक्तम्। तत्राव्यभिचारार्थिनो मतमाह — तत्रैतत् स्यादिति। आरोपितया सत्तया तत्प्रतीयमानमङ्गं गौणमिति। युज्यते च सद्रूपप्रत्ययाभाव इत्याह — अवश्यं हीति। प्रमाणान्तरेण खपुष्पं किञ्चिन्नास्तीत्यवगम्य कथं खपुष्पशब्दश्रवणादस्तीति प्रतीयात्। अथ घटशब्दस्यार्थं सत्तया प्रतीत्य[1] शब्दत्वाविशेषात् खपुष्पस्यापि सत्तया प्रतिपद्यते। तथा सति सत्तामेव प्रतीयात्। यतस्तु प्रतिशब्दं सम्बन्धग्रहणमतो नैतदपि युज्यत इत्याह — न चार्थान्तरसद्रूपग्रहणेनेति। ननु सावयवस्य खपुष्पशब्दस्य ज्ञात एव प्रत्यवयवं सदर्थसम्बन्ध इत्याशङ्क्याह — ययोस्तदवयवयोरिति। नहि खपुष्पशब्दयोरर्थोऽत्र चिन्त्यते किन्तु मालतीकुसुमपदाभ्यां स्वार्थमुपायीकृत्यासाधारणी व्यक्तिर्यथा विषयीक्रियते तथा खपुष्पशब्दाभ्यां क्रियमाणा सा पूर्वमसत्तया प्रतीता कथमिदानीं सत्तया प्रतीयतामिति।**

---

१. प्रतिपद्य आ० भा०।

पश्य— अन्यत्र ज्ञातसद्भावः पदार्थोऽन्यत्र वार्यते ।
न त्वेकत्रैव सद्रूपमसद्रूपं च गम्यते ।।

तेनैवाध्यारोप्यत इति चेत्, नाध्यारोप्यस्याप्येवमेव प्रदेशान्तरसद्भावाधीनत्वात् । न चान्यसद्भावेनान्यस्याध्यारोपः सिध्यति, असंबन्धात् । कथमूषरसद्भावेन तोयरूपाध्यारोप इति चेत् । प्रदेशान्तरे तोयसद्भावप्रतीतेर्वैषम्यम् । कथं तर्हि शशविषाणं नास्तीति प्रयोगः । पूर्वेणैवाभावेऽवगते नास्तिशब्दोऽनुवादक इति केचित् । अथ वा सामान्येन प्रागभावादिषु नास्तिशब्दः प्रवर्तमानः शशविषाणशब्देन विशेष्यते न शशविषाणमव्यभिचारात् तेनेत्यदोषः । अथ वा येनावयवार्थौ गृहीतौ समासाच्च राजपुरुषादिवत्सामान्यतो दृष्टेन षष्ठ्यर्थस्मृतिः प्रसक्ता, न च कदाचिच्छशः शृङ्गरहितत्वेनावधारितपूर्वस्तस्यैतत्संसर्गानुसन्धानं वार्यते ।

नत्वेकत्रैव सद्रूपमिति । अविशेषेण सर्वत्र निषेधो भवन्नेकदेशेऽपि भवति । तेनैकत्रेत्युक्तम् । तेनैवाध्यारोप्यत इति बुध्या शक्त्या कल्पितस्य वस्तुनः सत्ता निषिध्यत इत्यत्रैवाविरोध इति । नाध्यारोपस्यापीति । यत् प्रागध्यारोपाद् बुद्धिविषयतां गतं तदन्यत्र तत्र वान्यदारोप्यते तत्र खपुष्पस्वरूपमात्रारोपणमिच्छताध्यारोपविषयासिद्धौ न खपुष्पेत्यस्यासत्ता निकृष्यारोपणीया । किन्तु सद्रूपं खपुष्पमेवारोपणीयम् । तच्चारोपात् प्राक् देशान्तरे न प्रतीतम्, अतः किमारोप्यतामिति ।

न च घटादिषु सद्रूपेषु प्रतीतेषु खपुष्पमारोपणीयत्वेनोपादातुं शक्यम् । घटसत्तया खपुष्पस्यासंबन्धादित्याह — न चान्यसद्भावेनेति ।

ननु प्रतिपादितं भवता सद्रूपप्रतिपत्तावात्यन्तिकप्रतिषेधानुपपत्तिरिति । या त्वसद्रूपप्रतीतावप्रसक्तप्रतिषेधानुपपत्तिः सा कथं परिहर्तव्येत्याह — कथं तर्हि शशविषाणमिति ।

अथ वा येनावयवार्थाविति । नात्र शशविषाणशब्दाभ्यां स्वार्थमुपायीकृत्य प्रतिपादितस्य [1]वाक्यार्थात्मकस्य व्यक्तिविशेषस्य स निषेधः किन्तु सिद्धस्य विषाणस्य शशसंबन्धिता निषिध्यत इति । एवमारोपणमङ्गीकृत्य खपुष्पस्वरूपमेवारोपणीयं, तदेवारोपणस्य गौणलक्षणत्वे व्यभिचारस्थानमित्युक्तम् । अथ वा किमारोपणेन पूर्वनिराकृतेन । अन्यथापि

१. बाह्यार्थात्मकस्य आ० मा० ।

अथ वा विनैव समासेन शशमधिकरणत्वेन निर्दिश्य विषाणं च गवादिगतं विनैवाध्यारोपेणानयोः संबन्धो नास्तीति , कथिते तेनैवानुभूतसंबन्धस्य शशविषाणशब्दस्तमेवाभावं गमयिष्यति । अथ वा शशमूर्धवर्तिनां पृथिव्यवयवानामुपर्युपरि चीयमानानां दृढदीर्घसंनिवेशरूपेण परिणतानां नीचैर्वृत्ताकारेण यदवस्थानं सोऽस्य वाक्यस्याध्यासमन्तरेणोक्तविषयः संभवतीत्यविरोधः । तथा चाह—

यां निषेधाः क्रियामाहुर्न यातीत्येवमादयः ।
तिष्ठतीत्यादिभिः सैव वस्तुरूपा प्रतीयते ।।

तेन लब्धमुख्यार्थानां शशविषाणादीनामन्यत्रापि प्रसिद्ध्यन्यथा-

खपुष्पादिशब्दानामर्थलाभोऽस्तीति । स्वमतमाह — अथ वा विनैव समासेनेति । विषाणं च गवादिगतं निर्दिश्येत्यनुषङ्गः । अनयोराधाराधेययोः षष्ठी । अथ वा अनयोरिति सप्तमी । तेनैवानुभूतसंबन्धस्येति । येन भूयो भूयः शशविषाणमसत्तयावधारितमसौ शशेन विशेष्यमाणं, विषाणमसत्तया प्रतिपाद्यते । तत्परं च शब्दोच्चारणमित्यसद्भावोऽस्यार्थः । एवमपि वस्त्वनाश्रितस्यावस्तुत्वान्निर्विषयत्वमिव शब्दस्याशङ्क्य वस्त्वभावबुद्धिविषयं दर्शयति— अथ वा शशमूर्धवर्तिनामिति ।

सोऽस्य वाक्यस्येति । वाक्यार्थात्मनः पदार्थद्वयसंसर्गस्य शृङ्गाभावस्य प्रमेयत्वात् तद्विषयं समासपदमेव वाक्यमित्युपचरितम् ।

अथ वा शशे विषाणं नास्तीति कथिते तमेवास्य वाक्यस्य विषयमभावं शशविषाणशब्दो बोधयतीत्युक्तम् । तस्य वाक्यस्यायं विषय इत्युच्यते । ततश्च तदनुसारिणः शशविषाणपदस्यापि स एव विषय इत्युक्तं भवति । तस्मान्नाध्यारोपमन्तरेण कश्चिद् विरोध इति । अस्ति बुद्धिविषयतैव, नास्ति बुद्धिविषयत्वमित्यत्र दृष्टान्तमाह — यां निषेधाः क्रियाम् इति ।

एवमध्यासरहितं शशविषाणशब्दार्थमुपपाद्य स्वार्थाविनाभूतगुणद्वारेण गौणीं वृत्तिमु[1]पपादयितुमाह — तेन लब्धमुख्यार्थानामिति । गोविषाणशब्दवत् सत्तां प्रतिपादयितुं समर्थः शशविषाणशब्दस्तद्विपरीते-

१. वृत्तिमुपपादयति—तेनेति आ० मा० ।

स्थायिन्यर्थे सिद्धो गौणप्रयोगः । तत्र तु मुख्याभावात् दूरीभूतो गौणः । यदि च स्वार्थ एव गौणता ततोऽर्थान्तरेणैव वृत्तेरत्यन्ताभावः स्यात् । न ह्यग्निशब्दो माणवके गौणीभूतस्तद्द्वारेण पुनरन्यत्र गौणतां प्रतिपद्यते । तथा च वक्ष्यति **'न प्रतिनिधौ समत्वात्'** [मी॰ सू॰ ६।३।३२] इति । येऽपि प्रधानत्वादीनां प्रतिषेधास्तेऽपि नाध्यारोपनिमित्ताः ।

किं तर्हि— परमाणुशरीरादिकारणात्मादिवादिभिः ।
ततोऽन्यादृक् प्रधानात्मरूपं नास्तीति वर्ण्यते ॥

प्रधानादिशब्दा जगत्कारणादिविषयास्तत्रैव बौद्धादिभिः परमाण्वाद्यात्मककारणाभ्युपगमात् । शरीरसन्तानाद्यात्मककल्पनाच्च तद्व्यतिरिक्तकारणादिनिषेधः क्रियते । परमाणुशरीरादिष्वेव प्रधानात्मादिशब्दवृत्तिरिति यावत् । तस्मात्स्वार्थाभिधानेनैव गौणत्वमित्यदुष्टम् । अतश्च यजमानः प्रतीतः स्वार्थसिद्धिकरत्वं लक्षयति, प्रस्तरैककपालावपि च पारम्पर्येण यजमानार्थसिद्धिं कुरुत इति कार्यापत्तेस्तच्छब्देन स्तूयेते । एतेन जातिसारूप्यादीनि व्याख्यातानि ।

जातिः । तत्राग्नेयादिशब्दानां ब्राह्मणादिषु मुखत्वमेव येन केनचित्संबन्धेन तद्धितोत्पादात् । देवतासंबन्ध एव वास्ति । न हि यदेव त्यज्यते तस्यैव

ऽसत्त्वे प्रयुज्यते । ततश्चान्योऽपि यः परमार्थेनासत्तया व्यवस्थितः सत्तया च प्रसिद्धस्तस्यां सत्तायामयं सदिति निर्देश इत्येतत् शशविषाणशब्दप्रयोगेण ज्ञाप्यत इति । व्री[1]ह्यपचारे नीवारेषु प्रतिनिहितेषु यदि तेषामप्यपचारो भवति तदापचरितव्रीहौ प्रयोगे नीवाराणां शास्त्रेण परिगृहीतत्वात् अपचारे तत्सदृशप्रतिनिधानं कार्यमिति पूर्वपक्षे उक्तोक्तं — न प्रतिनिधौ समत्वादिति [मी॰ सू॰ ६।३।३२] । व्रीहिचोदनार्थोपपादनाय प्रवृत्तः साकल्यासंभवात् कियदपि व्रीहिरूपं नीवारगतमुपददानोऽर्थान्नीवारमुपादत्तेन नीवारत्वेन तेषामचोदितत्वात् । ततश्च तदपचारे व्रीहिचोदनार्थसम्पत्तिरेव सदृशान्तरोपादानं प्रयुङ्क्ते न नीवारसंपत्तिस्तेन नीवारैः समत्वादन्यस्य न प्रतिनिधित्वम् । एवं गौणस्य सर्वदा शब्दवाच्यत्वाभावान्न तद्द्वारेणान्यत्र तत्सदृशे शब्दप्रवृत्तिः किन्तु अभिधेयद्वारेणैव तत्सदृश इति देवतासम्बन्ध एव वास्तीति ।

ननु संबन्धिशब्दोऽयं देवतेति । स च हविरपेक्ष्य प्रवर्तते । तेन हविष एव देवता स्यात् । पितुरिव पुत्रो नान्यस्येति । सत्यमेष एवोत्सर्गो यदा तु कर्तृसमानाधिकरणः प्रयुक्तः तदैवमुपपद्यते ।

१. व्रीह्यपचार इत्यतः उक्तोक्तमिति यावत् ग्रा॰ मा॰ इत्यत्र नास्ति ।

केवलं देवतासंबन्धः त्यक्तुरपि तेनैव संबन्धेन सैव देवता भवति। यथा च वक्ष्यति 'भवति पुरुषस्यापि यष्टुः सा देवता' इति। तस्मादनुदाहरणत्वम्। अतो यत्राग्निर्वै ब्राह्मण इत्यादिप्रयोगास्तदुदाहर्तव्यम्। अग्निर्हि प्रतीतो मुखप्रभवत्वसामान्येन ब्राह्मणादीनुपस्थापयति जातिरिति चात्र जन्मोपादानं विवक्षितं यद्यपि च तथा वस्तु नास्ति तथाप्यर्थवादान्तरे तथोक्तत्वादिह तच्छब्दनिमित्तता प्रतिपत्स्यते।

सारूप्यम्। ननु सर्वत्रैव सारूप्यनिमित्तं गौणत्वम्। सत्यमेवम्। इह तु चक्षुर्ग्राह्यशब्दविवक्षया पृथगुपादानम्। चाक्षुषं हि यूपस्योर्ध्वत्वमञ्जननिमित्तं च तेजस्वित्वं तद्द्वारेण यजमानादित्यशब्दाभ्यां स्तूयते। यजमानस्य हि पशुधारणे विनियुक्तस्य निखातस्य च स्वपदार्थकरणविरोधः सहस्ररश्मेस्त्वशक्यमेव यूपकार्यमाधातुम्। यदि च कश्चिन्नास्तिक्याद् दाहप्रतिकृतिमुपादद्यात्तस्यापि गौणतापत्तिर्विधिविषया स्यात् तदवरं स्तुतावेव तदाश्रयणमित्यविधित्वं स्यात्।

प्रशंसा। ननु सर्वत्र प्रशंसानिमित्तत्वं गुणवादस्योक्तम्। सत्यं, फलमन्यत्र गुणवादस्य प्रशंसा। अत्र तु गुणसारूप्यादिवत् प्रवृत्तिनिमित्तम्। कथमिति चेत्

गवाश्वादिगतां पूर्वमुपादाय प्रशस्तताम्।
तदभावोऽन्यपश्वादौ नञ्समासेन कथ्यते॥

**यद्यपि देवता[1] न तमपेक्ष्य प्रवर्तते तथापि यया क्रियया त्यागेन त्यज्यमानस्य देवतान्वयस्तस्यैव त्यक्तुरपि भवतीति। यत् त्यज्यमानमपेक्ष्य [2]प्रवृत्तिर्न देवताशब्देन वस्तुरूपमवलम्बितम् तत् त्यक्तुरप्युपदिश्यत इति।**

**निखातस्य चेति। ननु यूपकार्यमतिदिश्यते। यूपशब्देन यजमानेन च निखननं यूपकार्यं संस्कारो हि तस्यासौ कथं तस्य प्राप्तिः। तदुच्यते कार्यातिदेशेन तत्प्रयुक्तस्य संस्कारस्य प्राप्तिरियं [3]विवक्षिता। ननु[4]यूपकार्यातिदेशात् खले बाल्यामिव यूपधर्माणां निवृत्तिः स्यात्। न[5]। सत्यं येषां यूपनिर्वृत्तिमात्रापवर्गित्वं निखननं तु पशोर[6]प्रगल्भस्य यूपकार्ये निपतितं तत्कार्यापत्तेर्यजमानेन प्रयुज्यत[7] इति। गवाश्वादिगतामिति।**

१. देवताशब्दो आ० मा०। २. प्रवृत्तेन आ० मा०।
३. प्राप्तिरियमुपदर्शिता आ० मा०। ४. नन्वयूपे यूपकार्या° आ० मा०।
५. नेति आ० मा० इत्यत्र नास्ति। ६. प्रसज्यत इति आ० मा०।
७. °रप्रागल्भ्याय पू० मा० °रप्राथम्ये आ० मा०।

न तावन्महिषादीनां पशुत्वस्वरूपाभावः शक्यते वक्तुं, प्रत्यक्षविरोधात्। तत्कार्यप्रतिषेधः कल्प्येत, तदपि तत्र तत्र वचनविहितत्वान्न शक्यमेव। न च विकल्पो, वैषम्यात्। कल्प्यो ह्यत्र विधिरितरत्र क्लृप्तः स्तुत्या वार्थवत्त्वान्नागत्या तदाश्रयणम्। तुल्यश्च मुख्यार्थत्यागः, 'पशवो गो अश्वाः' इति च पुनरुपादानमनर्थकम्। न च पशुत्वैकार्थसमवायिनः क्रियागुणाः शक्याः प्रविवेक्तुम्। अथ गवाश्वसमवायिनो विशेषाः प्रतिषिध्येरन्, एवमपि मन्दं फलम् अन्यशब्देनैव च तत्त्वानर्थः सिद्ध इत्यनर्थकम्। अवश्यं चोत्तरपदेन प्रतिषेध्येऽर्थे प्रथममुपात्तेन तत्रानुवर्तितव्यं, विषयरहितप्रतिषेधासंभवात्। न च प्रशस्तत्वादन्यदुपादीयमानमुपयुज्यते। शक्नुवन्ति च गवाश्वादिसंबन्धात्तद्गतं प्राशस्त्यं गमयितुम्। यद्यप्यप्रशस्तत्वमपि शक्नुवन्ति तथापि प्रक्रमापेक्षया तदिहानाकाङ्क्षितमिति प्राशस्त्यमेव निषिध्यते। तत्प्रतिषेधमात्रमपि च नैवौपयिकमिति तद्द्वारेणान्येषां प्रशस्ततरत्वं कथ्यते। एतदुक्तं भवति। गवाश्वादीनपेक्ष्य नैवान्यस्य प्राशस्त्यं

अपशवो वा अन्ये गो अश्वेभ्यः पशवो गो अश्वा इति। गवाश्वस्य पशुत्वमवधारयन्नन्येषां तदभावमाह। तेन यद् गवाश्वविषयेण पशुशब्देन तत्रावधार्यते, तदन्येषां निषेद्धव्यम्। तेन पशुत्वतत्क्रियागुणानां निषेधस्यासंभवात् प्राशस्त्यं निषिध्यते। [1]तथैव गवाश्वशब्दैकार्थतामापाद्य अयं पशुशब्दस्तद्गतं प्राशस्त्यमुपादत्ते तादृश एवान्येषु सामानाधिकरण्यप्रवृत्त्या तत्प्राशस्त्यमवधारयन् नञा तत्र निषिध्यत इति। पुनरुपादानमनर्थकमिति। यदि प्रतिषेध[2]पर्यवसाय्येव वाक्यं स्याद् यदा तु गवाश्वस्यैव स्तुतिः कार्या तदा सैवेयमुच्यते।

प्रदर्शनीयं च पशुशब्दस्य गवाश्वसामानाधिकरण्यं तदा श्रुत्या पशुशब्देन प्रथममेव तत्प्राशस्त्यं प्रवृत्तिनिमित्तीकृतमिति। शक्नुवन्ति च गवाश्वादि संबन्धादिति। पशुशब्देन गवाश्वशब्दसामानाधिकरण्येन तत् प्राशस्त्योपादानं कथं न भवति। यदि गवाश्वशब्दाभ्यां तदुपादीयते शक्यते चोपादातुमिति। अनेनोच्यते—प्रशस्ततरत्वमिति। प्रशस्तानामेवान्येषामप्राशस्त्याभिधानं प्रकृष्टस्य प्राशस्त्यविशेषस्याभावं बोधयद् गवाश्वस्य तत्सद्भावं

१. ततश्चैवं आ० मा०।

२. यदि तु प्रतिषेधपर्यवसाने यपवाक्यं स्यात् यदा तु इति आ० मा०।

विद्यत इत्येवमन्यगतप्रशंसानिमित्तः प्रतिषेधः। सा चेह प्रथमतरमाश्रितेत्यनन्यप्रयोजनतया पश्चादवगम्यते। अन्यत्र पुनरुत्तरकालमेवैषा भवन्ती निमित्तत्वेनोच्यते।

भूमा। यदि 'सृष्टिरुपदधाति' इत्याख्यातप्रत्ययबलाद् विधिराश्रीयते तत्र न जात्या धर्मविशेषेण वा काश्चिदिष्टकाः सृष्टयो नामान्याभ्यो विलक्षणा विज्ञायन्ते, या एवंविधलिङ्गैर्मन्त्रैरुपधीयन्ते ता एव सृष्टयः तत्रोपधानमात्रमुद्दिश्य मन्त्रेषु विधीयमानेषु सकलव्याप्तेः प्रत्यक्षवचनाविनियुक्तलिङ्गप्रकरणविनियोज्यमन्त्रानर्थक्यप्रसङ्गः। तस्मात् प्रकरणपाठादेव सर्वत्र मन्त्रेषु प्राप्तेष्वेकदेशानुवादः सृष्टयभिधाननिमितार्थवादार्थः। अत्र चोदयन्ति। चयनचोदनयैवोपधानस्य प्राप्तत्वाल्लिङ्गप्रकरणानुमितया च श्रुत्या मन्त्रप्राप्तेः प्रदेशान्तरस्थार्थवादानुपपत्तिरेक[1]वाक्यार्थवादप्रवृत्तेः। तथा च प्रथनार्थवादे व्याख्यातम्। न चान्यो गुणः श्रूयते यदर्थता कल्प्येत तत्र परिसंख्यार्थतैव प्राप्नोति। ततश्च तदवस्थमानर्थक्यमिति वाच्यं पुनः श्रुतिप्रयोजनम्। तत्र केचिदाहुः। उपधानमेवात्र विधीयते तन्माहात्म्यप्रदर्शनार्थं च मन्त्रग्रहणम्। इत्थमिदं प्रशस्तं यदेवंरूपैर्मन्त्रैः क्रियत इति। चयनेनार्थगृहीतमुपधानमिति चेन्न। संहतस्थापनेनापि चयनोपपत्तेः। न चैवं संहतानामेवोपधानं स्यात्। न तस्येष्टकाः प्रत्युपादीयमानस्य प्रतिप्रधानावृत्तिन्यायसिद्धेः। अपि च—

प्राप्नुवन्त्यपि वक्तव्या पुनरेवंविधा क्रिया।
आध्वर्यवसमाख्यानं तथा हि प्रतिपद्यते॥

[1]बोधयतीति। सा चेह प्रथमतरमिति। अन्यस्य कार्यनिषेध्यादेः प्रयोजनस्याभावात् प्रशंसात्र ज्ञाप्या। सा च यदि पशुशब्देन गवाश्वगतेहोपात्तान्यत्र निषिध्यते तदा शक्या ज्ञापयितुं नान्यथा। तेन पश्चान्निषेधदर्शनाद् गवाश्वस्य सामानाधिकरण्यदर्शनादवगम्यते प्रथमतरमेव गवाश्वप्रशंसा पशुशब्देन प्रवृत्तिनिमित्तत्वेनाश्रितेति। प्राप्नुवन्त्यपि वक्तव्येति। शक्यते न च वक्तुमर्थतः प्राप्तेर्विलम्बितत्वादप्राप्तावस्थायामेव प्रत्यक्षवचनेन विधिसंभवात्। केवलं प्रयोजनाभावः परिहर्तव्यः, सोऽनेन परिहृत इति।

---

१. °रेकवाक्याधीनत्वादर्थवादप्रवृत्ते काशीमुद्रितपुस्तकपाठः।
१. गमयतीति आ० मा०।

ततश्चाध्वर्युकर्तृकत्वं च लभ्यते । अर्थगृहीतायां त्वनियमः स्यात् । न चावश्यमुपधान एव सर्वे मन्त्रा विनियुज्येरन् । अविशिष्टसामर्थ्या हि केचिद् ग्रहणाद्यपि कुर्युः । अपि च—

प्रत्यक्षब्राह्मणोक्तानां मध्यमा चितिराश्रयः ।
तदर्थमपि संबन्धः कार्यो मन्त्रोपधानयोः ।।

ये त्वौपानुवाक्यकाण्डाधीनास्तेषां वाक्यादृते संबन्ध एव नास्तीत्यर्थवदेव वचनम् । न चावश्यमनेन सूत्रेणार्थवादत्वं प्रतिपाद्यते तल्लिङ्गात्तल्लिङ्गेषु भूयस्त्वनिमित्तशब्दप्रवृत्तिमात्रकथनादतो नातीव सृष्टिनामविधानमादर्तव्यम् ।

***भाष्यकारेण*** तु विधौ लक्षणां परिहरतानुवादत्वमाश्रितम् । 'एकया स्तुवते' इति ह्यनुवाकाद्यस्यैवासृष्टिलिङ्गत्वादात्मपरित्यागेनेतरलक्षणार्थता स्यात् । तल्लक्षयित्वा च पुनरात्मापि प्रतिपादनीय इत्यतिगौरवम् । उपधानस्तुत्यर्थत्वेन पुनरनुवादत्वाददुष्टा लक्षणा ।

न चावश्यमुपधान एवेति । अनेनोपधानानुवादेन मन्त्रविधिमुपपादयति तदर्थमपि संबन्ध इति । अत्रापि स एवाभिप्रायो लैङ्गिकविनियोगाच्छीघ्रतरं प्रवृत्तत्वात् श्रुत्या शक्यते हि सम्बन्धः कर्तुमिति । ये त्वौपानुवाक्येति । अनारभ्याधीतत्वात्तस्य प्राकरणिकसामान्यसंबन्धासंभवे लैङ्गिकस्याप्रवृत्तिरिति । तल्लिङ्गात्तल्लिङ्गेष्विति । विधावपि लक्षणाश्रयणे मन्त्रान्तरानर्थक्यपरिहारः कारणमिति । सृष्टिवदेव प्राणभृदादिष्विति । चोद्यं विध्येकवाक्यतामनापन्नस्यार्थवादस्यानर्थक्यम् । परिहार उपधानमेव विधीयते मन्त्रो वेति ।

नन्वेकस्योपदधातिपदस्योपधानविधित्वमुपपद्यते । विहितस्य तु विधानासंभवादपरस्यापि कथं विधित्वमुच्यते । तथा सृष्टिशब्देनैवासृष्टिलिङ्गानामपि मन्त्राणां [1]विहितत्वात् प्राणभृदादि मन्त्रविधिरनुपपन्नः । तदुच्यते, न सृष्टीरित्येकपदा स्तुतिः संभवति । तेन कल्पनीयो विधिरर्थवादश्च उपदधातीति शब्दोऽप्येकशब्दस्तत्र प्रत्येकं विधिकल्पनागौरवादसंभवाच्च । सृष्टिप्राणभृदादिसंयुक्तानामेकोऽर्थवादो विधिश्चैक इति[2] न विरोधः । मन्त्रविधावपि समूहभेदाददोषः । नहि य एष सृष्टिलिङ्गकः[3] समुदायः स एव प्राणभृल्लिङ्गकः किन्त्वन्य एवेति । अन्यैरेवं[4]लिङ्गैरिति ।

१. प्राप्तेः आ० मा० ।
२. इत्यविरोधः आ० मा० ।
३. सृष्टिबहुलः आ० मा० ।
४. अन्यैरेवं आ० मा० ।

लिङ्गसमवायः[1]। सृष्टिवदेव प्राणभृदादिषु चोद्यपरिहारावल्पैरेव लिङ्गै-भूयसामनेवं लिङ्गानां लक्षणमित्युदाहरणभेदः स्वार्थापरित्यागाच्चोभयत्र लक्षण-स्यापि ग्रहणमुपादीयमानत्वादिति। आह च—

यत्र लक्षणमुद्दिश्य लक्ष्ये कार्यं नियुज्यते।
तन्मात्रग्रहणं तस्मिंन्नुपादाने द्वयोरपि ॥२३॥

ननु समूहलक्षणायाः समूहिषु प्रवृत्तेरुभयत्राविशेषानुमितं नहि प्राणो मम देवदत्तो जीवतीति वा प्रयोगे[1] मिलितं भिद्यते। यन्निमित्ती-कृत्य शब्दः प्रवर्तते तदतिरेकं बोधयति। सृष्टिरिति च सृष्टिभूयस्त्वं प्रतीयते न समवायमात्रम्। [2]तेनैव प्राणभृत्प्रवृत्तिः। यथा सिंहशब्दो-पलक्षितव्यक्तिगुणयोगात् [3]व्यक्त्यन्तरे प्रवर्तते। तथा अयमपि लक्षितेऽपि समुदाये गुणयोगात् समुदायान्तरे गुणाश्च सृष्टीनां बाहुल्यं केवलसृष्टिके हि समुदाये बह्व्यः सृष्टयः[4]। सृष्ट्यसृष्टिसमुदायेऽपि बह्व्यः सृष्टयो भवन्ति। तत्र तेनैव सृष्टिबाहुल्यस्व[5]रूपेण शब्द प्रवृत्तिः। अथ वा यथा प्राणभृन्मन्त्रेणैवैकस्मिन् बहुवचनानुपपत्त्या स्व-समवेतसमुदायलक्षणया समुदायिन उपस्थाप्यन्ते नैव मन्त्रस्य समुदायि-रूपेण गुणलक्षणया किन्तु तेषां बहुत्वेन बहुषु हि गुणः समवैतीत्येवं समुदायलक्षणया प्रवृत्त्यविशेषेऽपि तल्लक्षणोपायभेदाद् भेदशब्दप्रवृत्तेः। अत्र तु विभक्त्या सृष्टीनां संख्याकारकत्वं सृष्ट्यसृष्टीनां संख्या[6] सम्बन्धा-र्थमभिधीयत इति क्लेशः। उपादीयमानत्वादिति। नानेन वचनव्यक्ति विशेषस्य प्रदर्शनं क्रियते किन्तु ल[7]क्षणसामर्थ्यस्य लक्षणोपलक्षितस्य च गुणस्य तदितरव्यासक्तेस्तदात्मना लक्षणस्याप्युपादीयमानत्वादिति। यत्र लक्षणमुद्दिश्येति। शब्देन केवलं लक्षणमभिधाय यत्र तल्लक्षिते-ऽर्थान्तरे कार्यं नियुज्यते। तत्रोपायमात्रतयावस्थितस्य लक्षणस्या-ग्रहणम्। यत्र तूपेयान्तरगत्या तस्याप्यपरोपादानं तत्र लक्षणत्वसामान्येन त[8]त्र त्याग इति ॥२३॥

---

१. प्रयोगे प्रीतिनिमित्तत्वेन निमित्तं भिद्यते आ० मा०।
२. नैषा शब्दप्रवृत्तिः आ० मा०। ३. वाक्यान्तरे वर्तते आ० मा०।
४. सृष्टयो भवन्ति यथैवं आ० मा०। ५. सारूप्येण पू० मा०।
६. क्रियासंबन्धार्थं आ० मा०। ७. लक्ष्यलक्षणसामर्थ्यस्य आ० मा०।
८. न तस्य त्याग इति आ० मा०।

## [अक्ताधिकरणम्]

विधिस्तुत्योः सदा वृत्तिः समानविषयेष्यते ।
तस्मादेकत्र सन्दिग्धमितरेणावधार्यते ।।

किं पुनरत्र सन्देहकारणं, विधौ सामान्यग्रहणमिति केचित् । तदयुक्तम् । तत्र तावन्मात्रनिर्णयात् । स्यादेतत् । कथं निर्विशेषं सामान्यं संभवतीति, घृतवदिति वदामः । तत्रापि च नवपुराणगव्यमाहिषादिसन्देहस्तदवस्थः । तेन यथात्र घृतमात्रनिर्णयादसन्देहो विशेषानभिधानेऽपि सर्वैः कार्यसिद्धिरेवमिहापि स्नेहनसमर्थद्रव्यमात्रग्रहणासन्देहः । तस्मादर्थवादे घृतश्रवणात् संशय इत्यपरे । तथापि न युक्तः, विशेषप्रतिपत्त्या निर्णीतत्वात् । न हि गौरानीयतां शुक्ल इत्यत्र कैश्चित् सन्दिह्यते विषम उपन्यासः । कथम्—

विधौ यदि विशेषः स्यात् सन्देहः कस्य वा भवेत् ।
स्तुतिस्थे त्वितरस्यापि तुल्यैवैषा विचारणा ।।

यदि ह्येवं भवेत् 'अक्ताः शर्करा उपदधाति' घृतेनेति । ततो नैव किञ्चिद्-विचार्येत । अथ त्वञ्जनवाक्यवदिहाप्येवं श्रूयेत गामानय शुक्लः प्रशस्त इति ततोऽस्त्येव सन्देहकारणमित्येतदप्युदाहरणमेव स्यात् । अतोऽन्यत्र सामान्य-मन्यत्र च विशेष इत्येतस्मात् सन्देहः । केचिच्च संशयदर्शनादेव विधिस्तुत्यो-र्वाक्यान्तरत्वमाचक्षते ।

यदि ह्येकं भवेद् वाक्ये विशेषे तत्समाप्यते ।
विशेषावगमात्तत्र न सन्देहः प्रसज्यते ।।

वाक्यभेदे पुनरेकं सामान्ये परिसमाप्तमन्यद्विशेषपरमिति युक्तः सन्देहः । यत्तु 'विधिना त्वेकवाक्यत्वात्' [मी० सू० १।२।७] इति तदङ्गप्रधानवाक्याना-मिव पश्चात्संबन्धसद्भावाभिप्रायेण । तथा हि—

स्वार्थबोधे समाप्तानामङ्गाङ्गित्वाद्यपेक्षया ।
वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते ।।

सम्प्रति प्रतिपादितोपयोगयोरेव विध्यर्थवादयोः किं यावदुक्त एवोपयोगोऽस्ति । अथ वा तदतिरिक्त इति बुभुत्सायामधिकरणद्वयेन व्यापारा-तिरेकः प्रतिपाद्यते । अथ वा सन्देहेऽनध्यवसायादप्रामाण्यमाशङ्क्य शेष सामर्थ्ययोः कथ्यते । तत्र सुखग्रहणाय प्रतिपादितस्य च न्यायस्य प्रकृतो-दाहरणमाक्षेप्तुं शक्यमिति । न्यायशरीरं संक्षेपेणाह—विधिस्तुत्योरिति ।

न त्वेतद् युक्तमिव, ये हि पदसंघाताः कर्मौपयिकेष्वर्थेषु पर्यवस्यन्ति तेषां नानावाक्यत्वं युक्तम् । न त्वर्थवादानामेकवाक्यत्वात् प्राक् प्रयोजनलाभ, इति प्रथममेवैकवाक्यता । दुर्लभतरश्च सन्देहः स्यादन्योन्यनिरपेक्षयोः सामान्यविशेषयोरितरत्रेतरत्र च पर्यवसानात् । यदेव हि यत्रोपात्तं तदेव तत्रासन्दिग्धं गृह्यते सामान्यसमाप्तश्चात्र विधिः पश्चाद्विशेषः स्यात् । मन्त्रवर्णवदिति चेत्, एवमपि तदधिकरणविषयत्वात् पौनरुक्त्यप्रसङ्गः । तस्मादेकवाक्यतायामेवोपक्रमोपसंहारयोः सामान्यविशेषविषयत्वेन विप्रतिपत्तेरवश्यंभाव्येकगोचरत्वाच्च किमधीना कस्य प्रवृत्तिरिति जायते सन्देहः । कस्य सामञ्जस्यमिति यच्छ्रुतिवृत्तं तत्समञ्जसं न लक्षणावृत्तम् । तत्र च—

स्तुतीनां विध्यधीनत्वादनुवादाच्च लक्षणा ।
मुख्यत्वात्तु विधेर्नासावविरोधाच्च कल्प्यते ॥

विधीयमानं हि स्तोतव्यं न तु स्तुत्यं विधेयमप्राप्तार्थश्च विधिरिति न[1]

सामान्यसमाप्तश्च विधिरिति । यदि [1]भिन्नयोरपि वाक्ययोः पश्चात्तनीमेकवाक्यतामवश्यं भाविनीं समीक्ष्य सन्देहः समर्थ्यते । [2]तर्हि सिद्धान्तो [3]दुर्घटः स[4] हि सामान्यसमाप्तस्य विधेरर्थवादविरोधात् विषयसंकोचात्मकः स्यात् । न चासावुचितो विधेरेवार्थवादाद्बलीयस्त्वादिति । अथ वा सामान्यस्य प्रतिव्यक्तिसमाप्तेरर्थवादविषयव्यक्तिमात्रग्रहणेऽप्यविरोधो वर्ण्यते यथा पशुमालभेतेत्यत्र पशुसामान्ये विधिसमाप्तेर्मन्त्रवर्णोपात्तच्छागनियमासंभवमाशङ्क्य—नियमो वैकार्थ्यं हीति[5] [मी० सू० ६।८।३५।] नियमो वक्ष्यते । यदि हि[6] तन्मात्रप्रकाशितमनुष्ठीयत इत्येकार्थविषयत्वं विधिमन्त्रयोस्तत्र मन्त्रे विशेषः प्रतीतो भवति । अविरुद्धश्चासौ सामान्यस्य कृत्स्नस्य तत्र भावादगृह्यमाणत्वात् विशेषस्यानियमेन सर्वेषामुपादानं स्यात् । गृह्यते चात्र विशेष इत्याशङ्क्यते मन्त्रवर्णवदिति । तस्मादेकवाक्यतायामिति ।

ननु यत्र भिन्नवाक्यस्थस्य नियामकत्वं तत्रैकवाक्यगतस्य सुतरां स्यादिति । तदेव पौनरुक्तं स्यात् । नानेन प्रतिपादिते तस्यावतारसंभवादिति । स्तुतीनां विध्यधीनत्वादिति । यदुक्तं तद् व्याकरोति—विधीयमानं हि स्तोतव्यमिति । प्रधानतन्त्रो हि गुणो भवतीति । मुख्यत्वादित्यस्य

---

१. यदि भिन्नविषययोरिति आ० मा० । २. तथापि आ० मा० ।
३. दुर्लभः आ० मा० । ४. सेति स्थाने नेति हि आ० मा० ।
५. सूत्रेण नियम उपलक्ष्यते आ० मा० । ६. यद् विहितं आ० मा० ।

श्रौतार्थात् प्रच्यवते। यद्यपि तावदर्थवादोपक्रमत्वं भवेत्ततः प्रथमज्ञानानुरोधेन कदाचिद्विधिर्वशीक्रियेत विध्युपक्रमं त्विदं 'अक्ताः शर्कराः' इति। तस्मान्निर्दिष्ट-सामान्ये यद्यर्थवादो न तादर्थ्यं प्रतिपद्यते ततोऽनर्थको भवतीत्यशक्तः स्वतन्त्री-भवितुं, विनापि चार्थवादेन विध्युद्देशः समर्थत्वान्न युक्तस्तद्वश्यः कर्तुम् अर्थवादस्त्वगतित्वाद्विधिवशेन वर्तते विशेषश्च सामान्यमव्यभिचाराच्छक्नोति लक्षयितुं, न सामान्यं व्यभिचाराद् विशेषम्। तस्माद् घृतशब्दः स्नेहमात्र-लक्षणार्थः।

कामं वा सोऽर्थवादोऽस्तु सामान्यस्थो घृते विधिः।
विना स्तुत्या विधानं तु स्नेहद्रव्यान्तरे भवेत् ॥

यथा रौद्रेणापि मन्त्रेण सोमो गृह्यमाणो ने केवलं तदर्थो भविष्यत्यन्य-देवत्यस्यामन्त्रग्रहणोपपत्तेरेवमनर्थवादकं तैलवसयोर्विधानं, यत्रैव चांशे स्तुतिर्दृश्यते तत्र विध्युद्देशस्य प्ररोचनाशक्तिरपगच्छति, अन्यत्र त्वविहतशक्तिना विधानमिति सर्वस्नेहग्रहणम्। उच्यते।

समाप्यते विधिः कश्चित् कदाचिन्नाप्ररोचितः।
घृते प्ररोचनां दृष्ट्वा विधिस्तत्रानुमीयते ॥

यद्यपि तावद्विधिप्रक्रमे तैलवसयोरप्युपादानं, तथापि प्ररोचनातो विधि-र्घृते दृश्यते नेतरयोरित्यनुपादातव्ये कल्पयितव्या च तद्विषया विधेः प्ररोचना-शक्तिः क्लृप्ता च घृते। तस्यां च सत्यां काल्पनिकी वाक्यं भिनत्ति घृते च क्लृप्तां गृह्णन्नितरत्र च कल्पयन् वैरूप्येणापि विधिर्भिद्येत। तस्माद् विध्युद्देशेऽपि तैलादिभ्योऽपनीयते। यद्यपि च सामान्यशब्दः स्यात्तथापि न कश्चिद्विशेषः। तत्र सामान्यान्यथानुपपत्त्या यत्र क्वचनानुश्रुते विशेषेऽपेक्षिते वाक्यशेषाद् घृत एव प्रत्ययो भवति, घृते च शब्दार्थे यदि श्रुत्यनुरोधेनात्यन्ताश्रुततैलादि-त्यागः क्रियते किं विरुध्यते सन्देहमात्रं हि तत्र बाधितं न तु प्रमाणं किञ्चित्। क्रियामात्रमेव चेह चोदितं न द्रव्यं तत्र न यावत् किञ्चित् द्रव्यमाक्षिप्येत यदि कश्चिदपि श्रुतिलेशो न स्यात्। घृतार्थवाददर्शनात्त्ववश्यकर्तव्यायामश्रुतद्रव्य-विधिकल्पनायां नान्यत्र प्रमाणमस्तीत्यङ्गीकृत्य घृताञ्जनविधिर्गम्यते तत्र भ्रान्त्युत्पन्नतैलाद्याकाङ्क्षा निर्मूलत्वाद् बाध्यमाना न दूष्येतेत्यविरोधः, तैलादि-

व्याख्यानं—यद्यपि तावदिति। अविरोधादिति चास्यैकदेशे मुख्य-त्वादसंजातविरोधावस्थाया[1]मवगच्छन् लक्षणाश्रयणे कारणमस्तीति।

१. °यामवगमात् लक्षणाश्रयणे आ० मा०।

ग्रहणे च लक्षणात्रयं स्यात् । क्रियया द्रवद्रव्येण च विशेषो घृतशब्देन च सामान्यं लक्षयिष्यम् । तस्माद् घृतग्रहणं प्रमाणमिति सिद्धम् । वृत्त्यन्तरे त्वत्रैव मन्त्रवर्णोऽप्युदाहृतः । तत्र तु घृतेन किं करिष्यत इति वक्तव्यम् ॥२४॥

## [ सामर्थ्याधिकरणम् ]

अथ यत्रेति संदिग्धं वाक्यशेषो न विद्यते ।
तत्र सामर्थ्यसिद्धेन विध्यंशेनैव निर्णयः ॥

देवताप्रसादाभयप्रार्थनादौ संहृतहस्तसंयोगमात्रमञ्जलिः, 'नाञ्जलिना वारि पिबेत्' इत्यादौ [1]व्याकोशः। सक्तुहोमचोदनायां शब्दात् सन्देहे सत्यसति चाक्रोशस्य वाक्यशेषेऽन्यथानुपपत्तेरेवाक्रोशाश्रयणम् । नन्वनेनैव न्यायेन यथा शक्नुयादिति वाक्यशेषादन्धादीनामाज्यावेक्षणादिरहितः कर्माधिकारः स्यात्,

**अथ वा विनापि चार्थवादेन विध्युद्देश इत्यविरोधादित्यस्य व्याख्यानम् । न विधेरर्थवादाभावे कश्चिद् विरोधो येन तद्वशः स्यादिति । यद्यपि तावदिति क्रियया सम्बन्धादुपात्तेष्वप्यनेकेषु साधनेषु एकस्यैव घृतस्य विधानादितरेषामुपादानं यद्यपिशब्देन सूचितमुपात्तमशक्यमर्थाक्षेपस्य शब्देन घृतेन बाधितत्वादिति । यद्वक्ष्यति क्रियामात्रं त्विहेत्यादिना इति । काल्पनिकी वाक्यं भिनत्तीति घृतप्ररोचनामुपादाय समाप्ते अञ्जनविधौ काल्पनिक्यां तैलादिप्ररोचनायां वाक्यमारभ्यमिति एवं क्रिययार्थाक्षेपात् तैलादिबोधनेऽपि तेषामुपादान[1]मयुक्तमित्युक्तं सम्प्रति शब्द संस्पर्शोऽप्येवमेवेति वदति—यद्यपि च सामान्यशब्दः स्यादिति । तच्चैतद् वासः परिधत्त इत्यादिषूपयुज्यत इत्युच्यते । तत्र षष्टान्त्येनेति [?] । यदि भिन्नवाक्यगतस्याविशेषशब्दस्यात्रैव नियामकत्वमुक्तमुच्यते तस्याविषयत्वमेकवाक्यगतस्यात्रोक्ते भिन्नवाक्यगतस्य तत्रोच्यत इत्युपपन्नम् ।२४।**

**अथ यत्रेति संदिग्ध इति । इति करणेन पूर्वाधिकरणसन्देह परामर्शः विशेषस्तु शब्दसामर्थ्ययोर्विसंवादादत्रासौ विधिगतेनाप्य[2]शब्दोऽर्थे प्रवृत्तेरसंभवात् प्ररोचनावगतावप्यपेक्षाविधिः सा चैकस्मिन् दृश्यते न हि तदनुरूपः शब्दः तस्य सामान्येन प्रवृत्तेः । तत्र शब्दप्रमाणकेऽर्थे सामर्थ्य-**

---

१. इत्यादावाक्रोशः इति काशीमुद्रितपुस्तकपाठः ।

१. °मयुक्तमिति नाङ्कित आ० मा० ।

२. गतेनाप्यशक्ये प्रवृत्तेर° आ० मा० ।

न। असंदेहात्, संदिग्धनिर्णयार्थात्त्वेवं कल्पना भवति। न चाधिकारे सन्देहः। समस्तधर्मोपेतं यथा शक्नुयात्तथा कुर्यादिति वाक्यशेषात्। सन्ति च तादृशस्य कर्तारश्चक्षुष्मदादय[1] इति न प्रयोगचोदनान्यथानुपपत्तिः। यत्र तु यावज्जीव-चोदनादावेवं भविष्यति तत्र शक्तिकृताङ्गत्यागेऽपि सत्यवैगुण्यं प्रधानस्य चोदितमित्याश्रयिष्यामह एव। तस्माद् यावदेव लब्धात्मको विधिस्तावद्यत् कल्पते तद्वैदिकं, सिद्धे तु तत्कल्पनं पौरुषेयत्वादप्रमाणं सामर्थ्याधीनत्वाद् वाक्यशेषसिद्धेः। आह च—

मात्रादप्रतीतेः सामर्थ्यरहिते च शब्दप्रवृत्तेः असंभवादुभयपक्षानवधारणे तृतीयपक्षासंभवाच्च सन्देहः—नासन्देहादिति। यत्र[1] हि शब्दः समान्य-वृत्तिरेकत्रापि स्वार्थं लभमानो गृह्यमाणविशेषत्वात् सर्वत्र प्रयुज्यते तत्र विशेषग्रहणे सामर्थ्यमस्ति नास्तीति जायते सन्देहः। यत्र तु शब्देन विशेष एवोपात्ते तत्रासावसन्दिग्ध एवासौ उपात्तश्च शब्देन साङ्गोऽधिकारस्तत्रानुपपत्तिसामान्यप्रवृत्तिस्वर्गकामाद्यधिकारिपदसामर्थ्यतो विशेषविषयत्वेन परिह्रीयते[2] नाङ्गप्रहाणेन। यत्र तु सामर्थ्यत एवाधिकारित्वेन शब्दविषयीकृतस्य कादाचित्कत्वेनासामर्थ्येन निमित्त-वशादधिकारो न व्यावर्तिष्यते। तत्राशक्त्याङ्गत्यागेनैवाधिकारं प्रत्येष्यत इत्याह—यत्र तु यावज्जीवेति। सर्वशक्त्यधिकरण एतद् वक्ष्यते। यावद् जीवमग्निं जुहुयादिति। तत्राङ्गानां प्रत्येकं स्वशब्देनाभिहितानां त्यागे शब्दविरोधान्नाङ्गत्यागः। जीवनश्रुतिस्तु साङ्गशक्तिकालीनजीवने कृतार्थैवेति। यदा जीवनं शक्नुयात् तदा साङ्गं कुर्यादित्यधिकारावगमात् सर्वाङ्गोपसंहारेण प्रयोग इति पूर्वपक्षः।

सिद्धान्तस्तु यदि सत्यपि जीवने कर्म कर्तव्यं न स्यात् ततो जीवनस्य निमित्तत्वमेव न स्यात्। अतो यावज्जीवं कर्तव्यतावगमादधिकारश्रुतितो दुर्बलानामङ्गश्रुतीनामेव शक्तितो व्यवस्थेति। तस्माद् यावदेवालब्धात्मको विधिरिति। यावदपरं शास्त्रप्रमेयं श्रूयते न शब्देनापेक्षितं बोधितं चास्ति तावदर्थसामर्थ्यव्यापारः। परिसमाप्ते तु विशेषनिर्णये शास्त्रे यत्कल्प्यते तदशब्दमूलत्वादप्रमाणम्।

---

१. चक्षुष्पदादयः काशीमुद्रितपुस्तकपाठः।

१. य एव हि शब्दः आ० मा०।　　　　२. परिह्रियते आ० मा०।

यथैव पाठः प्रतिपत्त्युपायस्तथैव सामर्थ्यमपि श्रुतीनाम्।
तेनैव चैता न समामनन्ति सहस्रभागं तु समामनेयुः॥
इति कृतबहुमार्गं मन्त्रविध्यर्थवादैः स्मृतिपरिखमुदग्रं खेदशालोपगूढाम्।
अनभिभवसमर्थं धर्मदुर्गं प्रविश्य प्रविभजति समर्थामर्थचिन्तामिदानीम् ॥२५॥
इति श्रीभट्टकुमारिलविरचिते मीमांसाभाष्यव्याख्याने
तन्त्रवार्तिके
प्रथमस्याध्यायस्य चतुर्थः पादः।

तथा हि सामर्थ्यस्याप्रमाणत्वात् ततः सर्वं वाक्यशेषः कल्पनीयः। सामान्यशास्त्रस्य [1]विशेषाकाङ्क्षस्य तच्छब्दशेषः सम्भवति न विशेषसमाप्तस्य विशेषान्तरशब्दस्य विरु[2]द्धत्वादित्याह — सामर्थ्याधीनत्वादिति । मतं चैतद् वृद्धानां यत्सामर्थ्यात् वाक्यशेषः कल्प्यते इति दर्शयति — आह चेति। प्रमेयज्ञानप्रयुक्तं प्रमाणनिरूपणमागतम्। यावति च प्रमाणनिरूपणे कृते प्रमेयं निरूपयितुं शक्यते तावत्तेन प्रयुज्यते। कृतं च तावता ततो निरूपिते प्रमाणे तदुपायनिरूपणमिदानीं सूत्रकारः करोतीति वदन् प्रमाणलक्षणावसानं प्रमेयसङ्गतिं च द्वयमाह — इति कृतबहुमार्गमिति। लौकिकस्य हिरण्यादेरर्थस्य चिन्तानेकप्रकार[3]मार्गोपेतं परिखाप्राकारलक्षितमुदारत्वादसंकटमपहारपदैरर्थलिप्सुभिरनभिभवसमयं दुर्गं प्रविश्य क्रियते वेदार्थस्याप्यर्थशब्दवाच्यता सामान्येन चिन्ता लौकिकचिन्तया रूपयतीत्युक्तप्रकारपरामर्शो मन्त्रविध्यर्थवादनां प्रस्थानभेदाद्धर्मदुर्गाप्तिहेतुत्वादनेको मार्गः। स्मृतेस्तद्रक्षाहेतुत्वात् प्राकाराख्यवेदव्यवधिना स्त्रोत्वेन च परिखासाम्यं वेदस्य रक्षाहेतुत्वेन दुर्गव्यवधिना च शालपर्याय प्राकारसाम्यं एभिरुपेतत्वाद्धेतुकैरनभिभवसमर्थमुदारं धर्माख्यं वाहन[4]त्वा-

1. सेवाकांक्षस्य आ० मा० ।
2. तस्य सिद्धत्वादित्याह आ० मा० ।
3. प्रस्थानमार्गो० आ० मा० ।
4. गहनत्वात् आ० मा० ।

दधिगमदुर्गं प्रविश्य तत्रावतीर्य तद्विशेषरूपाणा[1]मुत्पत्तिविनियोगादि व्यापृतानां शब्दानामर्थचिन्तां प्रविभागे भेदशेषलक्षणादिषु प्रकरोतीति ।

[2]इति महामहोपाध्याय *परितोषमिश्र* विरचिते
अजिताख्ये तन्त्रटीकानिबन्धे
प्रथमाध्यायस्य चतुर्थः पादोऽध्यायश्च समाप्तः ॥१।४॥

इति श्रीमदजिताख्ये तन्त्रटीकानिबन्धे प्रथमाध्यायः समाप्तः ॥



१. तद्विशेषविषयाणाम् आ० मा० ।
२. इतः प्राकारसाम्यं यावत् आ० मा० इत्यत्र नास्ति ।